# काशीविद्यासुधानिधिः

# THE PANDIT

A MONTHLY PUBLICATION

OF THE

BENARES COLLEGE

DEVOTED TO

SANSKRIT LITERATURE.

NEW SERIES

VOL. XXV.

BENARES:

PRINTED AND PUBLISHED BY THE PROPRIETORS,

E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS

1904

# INDEX TO VOLUME XXV NEW SERIES.




| | |
|---|---|
| NYĀYASŪTRAVIVARANAM | 1, 51, 67, 115, 139 |
| THE SAMBANDHAVĀRTIKA OF SURESVARĀCHĀRYA | 27, 131, 195, 679. |
| THE TĀRKIKARAKSĀ . | 35, 91 |
| THE SIDDHĀNTALEÇA | 83 |
| PADĀRTHATATTVANIRUPANA | 163, 375 |
| KHANḌANODHĀRA | 179, 203, 359, 599. |
| NYĀYASIDDHĀNTADIP | 235 |
| VEDĀNTATTVAVIVEKA . . | 407 |
| NYĀYASĀRA . | 455, 551, 631, 703, 767. |
| PĀTANJALASŪTRAVRITTI . | 583, 663 |
| PANCAPĀDIKĀ . . | 607 |
| VYĀSASTUTRA ... ... | 615, 719. |
| VIDHIVIVEK .. | 687, 735, 799 |
| PADĀRTHADHARMASAṈGRAHA | 847 |

तथा एकधर्मिवृत्तित्वमपरधर्मिवृत्तित्वस्य एकसाधकत्वं वान्यसाधकत्वस्य विरोधीति केनापि नोच्यते अन्यथा त्वदुक्तासाधकतासाधनमपि न स्यात् तत्रापि साधनान्तरसत्त्वादिति ॥ २८ ॥

समाप्तमुपलब्धिसमप्रकरणम् ॥

अनुपलब्धिसमं लक्षयति ।

**तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः**[1] ॥ २९ ॥

शब्दोऽनित्यः यदि शब्दो नित्यः स्यादुच्चारणात् प्राक् कुतो नोपलभ्यते न हि घटाद्यावरणकुड्यादिवच्छब्दस्यावरणमस्ति तदनुपलब्धेरिति नैयायिकैरुक्ते प्रतिवादी प्रत्यवतिष्ठते यद्यावरणानुपलब्धेरावरणाभावः सिध्यति तदावरणानुपलब्धेरप्यनुपलम्भात् तदावरणानुपलब्धेरभावसिद्धौ तद्विपरीतस्य तदावरणस्योपपत्तेस्तन्नित्यत्वमेव स्यादिति प्रत्यवस्थानमनुपलब्धिसमः । प्रतिकूलतर्कदेशनाभासोऽयम् । यद्यपि द्वितीयाध्यायेऽयमुद्भावितो दूषितश्च तथापि क्रमप्राप्ततया शिष्यबुद्धिवैशद्याय चास्य पुनरुपादानम् ॥ २९ ॥

अत्रोत्तरमाह ।

**अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः**[2] ॥ ३० ॥

अनुपलम्भात्मकत्वादुपलम्भाभावरूपत्वात् । तथा च तत्प्रतियोगिन उपलम्भस्याग्रहेणानुपलब्धेरेव ग्रहात्

(१) एतद्व्याख्यावसरे सूत्रमिदमस्य चोपलक्षणत्वे स्वमत्युच्चयनमित्युक्तमन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायैः । इदं न्यायसूचीनिबन्धे वर्तते ।

(२) दुष्टत्वमलङ्कृतं तु अनुपलम्भात्मकत्वादनुपलब्धेरहेतुरित्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः । अस्य प्रत्यादेशसूत्रेन । अनुपलम्भात्मकत्वादनुपलब्धेरहेतुरिति तात्पर्यटीका ।

कुतस्तदनुपलब्धिः । एवमनुपलम्भात्मकाभावस्याभावग्रहे न प्रतियोग्यनुपलब्धिर्हेतुस्तस्याभावाभावत्वेन भावरूपत्वादिति तदनुपलब्धेरनुपलम्भादित्यादिकमहेतुः न प्रतिषेधसाधकमिति । अन्यथा दोषानुपलब्धेरनुपलम्भात् त्वदुक्तसाधनमपि सदोषं स्यादिति ॥ ३० ॥

ननु तदावरणोपलम्भस्याग्रह एव कथं तदनुपलब्धेर्ग्रहः कथं वा उपलम्भाभावाभावस्योपलम्भस्य ग्रहस्तत्र प्रतियोग्यनुपलब्धेरप्यहेतुत्वादित्यत आह ।

**ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम्**[1] ॥ ३१ ॥

आत्मानमधि अध्यात्मम् । ज्ञानविकल्पानां ज्ञानविशेषाणाम् । भावाभावसंवेदनात् मनसैव सत्त्वासत्त्वज्ञापनात् । तथा च घटादिज्ञानसत्त्वे घटं जानामीति तदसत्त्वे च घटं न जानामीतिमानसप्रत्यक्षस्योदयान्नासमञ्जसमिति भावः ॥ ३१ ॥

समाप्तमनुपलब्धिसमप्रकरणम् ॥

अनित्यसमं लक्षयति ।

**साधर्म्यात् तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः**[2] ॥ ३२ ॥

साधर्म्यात् दृष्टान्तघटसाधर्म्यात् कृतकत्वात् । तेन कृतकत्वेन सह तुल्यधर्मोपपत्तेः तत्सहचरितधर्मस्यानित्य-

(१) न केवल निषेधविषयप्रमाणागम्यताऽनुपलब्धेरुपपत्तिगम्या अपि तु सर्वजनप्रत्यात्मवेदनीयेत्याह सूत्रकार । ज्ञानविकल्पानामित्यादि तात्पर्यटीका । एतद्व्याख्यानावसरे अथवा भावाभावयोर्विरोधाय निषेधकमानगम्यता कथ गम्यत इत्यत्रेदं सूत्रमुपतिष्ठत इत्युक्तमन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याये ।

(२) अनुपलब्धिसमानित्यसमयोरभावनिरूप्यतयैकनिरूप्यत्वसङ्गत्या सूत्रम् । साधर्म्यात् तुल्यधर्मोपपत्तेरित्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया ।

त्वस्योपपत्तिस्वीकारे । यद्वा दृष्टान्तयत्किञ्चित्साधर्म्यात् कृतकत्वात् दृष्टान्ततुल्यधर्मोपपत्तेः दृष्टान्तगतयावद्धर्मस्वीकारेणानित्यत्वरूपसाध्यस्यापि स्वीकारे । सर्वानित्यत्वप्रसङ्गः सत्त्वरूपघटादिसाधर्म्येण सर्वानित्यत्वप्रसङ्गः । न चैवमर्थान्तरमिति वाच्यम् । सर्वस्यैवानित्यत्वे व्यतिरेकसहचाराग्रहात् व्यतिरेकव्याप्तिविघटनात् । अनुपसंहारिदेशनाभासेयं प्रतिकूलतर्कदेशनाभासा वा । लक्षणं तु दृष्टान्तसाधर्म्येण सर्वस्य साध्यवत्त्वापादनम् । साध्यपदादविशेषसमाव्यवच्छेदात् तत्र साध्यभिन्नस्यैवापादनात् । सर्वानित्यत्वेति अनित्यत्वसाध्याभिप्रायेणोक्तं साध्यमात्रोपलक्षकम् । तेन न पर्वतो वह्निमान् धूमादित्यादौ महानससाधर्म्यात् सत्त्वात् सर्वस्य वह्निमत्त्वापादनस्य जात्यन्तरतापत्तिः । अनित्यसमपदं तु पारिभाषिकमिति भावः ॥ ३२ ॥

अत्रोत्तरमाह ।

**साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात्**(१) ॥ ३३ ॥

साधर्म्यादसिद्धेः सर्वानित्यत्वप्रसङ्गेन साधर्म्यस्यासाधकत्वस्वीकारात् । भवतेति शेषः । प्रतिषेधासिद्धिः मदुक्तहेतोः कृतकत्वादेः साधकत्वव्यतिरेकस्य प्रतिषेद्धव्यसाधर्म्याद् या भवदुक्तसिद्धिः सा नेत्यर्थः । तथा च कृतकत्वं न साधकं दृष्टान्तसाधर्म्यरूपत्वात् सत्त्वादिवदिति त्वदुक्तप्रयोगोऽप्यसङ्गतः स्यात् दृष्टान्तसाधर्म्यरूप-

(१) अस्य प्रत्याख्यानसूत्रम । साधर्म्यादसिद्धेरित्यादि तात्पर्यटीका । दुष्टत्वमूलचिन्तासूत्रम । साधर्म्यादसिद्धेरित्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया ।

त्वस्य त्वदीयहेतोरपि दृष्टान्तरूपसत्त्वसाधर्म्येणासाधकत्वेन त्वदभिमतत्वादिति भावः ॥ ३३ ॥

ननु साधर्म्यमात्रस्य साधकत्वे सर्वानित्यत्वप्रसङ्गः केन वार्यतामित्यत आह ।

**दृष्टान्ते च साध्यसाधनभावेन प्रतिज्ञातस्य धर्मस्य हेतुत्वात् तस्य चोभयथाभावान्नाविशेषः**[1] ॥ ३४ ॥

साध्यसाधनभावेन साध्यव्याप्यत्वेन । प्रतिज्ञातस्य निश्चितस्य । हेतुत्वात् साधकत्वात् । तस्य च व्याप्यत्वस्य च । उभयथाभावादन्वयव्यतिरेकरूपत्वात् । नाविशेषः कृतकत्वसत्त्वयोर्न तुल्यता । मदुक्तहेतौ कृतकत्वे व्याप्तिसत्त्वेन सत्त्वे च तदसत्त्वेन विशेष एवेति न सत्त्वस्य सर्वानित्यत्वसाधकत्वमिति भावः ॥ ३४ ॥

समाप्तमनित्यसमप्रकरणम् ॥

नित्यसमं लक्षयति ।

**नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः**[2] ॥ ३५ ॥

अनित्यभावोऽनित्यत्वं तस्य नित्यं सर्वकालं स्वीकारेऽनित्ये शब्दे नित्यत्वं स्यादित्यापादनं नित्यसमः । अयं भावः । अनित्यत्वस्य नित्यमस्वीकारे तदभावदशायां नित्य एव शब्दः स्यात् । न हि दण्डाभावशून्यतादशायां

(१) न्यायसूत्रोद्धारे प्रतिज्ञातस्येति नास्ति । तात्पर्यटीकान्वीक्षानयतत्त्वबोधन्यायसूचीनिबन्धेषु तु प्रतिज्ञातस्येत्यत्र प्रज्ञातस्येति पाठः ।

(२) धर्मस्य तदतद्रूपताविकल्पे धर्मोपलब्ध्यकारणत्वात् तस्याश्च पूर्वभावित्वसङ्गत्या सूत्रम् । नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसम इत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

न दण्डीति प्रयुज्यत इत्यनित्यत्वं नित्यमेवास्तीत्युपगन्तव्यम् । तथा च शब्दस्यापि नित्यत्वमन्यथा तत्रानित्यत्वस्य सर्वकालवृत्तित्वासम्भवादिति बाधः सत्प्रतिपक्षो वा । तद्देशनाभासेयम् । एवमनित्यत्वं यदि नित्यं तदा कथं शब्दस्यानित्यतां कुर्यान्न हि रक्तं महारजनं पटस्य नीलतां करोति । अथानित्यत्वमनित्यं तदा तदभावदशायां शब्दस्य नित्यत्वं स्यादित्यादिकमूह्यम् । लक्षणं तु साध्यस्य नित्यत्वानित्यत्वसार्वकालिकत्वासार्वकालिकत्वान्यतरधर्मेणानित्यपक्षस्य नित्यत्वरूपविरहापादनेन प्रत्यवस्थानम् । इदमनित्यपक्षकानित्यत्वसाध्यकस्थल एवेति । अथवा सार्वदिकसाध्यवत्त्वासार्वदिकसाध्यवत्त्वविकल्पेनानित्यपक्षे नित्यत्वसाध्यविरहान्यतरापादनेन प्रत्यवस्थानं नित्यसमः । सार्वदिकसाध्यवत्त्वेनानित्यपक्षस्य नित्यत्वापादनेन प्रत्यवस्थानं वा सूत्रे नित्यसाध्यवत्त्वस्यैव लाभात् । अनित्यभावादित्युपलक्षणम् । साध्यवत्त्वादिति तदर्थः । न च पर्वतो वह्निमानित्यादौ पर्वतस्य नित्यत्वापादने ऽर्थान्तरम् । विपर्यये सार्वदिकसाध्यवत्त्वविरहोन्नयनेन बाधपर्यवसानादिति । केचित्तु अनित्यस्य भावो धर्मस्तस्य नित्यमभ्युपगमे ऽनित्यत्वेनाभ्युपगतस्य नित्यत्वं स्यात् यथा क्षितिः सकर्तृका कार्यत्वादित्यत्र अनित्यक्षितेर्धर्मः सकर्तृकत्वं त्वया क्षितौ नित्यमुपेयते न वा न चेत् तदा साध्याभावदशायां बाधः । अथ नित्यमेव सकर्तृकत्वमुपेयते तदा क्षितेर्नित्यत्वं स्यादिति सकर्तृकत्वं विरुद्धं तद्देशनाभासेयमिति प्राहुः ॥ ३५ ॥

अत्रोत्तरमाह ।

**प्रतिषेध्ये नित्यमनित्यभावादनित्ये नि-**

**त्यत्वोपपत्तेः प्रतिषेधाभावः**[1] ॥ ३६ ॥

प्रतिषेध्ये पक्षे शब्दे। नित्यमनित्यभावाद् यावत्कालं पक्षो वर्तते तावदेव तत्रानित्यभावादनित्यत्वसाध्यस्वीकारात्। अनित्ये शब्दे। अनित्यत्वोपपत्तेरित्यकारप्रश्लेषः। प्रतिषेधाभावः त्वदुक्तप्रतिषेधो नेत्यर्थः। अथवा नित्यत्वोपपत्तेर्यः प्रतिषेधः तस्याभावः स न सम्भवतीत्यर्थः ॥ ३६ ॥

समाप्तं नित्यसमप्रकरणम् ॥

कार्यसमं लक्षयति।

**प्रयत्नकार्यानेकत्वात् कार्यसमः**[2] ॥ ३७ ॥

प्रयत्नकार्यानेकत्वात् प्रयत्नसम्पादनीयस्यानेकत्वादनेकविधत्वात् कार्यसम इत्यर्थः। अयमर्थः। शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादितिप्रयोगे प्रयत्नानन्तरीयकत्वं प्रयत्नकार्ये घटादौ प्रयत्नानन्तरोपलभ्यमाने कीलकादौ च दृष्टम्। तत्र द्वितीयं न तज्जन्यत्वसाधकम्। प्रथमं त्वसिद्धम्। तथा च सामान्यत उक्ते हेतावनभिमतविशेषनिराकरणेन प्रत्यवस्थानं कार्यसमः। असिद्धिदेशनाभासादिरूपेयम्। अथवा प्रयत्नकार्याणां कर्तव्यप्रयत्नानामनेकत्वादनेकविधत्वात्। तथा चोक्तान्यस्वव्याघातकजात्युत्तरं कार्यसमा। एवं चास्या आकृतिगणत्वात् सूत्रानुपदर्शितानामपि ग्रहः। यथा त्वत्पक्षे किञ्चिद्दूषणं भवि-

(१) अस्य प्रत्यादेशसूत्रम। प्रतिषेध्ये नित्यमित्यादि तात्पर्यटीका। अत्र प्रत्युत्तरसूत्रम्। प्रतिषेध्ये नित्यमनित्यभावादित्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया.।

(२) सूत्रम। प्रयत्नकार्यानेकत्वात् कार्यसम इत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः।

ष्यतीति शङ्कापिशाचीसमा कार्यकारणभावस्योपकारनियतत्वे ऽनवस्थेत्यनुपकारसमेत्यादि ॥ ३७ ॥

अत्रोत्तरम् ।

**कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः**(१) ॥ ३८ ॥

शब्दस्य कार्यान्यत्वेऽकार्यत्वे प्रयत्नस्य वक्तुः प्रयत्नस्याहेतुत्वं शब्दाहेतुत्वं शब्दस्य प्रयत्नाजन्यत्वमिति यावत् । अनुपलब्धिकारणस्यावरणादेः सत्त्वाद् भवतीति समुदितार्थः । अयमभिप्रायः । उच्चारणात् प्राक् शब्दस्यानुपलब्धिरावरणादित्यकार्यतया शब्दस्य प्रयत्नाजन्यत्वेन स्वरूपासिद्धिः स्यात् न चैवम् । शब्दस्यावरणाद्यभावेन कार्यत्वेन प्रयत्नजन्यत्वमेवेति न दोषः । आकृतिगणपक्षे तु कार्याणां जातीनामन्यत्वे नानाविधत्वे इदमुत्तरम् । प्रयत्नस्य त्वदीयदूषणप्रयत्नस्य अहेतुत्वमसाधकतासाधकत्वाभावः । उपलब्धेः कारणस्य प्रमाणस्य निर्दोषवाक्यस्य या उपपत्तिः निर्दोषवाक्याधीनोपपादनं तदभावात् त्वद्वाक्यस्य स्वव्याघातकत्वादित्यर्थः ॥ ३८ ॥

कार्यसमप्रकरणं समाप्तम् ॥

जातिवादोऽसदुत्तरत्वेन न कर्तव्यः तत्त्वनिर्णयप्रयोजकेन सदुत्तरेणैव कथोद्भावनं कार्यमिति सूचयित्वा तथैवासदुत्तरत्वेनाकर्तव्यां कथाभासरूपां षट्पक्षीं प्रसङ्गाद् दर्शयति ।

(१) अस्य प्रत्यादेशसूत्रम । कार्यान्यत्वे प्रयत्नाहेतत्व मित्यादि तात्पर्यटीका । अत्र प्रत्युत्तरसूत्रम । कार्यान्यत्वे प्रयत्नाहेतुत्वमित्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

**प्रतिषेधेऽपि समानो दोषः**[1] ॥ ३९ ॥

**सर्वत्रैवम्**[2] ॥ ४० ॥

प्रतिषेधेऽपि प्रतिवाद्युक्तप्रतिषेधकेऽपि । समानो दोषो मदुक्तहेतुर्यथा यद्दोषेण दुष्टीकृतस्तथा दोषेण दुष्ट इत्युद्भावनेन वादिनः प्रत्यवस्थानमप्यसदुत्तरमित्यर्थः । अथवा जातिवादिनं प्रति तथा प्रतिषेधेऽपि समानो दोष इत्यर्थः । यथा प्रयत्नानन्तरीयकत्वं न शब्दानित्यत्वं साधयति अनैकान्तिकत्वादिति यो दोषः स त्वत्पक्षे तुल्यः अनैकान्तिकत्वस्यापि असाधकताव्यभिचारित्वादिति । यथा वा प्रयत्नानन्तरीयकत्वं व्यभिचारित्वेन शब्दानित्यत्वासाधकमिति यद्युच्यते तदा त्वदुक्तप्रयत्नाभिव्यङ्ग्यत्वमपि नित्यत्वासाधकं व्यभिचारात् ॥ ३९ ॥

इदं च मतानुज्ञारूपनिग्रहस्थानं किं कार्यसमायामेवेत्यत आह । सर्वत्रैवम् । एवंविधमसदुत्तरं सर्वत्रैव जातौ सम्भवतीर्थः । यथा शब्दोऽनित्यः कृतकत्वादित्यत्र नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यः स्यादिति साधर्म्यसमायामाकाशसाधर्म्यान्नित्यत्वे आकाशवच्छब्दे परममहत्त्वं स्यादित्युत्कर्षसमेति । एवमन्यत्राप्यूह्यम् । यद्यय-

---

(१) यदि पुनर्वाद्यपि जातिवादिनं प्रति साधनाभासेन प्रत्यवतिष्ठते तत षट्पक्ष्या सत्या न तत्त्वनिर्णयावसाना कथा भवेदिति शिष्याहृत सूत्रकार. समाधानाभासवादिनं प्रति षटपक्षीमवतारयति । प्रतिषेधे ऽपि समानो दोष । तदेतत्सूत्रावतारपरं भाष्यम । हेतोश्चेदित्यादि तात्पर्यटीका । तत्र षटपक्षीरूपकथाभासावतारणार्थं सूत्रम । प्रतिषेधे ऽपि समानो दोष इति अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः । प्रतिषेधोऽपि समानो दोष इत्यादर्शपुस्तके सूत्रे व्याख्याने च पाठ ।

(२) न केवलमस्या जातावेव समाधानाभासो वादिनोऽपि तु सर्वत्रैव जातावित्ति शिष्यान् शिक्षयति सूत्रकार सर्वत्रैवमिति तात्पर्यटीका । पर तु विवरणकृता प्रतिषेधोऽपि समानो दोष सर्वत्रैवमिति एकसूत्रत्वेन पठितम । तात्पर्यटीका न्यायसूचीनिबन्धान्वीक्षानयतत्त्वबोधदर्शनाद् द्वे सूत्रे इति निश्चीयते स्माभि. ।

मतिदेशः षट्पक्षानन्तरमेव कर्तुमुचितस्तथापि त्रिपक्षादिकमपि सूचयितुमत्रोक्तः । उभयासदुत्तरत्वबोधकफला हि षट्पक्षी त्रिपक्षादावपि तत्फलकत्वतुल्यत्वादिति भावः । न च त्रिपक्षानन्तरमेव मध्यस्थेन पर्यनुयोज्योपेक्षणस्योद्भावने कथासमाप्तौ कुतश्चतुर्थपक्षादिकमिति वाच्यम् । मध्यस्थस्य तदस्फुरणदशायां सम्भवादिति ॥ ४० ॥

चतुर्थपक्षमाह ।

**प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः**[1] ॥ ४१ ॥

वादिनं प्रत्युक्तो दोषः प्रतिषेधः तं प्रति तथैव दण्डो दोषः तं प्रति च पुनः प्रतिवादिना तथादोषेण प्रत्यवस्थानमित्यर्थः । यथा शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादिति वादिनः स्थापनापक्षः प्रथमः । प्रयत्नकार्यानेकत्वादित्याद्युक्तदोषः प्रतिवादिनो द्वितीयः । प्रतिषेधदोषः समान इति वादिनो विप्रतिषेधः पुनस्तृतीयः पक्षः । तत्रापि प्रतिवादिनस्तथादोषोद्भावनं चतुर्थः पक्ष इति ॥ ४१ ॥

पञ्चमपक्षमाह ।

**प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा**[2] ॥ ४२ ॥

---

(१) प्रतिषेधेऽपि समानो दोष इतिसूत्रावतरणिकायां तात्पर्यटीकाकृता शिष्यहित सूत्रकार समाधानाभासवादिनं प्रति षट्पक्षीमवतारयतीति लिखितम् । तेनैषां पक्षाणां सूत्रत्वमायातीति । व्याख्यातमिदमन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याये. । वर्त्तते चेद न्यायसूचीनिबन्धे ।

(२) प्रतिषेध द्वितीयपक्ष सदोष स्वीकृत्य तद्विप्रतिषेधे समप्रतिषेधे तृतीयपक्षतुल्यस्य दोषस्य प्रसङ्गस्त्वत्कृतोऽय मतानुज्ञेति सूत्रार्थ इत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायैर्व्याख्यातम् ।

आदौ वादिनः स्थापनापक्षः। तत्र जात्युत्तरेण सदोषप्रतिषेधोद्भावनं प्रतिवादिनो द्वितीयः पक्षः। तं प्रतिषेधमभ्युपेत्य तत्र दोषानुद्भावनेनानुमतिं व्यञ्जयित्वा प्रतिवादिपक्षे तथैव प्रतिषेधोद्भावनं तृतीयः पक्षः। तं प्रति तथैव दोषोद्भावनं विप्रतिषेधश्चतुर्थः पक्षः। तं प्रति च तत्तुल्यदोषप्रसञ्जनं मतानुज्ञानाम निग्रहस्थानं पञ्चमः पक्ष इत्यर्थः ॥ ४२ ॥

षष्ठपक्षमाह।

**स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात् समानो दोषः[1] ॥४३॥**

स्वपक्षः स्थापनारूपः प्रथमपक्षस्तं लक्षीकृत्य प्रवृत्तो द्वितीयः पक्षस्तस्यापेक्षा समादरस्तत्र दोषानुद्भावनमिति यावत्। तेनोपपत्तेः स्वपक्षोपपादनस्य उपसंहारो यत्र तस्मिन् हेतुनिर्देशे सति परपक्षदोषाभ्युपगमेन पुनर्यो दोषस्तत्र प्रतिवादिनः समानदोषोद्भावनमिति मतानुज्ञावृत्त्या षष्ठः पक्ष इत्यर्थः। अत्रोभयोरप्यसदुत्तरत्वादर्थासिद्धिः। यदि वादी प्रतिवादिनं सदुत्तरेण दूषयति तदा षट्पक्षी न प्रवर्तत इति ॥ ४३ ॥

समाप्तं कथाभासप्रकरणम् ॥

इति गौतमसूत्रविवरणे पञ्चमाध्यायस्याद्याह्निकविवरणम् ॥

---

(१) एतत सूत्र धृत्वा स्वपक्ष स्थापनावादिन आद्य पक्ष तल्लक्षणो द्वितीयः पक्ष. जात्युत्तर स्वपक्षलक्षणीयत्वात तस्यापेक्षा उपेक्षा अनुद्धार तदनन्तरमुपपत्ते प्रतिषेधे ऽपि समानो दोष इत्यस्या उपसंहारे प्रतिपादनविषये यो दूषणरूपो हेतुर्मया निर्दिष्ट उक्त चतुर्थकक्ष्यास्तेन तत्र दोषमनुक्त्वा त्वया पञ्चमकक्ष्यास्तेन यो मतानुज्ञारूपो दोष उक्त स तवापि समान तवापि मतानुज्ञा कुत परपक्षदोषाभ्युपगमात तृतीयकक्षायां चतुर्थकक्ष्यास्तेन मया यो दोष उक्तस्त्वया तदुपगमादिति सूत्रार्थ इति व्याख्यातमन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायै ।

अथेदानीं निग्रहस्थानविशेषलक्षणार्थं विभजते ।

**प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो. मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहःस्थानानि[(१)] ॥ १ ॥**

अत्र चकारः समुच्चयार्थस्तेनानुक्तानां दृष्टान्ते साध्यवैकल्यादीनां ग्रहणम् । केचित्तु चकारस्त्वर्थे तेन एतानि तु निग्रहस्थानानि न पुनरपस्मारादिनाऽननुभाषणादीनि झटितिसंवरणेन तिरोहिता वाणीत्यर्थो लभ्यत इत्याहुः ॥ १ ॥

तत्र प्रथमोद्दिष्टां प्रतिज्ञाहानिं लक्षयति ।

**प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः[(२)] ॥ २ ॥**

---

(१) तत्र परस्परासङ्कीर्णानिग्रहस्थानत्वव्याप्या कत्युपाधय इति विभागोत्था पक्षजिज्ञासाया विभागोद्देशसूत्रम् । प्रतिज्ञाहानिरित्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया. ।

(२) सूत्रम । प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानि' । कथमत्र सूत्रार्थं इत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया' । प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानि. । तदेतत सूत्र भाष्यमतेन तावद् व्याचष्ट इति तात्पर्यटीका ।

प्रतिदृष्टान्तः परोक्तदृष्टान्तस्तस्य धर्मः साध्यसाधनविरहः तस्याभ्यनुज्ञा। स्वदृष्टान्ते यतो दृष्टान्तान्तरात् सा प्रतिज्ञाहानिः। प्रतिज्ञायते साध्यसाधनयोः सहचारो यतः सा वाक् दृष्टान्तस्तस्य हानिर्यत इति व्युत्पत्तेः। तथा च दृष्टान्ते साध्यसाधनान्यतरवैकल्यस्य परेणोद्भावने तद्दोषमनुद्धृत्य दृष्टान्तान्तरप्रयोगः प्रतिज्ञाहानिरिति फलितम्। यथा पर्वतो वह्निमान् धूमादयोगोलकवदित्युक्ते अयोगोलकं धूमशून्यमिति प्रतिवादिनोक्ते च अस्तु तर्हि महानसवदित्यादि। केचित्तु प्रतिकूलो दृष्टान्तो यत्र स परपक्षः स्वः स्वीयो दृष्टान्तो यत्र स स्वपक्षः। तथा च स्वपक्षे परपक्षधर्माभ्यनुज्ञा प्रतिज्ञाहानिः स्वयं विशिष्याभिहितपरित्याग इति फलितार्थः। सिद्धान्तस्तु स्वयं विशिष्य नाभिधीयत इति नापसिद्धान्तसाङ्कर्यम्। इयं च पक्षदृष्टान्तसाध्यसाधनान्यहानिभेदात् पञ्चधा। यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते अत्र प्रतिज्ञा बाधितविषया इति प्रत्युत्तरे दत्ते अस्तु तर्हि घट एव पक्ष इतिप्रयोगे पक्षहानिः। तथा अत्रैवास्तु तर्हि शब्दोऽभिधेय इत्युत्तरे साध्यहानिः। एवं दृष्टान्तहानिरप्यवसेया। ऐन्द्रियकत्वादितिप्रयोगे हेतुरयमनैकान्तिक इति प्रत्युत्तरे अस्तु तर्हि कृतकत्वमेव हेतुरित्युत्तरं साधनहानिः। अन्यहानिस्तु हेत्वादिविशेषणहान्यादिरूपा। यथा नीलधूमादितिप्रयोगेऽत्र नीलत्वं व्यर्थविशेषणमित्युत्तरिते अस्तु तर्हि धूमो हेतुरित्यादीति प्राहुः ॥ २ ॥

प्रतिज्ञान्तरं लक्षयति।

**प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम्[1] ॥ ३ ॥**

---

(१) प्रतिज्ञानिरूप्यत्वसङ्गत्या सूत्रम। प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरमित्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः।

प्रतिज्ञातार्थप्रतिषेधे पक्षे साध्यस्य पक्षसाध्ययोस्तद्विशेषणस्य वा प्रतिषेधे। धर्माणां पक्षसाध्यतद्विशेषणादीनां विकल्पात् भेदमादाय। तदर्थनिर्देशः प्रतिज्ञातार्थानां पक्षादीनामेकतरनिर्देशः प्रतिज्ञान्तरमित्यर्थः । इदं च पक्षहानिसाध्यहानितद्विशेषणहानिपक्षसाध्यविशेषणान्तरप्रक्षेपेणानेकविधम् । तत्र हानित्रयोदाहरणमनुपदमेव प्राग् दर्शितम् । पक्षे विशेषणान्तरदानं यथा शब्दो नित्य इत्युक्ते ध्वनौ बाधे प्रतिवादिनोक्ते च वर्णात्मकः शब्दो नित्य इत्युत्तरम् । एवं पर्वतो वह्निमान् सुरभिमलिनधूमादित्युक्ते अत्र हेतोर्व्यर्थविशेषणमिति प्रत्युक्तरिते कृष्णागरुप्रभववह्निमानित्युत्तरे साध्यविशेषणप्रक्षेपः । प्रकृतोपयोगान्नार्थान्तरत्वमनयोरिति । एवमन्यदप्यूह्यम् । अत्र प्रतिज्ञातार्थस्येत्युपलक्षणम् । हेत्वतिरिक्तार्थस्येति तदर्थः । हेत्वन्तरस्य स्वातन्त्र्येण वक्तव्यतया उदाहरणान्तरादीनामत्रैवान्तर्भावात् । अथवा अनुक्तसमुच्चायकेन चकारेण तेषां स्वातन्त्र्येण ग्रहणम् । तत्र उदाहरणान्तरं यथा पर्वतः कृष्णागरुवह्निमान् सुरभिमलिनधूमात् योयः सुरभिमलिनधूमवान् स वह्निमानितिप्रयोगे प्रतिवादिनोदाहरणे न्यूनत्वे उक्ते पुनः स तादृशवह्निमानित्युदाहरणान्तरमिति । एवमन्यदूह्यम् । केचित्तु प्रतिज्ञातार्थस्य प्रतिषेधे कृते तद्दूषणोद्दिधीर्षया धर्मस्य धर्मान्तरस्य विकल्पात् पक्षे साध्ये वा विशेषणतया दानादित्यर्थः । तदर्थस्य प्रतिज्ञातार्थस्य निर्देश इति । प्रतिज्ञातार्थस्येत्युपलक्षणम् । हेत्वतिरिक्तावयवार्थस्येत्यर्थः । उदाहरणं तूक्तमेव । प्रतिज्ञातार्थापरित्यागान्न प्रतिज्ञाहानावन्तर्भावः । प्रतिषेध इत्यनेन झटितिसंवरणे विलम्बेनापि स्वयं दूषणं विभाव्य विशेषणे तद्दोष इत्युक्तमिति प्राहुः ॥ ३ ॥

प्रतिज्ञाविरोधं लक्षयति ।

**प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः**[१] ॥४॥

अत्र प्रतिज्ञाहेतुपदे कथाकालीनवाक्यपरे। तथा च कथायां स्ववचनार्थेन स्ववचनार्थविरोधः प्रतिज्ञाविरोधः। बाधितत्वं विरोधः । अत्रोदाहरणम् । पर्वतो वह्निमान् ह्रदत्वादिति। प्रतिज्ञार्थैकदेशे वह्नौ हेत्वर्थस्य ह्रदत्वज्ञानज्ञाप्यत्वस्य बाधात्। न च स्वरूपासिद्ध्यादिसाङ्कर्यम्। उपधेयसङ्करेऽपि उपाधेरसङ्करात्। न चासङ्कीर्णस्थलाभाव इति वाच्यम्। पर्वतो वह्निमान् धूमात् योयो धूमवान् स निरग्निरित्युदाहरणेऽसङ्करात्। एवमुपनयादावपि बोध्यम् ॥ ४ ॥

प्रतिज्ञासन्न्यासं लक्षयति ।

**पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः**[२] ॥ ५ ॥

पक्षप्रतिषेधे स्वोक्तमतप्रतिषेधे। प्रतिज्ञातार्थस्यापनयनमपलाप इत्यर्थः । यथा शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्यादौ हेतुरयं व्यभिचारीति परेण प्रत्युक्ते क एवमाह शब्दोऽनित्य इति ॥ ५ ॥

हेत्वन्तरं लक्षयति ।

**अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्**[३] ॥ ६ ॥

---

(१) एतद्व्याख्यानावसरे यथाश्रुति तावत सूत्र व्याचष्टे वार्त्तिककार इत्युक्त तात्पर्यटीकाकृद्भिः । सूत्रम । प्रतिज्ञाहेत्वोर्विरोध प्रतिज्ञाविरोध इत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया ।

(२) सूत्रम । पक्षप्रतिषेधे प्रतिज्ञातार्थापनयन प्रतिज्ञासन्न्यास इत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया ।

(३) हेतुसन्न्यासस्य पूर्वेण सङ्ग्रहादस्य हेतुनिरूप्यत्वसङ्गत्या सूत्रम । अविशेषोक्त इत्याद्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया ।

अत्र हेतुपदं साधकपरम् । स च हेत्ववयवस्थ उदाहरणादिस्थो वा । अविशेषेणोक्ते कुत इति जिज्ञासानन्तरमेवोक्ते । अनन्तरं परेणासिद्ध्यादिना प्रतिसिद्धे विशेषमिच्छतस्तद्दूषणोद्धारेण गमकसाधनप्रयोगमिच्छतो यस्तत्रैव हेतौ विशेषणान्तरप्रक्षेपो हेत्वन्तरं वा द्वयमपि हेत्वन्तरम् । तत्राद्यं यथा शब्दोऽनित्यो बहिरिन्द्रियग्राह्यत्वादित्युक्ते परेण च तत्र सामान्यादौ व्यभिचारोद्भावने सामान्यवत्त्वे सतीति विशेषणम् । एवं विशिष्टहेतुप्रयोगानन्तरं यद्यद् बहिरिन्द्रियग्राह्यं तदनित्यमित्युदाहरणे न्यूनत्वेन वादिना प्रत्युक्ते तद्विशेषणप्रक्षेपेण वचनम् । एवमुपनयादावपि बोध्यम् । द्वितीयं यथा तत्रैवास्तु तर्हि कृतकत्वमेव हेतुरिति वचनम् । केचित्तु अविशेषोक्ते सामान्यधर्मपुरस्कारेणोक्ते विशेषमिच्छतो विशेषणान्तरदानमित्यर्थः । हेत्वन्तरप्रयोगे तु प्रतिज्ञाहानिरित्याहुः ॥ ६ ॥(१)

अर्थान्तरं लक्षयति ।

**प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्**(२) ॥ ७ ॥

प्रकृतात् विप्रतिपत्तिविषयात् जिज्ञासिताद्वार्थात् । असम्बद्धो भिन्नः तस्याभिधानमर्थान्तरमित्यर्थः । अथवा ल्यब्लोपे पञ्चमी । असम्बद्धोऽनुपयोगी । तथा च प्रकृता-

(१) अत्र न्यायसूचीनिबन्ध इति षड्भि सूत्रै प्रतिज्ञाहेत्वन्यत निग्रहस्थानपञ्चकविशेषलक्षणप्रकरणमिति दृश्यते । विवरणकृता त्वस्मिन्नाह्निके प्रकरणोल्लेखो न कृतः ।

(२) सम्प्रति प्रकृतोपयोग्यर्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कलक्षणप्रकरणम । पूर्वापेक्षया हेतुहेतुमद्भावोऽवान्तरसङ्गति । अस्य प्रकृतोपयोगव्यतिरेकज्ञापकतया तद्व्युत्पादकपूर्वापेक्षत्वात सूत्रम । प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरमित्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया ।

र्थमुपेद्यानुपयुक्तार्थाभिधानमित्यर्थः । उभयथा प्रकृतानाकाङ्क्षिताभिधानमर्थान्तरमिति पर्यवसितम् । यथा शब्दोऽनित्यः कृतकत्वादित्युक्त्वा शब्दो गुणः स चाकाशस्येत्यादि ॥ ७ ॥

निरर्थकं लक्षयति ।

**वर्णक्रमनिर्देशवन्निरर्थकम्**[१] ॥ ८ ॥

वर्णक्रमेण निर्देशो गणचपेत्यादिप्रयोगस्तत्तुल्यं वचनम् । तुल्यता चावाचकत्वेन । अवाचकत्वं तु शक्त्या निरूढलक्षणया परिभाषया वा बोधतात्पर्येणानुच्चरितत्वम् । तथा च समयबन्धव्यतिरेकेणावाचकपदप्रयोगो निरर्थकं निग्रहस्थानमित्यर्थः । तेन मया अपभ्रंशेन शब्देन विचारणीयमितिसमयबन्धेनापभ्रंशप्रयोगे नातिव्याप्तिः । झटितिसंवरणे तु न दोष इत्युक्तप्रायम् । एतत्प्रयोगश्च प्रमादादिनेति बोध्यम् ॥ ८ ॥

अविज्ञातार्थं लक्षयति ।

**परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम्**[२] ॥ ९ ॥

वादिना त्रिरभिहितमपि मध्यस्थप्रतिवादिभ्यामविज्ञातार्थकमविज्ञातार्थमित्यर्थः । मध्यस्थप्रतिवादिनोरेकस्य बोधे तु नाविज्ञातार्थम् । त्रिरभिधानं चानवधाननिबन्धनानबोधनिरासाय । इत्थं चावहिताविकलव्युत्पन्नपरिषत्प्रतिवादिबोधानुकूलोपस्थित्यजनकवाचकपदप्रयो-

(१) अर्थनिरूप्यत्वसङ्गत्या सूत्रम । वर्णक्रमनिदशवन्निरथकमित्यन्वीक्षानयत त्वबोधे वधमानोपाध्याया ।

(२) निरर्थकवचनस्यार्थनिरूप्यत्वात अस्य च सार्थकत्वेन पूर्वव्यावृत्ते सङ्गत्या सूत्रम । परिषत्प्रतियादिभ्यामित्यादि अन्वीक्षानयतत्त्वबोधे वधमानोपाध्याया ।

गोऽविज्ञातार्थम् । वाचकपदेनापार्थकनिरर्थकयोर्वारणम् । परस्य यथा बोधो न भवति तथा शब्दः प्रयोक्तव्यस्तथा कृते अज्ञानेन प्रत्युत्तरासामर्थ्येन परो निरस्तो भविष्यतीति मम जय इत्यभिसन्धानेनेदं प्रयुज्यते । न चैतत्प्रयोगे कथं निग्रह इति वाच्यम् । दुर्बोधशब्दाज्ञानस्य पराजयाप्रयोजकत्वात् । प्रसिद्धार्थप्रयोगे व्युत्थानसम्भवात् प्रसिद्धार्थपरित्यागेन दुरूहार्थप्रयोगस्य भङ्गभयनिबन्धनत्वाच्च । कथमन्यथा भङ्गकाले ऽतिदुरूहयत्किञ्चित्शब्दप्रयोगेणैव जयः स्यान्नैतन्न्याय्यमिति । इदं च त्रेधा सम्भवति असाधारणतन्त्रमात्रप्रसिद्धं यथा नैयायिकेन मीमांसकस्य विचारे तदुभयतन्त्रज्ञे च मध्यस्थे तदन्यतन्त्रसिद्धपरिभाषया तदेकतरेण प्रयुज्यते । उभयतन्त्रानभिज्ञस्य मध्यस्थत्वासम्भवादित्येकम् । अपरं च श्वेतो धावतीत्यादि श्लिष्टम् । तथा कश्यपतनयाधृतिहेतुरयं त्रिनयनतनयवाहनसमाननामधेयवान् तत्केतुमत्त्वादित्यादिकं यौगिकमनपेक्षितरूढिकं चेति दिक् । अतिद्रुतोच्चरितादिकमपीति भाष्यम् ॥ ९ ॥

अपार्थकं लक्षयति ।

**पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम्[1] ॥ १० ॥**

पौर्वापर्यं कार्यकारणभावः तस्यायोगादभावात् । तत्तदर्थबोधकतत्तत्पदघटिताकाङ्क्षाज्ञानादीनामित्यादि । अप्रतिसम्बद्धार्थमनन्वितार्थकमपार्थकमित्यर्थः । तथा चाभिमतवाक्यार्थानुकूलाकाङ्क्षादिशून्यवाचकपदघटितवाक्यमपार्थकमिति पर्यवसितम् । उदाहरणं तु निराकाङ्क्षानासन्नवाक्यमात्रम् । अयोग्यं तु प्रतिज्ञाविरोध इति ॥ १० ॥[2]

(१) अर्थनिरूप्याविज्ञातार्थनिरूपणानन्तरमर्थव्यतिरेकनिरूप्यापार्थकलक्षणमिति सङ्गत्या सूत्रम । पौर्वापर्यायोगादित्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया ।

(२) अत्र न्यायसूचीनिबन्धे इति चतुर्भि सूत्रै प्रकृतोपयोगिवाक्यार्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कप्रकरणमिति दृश्यते ।

अप्राप्तकालं लक्षयति ।

**अवयवविपर्यासवचनमप्राप्तकालम्**[१] ॥ ११ ॥

अवयवस्य कथैकदेशस्य विपर्यासः क्रमवैपरीत्यं तेन वचनमप्राप्तकालमित्यर्थः । यथा प्रतिज्ञाहेत्वादीनां क्रमस्तत्र प्रतिज्ञानन्तरमुदाहरणादिप्रयोगः । एवं वादिना साधनमुक्त्वा सामान्यतो हेत्वाभासा उद्धरणीया इत्येकः पादः । प्रतिवादिनस्तत्रोपालम्भो द्वितीयः पादः । प्रतिवादिनः स्वपक्षसाधनं तत्र हेत्वाभासोद्धरणं चेति तृतीयः पादः । ततो जयपराजयव्यवस्था चतुर्थः पाद इत्यादिक्रमस्तद्वैपरीत्येन कथनमिति ॥ ११ ॥

न्यूनं लक्षयति ।

**हीनमन्यतमेनाप्यवयवेन न्यूनम्**[२] ॥ १२ ॥

अवयवेन स्वशास्त्रसिद्धेन । तेन सौगतस्य द्व्यवयवमात्राभिधानेऽपि न न्यूनत्वम् । अवयवसामान्यहीनायाः कथाया असम्भवादाह । अन्यतमेनेति । यत्किञ्चिदवयवेनेति फलितार्थः । अपिकारादवयवैकदेशहीनत्वस्यापि लाभः । अथवा अन्यतमेनापीत्यनेन एकद्विव्याद्यवयवलाभेन यत्किञ्चिदवयवेन हीनमित्यर्थः । अवयवैकदेशस्यावयवत्वाभावादेव तद्धीनस्यावयवहीनत्वेन लाभात् । वस्तुतस्तु यत्किञ्चिदवयवशून्यावयवाभिधानत्वस्य लक्षणत्वे पर्वतो वह्निमानित्यादिपञ्चावयवप्रयोगेऽपि न्यूनत्वं

---

(१) अथ सिद्धान्तनिरूप्यनिग्रहस्थानत्रिकलक्षणप्रकरणम् । तत्रापि कथञ्चिद न्यायादपार्थकाद् भेदयितुं तदवान्तरसूत्रम । अवयवविपर्यासोऽप्राप्तकालमित्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया । तत्र च अवयवविपर्यासोऽप्राप्तकालमिति पाठ ।

(२) पूर्वस्यैवास्यापि अवयवनिरूप्यत्वसङ्गत्या सूत्रम । हीनमन्यतमेनाप्यवयवेन न्यूनम् । अत्र सूत्रे अपिशब्दो वर्णमात्रानुस्वारन्यूनत्वस्यानुक्तस्य समुच्चयार्थ इत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया ।

स्यात् तत्रापि यत्किञ्चिदवयवेन गिरिरग्निमानित्यादिकेन तत्पक्षसाध्यकेन हीनत्वात् गिरिरग्निमानित्यानुपूर्व्यास्तादृशवर्णसमुदायत्वस्य वा अवयवतावच्छेदकत्वेन यत्किञ्चिदवयवतावच्छेदकरूपावच्छिन्नशून्यत्वविवक्षणे ऽप्येतद्दोषावारणात् । किं तु अवयवतावच्छेदकतावच्छेदकीभूतधर्मावच्छिन्नावच्छेदकताकशून्यत्वे तात्पर्यम् । तादृशधर्मश्च प्रकृतानुमित्यन्यूनानतिरिक्तविषयकबोधजनकतावच्छेदकयत्किञ्चिज्ज्ञानीयविषयताश्रयवर्णत्वसमनियत---समुदायत्ववत्त्वादिः । तादृशैकसमुदायत्वावच्छिन्नसत्त्वे तादृशसमुदायत्ववत्त्वावच्छिन्नावच्छेदकताकशून्यत्वाभावादिति । इदं सभाक्षोभादिना भवतीति ॥ १२ ॥

अधिकं लक्षयति ।

हेतूदाहरणाधिकमधिकम्(१) ॥ १३ ॥

हेतूदाहरणेत्युपलक्षणम् । दूषणाधिकमपि बोध्यम् । प्रतिज्ञाधिकं च पुनरुक्तमर्थान्तरं वा । यथोक्तानभिधानान्न पुनरुक्तत्वसाङ्कर्यम् । पर्वतो वह्निमानितिप्रतिज्ञानन्तरं धूमादालोकादितिहेतुद्वयप्रयोगे नीलधूमादित्यादिप्रयोगे च हेत्वधिकम् । योयो धूमवान् स वह्निमान् यथा महानसं यथा चत्वरमित्यादौ यो धूमवान् स वह्निमान् वह्निमानेव धूमवानित्यादिनानाविधव्याप्तिबोधाभिप्रायेण प्रयोगे वा उदाहरणाधिकम् । न चैकहेतुप्रयोगे हेत्वाकाङ्क्षानिवृत्तेरर्थान्तरत्वं स्यात् क्वचित् तत्साङ्कर्ये ऽपि क्षतिविरहात् । असङ्कीर्णं तु नीलधूमादित्यादि । लक्षणं तु हेतौ व्यर्थविशेषणाभिधानविभिन्नार्थकहेतुद्वयाभिधानविभिन्नार्थकोदा-

(१) पूर्ववतसङ्गत्या सूत्रम। हेतूदाहरणाधिकमधिकम् । अत्र हेतूदाहरणत्वमविवक्षितमित्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया ।

हरणद्वयाभिधानविभिन्नार्थकदृष्टान्तद्वयघटितोदाहरणाभिधानहेतुसाध्यविशेषणाधिक्यघटितोदाहरणाभिधानदूषणद्वयाभिधानान्यतमत्वम् । सूत्रस्य तत्रैव तात्पर्यात् ॥ १३ ॥(१)

पुनरुक्तं लक्षयति ।

**शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यतरानुवादात्(२) ॥ १४ ॥**

पुनर्वचनमुक्तार्थस्य पुनःकथनं पुनरुक्तम् । अत्र निश्चयाजनकत्वं विशेषणं देयं तेनानुवादव्युदासः । तस्य विभागमाह । शब्दार्थयोरिति । अन्यतरानुवादादित्यनेन सम्बन्धः । शब्द एकार्थकैकानुपूर्व्यवच्छिन्नः शब्दः । अर्थ एकार्थकविभिन्नानुपूर्वीकशब्दस्तयोरन्यतरानुवादादन्यतरस्य पुनःकथनात् तयोः पुनःकथनभेदादिति वा । द्वैविध्यमिति शेषः । केचित्तु शब्दार्थयोः पुनर्वचनं पुनरुक्तमित्यर्थः । शब्दार्थयोरित्यनेन विभागो दर्शितः । अन्यतरानुवादादनुवादभिन्नत्वादित्याहुः । शब्दपुनरुक्तं यथा घटो घट इति । अर्थपुनरुक्तं यथा घटः कलस इत्यादि । न चेदमनाकाङ्क्षिताभिधानत्वेनार्थान्तरं स्यात् पुनरुक्तव्यावर्तकविशेषणस्यार्थान्तरलक्षणे देयत्वात् । इदं भ्रमादिना भवति ॥ १४ ॥

(१) अत्र न्यायसूचीनिबन्धे इति त्रिभिः सूत्रैः स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणमिति दृश्यते ।

(२) शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् । अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम् । तदनेन सूत्रद्वयेन पुनरुक्तमेकमेव निग्रहस्थानमित्यादि तात्पर्यटीका । अधिकस्येव पुनरुक्तस्यापि उक्तिनिरूप्यत्वादनन्तरं पुनरुक्तलक्षणप्रकरणम् । सूत्रम् । शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादादित्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः । एवमन्यत्रापि शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादादिति पाठः ।

**प्रत्युच्चारणमननुभाषणम्**[१] ॥ १६ ॥

त्रिरभिहितस्येति वादिनेत्यादि। एतेन (प्रथमवचने ऽननुभाषणे वादिना वारत्रयं वाच्यमिति दर्शितम्। अज्ञान)साङ्कर्यवारणाय ज्ञातत्वमर्थविशेषणम्। विक्षेपसाङ्कर्यवारणाय कथायामवस्थितत्वं प्रतिवादिविशेषणं देयमिति। यदाहुराचार्याः। अज्ञानसा(ङ्कर्यनिरासायाज्ञानमनाविष्कुर्वतेति विक्षेपसाङ्कर्यनिरासाय कथामविच्छिन्दतेति च वि)शेषणीयमिति। न चाप्रतिभासाङ्कर्यमुत्तरप्रतिपत्तावपि सभाक्षोभादिना अननुभाषणसम्भवात्। इदं चतुर्धा एकदेशानुवादात् विपरीतानुवादात् केवलदूषणोक्त्या (स्तम्भेन वेति। सर्वनामपदेनानुवादात् पञ्चममित्याचार्याः ॥ १६ ॥

अज्ञानं) लक्षयति।

**अविज्ञातं चाज्ञानम्**[२] ॥ १७ ॥

भावे निष्ठाप्रत्ययः। चकारात् परिषदा विज्ञातार्थस्य वादिना त्रिरभिहितस्यापीत्यस्य लाभः। तथा च तादृशस्याज्ञानं तादृशस्याज्ञानाख्यं निग्रहस्थान(मित्यर्थः। इदं च किं वदसि बुध्यत एव नेत्याद्याविष्करणेन ज्ञा)तुं शक्यत इति ॥ १७ ॥

अप्रतिभां लक्षयति।

**उत्तरस्याप्रतिपत्तिरप्रतिभा**[३] ॥ १८ ॥

---

(१) अथ वचननिरूप्यत्वादुत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणं सूत्रम। विज्ञातस्येत्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया। तत्र तात्पर्यटीकादिषु च अप्रत्युच्चारणमिति पाठ। अन्यत्र क्वचित् त्रिरभिहितस्याप्यनुच्चारणमिति पाठ।

(२) ज्ञानाभावनिरूप्यत्वसङ्गत्या सूत्रम। अविज्ञातं चाज्ञानमित्यन्वीक्षानय तत्त्वबोधे वर्धमानोपाध्याया.।

(३) सूत्रम्। उत्तरस्याप्रतिपत्तिरप्रतिभेत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया।

वाद्युक्तमर्थं जानतापि यत्रोत्तरं न प्रतिपद्यते तत्राप्रतिभानाम निग्रहस्थानमित्यर्थः । न (चात्राननुभाषणस्यावश्यकत्वात् तदेव दूषणमस्त्विति वाच्यम् । परोक्ता)-ननुवादे हि तत् परोक्तमनूद्यापि यत्र नोत्तरं प्रतिपद्यते तत्रासाङ्कर्यात् । वस्तुतस्तु यत्र परोक्तमनूद्यापि सभाक्षोभादिना नोत्तरं दीयते उत्तरप्रतिपत्तिश्च वर्तते (तत्राननुभाषणम् । एवं चाननुभाषण)लक्षणे उत्तरप्रतिपत्तिशालिनेति प्रतिवादिविशेषणं देयमिति ॥ १८ ॥

विक्षेपं लक्षयति ।

**कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः**(१) ॥१६॥

कार्यव्यासङ्गा(दिति ल्यब्लोपे पञ्चमी । कार्यव्यासङ्गमुद्भाव्येत्यर्थः । कार्यव्यासङ्गश्चासम्भवत्कालान्तरकत्वेनारोपितस्तेन तादृशकथाविच्छेदो विक्षेप इत्यर्थः)॥ १६ ॥(२)

मतानुज्ञां लक्षयति ।

**स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा**(३) ॥ २० ॥

दोषाभ्युपगमो दोषाभ्युपगमज्ञापकदोषानुद्धरणम् । अप्रतिषिद्धमनुमतं भ(वतीति न्यायात् **) । यथा शब्दो नित्यः श्रावणत्वादित्युक्ते ध्वनावनैकान्तिकत्वेन दूषयित्वा तेनैव हेतुना शब्दस्यानित्यत्वे साधिते ध्वनेरप्यनि-

(१) अप्रतिभावद्विक्षेपस्यापि कथानिरूप्यत्वात तदनन्तरं विक्षेपलक्षणं सूत्रम । कार्यव्यासङ्गात कथाविच्छेदो विक्षेप इत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया. ।

(२) अत्र न्यायसूचीनिबन्धे इति चतुर्भि सूत्रैरुत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणमिति दृश्यते ।

(३) सूत्रम । स्वपक्षे दोषाभ्युपगमादित्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया । क्वचित स्वपक्षदोषाभ्युपगमादिति पाठ ।

त्यत्वान्न दोष इत्युक्तौ तत्राप्यसिद्धत्वादयो द्रष्ट(व्या इति सोऽयं मतानुज्ञया निगृहीतः स्यादिति ॥ २० ॥

पर्यनुयोज्योपेक्षणं) लक्षयति ।

**निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम्**(१) ॥ २१ ॥

निग्रहस्थानं प्राप्तवतोऽनिग्रहः निग्रहस्थानानुद्भावनमित्यर्थः । यत्र त्वनेकनिग्रहस्थानपातस्तत्रैके(नोद्भावने न पर्यनुयोज्योपेक्षणं यावन्तो)दोषास्तावन्त एकदोद्भाव्या इतिनियमाभावात् तथा चावसरे निग्रहस्थानोद्भावनत्वावच्छिन्नाभावः पर्यनुयोज्योपेक्षणमिति फलितम् । इदं मध्य(स्थेनैवोद्भाव्यम् । तेन वादिना स्वकीयदोषोद्भावनासम्भवे ऽपि न क्षतिः । वादे तु स्वयमप्युद्भा)व्यमिति ॥ २१ ॥

निरनुयोज्यानुयोगं लक्षयति ।

**अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः**(२) ॥ २२ ॥

अनिग्रहस्थाने तन्निग्रहस्थान(रहिते तन्निग्रहस्थानस्याभियोगो निरनुयोज्या)नुयोग इति । अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तनिग्रहस्थानोद्भावनमिति फलितम् । तेनैकनिग्रहस्थानस्थले निग्रहस्थानान्तरोद्भावनस्य (सङ्ग्रहः । स चतुर्धा छलं जातिराभासोऽनवसरग्रहणं

---

(१) मतानुज्ञाया उद्भावननिरूप्यनिग्रहस्थानत्वमितिसङ्गत्या सूत्रम् । निग्रहस्थानप्राप्तस्येत्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्याया. ।

(२) अनुयोगनिरूप्यत्वसङ्गत्या सूत्रम् । अनिग्रहस्थान इत्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

च।) आभासो व्यभिचारादावसिद्ध्याद्युद्भावनम् । अनवसरग्रहणं चाकाल एवोद्भावनम् ॥ २२ ॥(१)

अपसिद्धान्तं लक्षयति ।

**सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः(२) ॥ २३ ॥**

सिद्धान्तं स्वशास्त्राभ्युपगतं) वक्तव्यमिति नियममङ्गीकृत्य। अनियमात् तन्नियममतिक्रम्य कथनमपसिद्धान्तः। अपसिद्धान्तं दूषणं सौगतो न मन्यत इत्यन्यदेतत् ॥२३॥

क्रमप्राप्ततया हेत्वाभासलक्षणे करणीये पूर्वोक्तमेव स्मारयति ।

**हेत्वाभासाश्च यथोक्ताः(३) ॥ २४ ॥**

यथोक्ता यथावदुक्ताः । बहुवचनेन सामान्यविशेषलक्षणानि ज्ञापितानि । चकारश्चानुक्तसमुच्चायक इति ॥ २४ ॥(४)

समाप्तं पञ्चमाध्यायस्याद्यमाह्निकम् ॥

ग्रन्थावसाने स्वशास्त्रस्य फलमुपसंहरति ।

**आम्नायार्थेत्यादि(५) ॥**

---

(१) अत्र न्यायसूचीनिबन्धे इति त्रिभिः सूत्रैर्दोषनिरूप्यमतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणमिति दृश्यते ।

(२) सूत्रम् । सिद्धान्तमभ्युपेत्येत्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

(३) हेत्वाभासाश्च यथोक्ता । हेत्वाभासा यथा येन प्रकारेणोक्ता लक्षितास्तथैव तेनैव रूपेण निग्रहस्थानानि तथा येन रूपेणासिद्धित्वादिना तेषां हेतुदूषकत्वं तदेव रूपं पुरस्कृत्य हेत्वाभासप्रयोक्तृतया कथकाशक्तसुचयनमपीति सूत्रार्थ इत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

(४) अत्र न्यायसूचीनिबन्धे इति द्वाभ्यां सूत्राभ्यां कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणमिति दृश्यते ।

(५) भाष्यवार्त्तिकतात्पर्यटीकाविश्वनाथकृतवृत्तिन्यायसूचीनिबन्धादिषु पर्यालोचितेष्वपि नेदं तेषु दृश्यते भाष्ये ऽप्येतादृशं प्रतीकं न दृश्यत इति किमिदं कुतस्त्यमिति चिन्तनीयम् ।

आम्नायो वेदः तस्यार्थः विधिनिषेधादिलक्षणस्तदविरोधेन न्यायस्य जीवात्मपरमात्ममननानुकूलपञ्चावयववाक्यस्य चर्चां मदेतच्छास्त्रानुसारेणानुसन्धानं यः साधकः करोति तेन निःश्रेयसं मोक्षरूपं प्राप्यते अन्यथा वेदार्थविरोधेन न्यायचर्चायां गोमायुयोनिः शृगालयोनिः प्राप्यत इत्यर्थः। एतेनान्वीक्षिकीमधीयानः शार्गालीं योनिमाप्नुयादिति भगवता श्रीरामेण जाबालिमृषिं प्रति दत्तः शापो वेदाननुसरण एवेति सूचितम् ॥

इति श्रीराधामोहनविद्यावाचस्पतिगोस्वामि-
भट्टाचार्यविरचिते गोतमसूत्रविवरणे
पञ्चमाध्यायविवरणम् ॥
समाप्तश्चायं ग्रन्थः ॥
॥ श्रीहरिः ॥



'*sat*'[1] imply mere existence, since it expresses the relation "the Self is *Brahman*" (*sa ātmā*)

704 Hence, for us, the words "*sad* etc" in Scripture signify by clear implication (*lakshanā*) the Self which is not within the scope of words or other proofs

705 Even if mere existence which is amenable to proof is implied, then too the fact that Scripture treats of *Brahman* cannot be gainsaid

706 A passage which reveals a thing knowable by another proof, does not nevertheless cease to be a proof in secular practice, as, for example, the words of a trustworthy friend

707 The words of a trustworthy friend "I have understood that thing" do not lose their authority, being independent of other proof But it will not be authoritative by itself, if the hearer himself is to understand that thing

708 The words of an incredible friend are not authority at all, though connected with other proofs Hence, since the words of a trustworthy friend are authority though connected with other proofs, they will be authority similarly for the thing itself

709 and 710 This being so, since the *Vēdāntas* teach some superhuman knowledge which becomes clear on the destruction of all duality, how can they, like the words of a trustworthy friend, be said to be of no authority for that reason? And if their authority is established, the thing they treat of is established too, and hence nothing more need be said about it

---

[1] in सदेवसोम्य etc

711 Further, if other proofs are to be assumed in the case of the unity of Self, by reason of its being established (*siddha*), are they not likewise to be assumed in the case of injunction because the latter is of the nature of something to be done?

712 Injunction is as much a thing to be done as commands and entreaties Only in this way is it implied by the potential mood, &c

713 Injunction is of the nature of a thing to be done, because it depends on something else for its accomplishment And this is not affected by results derivable from other proofs

714 If it be said that injunction is a result in a special sense, then, such speciality is not absent even in secular acts.

715 If the meaning is that it is cognisable by special knowledge, nothing can prevent the same being said of any thing whatsoever

716. Only this much depends on Scripture, namely, it teaches what is its object and what not What ought or ought not to be done depends, not on Scripture, but on reasoning[1]

717 As for the objection[2] about the unity of Self in consequence of its being established, the same objection applies even to an injunction when it is accomplished

718 It cannot be said that injunction is not established if its object such as sacrifice etc is not per

[1] *i e* whether the act will be a means to achieve the end or not

[2] That it is knowable by other proofs See verse 711 *supra*

formed For, if it is not established, the injunctory passages of Scripture will become fruitless [1]

719 What proof can convey more instruction than the Vedic passage which alone is able to express clearly the true nature of things, namely, the unity of Self? [2]

720 The need for other proofs is only in cases where the springing of knowledge depends on a knower etc, and not where all difference is destroyed

721 "In *Vēdānta* too, the connection between the meanings of words is dependent on an injunctory meaning In secular practice, the connection, being the result of arrangement, is derived from other proofs

722 "The arrangement of words is preceded by an intention to speak And an intention to speak has reference solely to an object which is knowable by other proofs

723 "Hence the derivation of any meaning from the *Vēdānta* in the absence of injunction is a delusion, like the mistaking of a marsh for a lake"

724 Listen now to what is to be said to meet this argument

725 Why should the dependence on injunction be accepted for the congruity of word-meanings? Why should not the dependence on other word-meanings be assumed?

---

[1] The injunction must first be established before anything is done on its authority

[2] viz the sentence तत्त्वमसि The unity of Self is not amenable to other proofs

726 Thus, if connection between word-meanings is established even without injunction, then injunction would become fruitless for want of an object

727 This fault of meaninglessness extends also to other words[1] If it be said that they convey their own particular meaning, even the other words[2] may be said to do so

728 This being so, tell me why injunction is not fruitless, sharing, as it does, the same fate with words which are not injunctory[3]

729 "I shall explain The injunctory word implies what cannot be known by any other proof And the one purpose it serves is the implication of connection between words[4]

730 "Such implication does not arise from words which are not injunctory, since they mean things established by other proofs and are therefore merely explanatory"

731 The injunctory meaning is understood even when no connection is apparent If the connection is known, the injunctory word will express what is already established

732 If all knowledge of connection be ignored, the word will forfeit its very nature[5] Hence, every-

---

[1] Such as nouns etc

[2] viz verbs etc

[3] If other words depend on the potential mood for their meaning, the latter equally depends on the former for its own

[4] See verse 721 *supra*

[5] The nature of a word is to express its own meaning in connection with other words The nature of a sentence is otherwise

where, a word expresses its meaning only when its connection is known

733 Any other assumption would lead to inconsistency throughout If the relation of signifier and signified be confined only to the connection between a sentence and its meaning, then, since each sentence refers only to one particular object, there will be no idea of any connection whatever

734 A particular thing, such as the quality of a cow, cannot have any application to another particular thing No connection is discovered, since each is established independently

735 and 736 Even that connection which is inferred from the curiosity of the hearer following on the understanding of a word, is not clearly discernible For, how can it be implied only by the word, being defined as it is by some action on the part of the hearer ?

737 If it is said to be understood from the word before any inference, why should not the understanding of the word be preceded by inference ?

738 Even in the case of a hearer who acts after understanding an injunction from the word, his knowledge of the meaning of the word is derived from inference alone

739 Since injunction is to be inferred from an act which is an object of direct perception, it too, like all objects of direct perception, assumes a secular nature

740 If injunction is not an effect (*kārya*), what benefit is to be derived from the performance of sacrifices ?

In that event, even the injunctory passage would teach what is already established

741 Further, as between the word and the inference, priority is hardly discoverable, as between the seed and its products Hence the priority of the word cannot be assumed

742 Or inference may rightly be said to precede the word, since a word whose connection is unknown, cannot be expressive, but only explanatory

743 He who is taught by inference[1] does not know what is taught by the word The knowledge of another knower either of the same or of a different object, does not, by reason thereof, become secondary (*anuvādaka*)

744 Only the reason of the action can be inferred from the action itself And since this is established by secular proofs, there is no proof to establish any Scriptural injunction

745 Every action is not the exclusive consequence of the idea that something should be done, for, action is seen to result at the sight of things like serpents etc.

746 The fruit of human endeavour is action, and the cause of such endeavour is the action implied by the injunction The cause of the endeavour cannot be its fruit All these (contradictory) statements are made by yourself

747 In the case of attempts to run away from serpents etc, the action is not the fruit, for, there is only

[1] *e g* a child

an absence of danger, and mere negation cannot anywhere be a fruit

748 "Injunction is of the nature of proof, being expressed by the injunctory word. Without being in need of any other proof, it is itself a proof by implication "[1]

749 The implication is derived neither from the word nor from any other proof. Further, there will be the fallacy of an unoriginated activity[2]

750 You have thus to abandon unwittingly the very theory you contended for[3] Let the injunctory Scripture be a proof for anything whatsoever Of what use is it?

751 Of what is it the proof? Not of sacrifice etc which are proved by their respective words Nor is the secular connection of things (*samsarga*) dependent on injunction, for the hearer understands the connection even in the absence of injunction from a passage which is not injunctory[4]

752 If it be said that the capacity to bear fruit depends on injunction, it is not so, for, even there, its importation by the word itself cannot be gainsaid

753 Therefore the connection between things, like

---

[1] *i e* an injunction itself implies means, doer, fruit etc

[2] नियोगस्य मानान्तरागम्यत्वे लिङादेस्तत्र शक्त्यग्रहादज्ञातशक्तिरपि पुरुषो लिङादिश्रवणात्प्रवर्तते ॥ Anandagiri

[3] For, all action based on a word can take place only after the word is understood

[4] *e g* from the sentence "he is the king's servant"

any other connection, is not dependent upon an injunctory, meaning Thus knowledge can result even without injunction

754 Thus all words, placed together in accordance with their respective dependence (*ākāmkshā*), imply a particular meaning by virtue of their mutual relation [1]

755 "Let there be an injunction of the knowledge of Self to bring about such knowledge, in the same way as ritual injunction brings about ritual

756 "Activity here will also result in the same way as activity in rituals, for, just as a thing not yet done is done, so too, a thing yet unknown is known "[2]

757 Thus do some who are fond of injunction impose an injunction even on a thing which does not admit of any injunction This is to be said against them

758 The scope of injunction is not the understanding of the nature of the rite, but the connection of the enjoined rite with its fruit

759 The idea of agency is inconsistent with the knowledge of Self, for the Self which is the agent cannot be the subject of injunction [3]

760 Grain etc, for example, though carefully examined and understood by direct perception, convey no reference to any rite

[1] Not by virtue of any injunction

[2] The opponent supposes two kinds of injunction in the *Vēdas*

[3] Even supposing that the *jīvātman* or *paramātman* is the doer, neither depends on injunction for a true understanding of its nature, being self-established

REPRINT FROM THE PANDIT.

# तार्किकरक्षा ।

## श्रीमदाचार्यवरदराजविरचिता ।

तत्कृतसारसङ्ग्रहाभिधव्याख्यासहिता ।

महोपाध्यायकोलाचलश्रीमल्लिनाथसूरिविरचितया
निष्कण्टकाख्यया व्याख्यया ज्ञानपूर्णनिर्मितया
लघुदीपिकाख्यया टीकया च समन्विता ।

वाराणसीस्थराजकीयप्रधानसंस्कृतपाठशालीयपुस्तका-
लयाध्यक्षेण पण्डितविन्ध्येश्वरीप्रसाद-
द्विवेदिना संस्कृता ।

Copyright Registered under Act XXV of 1867



वाराणस्याम्
मेडिकल्हाल्नामकयन्त्रालये
१९०३ ईसवीयवर्षे
मुद्रिता ।

## ॥ श्रीः ॥

ॐ नमः परमात्मने ।

---

# सटीकतार्किकरक्षायाः

## भूमिका ।

---

माधवाचार्याणां सर्वदर्शनसङ्ग्रहे(१) पूर्णप्रज्ञदर्शननिरूपणे(२)

---

(१) एशिआटिक्सोसाइटीसमादेशेन कलिकातानगरे मुद्रिते सर्वदर्शनसङ्ग्रहपुस्तके तन्मूलतया मुद्रिते पुस्तकान्तरेऽपि समाप्तावेव लिखितमस्ति । "इतः परं सर्वदर्शनशिरोमणिभूतं शाङ्करदर्शनमन्यत्र लिखितमित्यत्रोपेक्षितमिति ।" इदमेवावलम्ब्येदानीं विद्वांसः कल्पयन्ति यत् शाङ्करदर्शनं पञ्चदशीग्रन्थे तथा विवरणप्रमेयसङ्ग्रहग्रन्थे च माधवाचार्येण सन्यासाश्रमे नाम्ना विद्यारण्यस्वामिना लिखितं तस्मात् सर्वदर्शनसंग्रहस्य पञ्चदशीग्रन्थेन विवरणप्रमेयसङ्ग्रहेण च सम्बन्ध इति । किं तु वाराणसीनिवासिश्रीयुक्तबाबूगोविन्ददासमहोदयानां निकटे वर्तमाने सर्वदर्शनसङ्ग्रहान्तिमभागे पातञ्जलदर्शननिरूपणानन्तरं शाङ्करदर्शननिरूपणस्य विद्यमानत्वादनुमीयते मुद्रितपुस्तकमूलभूतलिखितादर्शपुस्तकस्य परमादर्शपुस्तकस्य वा खण्डितत्वात् "इतः परं सर्वदर्शनशिरोमणिभूत"मित्यादिलेखो लेखकशोधककल्पितः, सर्वदर्शनसंग्रहलेखशैली भिन्नशैलीकत्वात् पञ्चदशीविवरणप्रमेयसंग्रहसम्बन्धोऽप्यसङ्गत एवेति ।

केचित्तु तार्किकशिरोमणिरघुनाथकृतं सर्वदर्शनशिरोमणिग्रन्थ माधवाचार्यकृतसर्वदर्शनसङ्ग्रहस्य व्याख्यानमिति वर्णयन्ति । तदप्यदर्शनमूलकम् यत एलएल्. डी., सी. आई. ई. उपाधिधारिणा राजेन्द्रलालमित्रेण नोटिसेस् आफ संस्कृतमेनुस्क्रप्टसपुस्तके १८४७ संख्यायां तद्ग्रन्थस्य वर्णनं लिखितमिति । सोऽपि ग्रन्थो माधवाचार्यकृतसर्वदर्शनसंग्रहवदेव बोध्यः ।

(२) एशिआटिक्सोसाइटीमुद्रितपुस्तके ७० पृष्ठे ।

"तार्किकरक्षायां(१) च ।

धर्मस्य तदतद्रूपविकल्पानुपपत्तितः ।

धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत् ॥"

इति लेखदर्शनात् कोसौ तार्किकरक्षाग्रन्थः केन चाचार्येण रचितो यो हि वेदभाष्यादेः प्रणेतृभिर्माधवाचार्यैः(२)रुद्धृत इति पर्यालोचयता मया चिरं तदन्वेषणे कृते भूतपूर्वैर्वाराणसीस्थैर्विद्वद्वरैः श्रीहरिकृष्णव्यासैः सम्पादितं तज्ज्येष्ठसूनुश्रीविद्याधरव्यासेन दत्तं वरदराजाचार्यकृततार्किकरक्षापुस्तकं(३) तत्कृततद्व्याख्यानसारसङ्ग्रहपुस्तकं(४)

(१) अत्र मुद्रितपुस्तके पृष्ठे ३०० ।

(२) सर्वदर्शनसङ्ग्रहारम्भे ।

"श्रीमत्सायणदुग्धाब्धिकौस्तुभेन महौजसा ।
क्रियते माधवार्येण सर्वदर्शनसङ्ग्रहः ॥
पूर्वेषामतिदुस्तराणि सुतरामालोड्य शास्त्राण्यसौ
श्रीमत्सायणमाधवः प्रभुरुपन्यास्यत् सतां प्रीतये ॥" इत्यादि ।

सायणमाधवाचार्येणैव वेदभाष्यपराशरमाधवव्यवहारमाधवकालमाधवजैमिनीयन्यायमालाविस्तरादियन्थाः प्रणीता इति नैव तिरोहितमस्ति विदुषाम् ।

(३) पुस्तकमिदं कागजाख्याधारे प्राचीनदेवनागराक्षरैः कुटिलेतिप्रसिद्धैर्लिखितं विशुद्धं मूलमात्रं सम्पूर्णम् ।

(४) इदमपि पूर्ववत् । अत्र लेखकेन लिपिकाल एवं लिखितः "संवत् ५७ श्रावणसुदि २" परन्तु संवत् १४५७ इति बोध्यः निरूप्यमाणलघुदीपिकापुस्तकान्ते लेखकेन लिपिकालस्य "सवत् १४५९ वर्षे वैशाष(ख)शु· २" एवंलिखितत्वात् तयोः कागजाख्याधारस्य लिपेश्चैकाकारत्वादेकलेखकलिखितत्वाच्च ।

ज्ञानपूर्णविरचितलघुदीपिकाख्यतट्टिप्पणपुस्तकं[1] च लब्धम् ।

तल्लब्ध्या जातोत्साहेन मया व्याख्यानान्तरान्वेषणे कृते एकस्य वृद्धस्यास्मत्सम्बन्धिनो गृहे ब्राह्मणसम्पादनीयत्वेन[2] स्थापितेषु वस्तुषु संख्यापूरकत्वेन निक्षिप्तेषु दुर्दशापन्नेषूत्तमेषु हस्तलिखितपुस्तकेषु हठादाकर्षितेषु भूयो भूयो निवार्यमाणेन मया कोलाचलमल्लिनाथसूरिकृतस्य निष्कण्टकाभिधस्य सारसङ्ग्रहानुगततार्किकरक्षाव्याख्यानस्य पुस्तकं प्रथमपरिच्छेदमात्रं[3] लब्धम् । तदनन्तरमस्यैव ग्रन्थस्य पुस्तकान्तरमपि वाराणस्यामेवैकस्य संन्यासिनो निकटे वर्तमानं कृमिभक्षितसर्वदेशं विशीर्णमन्ते खण्डितं च[4] लब्धम् । अनन्तरं वाराणसीस्थराजकीयाङ्गलपाठ-

(१) इदमपि सम्पूर्णं किन्त्वनेकस्थलेष्वलग्नपाठमशुद्धं च ।

(२) अध्ययनाध्यापनादिर्ब्राह्मणधर्मः स च पुस्तकेन विना न भवतीति पुस्तकं शालग्रामशिलासमीपे स्थाप्यं वा गङ्गायां प्रक्षेपणीयमिति तस्य वृद्धस्य सिद्धान्तः ।

(३) इदं पुस्तकं कागजाख्याधारे देवनागराक्षरैर्लिखितं जीर्णं त्रुटितपार्श्वभागं स्पर्शानर्हमशुद्धम् । अत्र यद्यपि लेखकेन लिपिकालो न लिखितस्तथापि जीर्णत्वाद्याकारेणानुमीयते यत् वर्षसार्द्धशतद्वयात् पूर्वं लिखितमिति ।

(४) अत्रारम्भपत्रस्य पूर्वपृष्ठे एवं लिखितमस्ति । "श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां वरदराजीयटीकानिष्कण्टिकापुस्तकम् ॥" एवं हस्ताक्षरमुद्राचिह्नितान्यनेकानि पुस्तकानि वाराणस्यां क्वचिद्देशान्तरेष्वपि महापुस्तकालयेषु वर्तमानानि दृश्यन्ते । तस्मादनुमीयते यत् वाराणस्यां कोऽपि महान् पुस्तकालय उक्तमहात्मन आसीदिति ॥

शालाध्यापकेन पण्डितगणेशदत्तत्रिपाठिना प्रदत्तं सारसङ्ग्रहसहितं तार्किकरक्षापुस्तकं प्रथमपरिच्छेदमात्र(१)मन्यच्च पण्डितवरगौरीनाथशास्त्रिणा समर्पितं तदपि प्रथमपरिच्छेदमात्रं(२) प्राप्तम् ।

एतेषां पुस्तकानां प्राप्त्यातीवमुदितचित्तोहममुं निबन्धोत्तमं सटीकं मुद्रणद्वारा प्रकाशयितुं समुत्सुको वाराणसीस्थराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षाणां प्रभुवराणां श्रीप्रमताम् आर्थरवेनिससाहबमहाशयानां निदेशं समधिगम्य पूर्वं विजयनगरसंस्कृतसीरीजूनामकपुस्तकावल्यां मुद्रयितुं प्रवृत्तः किं तु तस्या विश्रान्तत्वात् काशीविद्यासुधानिधिनामके मासिकपत्त्र इदानीं मुद्रितवान् । मुद्रणारम्भश्च येन प्रकारेण जातः स चोक्तमहाशयैरेव पुस्तकारम्भे ऽङ्गलभाषया सङ्क्षेपतः प्रकाशितः ।

पूर्वोक्तेषु पुस्तकेष्वस्मन्निकटे वर्तमानेष्वपि संशोधनस्य सम्यक्त्वसम्पादनेच्छया मया श्रीयुक्तरामकृष्णगोपालभाण्डारकर एम्. ए. पीएच्. डी., महाशयसम्पादितं निष्कण्टकापुस्तकं पुण्यग्राम(पूना)स्थडेकन्कालेज्पुस्तकालयस्थमुक्तमहाशयैः कृपया प्रदत्तं समानायितम् । तेन खण्डितेनाशुद्धेनापि परमादर्शस्थैः कतिपयगुणैर्युक्तत्वादुपयोगः सम्पादितः ।

---

(१) अत्र लेखकेन लिपिकाल एव लिखितः । सवत् १६६१ वर्षे । आश्विनवदि १४ चतुर्दश्या लिखितमदः पुस्तकं कृष्णभट्टात्मजेन माधवभट्टेन वशिष्ठगोत्रिणा स्वपाठार्थं परपाठार्थं च ।

(२) अत्र यद्यपि लेखकेन लिपिकालो न लिखितस्तथापि जीर्णत्वाद्याकारेणानुमीयते वर्षशतद्वयात् पूर्वं लिखितमिदं प्रायः शुद्धम् ।

अत्र वाराणसीस्थराजकीयसंस्कृतपाठशालीयन्यायाध्यापकेन तर्कतीर्थोपाधिधारिणा श्रीसुरेन्द्रलालगोस्वामिना प्रूफ्पत्त्रसमालोचनया उपकृतोऽस्मि ।

एतावतापीदं मुद्रितं पुस्तकं विशुद्धं जातमिति वक्तुमशक्यं किं त्वस्मिन् कार्ये ऽननुभूतपूर्वजातीयो महानाऽऽयासः कृतो मयेति ।

प्रथमपरिच्छेदस्य ज्ञानपूर्णकृता लघुदीपिकाटीका त्वन्ते मुद्रिता भविष्यतीत्यादर्शपुस्तकस्यापाततो दर्शनेन पूर्वं प्रतिज्ञातम् । किं तु पश्चात् सम्यक्समालोचनेनादर्शपुस्तकस्यात्यन्ताशुद्धत्वं छिन्नस्थलेषु ग्रन्थत्रुटिं चावगम्येदानीं तन्मुद्रणं साहसं मन्यमानेन मयोपेक्षितमित्यादर्शान्तरदानेनानुग्राह्योऽहमुत्साहवर्धकैर्देशोपकारपरैः पुस्तकान्वेषकैः पुस्तकोद्धारकैर्विद्वद्वरैर्यतो द्वितीयसंस्करणे तत्सम्पन्नं भवेदिति ।

दुर्लभेन पुरातनेन न्यायदर्शनानुरागिजनानन्दवर्धकेनामुना निबन्धेन मनस्तावद् विनोदयन्तो विद्वद्वरा मामकीनं परिश्रममिदानीं सफलयन्तु इति जगदीश्वरं प्रार्थय इति ॥

---

सटीकतार्किकरक्षायाः प्रणेता आचार्यवरदराजश्च(१) कस्मिन् देशे कस्मिन् काले आसीदितीदानींपर्यन्तं

---

(१) अपरोऽपि वरदराजो वैयाकरणसिद्धान्तकौमुदीप्रणेतॄणां भट्टोजिदीक्षितानां शिष्य आसीत् । अनेन सारसिद्धान्तकौमुदी लघुसिद्धान्तकौमुदी मध्यसिद्धान्तकौमुदी च रचिता । यथाह मध्यसिद्धान्तकौमुद्याम् ।

"नत्वा वरदराजः श्रीगुरून् भट्टोजिदीक्षितान् ।
करोति पाणिनीयानां मध्यसिद्धान्तकौमुदीम् ॥"

सारसिद्धान्तकौमुदीपुष्पिकायां "श्रीचटविटिकण्टिवरदराजभट्ट-विरचिता सारसिद्धान्तकौमुदी समाप्ता" अत्र चटविटिकण्टीत्युक्त्या तैलङ्गोऽयमित्यनुमीयते। अयं च भट्टोजिदीक्षितानां समय एवासीत्। भट्टोजिदीक्षितसमयश्च १६७६–१७१६ संवत्सरात्मकः यतस्तस्मिन्नेव काले वाराणस्यामेव निवसता जगन्नाथपण्डितराजेन सम्राट्जगन्नाथापरनामधेयेन* भट्टोजिदीक्षितकृतप्रौढमनोरमाग्रन्थस्य कुचमर्दननामकः खण्डनग्रन्थः कृतः. तत्पुस्तकं च काव्यप्रकाशटीकाकारस्य भट्टवामनाचार्यस्य निकटे वर्तत इति मुम्बईनगरे द्वितीयावृत्तिमुद्रिते काव्यप्रकाशपुस्तके भूमिकायां २४ पृष्ठे लिखितम्। अत एव भट्टोजिदीक्षितेन स्वपाण्डित्यप्रख्यापनाय मनोरमाग्रन्थो जगन्नाथपण्डितराजस्य समीपे प्रेषित इति किंवदन्ती सङ्गच्छत इति॥

अपि च नागेशभट्टेन महाभाष्यप्रदीपोद्द्योतारम्भे "हरिदीक्षितपादाब्जसेवनाल्लब्धसन्मति"रिति वैयाकरणमञ्जूषायामपि "अधीत्य फणिभाष्याब्धिं सुधीन्द्रहरिदीक्षितादि"त्युक्तं तस्मात् नागेशभट्टो हरिदीक्षितशिष्यः। लघुशब्दरत्ने "भट्टोजिदीक्षितपौत्रहरिदीक्षितविरचिते लघुशब्दरत्ने" इति लेखदर्शनात् हरिदीक्षितो भट्टोजिदीक्षितानां पौत्रः तत्समानकालिको नागेशभट्टस्तेन च वैयाकरणबृहन्मञ्जूषाग्रन्थो रचितस्तत्पुस्तकं च १८६३ संवत्सरलिखितमस्मन्निकटे वर्तते। तस्मिन् अनेकानि क्रोडपत्राणि वर्तन्ते ऽनेकस्थलेषु एकः पाठः पूर्वं लिखितोऽनन्तरं कुण्डलनां कृत्वा तदर्थबोधकैः शब्दान्तरैरेव लाघवेन स एव पाठो लिखित

* वाराणसेयराजकीयसंस्कृतपाठशालीयपुस्तकालये सम्राट्जगन्नाथकृतरेखागणितपुस्तकमस्ति तच्च पुस्तकं ग्रन्थकर्तुराज्ञया लिखितं तथाहि।

युगवसुनगभूवर्षे १७८४ शुचिशुक्ले युगतिथौ रवेर्वारे।
व्यलिखल्लोकमणिः किल सम्राजामाज्ञया पुस्तम्॥

विंशतिवर्षासन्नवयस्केन जगन्नाथेन महत्पाण्डित्यं सम्पादितमिति गणकतरङ्गिण्यां निरूपितं महामहोपाध्यायसुधाकरद्विवेदिभिः।

महामहोपाध्यायदुर्गाप्रसादस्तु काव्यमालामुद्रितरसगङ्गाधरभूमिकायां ३ पृष्ठे १६२८–१६६६ खृस्ताब्दे शाहजहाभिधयवनसार्वभौमसमये जगन्नाथसम्राजो भिन्नस्य जगन्नाथपण्डितराजस्य स्थितिं निरूपयति। अनेनैव कुचमर्दननामकं खण्डनं कृतमिति।

सम्यङ्निश्चयो न भवति किं तु ग्रन्थान्ते

"आलोड्य दुस्तरगभीरतरान् निबन्धान्
वाचस्पतेरुदयनस्य तथापरेषाम् ।
सारो मयात्र समगृह्यत वावदूकै-
र्नित्यं कथासु विजिगीषुभिरेष धार्यः ॥"(१)

इत्युक्तत्वादुदयनाचार्यकृतात्मतत्त्वविवेकन्यायकुसुमाञ्जलिप्रबोधसिद्धि(२)ग्रन्थानामनेकत्रोद्धृतत्वात् उदय-

---

एवं पत्राङ्का अपि भिन्नक्रमा वर्तन्ते तस्मात् तत्पुस्तक नागेशभट्टपरिशोधितमुपबृंहितं चेत्यनुमीयते । एतेनापि १६७६–१७१६ संवत्सरकाले भट्टोजिदीक्षिताना स्थितिरासीदिति संवचम् ।

अपर च वाराणसीस्थराजकीयाङ्गलपाठालयाध्यापकपण्डितगणेशदत्तत्रिपाठिनो निकटे वर्तमाने सिद्धान्तकौमुदीपुस्तके लेखकलिखितेन लिपिकालेन संवत् १७३८ एतदात्मकेन पूर्वोक्ता स्थितिरविरुद्धैव ।

सामवेदीयकल्पसूत्रव्याख्याकारो वरदराजो भिन्नः । यथाह "इति वामनाचार्यसूनु. कौशिकान्वयसम्भवो वरदराजः कल्पसंवत्सरकल्प(?)-व्याख्या चक्रे' पाठोऽय वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तके ८३ पत्रे वर्तते ।

अन्योऽपि वरदराजो येन मीमांसाशास्त्रे नयविवेकटीकाख्यो महानिबन्धो रचितो यथाह "आत्रेयस्य श्रीसुदर्शनाचार्यस्य शिष्यस्य श्रीरङ्गनाथसूनोर्वरदराजस्य कृतौ नयविवेकटीकाया"मित्यादि । इद पुस्तक वर्षचतुःशत्याः पूर्वं लिखितमिवाभाति वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालये खण्डित भग्न तृतीयाध्यायमात्र वर्तते ॥

(१) अस्मिन् मुद्रितपुस्तके ३६४ पृष्ठे ।

(२) आत्मतत्त्वविवेकः १७९ । १८९ । १९४ । २०३ । पृष्ठेषु । न्यायकुसुमाञ्जलिः १०७ पृष्ठे । प्रबोधसिद्धिः १८९ । ३०८ । ३५७ । पृष्ठेषु ।

नाचार्येण लक्षणावलीग्रन्थस्य ९०६ शाकवर्षे (१०४१ संवत्सरे) प्रणयनात्[1] ज्ञानपूर्णकृततार्किकरक्षाटिप्पणलघुदीपिकापुस्तकस्य १४५६ संवत्सरलिखितस्यास्मन्निकटे वर्तमानत्वात् १४५६ संवत्सरात् पूर्वं १०४१ संवत्सरतश्च पश्चात् तार्किकरक्षाकर्तृवरदराजस्य स्थितिरासीदित्यत्र नास्ति वादावकाशः ।

विशेषजिज्ञासायां तु ज्ञानपूर्णेन लघुदीपिकासमाप्तौ "विष्णुस्वामिगुरुं नुमः" इत्युक्तत्वात् विष्णुस्वामिनः शिष्य इति कथितं भवति । यज्ञेश्वरभट्टेन आर्यविद्यासुधाकरे २३१ पृष्ठे "ततः शङ्करमतानुयायिना यादवनाम्ना[2] मातुलेनाध्यापितोऽयं रामानुजोऽभिनववैष्णवसम्प्रदायप्रवर्तको बभूव। अयमाचार्यो विष्णुस्वामिशिष्यसन्ताने गृहीतजन्मनो बिल्वमङ्गलस्य[3] पश्चादि"त्यादि लिखितम् । प्रपन्नामृतनामधेये रामानुजचरिते तु १०१२ शाकवर्षे (११४७ संवत्सरे) यादवाद्रिपर्वते नारायणप्रतिमा स्थापिता रामानुजाचार्येणेति प्रतिपादितम्[4] । अपि

---

(१) बनारससंस्कृतसीरीजमुद्रितेऽस्मच्छोधिते प्रशस्तपादभाष्यपुस्तके २ खण्डेऽन्ते ।

तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥

(२) यो हि यादवप्रकाश इति पूर्णनाम्ना प्रसिद्धः ।

(३) बिल्वमङ्गलस्य लीलाशुक इति नामान्तरम् । अनेन श्रीकृष्णकर्णामृतं काव्यं रचितम् ।

(४) प्रपन्नामृते ४४-४८ अध्यायेषु । अथ भक्तनगरे सार्द्धं शिष्यसङ्घेन निवसतस्तस्य स्वप्नदर्शनानन्तरं भगवन्मूर्त्युद्धरणार्थं यादवाद्रिग-

च आर्यविद्यासुधाकरे २२८ पृष्ठे विष्णुस्वामिन इतिहासनिरूपणप्रसङ्गे इदमपि लिखितम् "अयं च शङ्कराचार्यादर्वाचीनः ।" "यतोऽनेनाद्वितीयनिराकारब्रह्मप्रतिपादकं शङ्करसम्मतवेदान्तसिद्धान्तं प्रतिक्षिप्य साकारब्रह्मप्रतिपादकं स्वमतं प्रवर्तितमिति माधवीयसर्वदर्शनसंग्रहाभिधग्रन्थाल्लभ्यते ।"

नीलकण्ठभट्टकृतशङ्करमन्दारसौरभे तु
"प्रासूत तिष्यशरदामतियातवत्या-
मेकादशाधिकशतोनचतुःसहस्र्याम् ।"

इत्युक्त्या ३८८९ कलिवर्षे ८४५ वैक्रमसंवत्सरे शङ्कराचार्याविर्भावः सिद्ध्यति (१) । एतेन ८४५ संवत्सरस्य च पश्चात् ११४७ संवत्सरात् पूर्वं विष्णुस्वामिनः स्थितिरिति (२) सिद्धम् । अपरं च लक्षणावलीग्रन्थात् १०४१ संव-

मनकथनम् १०१२ शकाब्दे चैत्रशुक्लचतुर्दश्यां रामानुजाचार्यस्तत्र नारायणप्रतिमां प्रतिष्ठापितवानित्यादि सर्वं निरूपितम् ।

(१) प्रस्थानत्रयभाष्यकर्तुः शिवावतारस्य श्रीशङ्कराचार्यस्याविर्भावजीवनचरितादिविषये बहवो विकल्पा इदानीं दृश्यन्ते ते च परीक्षापूर्वकं न्यायवार्त्तिकभूमिकायां निरूपयिष्यन्तेऽस्माभिरास्तां तावत् ।

(२) यज्ञेश्वरभट्टेन आर्यविद्यासुधाकरे पृष्ठे २३४ "विक्रमसंवत्सरकालस्य त्रयोदशे शतके मध्वाचार्यः समभवत् । गुर्जराधिपतेः कुमारपालाभिधस्य राज्ञो राज्यसमये सम्प्रदायप्रदीपकृता मध्वाचार्यस्य समुद्भववर्णनात् । विक्रमार्कसमयात् प्रगतेषु ११९९ नवनवत्यधिकैकादशशतीमितेषु संवत्सरेषु कार्त्तिकशुक्लदशम्यां कुमारपालस्य राज्याभिषेको बभूवेति प्रबन्धचिन्तामणिग्रन्थे मेरुतुङ्गाचार्येण लिखितत्वाच्च ।" इति लिखितम् ।

भविष्यपुराणपरिशिष्टे भगवद्भक्तमाहात्म्ये २१ अध्याये तु

"विष्णुस्वामी प्रथमतो निम्बादित्यो द्वितीयकः ।
मध्वाचार्यस्तृतीयस्तु तुर्यो रामानुजः स्मृतः ॥"

इति लिखितत्वात् रङ्गरामानुजात् पूर्वं विक्रमवर्षाणां त्रयोदशशतके मध्वाचार्यस्तस्मादपि पूर्वं निम्बादित्यस्तस्मात् पूर्वं विष्णुस्वामीति क्रमोऽपि १०४१ संवत्सरात्परं ११४० संवत्सरात् पूर्वं विष्णुस्वामिनः स्थितिं न विरोधयति। तुर्यो रामानुजः स्मृत इति भविष्यपुराणपरिशिष्टे तु उपनिषद्भाष्यकाररङ्गरामानुजपरं बोध्यमन्यथा तस्मिन्नेव पुराणे सम्प्रदायप्रवर्तकरामानुजस्याग्रे वर्णनीयत्वादुन्मत्तप्रलापापत्तेरिति* ।

मध्वाचार्याणामितिहासस्तु विस्तरतो महाभारतीयभविष्यत्पर्वणि निरूपितः । यद्यपि शङ्कराचार्याणामितिहासो माधवीयशङ्करविजयादौ प्रसङ्गादन्येषामाचार्याणामपि तत्रैव, रामानुजाचार्याणां प्रपन्नामृते वल्लभाचार्याणां वल्लभदिग्विजये निरूपित एव तथापि न पर्याप्तः किं तु महाभारतस्य पूरको हरिवंशो वर्तत एव तदनन्तरमपि भविष्यत्पर्व वर्तते, एवं भविष्यपुराणपूरकं भविष्योत्तरपुराणं तस्यापि पूरकं भविष्यपुराणपरिशिष्टं वर्तत इति चित्रम् ॥

* वाराणसीस्थराजकीयसंस्कृतपाठशालाध्यापकपण्डितभागवताचार्यास्तु तुर्यो रामानुजः स्मृत इत्यस्याभिप्रायं वक्ष्यमाणरीत्या निरूपयन्ति ।

द्वापरान्ते कलेरादौ प्रोक्तः सङ्कर्षणेन य इति महाभारतादिप्रोक्तविधया स्वतोऽनन्तमूर्तिर्भगवान् रामानुजमुनिरार्षब्रह्ममीमांसासिद्धान्तप्रत्यवस्थानेन श्रीशङ्कराचार्येण सूत्राभिप्रायसंवृत्या स्वाभिप्रायप्रकाशनादिति तत्सूत्रभास्कराचार्याद्युक्तरीत्या युक्त्यवष्टम्भेन ब्रह्मसूत्राणि बोधायनसिद्धान्तपराकरणमुद्रया व्याचक्षाणेनोपनिबद्धान्प्रतिविम्बवादावच्छेदवादाभासवादप्रमुखानर्थान् कार्त्स्न्येन निरस्य भगवद्बोधायनकृतां ब्रह्मसूत्रवृत्तिमित्यादिप्रतिज्ञानुसारं तं प्रतिष्ठापयितुकामो व्याचकारेति तुर्यो रामानुज इति न क्रमाभिप्रायं तुर्यत्वमपि तु विष्णुस्वामिप्रभृतिभिरपराकृततत्तद्दर्शजातपराकर्तृतया सिद्धान्तप्रतिष्ठापनपर्याप्त्यभिप्रायम् । यथान्यदीयग्रन्थकारा अपि रामानुजः शिष्टगणाग्रगण्यो निनिन्द विम्बप्रतिविम्बवादमित्यादि स्वस्वग्रन्थेष्वधिकमपेक्षमाणैः श्रीभाष्यमालोकनीयमिति तात्पर्येण सनिर्भरमाहुः । रङ्गरामानुजाचार्यास्तु सम्प्रदायधूर्वहपुरुषत्वाभावेन न व्यपदेशमर्हन्ति । तुर्यो नाम सन्न्यस्तवानिति आश्रमानुसार्यपि क्रमस्सर्वांशे न प्रमाणसिद्ध इति ।

त्सरे उदयनाचार्याणां स्थितिरासीदित्यप्युक्तम् । तस्मात् "वाचस्पतेरुदयनस्य तथापरेषा"मिति वदतस्तार्किकरक्षाकर्तुरुदयनाचार्यसमयपश्चाद्भाविनो वरदराजाचार्यस्य तथा अस्मात् किञ्चित्पश्चाद्भाविन एतत्समानकालिकस्य वा तार्किकरक्षाटीकालघुदीपिकाकर्तुर्विष्णुस्वामिशिष्यस्य ज्ञानपूर्णस्य च १०४१ संवत्सरादनन्तरं ११४७ संवत्सरात् पूर्वं स्थितिरासीदित्यनुमीयते ॥

वरदराजाचार्येण "आलोड्य दुस्तरगभीरतरान् निबन्धान्" इत्याद्युक्तत्वात् तार्किकरक्षाग्रन्थसमालोचनात् मल्लिनाथेन चोपोद्धाते "इह खलु तत्रभवान् बालानुकम्पी वरदराजः सकलन्यायशास्त्ररहस्योपदिदिक्षया स्वविरचिततार्किकरक्षाश्लोकव्याख्यानाय सारसङ्ग्रहं नाम प्रकरणमारभमाण" इत्याद्युक्तत्वात् सिद्धं भवति यत् सूत्राणामतिसंक्षिप्तत्वात् भाष्यवार्त्तिकादिग्रन्थानां विस्तृतत्वाद्दुरूहत्वाच्च न्यायसिद्धान्तसिद्धान् प्रमाणादिपदार्थान् प्रथमतः श्लोकात्मकेन ग्रन्थेन निबबन्ध पश्चात् तस्याप्यस्फुटार्थत्वं विचार्य सारसंग्रहटीकाग्रन्थेन व्याख्यातवान् ।

केचित्तु तार्किकरक्षाग्रन्थं तर्ककारिकानाम्ना व्यवहृतवन्तोऽदः पुरातनं न्यायप्रकरणं वरदराजाचार्येण स्वकृतया सारङ्ग्रहाभिधटीकया विशदीकृतमिति वदन्ति । तन्मन्दम् ज्ञानपूर्णेन लघुदीपिकायाम्

"पुरा वरदराजेन न्यायशास्त्रार्थसंग्रहः ।
कृतः परत्वतो बुद्ध्वा (?) पद्यानां दुर्ग्रहार्थताम् ॥
तेनैव रचिता व्याख्या सा च शास्त्रपदं गता ।
ततस्तदर्थसिद्ध्यर्थं करोमि लघुदीपिकाम् ॥"

इत्याद्युक्तत्वात् ।

ग्रन्थोऽयमतीवोपयुक्तो यतो विस्तृतदुरूहशङ्कासमाधिवाग्जालाकाण्डताण्डवादिराहित्येन सरलरीत्या न्यायसूत्रभाष्यादिप्रतिपादिताः प्रसङ्गात् कणादसूत्रप्रशस्तपादभाष्यप्रतिपादिता अपि सर्वे प्रमाणादयः पदार्था द्रव्यादयश्च पदार्था अत्र परिच्छेदत्रये निरूपिताः। तत्र प्रथमपरिच्छेदे प्रमाणादयश्छलान्ताः पदार्था निरूपिताः। द्वितीयपरिच्छेदे जातिपदार्थो निरूपितः। तृतीये निग्रहस्थानपदार्थ इति। अत्रत्या विशेषविषयास्तु मुद्रितात् पदार्थनिरूपणक्रमसूचीपत्त्रादवगन्तव्या इति।

वरदराजाचार्येण न्यायकुसुमाञ्जलिटीकापि रचिता मल्लिनाथेन तार्किकरक्षाटीकायां ४६ पृष्ठे उक्तत्वादिति।

---

सटीकतार्किकरक्षाटिप्पणलघुदीपिकाकारस्य ज्ञानपूर्णस्य समयस्तु यथोपलब्धं निरूपितप्राय एव प्राक्। इदानीं निष्कण्टकाकर्तुः कोलाचलमल्लिनाथसूरेर्जीवनचरितविषयो यथोपलब्धि निरूप्यते।

तत्र तावदनेके मल्लिनाथनामानो विद्वांसो बभूवुः। तथाहि भोजप्रबन्धे(१)।

"अन्यदा राजा क्रीडोद्याने रममाणः श्रान्तः चिरेण सहकारतरोरधस्तात् तस्थौ। ततस्तत्र सहकारतरुमूले

---

(१) वाराणसीस्थराजकीयसंस्कृतपाठशालीयलिखितपुस्तके १७२ संख्यके १२५ पत्त्रे लेखोऽयं वर्तते। अस्मिन् पुस्तके लेखकेन लिपिकाल एवं लिखितः॥ "श्रीसंवत् १८५४ आषाढसुदि पूर्णमासी वार शनि लिखित भोजप्रबन्ध धनीराम ब्राह्मण।"

पण्डितजीवानन्दविद्यासागरेण कलिकातानगरे प्रकाशिते पुस्तके ऽपि ६७ पृष्ठे पाठोऽयं वर्तत इति।

रत्नकम्बलमध्यासीनं भूपालं वीक्ष्य कोऽपि मल्लिनाथकवि-रागत्य स्वस्तीत्युक्त्वा प्राह ।

शाखाशतचितवियतः
सन्ति कियन्तो न कानने तरवः ।
परिमलभरमिलदलिकुल-
दलितदलाः शाखिनो विरलाः ॥ १० ॥

ततो राजा श्रुत्वा तुष्टः पाणिवलयं ददौ । ततः कोशाधिकारी कवये पाणिवलयं दत्तं ज्ञात्वा धर्मपत्रे लिखति स्म ।

सहकारतरोर्मूले वर्णिते शाखिनां कुले ।
मल्लिनाथाय धारेन्द्रः स्वपाणिवलयं ददौ ॥" इति ।

भोजप्रबन्धग्रन्थश्च मिथिलादिदेशाधिपतिमहाराजलक्ष्मणसेनपुत्रेण बल्लालसेनेन(१) भोजराजीयधर्मपत्र(२)सङ्ग्रहमवलम्ब्य रचितः । बल्लालसेनसमयश्च तत्कृताद्भुतसागरग्रन्थस्य "भुजवसुदशमितशाके १०८२ श्रीमद्बल्लालसेनराज्यादौ" इत्यादिलेखदर्शनात् १२१७ संवत्सरः, अस्मात् पूर्वं १०७९ संवत्सरासन्ने धाराधिपभोज-

(१) इतिहाससंशोधकास्तु बल्लालसेनस्य पुत्रो लक्ष्मणसेन इति निरूपयन्ति । तच्च सङ्गच्छते ऽद्भुतसागरे "लक्ष्मणसेनात्मजबल्लालसेन विरचिते ऽद्भुतसागरे" इति लेखस्य वर्तमानत्वात् । अपि च मिथिलादेशप्रचलितेन ल० स० इत्याकारकेण लक्ष्मणसेनसंवत्सरेण १०३० शाकाब्दे लक्ष्मणसेनराज्यकालस्य सर्वजनसुप्रसिद्धत्वात् । विस्तरस्तु न्यायवार्त्तिकभूमिकायामनुसन्धेयः ।

(२) विक्रमादित्यस्यापि धर्मपत्रसंग्रह आसीदिति तत्रैव सूचितम् ।

राजसमये[१] मल्लिनाथकविरासीदित्येको मल्लिनाथकविः।

केचित्तु

"मल्लिनाथकविः सोयं मन्दात्मानुजिघृक्षया।
व्याचष्टे कालीदासीयं काव्यत्रयमनाकुलम्॥"

इति रघुवंशटीकास्थश्लोकदर्शनात् कविशब्दसाम्याद् भोजराजकालिक एव रघुवंशादिकाव्यटीकाकारो मल्लिनाथ इत्याहुः। तन्मन्दम् रघुवंशादिटीकासूद्धृतानां ग्रन्थानां नवीनत्वात्। तच्चाग्रे निरूपयिष्यामः।

अथापरोऽपि मल्लिनाथ आसीत् तथाहि सरस्वतीतीर्थकृतायां काव्यप्रकाशटीकायाम्[२]।

"विधातुकामः सुकृतं गरीयः
क्ष्मातलं स्वर्ग इवावतीर्णः।

(१) भोजराजसमयस्तु ९६४ शककाल इति महामहोपाध्यायसुधाकरद्विवेदिना गणकतरङ्गिण्या ३१ पृष्ठे लिखितम्। भट्टवामनाचार्यकृतटीकासहिते मुम्बईनगरे द्वितीयावृत्तिमुद्रिते काव्यप्रकाशपुस्तके भूमिकाया ५ पृष्ठे "भोजराजस्य स्थितिकालस्तु ख्रस्त ९९६ वत्सराद्वारभ्य १०५१ वत्सरपर्यन्तः" "१०२२ मिते ख्रस्तवत्सरे भट्टगोविन्दसुताय धनपतिभट्टाय ब्राह्मणाय दत्त दानपत्रमपि भोजराजस्य पूर्वोक्तमेव स्थितिकाल स्पष्ट कथयति। तच्च दानपत्रं महामहोपाध्यायदुर्गाप्रसादेन प्राचीनलेखमालायामङ्कयित्वा प्रसिद्धिं प्रापितमिति।" तच्च दानपत्र धाराधिपभोजराजस्यैवेति तद्दर्शनादेव व्यक्त भवतीति॥

(२) भट्टवामनाचार्यकृतटीकासहिते मुम्बईनगरे द्वितीयावृत्तिमुद्रिते काव्यप्रकाशपुस्तके भूमिकायां २८ पृष्ठे लेखोऽयं वर्तते। नाय मल्लिनाथो रघुवशादिकाव्यटीकाकार इत्यपि निरूपितं तत्रैव भट्टवामनाचार्यैः।

## श्रीगणेशाय नमः ॥

# न्यायसूत्रविवरणोक्तसूत्राणामकारादिवर्णानुक्रमेण सूचीपत्रम् ।


| अ | आ· | सू | सूत्राणि । | पृष्ठाङ्का. । |
|---|---|---|---|---|
| | | | **अ** | |
| ३ | २ | ७२ | अणुश्यामतानित्यत्ववदेतत् स्यात् । | ·· २३४ |
| ४ | १ | ६७ | अणुश्यामतानित्यत्ववद्वा । | · ३०२ |
| २ | १ | ४३ | अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धि. । | · १०९ |
| १ | १ | ५ | अथ तत्पूर्वक त्रिविधमनुमान पूर्ववत् शेषवत् सामान्यतो दृष्ट च । | ·· १४ |
| २ | २ | २७ | अध्यापनादप्रतिषेधः । | ·· १४३ |
| २ | २ | ४ | अनर्थापत्तावर्थापत्त्यभिमानात् । | १३० |
| ४ | २ | २३ | अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेध· । | २८४ |
| २ | २ | ५० | अनवस्थायित्वे च वर्णोपलब्धिवत्तदुपपत्तिः । | १५४ |
| ५ | २ | २२ | अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोग । | ३४४ |
| ३ | २ | २५ | अनित्यत्वग्रहणाद् बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् । | २११ |
| ४ | १ | २२ | अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् । | · २४८ |
| ४ | १ | २३ | अनिमित्तनिमित्तत्वान्नानिमित्ततः । | २४९ |
| २ | २ | ५३ | अनियमे नियमान्नानियमः । | ·· १५५ |
| ५ | १ | २२ | अनुक्तस्यार्थापत्ते. पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः । | ·· ३१[illegible] |
| २ | २ | २१ | अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः । | ··· १४१ |
| ५ | १ | ३० | अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः । | · ३२१ |

| अ॰ | आ॰ | सू | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| २ | २ | २० | अनुपलम्भादप्यनुपलब्धिसद्भाववदावरणानुपपत्तिरनुपलम्भात् । | १४१ |
| २ | १ | ५९ | अनुवादोपपत्तेश्च । | ११९ |
| १ | २ | ५ | अनैकान्तिकः सव्यभिचारः । | ६१ |
| ४ | २ | १८ | अन्तर्बहिरिति कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः । | २८२ |
| २ | २ | ३१ | अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः । | १४५ |
| ३ | १ | १५ | अपरिसंख्यानाच्च स्मृतिविषयस्य । | १७४ |
| १ | १ | ३१ | अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः । | ३९ |
| ४ | २ | ४१ | अपवर्गेऽप्येवं प्रसङ्गः । | २९४ |
| ३ | १ | ६२ | अप्तेजोवायूनां पूर्वपूर्वमपोह्याकाशस्योत्तरः । | १९६ |
| ३ | १ | ४७ | अप्रतिघातात् सन्निकर्षोपपत्तिः । | १९० |
| ३ | २ | ७ | अप्रत्यभिज्ञाने च विषयान्तरव्यासङ्गात् । | २०३ |
| ३ | २ | ५ | अप्रत्यभिज्ञाने च विनाशप्रसङ्गः । | २०२ |
| ३ | १ | ४५ | अप्राप्य ग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः । | १८९ |
| ४ | १ | १४ | अभावाद् भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् । | २४३ |
| ३ | १ | ४३ | अभिव्यक्तौ चाभिभवात् । | १८८ |
| २ | २ | २९ | अभ्यासात् । | १४५ |
| २ | १ | ५८ | अभ्युपेत्य कालभेदे दोषवचनात् । | ११९ |
| ३ | १ | २३ | अयसोऽयस्कान्ताभिगमनवत् तदुपसर्पणम् । | १७८ |
| ४ | २ | ४० | अरण्यगुहापुलिनादिषु योगाभ्यासोपयोग. । | २९३ |
| ५ | २ | १५ | अर्थादापन्नस्य स्वपदेन पुनरभिधानम् । | ३४१ |
| ५ | १ | २१ | अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः । | ३१७ |
| २ | २ | ३ | अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् । | १३० |

| अ· | आ· | सू· | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ३ | २ | ५९ | अलातचक्रदर्शनवत् तदुपलब्धिराशुसञ्चारात् । | २२९ |
| ३ | १ | १० | अवयवनाशे ऽप्यवयव्युपलब्धेरहेतुः । | १७१ |
| ५ | २ | ११ | अवयवविपर्यासवचनमप्राप्तकालम् । | ३३८ |
| ४ | २ | १० | अवयवान्तराभावे ऽप्यवृत्तेरहेतुः । | २७९ |
| ४ | २ | १३ | अवयवावयविप्रसङ्गश्चैवमाप्रलयात् । | २८० |
| १ | १ | ४० | अविज्ञाततत्त्वे ऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः । | ४८ |
| ५ | २ | १७ | अविज्ञातं चाज्ञानम् । | ३४२ |
| १ | २ | १२ | अविशेषाभिहिते ऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् । | ७० |
| १ | २ | १७ | अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः । | ७३ |
| ५ | २ | ६ | अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् । | ३१४ |
| ३ | २ | ४४ | अव्यक्तग्रहणमनवस्थायित्वाद् विद्युत्सम्पाते रूपाव्यक्तग्रहणवत् । | २२२ |
| २ | १ | ४ | अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः । | ७९ |
| ४ | २ | २० | अव्यूहनाविष्टम्भविभुत्वानि चाकाशधर्माः । | २८३ |
| २ | २ | ३४ | अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः । | १४६ |
| २ | २ | ९ | असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः । | १३४ |
| २ | २ | २२ | अस्पर्शत्वात् । | १४२ |
| २ | २ | ३७ | अस्पर्शत्वादप्रतिषेधः । | १४८ |


## आ


| अ· | आ· | सू· | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ४ | २ | १६ | आकाशव्यतिभेदात् तदनुपपत्तिः । | २८१ |
| ४ | २ | १७ | आकाशासर्वगतत्वं वा । | २८२ |
| २ | २ | ६६ | आकृतिर्जातिलिङ्गाख्या । | १६४ |
| २ | २ | ६१ | आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः । | १६० |

| अ॰ | आ | सू॰ | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ४ | १ | १० | आत्मनित्यत्वे प्रेत्यभावसिद्धिः । | ... २४१ |
| ३ | २ | ३२ | आत्मप्रेरणयदृच्छाज्ञताभिश्च न सयोगविशेषः । | २१४ |
| १ | १ | ९ | आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफल॰ दुःखापवर्गास्तु प्रमेयम् । | ... १८ |
| ३ | १ | ५० | आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत् तदुपलब्धिः । | · १९० |
| ३ | १ | ४८ | आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽभिघातात् । | ·· १९० |
| २ | २ | १३ | आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च । | १३७ |
| १ | १ | ७ | आप्तोपदेशः शब्दः । | ... १७ |
| २ | १ | ५१ | आप्तोपदेशसामर्थ्याच्छब्दादर्थे सम्प्रत्ययः । | ·· ११२ |
| ४ | १ | ५१ | आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः । | · २६३ |

इ॰

| | | | | |
|---|---|---|---|---|
| १ | १ | १० | इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् । | · १९ |
| ३ | १ | १२ | इन्द्रियान्तरविकारात् । | ... १७२ |
| ३ | १ | ५५ | इन्द्रियार्थपञ्चत्वात् । | ... १९३ |
| १ | १ | ४ | इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् । | ... १२ |

ई॰

| | | | | |
|---|---|---|---|---|
| ४ | १ | १९ | ईश्वरः कारणं पुरुषकर्मफलादर्शनात् । | · २४५ |

उ॰

| | | | | |
|---|---|---|---|---|
| ५ | २ | १८ | उत्तरस्याप्रतिपत्तिरप्रतिभा । | ... ३४२ |
| १ | १ | ३४ | उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः । | ·· ४१ |
| १ | १ | ३८ | उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः । | ... ४५ |
| ५ | १ | २६ | उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः । | ·· ३१९ |

| अ॰ | आ | सू | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| २ | १ | ४९ | उपलब्धेरद्विप्रवृत्तित्वात् । | ११२ |
| २ | २ | ३५ | उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः । | १४७ |
| ५ | १ | २५ | उभयकारणोपपत्तेरुपपत्तिसम. । | ३१९ |
| ५ | १ | १६ | उभयसाधर्म्यात् प्रक्रियासिद्धे. प्रकरणसमः । | ३१४ |
| २ | २ | २८ | उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः । | १४४ |
| | | | **ऋ** | |
| ४ | १ | ५९ | ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः । | २६७ |
| | | | **ए** | |
| ५ | १ | २३ | एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः । | ३१८ |
| ३ | १ | ९ | एकविनाशे द्वितीयाविनाशान्नैकत्वम् । | १७१ |
| ४ | २ | ९ | एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्न. । | २७८ |
| ३ | १ | ६४ | एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः । | १९७ |
| ३ | २ | ६८ | एतेनानियम॰ प्रत्युक्तः । | २३२ |
| | | | **ऐ** | |
| ३ | २ | ५६ | ऐन्द्रियकत्वाद् रूपादीनामप्रतिषेधः । | २२७ |
| | | | **क** | |
| ३ | १ | ३९ | कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः । | १८६ |
| ३ | २ | १ | कर्माकाशसाधर्म्यात् संशय. । | २०१ |
| ३ | २ | ४३ | कर्मानवस्थायिग्रहणात् । | २२१ |
| २ | २ | १७ | कारणद्रव्यस्य विशेषशब्देनाभिधानात् । | १३९ |
| ५ | १ | २८ | कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः । | ३२० |
| ५ | २ | १९ | कार्यव्यासङ्गात् कथाविच्छेदो विक्षेप॰ । | ३४३ |
| ५ | १ | ३८ | कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्ते । | ३२७ |

| अ | आ॰ | सू॰ | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| १ | २ | ९ | कालात्ययापदिष्टः कालातीतः । ... | ६८ |
| ५ | १ | ५ | किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः । | ३०७ |
| ३ | १ | ४६ | कुड्यान्तरितानुपलब्धेरप्रतिषेधः । ... | १८९ |
| २ | १ | ४२ | कृतताकर्तव्यतोपपत्तेरुभयथा ग्रहणम् । ... | १०७ |
| ३ | १ | ३३ | कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात् संशयः । | १८३ |
| ४ | २ | ११ | केशसमूहे तैमिरिकोपलब्धिवत् तदुपलब्धिः । . . | २७९ |
| ४ | १ | १८ | क्रमनिर्देशादप्रतिषेधः । .. | २४४ |
| ३ | २ | ६ | क्रमवृत्तित्वादयुगपद्ग्रहणम् । ... | २०२ |
| ५ | १ | २४ | क्वचिद्धर्मानुपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः । | ३१८ |
| ३ | २ | १८ | क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः । ... | २०७ |
| ३ | २ | १४ | क्षीरविनाशकारणानुपलब्धिवद् दध्युत्पत्तिवच्च तदुत्पत्तिः । ... | २०६ |
| ४ | २ | ३८ | क्षुधादिभिः प्रवर्तनाच्च । . | २९३ |


## ग


| अ | आ॰ | सू॰ | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ३ | १ | ३१ | गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् । | १८१ |
| ३ | १ | ५७ | गन्धत्वाद्यव्यतिरेकाद् गन्धादीनामप्रतिषेधः । . | १९४ |
| १ | १ | १४ | गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः । | २४ |
| ३ | १ | ६१ | गन्धरसरूपस्पर्शशब्दाना स्पर्शपर्यन्ताः पृथिव्याः । | १९६ |
| २ | २ | ५५ | गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु वर्णविकारोपपत्तेर्वर्णविकारः । . | १५६ |
| ५ | १ | ३ | गोत्वाद् गोसिद्धिवत् तत्सिद्धिः । . | ३०२ |


## घ


| अ | आ॰ | सू॰ | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ५ | १ | ८ | घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः । . | ३०९ |

| अ॰ | आ॰ | सू | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| १ | १ | १२ | घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः । | २२ |

च

| | | | | |
|---|---|---|---|---|
| १ | १ | ११ | चेष्टेन्द्रियार्थाश्रयः शरीरम् । | २० |

ज

| | | | | |
|---|---|---|---|---|
| २ | १ | ५५ | जातिविशेषे चानियमात् । | ११५ |
| २ | २ | ६४ | जात्याकृतिव्यक्तयस्तु पदार्थः । | १६२ |
| ३ | २ | ३५ | ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः । | २१६ |
| ३ | १ | १७ | ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् । | १७४ |
| ४ | २ | ४५ | ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः । | २९७ |
| २ | १ | २२ | ज्ञानलिङ्गत्वादात्मनो नानवबोधः । | ९२ |
| ५ | १ | ३१ | ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् । | ३२२ |
| ३ | २ | २६ | ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः । | २१२ |
| ३ | २ | ५७ | ज्ञानायौगपद्यादेकं मनः । | २२७ |

त

| | | | | |
|---|---|---|---|---|
| ४ | १ | २१ | तत्कारितत्वादहेतुः । | २४७ |
| १ | २ | ११ | तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं च । | ७० |
| ४ | १ | ३ | तच्चैराश्यं रागद्वेषमोहार्थान्तरभावात् । | २३७ |
| ४ | २ | ३५ | तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः । | २९१ |
| २ | २ | १५ | तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः । | १३८ |
| ४ | २ | ५० | तत्त्वं तु बादरायणात् । | २९९ |
| ४ | २ | ४८ | तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् । | २९८ |
| २ | १ | १३ | तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः । | ८५ |
| २ | २ | ६ | तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् । | १३२ |

| अ | आ | सू० | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ४ | १ | ५४ | तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः । | २६५ |
| २ | २ | १० | तत्सिद्धेरलक्षितेष्वहेतुः । | १३५ |
| २ | १ | ५ | तथात्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः । | ७९ |
| ४ | १ | २ | तथा दोषाः । | २३६ |
| ५ | १ | १३ | तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः । | ३१२ |
| १ | १ | ३५ | तथा वैधर्म्यात् । | ४२ |
| ३ | २ | ६५ | तथाहारस्य । | २३० |
| २ | १ | ४७ | तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः । | १११ |
| १ | १ | २२ | तदत्यन्तविमोक्षोऽपवर्गः । | २८ |
| ४ | १ | २७ | तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् । | २५१ |
| ५ | १ | २९ | तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः । | ३२१ |
| २ | २ | १९ | तदनुपलब्धेरनुपलम्भादावरणोपलब्धिः । | १४१ |
| ३ | १ | ३६ | तदनुपलब्धेरहेतुः । | १८५ |
| २ | २ | २६ | तदन्तरालानुपलब्धेरहेतुः । | १४३ |
| २ | १ | ५६ | तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः । | ११७ |
| ४ | २ | ४३ | तदभावश्चापवर्गे । | २९४ |
| २ | २ | ३१ | तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः । | १४६ |
| ३ | १ | ५ | तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् । | १६९ |
| २ | १ | २३ | तदयौगपद्यलिङ्गत्वान्मनसः । | ९३ |
| २ | २ | ५७ | तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः । | १५८ |
| ४ | २ | ४४ | तदर्थं यमनियमाभ्यामात्मसंस्कारोपयोगाच्चाध्यात्मविध्युपायैः । | २९४ |
| ४ | २ | ५ | तदसंशयः पूर्वहेतुप्रसिद्धत्वात् । | २७७ |
| ३ | २ | २१ | तदात्मगुणत्वेऽपि तुल्यम् । | २१० |

| अ० | आ० | सू | सूत्राणि । | पृष्ठाङ्का. । |
|---|---|---|---|---|
| ३ | १ | १४ | तदात्मगुणसद्भावादप्रतिषेधः । | १७३ |
| ४ | २ | २६ | तदाश्रयत्वादपृथग्ग्रहणम् । | २८६ |
| ३ | १ | ७२ | तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् । | २०० |
| १ | २ | २० | तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् । | ७५ |
| २ | १ | १७ | तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत् तत्सिद्धिः । | ८८ |
| १ | १ | ३७ | तद्विपर्ययाद्वा विपरीत व्यतिरेक्युदाहरणम् । | ४४ |
| ३ | १ | ३ | तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः । | १६७ |
| ३ | १ | ६८ | तद्व्यवस्थान तु भूयस्त्वात् । | १९९ |
| १ | १ | २६ | तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः । | ३५ |
| ४ | २ | ३ | तन्निमित्त त्ववयव्यभिमानः । | २७५ |
| २ | १ | ३९ | तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात् । | १०६ |
| ४ | १ | ३१ | तल्लक्षणावरोधादप्रतिषेधः । | २४३ |
| ३ | २ | ३६ | तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः । | २१६ |
| ४ | २ | ४९ | ताभ्या विगृह्य कथनम् । | २९८ |
| ३ | १ | ७० | तेनैव तस्याग्रहणात् । | १९९ |
| २ | २ | ५६ | ते विभक्त्यन्ताः पदम् । | १५६ |
| ४ | १ | ६ | तेषा मोहः पापीयान् नामूढस्येतरोत्पत्तेः । | २३८ |
| २ | १ | २६ | तैश्चापदेशो ज्ञानविशेषाणाम् । | ९६ |
| ४ | २ | ४६ | त शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयुभिरभ्युपेयात् । | २९७ |
| २ | १ | १४ | त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत् तत्सिद्धेः । | ८५ |
| २ | १ | १२ | त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः । | ८४ |
| ५ | १ | १८ | त्रैकाल्यासिद्धेर्हेतोरहेतुसमः । | ३१५ |
| ३ | २ | ५३ | त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः । | २२६ |
| ३ | १ | ५४ | त्वगव्यतिरेकात् । | १९२ |

| अ· | आ | सू | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| | | | **द** | |
| ३ | १ | १ | दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् । | १६६ |
| २ | १ | २१ | दिग्देशकालाकाशेष्वप्येव प्रसङ्गः । | ९२ |
| १ | १ | २ | दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः । | ७ |
| ४ | १ | ५८ | दुःखविकल्पे सुखाभिमानाच्च । | २६६ |
| ३ | १ | ५१ | दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः । | १९१ |
| ३ | १ | ११ | दृष्टान्तविरोधादप्रतिषेधः । | १७२ |
| ५ | १ | ९ | दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ । | ३१० |
| ५ | १ | ३४ | दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात् तस्य चोभयथाभावान्नाविशेषः । | ३२४ |
| ४ | २ | १ | दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः । | २७४ |
| ४ | २ | २ | दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः । | २७५ |
| ३ | १ | ३८ | द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः । | १८५ |
| २ | २ | ४३ | द्रव्यविकारवैषम्यवद् वर्णविकारविकल्पः । | १५१ |
| ३ | २ | ४७ | द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः । | २२३ |
| | | | **ध** | |
| १ | २ | १४ | धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् । | ७१ |
| २ | १ | ३४ | धारणाकर्षणोपपत्तेश्च । | १०१ |
| | | | **न** | |
| २ | १ | ५७ | न कर्मकर्तृसाधनवैगुण्यात् । | ११८ |
| २ | २ | २३ | न कर्मानित्यत्वात् । | १४२ |
| ४ | १ | ४२ | न कारणावयवभावात् । | २५९ |
| ३ | १ | ६ | न कार्याश्रयकर्तृवधात् । | १६९ |

| अ | आ | सू॰ | सूत्राणि। | पृष्ठाङ्काः। |
|---|---|---|---|---|
| ४ | १ | ४६ | न कालान्तरे निष्पत्तिर्हेतुनाशात्। · | २६१ |
| ३ | २ | ५२ | न केशनखादिष्वनुपलब्धेः। ·· | २२५ |
| ३ | १ | ४४ | नक्तञ्चरनयनरश्मिदर्शनाच्च। ··· | १८९ |
| ४ | १ | ६५ | न क्लेशसन्ततेः स्वाभाविकत्वात्। ·· | २७१ |
| ३ | २ | ८ | न गत्यभावात्। ··· | २०३ |
| ४ | १ | १२ | न घटाद् घटानिष्पत्तेः। | २४२ |
| २ | २ | १४ | न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च। | १३७ |
| २ | २ | १ | न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्। | १२८ |
| ४ | २ | ८ | न चावयव्यवयवाः। ·· | २७८ |
| २ | १ | ३१ | न चैकदेशोपलब्धिरवयविसद्भावात्। · | ९९ |
| २ | २ | ५९ | न तदनवस्थानात्। ··· | १५९ |
| ३ | १ | ५६ | न तदर्थबहुत्वात्। | १९३ |
| १ | २ | १६ | न तदर्थान्तरभावात्। ··· | ७३ |
| ३ | २ | ३० | न तदाशुगतित्वान्मनसः। · | २१३ |
| २ | २ | ४७ | न तद्विकाराणां सुवर्णभावाव्यतिरेकात्। · | १५२ |
| ४ | १ | ८ | न दोषलक्षणावरोधान्मोहस्य। · | २४० |
| ४ | २ | ४२ | न निष्पन्नावश्यम्भावित्वात्। · | २९४ |
| ३ | २ | १६ | न पयसः परिणामगुणान्तरप्रादुर्भावात्। | २०७ |
| ३ | २ | ४९ | न पाकजगुणान्तरोत्पत्तेः। · | २२४ |
| ३ | १ | ६६ | न पार्थिवाप्ययोः प्रत्यक्षत्वात्। ·· | १९७ |
| ४ | १ | ५३ | न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात्। | २६४ |
| ४ | १ | २० | न पुरुषकर्माभावे फलानिष्पत्तेः। ·· | २४६ |
| २ | १ | ३० | न प्रत्यक्षेण यावत्तावदप्युपलम्भात्। ··· | ९९ |
| २ | १ | १८ | न प्रदीपप्रकाशवत् तत्सिद्धेः। · | ८९ |
| ३ | २ | ४६ | न प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत् तद्ग्रहणम्। | २२२ |

| अ॰ | आ॰ | सू॰ | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ४ | २ | १४ | न प्रलयोऽणुसद्भावात् । | ... २८१ |
| ४ | १ | ६४ | न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य । | .. २७१ |
| ३ | १ | ५९ | न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः । | १९४ |
| ३ | २ | ४ | न युगपद्ग्रहणात् । | . २०२ |
| ३ | २ | ५८ | न युगपदनेकक्रियोपलब्धेः । | . २२८ |
| ३ | १ | ५४ | न युगपदर्थानुपलब्धेः । | . १९३ |
| ३ | १ | ४१ | न रात्रावप्यनुपलब्धेः । | ... १८७ |
| ३ | २ | ५५ | न रूपादीनामितरेतरवैधर्म्यात् । | २२६ |
| २ | २ | ११ | न लक्षणावस्थितापेक्षसिद्धेः । | . १३५ |
| २ | २ | ४४ | न विकारधर्मानुपपत्तेः । | .. १५१ |
| ४ | १ | १७ | न विलष्टेभ्योऽनिष्पत्तेः । | .. २४३ |
| ३ | १ | २ | न विषयव्यवस्थानात् । | ... १६६ |
| ३ | १ | ७१ | न शब्दगुणोपलब्धेः । .. | ... २०० |
| ४ | १ | ६८ | न सङ्कल्पनिमित्तत्वाच्च रागादीनाम् । | ... २७२ |
| ३ | १ | २७ | न सङ्कल्पनिमित्तत्वाद्रागादीनाम् । | ... १७९ |
| ४ | १ | ४५ | न सद्य. फल कालान्तरोपभोग्यत्वात् । | ... २६० |
| ३ | १ | ६३ | न सर्वगुणानुपलब्धेः । | ... १९६ |
| ४ | १ | ४८ | न सन्नासन्न सदसत् सदसतोर्वैधर्म्यात् । | .. २६२ |
| ३ | २ | ६३ | न साध्यसमत्वात् । | .. २३० |
| २ | १ | ५४ | न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य । | . ११४ |
| ४ | १ | ५६ | न सुखस्याप्यन्तरालनिष्पत्तेः । | .. २६६ |
| ३ | २ | ३१ | न स्मरणकालानियमात् । | ... २१४ |
| ३ | १ | १३ | न स्मृतेः स्मर्तव्यविषयत्वात् । | ... १७३ |
| ४ | १ | ३९ | न स्वभावसिद्धेरापेक्षिकत्वात् । | ... २५७ |
| ४ | १ | ३८ | न स्वभावसिद्धिर्भावानाम् । | ... २५६ |
| ५ | १ | १९ | न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः । | ३१६ |

| अ | आ० | सू | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ३ | २ | १० | न हेत्वभावात् । | २०४ |
| ३ | २ | ७३ | नाकृताभ्यागमप्रसङ्गात् । | २३५ |
| २ | २ | ६३ | नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेश्च । | १६१ |
| २ | २ | २४ | नाणुनित्यत्वात् । | १४२ |
| २ | १ | ४० | नातीतानागतयोरितरेतरापेक्षा सिद्धिः । | १०६ |
| ४ | १ | १६ | नातीतानागतयोः कारकशब्दप्रयोगात् । | २४३ |
| २ | २ | ४२ | नातुल्यप्रकृतीना विकारविकल्पात् । | १५० |
| ३ | १ | १६ | नात्मप्रतिपत्तिहेतूना मनसि सम्भवात् । | १७४ |
| २ | १ | २० | नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः । | ९१ |
| ४ | १ | २६ | नानित्यतानित्यत्वात् । | २५१ |
| ३ | १ | ३७ | नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः । | १८५ |
| २ | १ | ६५ | नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः । | १२५ |
| ४ | १ | ३५ | नानेकलक्षणैरेकभावनिष्पत्ते । | २५५ |
| ३ | २ | २७ | नान्तः शरीरवृत्तित्वान्मनस । | २१२ |
| ३ | १ | २४ | नान्यत्र प्रवृत्त्यभावात् । | १७८ |
| २ | २ | ३० | नान्यत्वेऽप्यभ्यासस्योपचारात् । | १४५ |
| २ | १ | ४६ | नाप्रत्यक्षेण गवये प्रमाणार्थमुपमानस्य पश्यामः । | ११० |
| २ | २ | ७ | नाभावप्रामाण्य प्रमेयासिद्धेः । | १३३ |
| २ | १ | २८ | नार्थविशेषप्राबल्यात् । | ९७ |
| ४ | २ | ३७ | नार्थविशेषप्राबल्यात् । | २९३ |
| ३ | १ | ३० | निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् । | १८१ |
| ५ | २ | २१ | निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् । | ३४४ |
| ३ | २ | ७१ | नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः । | २३४ |
| २ | २ | ४८ | नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् । | १५३ |
| ५ | १ | ३५ | नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः। | ३२४ |
| ४ | १ | २८ | नित्यस्याप्रत्याख्यान यथोपलब्धिव्यवस्थानात् । | २५२ |

| अ॰ | आ | सू | सूत्राणि । | पृष्ठाङ्का: । |
|---|---|---|---|---|
| २ | २ | ४९ | नित्यानामतीन्द्रियत्वाद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः । | १५३ |
| ४ | १ | ९ | निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः । | २४० |
| ४ | १ | २४ | निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः । | २४९ |
| ३ | १ | १८ | नियमश्च निरनुमानः । | १७५ |
| २ | २ | ५४ | नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः । | १५५ |
| ३ | २ | ३८ | नियमानियमौ तु तद्विशेषकौ । | २१७ |
| ४ | १ | ४३ | निरवयवत्वादहेतुः । | २५९ |
| ५ | १ | २७ | निर्दिष्टकारणाभावे ऽप्युपलम्भादुपलब्धिसमः । | ३२० |
| ३ | १ | ४९ | नेतरेतरधर्मप्रसङ्गात् । | १९० |
| ३ | २ | १९ | नेन्द्रियार्थयोस्तद्विनाशे ऽपि ज्ञानावस्थानात् । | २०८ |
| २ | १ | ३७ | नैकदेशत्राससादृश्येभ्यो ऽर्थान्तरभावात् । | १०४ |
| ४ | १ | ४ | नैकप्रत्यनीकभावात् । | २३८ |
| ३ | १ | ८ | नैकस्मिन् नासास्थिव्यवहिते द्वित्वाभिमानात् । | १७० |
| ३ | २ | २३ | नोत्पत्तिकारणानपदेशात् । | २११ |
| ४ | १ | ३२ | नोत्पत्तितत्कारणोपलब्धेः । | २५४ |
| ३ | २ | ६४ | नोत्पत्तिनिमित्तत्वान्मातापित्रोः । | २३० |
| ३ | २ | १३ | नोत्पत्तिविनाशकारणोपलब्धेः । | २०६ |
| ४ | १ | ३० | नोत्पत्तिविनाशकारणोपलब्धेः । | २५३ |
| ३ | १ | २१ | नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् । | १७७ |
| २ | २ | ४१ | न्यूनसमाधिकोपपत्तेर्विकाराणामहेतुः । | १५० |
| | | | **प.** | |
| ५ | २ | ५ | पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः । | ३३४ |
| ३ | १ | २० | पद्मादिषु प्रबोधसम्मीलनविकारवत् तदुपपत्तेः । | १७७ |

| अ० | आ० | सू० | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ३ | २ | ३७ | परश्वादिष्वारम्भनिवृत्तिदर्शनात् । ... | २१६ |
| ३ | २ | ४० | परिशेषाद् यथोक्तहेतूपपत्तेश्च । | २१८ |
| ५ | २ | ९ | परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् । | ३३६ |
| ४ | २ | १५ | पर वा त्रुटेः । | २८१ |
| २ | १ | १० | पश्चात् सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः । | ८२ |
| २ | २ | ३६ | पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः । | १४७ |
| ४ | १ | ६२ | पात्रचयान्तानुपपत्तेश्च फलाभावः । | २७० |
| ३ | १ | २८ | पार्थिव गुणान्तरोपलब्धेः । .. | १८० |
| १ | १ | १९ | पुनरुत्पत्तिः प्रेत्यभावः । .. | २७ |
| ३ | २ | ६९ | पुनस्तत्प्रसङ्गोऽपवर्गे । ... | २३३ |
| २ | १ | ५२ | पूरणप्रदाहपाटनानुपपत्तेश्च सम्बन्धाभावः । ... | ११३ |
| ३ | २ | ६१ | पूर्वकृतफलानुबन्धात् तदुत्पत्तिः । .. | २२९ |
| ३ | १ | ६७ | पूर्वपूर्व गुणोत्कर्षात् तत्तत् प्रधानम् । ... | १९८ |
| २ | १ | ९ | पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात् प्रत्यक्षसिद्धिः । | ८२ |
| ३ | १ | १९ | पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः । .. | १७६ |
| ४ | २ | ७ | पृथक् चावयवेभ्योऽवृत्तेः । | २७८ |
| १ | १ | १३ | पृथिव्यापस्तेजो वायुराकाशमिति भूतानि । | २४ |
| ५ | २ | १० | पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् । | ३३७ |
| ५ | २ | ७ | प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् । | ३३५ |
| २ | २ | ४० | प्रकृतिविवृद्धौ विकारविवृद्धेश्च । | १४९ |
| २ | २ | ५२ | प्रकृत्यनियमात् । | १५५ |
| ३ | २ | ४२ | प्रणिधाननिबन्धनाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यवि- | |

| अ | आ | सू | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| | | | रोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्य' । | २१९ |
| ३ | २ | ३४ | प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावाद् युगपदस्मरणम् । | २१५ |
| ५ | २ | ३ | प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम् । | ३३२ |
| ५ | २ | १ | प्रतिज्ञाहानिः प्रतिज्ञान्तर प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तर निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकाल न्यूनमधिक पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि । | ३३१ |
| १ | १ | ३२ | प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः । | ३९ |
| ५ | २ | ४ | प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः । | ३३४ |
| ५ | २ | २ | प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः। | ३३१ |
| ५ | १ | ११ | प्रतिदृष्टान्ताहेतुत्वे च नाहेतुर्दृष्टान्तः । | ३११ |
| ३ | २ | ५० | प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेध' । | २२४ |
| ४ | २ | ४७ | प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे । | २९७ |
| ५ | १ | १७ | प्रतिपक्षात् प्रकरणसिद्धे. प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः । | ३१५ |
| ५ | १ | ४१ | प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः । | ३२९ |
| ५ | १ | २० | प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः । | ३१६ |
| २ | २ | ५ | प्रतिषेधाप्रामाण्य चानैकान्तिकत्वात् । | १३१ |
| ५ | १ | ३९ | प्रतिषेधे ऽपि समानो दोषः । | ३२८ |
| ५ | १ | ४२ | प्रतिषेध सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा । | ३२९ |

| अ· | आ | सू· | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ५ | १ | ३६ | प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः । | ३२५ |
| २ | १ | २४ | प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य पृथग्वचनम् । | ९४ |
| २ | १ | २९ | प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः । | ९८ |
| २ | १ | १९ | प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात् । | ९० |
| २ | १ | ८ | प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः । | ८१ |
| १ | १ | ३ | प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि । | ११ |
| २ | १ | ४५ | प्रत्यक्षेणाप्रत्यक्षसिद्धेः । | ११० |
| ५ | १ | १० | प्रदीपोपादानप्रसङ्गनिवृत्तिवत् तद्विनिवृत्तिः । | ३१० |
| ४ | १ | ६० | प्रधानशब्दानुपपत्तेर्गुणशब्देनार्थवादो निन्दाप्रशंसोपपत्तेः । | २६८ |
| १ | २ | १ | प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः । | ५२ |
| ४ | २ | २७ | प्रमाणतश्चार्थप्रतिपत्तेः । | २८७ |
| २ | १ | १६ | प्रमाणत सिद्धे. प्रमाणाना प्रमाणान्तरसिद्धिप्रसङ्गः। | ८८ |
| १ | १ | १ | प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः । | १ |
| ४ | २ | २८ | प्रमाणानुपपत्त्युपपत्तिभ्याम् । | २८७ |
| २ | १ | १५ | प्रमेयता च तुलाप्रामाण्यवत् । | ८७ |
| ५ | १ | ३७ | प्रयत्नकार्यानेकत्वात् कार्यसमः । | ३२६ |
| १ | १ | १८ | प्रवर्तनालक्षणा दोषाः । | २७ |
| १ | १ | २० | प्रवृत्तिदोषजनितोऽर्थः फलम् । | २७ |
| ४ | १ | १ | प्रवृत्तिर्यथोक्ता । | २३६ |
| १ | १ | १७ | प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः । | २६ |

| अ॰ | आ॰ | सू॰ | सूत्राणि । | पृष्ठाङ्काः। |
|---|---|---|---|---|
| १ | १ | ६ | प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् । ... | १६ |
| २ | १ | ४४ | प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः । | ११० |
| २ | २ | १८ | प्रागुच्चारणादनुपलम्भादावरणाद्यनुपलब्धेश्च । | १४० |
| ४ | १ | ६६ | प्रागुत्पत्तेरभावानित्यत्ववत् स्वाभाविके ऽप्यनित्यत्वम् । ... | २७१ |
| ५ | १ | १२ | प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः । ... | ३११ |
| २ | २ | १२ | प्रागुत्पत्तेरभावोपपत्तेश्च । ... | १३६ |
| ४ | १ | ४९ | प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा उत्पादव्ययदर्शनात् । ... | २६२ |
| ४ | १ | ४७ | प्राङ्निष्पत्तेर्वृक्षफलवत् तत् स्यात् । ... | २६१ |
| ४ | १ | ७ | प्राप्तस्तर्हि निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः । ... | २३९ |
| ३ | २ | ६६ | प्राप्तौ वानियमात् । ... | २३१ |
| ५ | १ | ७ | प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ । ... | ३०८ |
| ४ | १ | ५२ | प्रीतेरात्माश्रयत्वादप्रतिषेधः । ... | २६४ |
| ३ | १ | २२ | प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् । ... | १७० |
| | | | **ब.** | |
| ४ | १ | ५७ | बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः । | २६६ |
| १ | १ | २१ | बाधनालक्षणं दुःखम् । ... | २८ |
| ३ | १ | ४२ | बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः । ... | १८७ |
| १ | १ | १५ | बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् । ... | २५ |
| ४ | १ | ५० | बुद्धिसिद्धं तु तदसत् । ... | २६३ |
| ४ | २ | ३४ | बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् । ... | २९० |
| ४ | २ | २४ | बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् । ... | २८५ |

| अ॰ | आ॰ | सू॰ | सूत्राणि। | पृष्ठाङ्काः। |
|---|---|---|---|---|
| | | | **भ** | |
| ३ | १ | ६० | भूतगुणविशेषोपलब्धेस्तादात्म्यम्। ... | १६५ |
| ३ | २ | ६२ | भूतेभ्यो मूर्त्युपादानवत् तदुपादानम्। ... | २३० |
| | | | **म.** | |
| ३ | १ | ४० | मध्यन्दिनोल्काप्रकाशानुपलब्धिवत् तदनुपलब्धिः। | १८७ |
| ३ | २ | ७० | मनःकर्मनिमित्तत्वाच्च संयोगाव्युच्छेदः। ... | २३३ |
| २ | १ | ६७ | मन्त्रायुर्वेदवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्। | १२६ |
| ३ | १ | ३४ | महदनुग्रहणात्। ... | १८३ |
| ४ | २ | ३० | मायागन्धर्वनगरमृगतृष्णिकावद्वा। ... | २८८ |
| ४ | २ | ३३ | मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानविनाशवत् प्रतिबोधे। ... | २८९ |
| ४ | २ | २१ | मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः। ... | २८३ |
| | | | **य.** | |
| २ | १ | ७ | यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः। ... | ८१ |
| १ | १ | ३० | यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः। | ३८ |
| ३ | २ | ६० | यथोक्तहेतुत्वाच्चाणु। ... | २२९ |
| ३ | २ | ३९ | यथोक्तहेतुत्वात् पारतन्त्र्यात् स्वकृताभ्यागमाच्च न मनसः। ... | २१८ |
| २ | १ | ६ | यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा। ... | ८० |
| १ | २ | २ | यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। ... | ५४ |
| १ | १ | २४ | यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम्। ... | ३४ |
| १ | २ | ७ | यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः। ... | ६४ |

| अ | आ० | सू० | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ३ | २ | ४८ | यावच्छरीरभावित्वाद् रूपादीनाम् । ... | २२३ |
| २ | २ | ५८ | याशब्दसमूहत्यागपरिग्रहसख्यावृद्ध्युपचयवर्णसमासानुबन्धाना व्यक्तावुपचाराद्व्यक्ति. । .. | १५८ |
| १ | १ | १६ | युगपज्ज्ञानानुपपत्तिर्मनसो लिङ्गम् । ... | २५ |
| ३ | २ | २० | युगपज्ज्ञानानुपलब्धेश्च मनसः । ... | २०९ |
| २ | १ | ११ | युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम् । ... | ८२ |

**र**

| अ | आ० | सू० | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ३ | १ | ३५ | रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम् । .. | १८४ |
| २ | १ | ३६ | रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् । . | १०२ |

**ल**

| अ | आ० | सू० | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ४ | १ | ३६ | लक्षणव्यवस्थानादेवाप्रतिषेधः । | २५५ |
| २ | २ | ८ | लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः । | १३३ |
| ३ | २ | १२ | लयहेत्वभावाद् यथादर्शनमभ्यनुज्ञा । .. | २०५ |
| ३ | २ | १५ | लिङ्गतो ग्रहणान्नानुपलब्धिः । | २०६ |
| १ | १ | २५ | लौकिकपरीक्षकाणा यस्मिन्नर्थे बुद्धिसाम्य स दृष्टान्तः । | ३५ |

**व**

| अ | आ० | सू० | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| १ | २ | १० | वचनविघातोऽर्थविकल्पोपपत्त्या च्छलम् । .. | ६९ |
| ५ | २ | ८ | वर्णक्रमनिर्देशवन्निरर्थकम् । | ३३६ |
| २ | १ | ४१ | वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः । | १०७ |
| २ | १ | ३८ | वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः । | १०५ |
| १ | २ | १५ | वाक्छलमेवोपचारच्छलं तदविशेषात् । | ७३ |

| अ॰ | आ॰ | सू॰ | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| २ | १ | ६० | वाक्यविभागस्य चार्थग्रहणात् । | १२१ |
| २ | २ | ५१ | विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः । | १५४ |
| २ | २ | ४५ | विकारप्राप्तानामपुनरापत्तेः । | १५२ |
| २ | २ | ३९ | विकारादेशोपदेशात् संशयः । | १४९ |
| ५ | २ | १६ | विज्ञातस्य परिषदा त्रिरभिहितमप्यनुच्चारणमननुभाषणम् । | ३४१ |
| ४ | २ | ४ | विद्याविद्याद्वैविध्यात् संशयः । | २७६ |
| २ | १ | ६२ | विधिर्विधायकः । | १२३ |
| २ | १ | ६४ | विधिविहितस्यानुवचनमनुवादः । | १२५ |
| २ | १ | ६१ | विध्यर्थवादानुवादवचनविनियोगात् । | १२१ |
| ३ | २ | २४ | विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः । | २११ |
| २ | २ | ३३ | विनाशकारणानुपलब्धेः । | १४६ |
| १ | २ | १९ | विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् । | ७५ |
| २ | १ | ३ | विप्रतिपत्तौ च सम्प्रतिपत्तेः । | ७८ |
| २ | १ | २ | विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च । | ७८ |
| २ | २ | ३८ | विभक्त्यन्तरोपपत्तेश्च समासे । | १४८ |
| १ | १ | ४१ | विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः । | ४९ |
| ४ | १ | ५५ | विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः । | २६५ |
| ३ | १ | ५८ | विषयत्वाव्यतिरेकादेकत्वम् । | १९४ |
| ३ | २ | २ | विषयप्रत्यभिज्ञानात् । | २०१ |
| ३ | १ | ६५ | विष्टं ह्यपरं परेण । | १९७ |
| ३ | १ | २५ | वीतरागजन्मादर्शनात् । | १९९ |
| ४ | २ | ६ | वृत्त्यनुपपत्तेरपि संशयानुपपत्तिः । | २७७ |
| ४ | १ | १३ | व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः । | २४२ |

| अ | आ॰ | सू॰ | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ४ | १ | ११ | व्यक्ताद् व्यक्तानां प्रत्यक्षप्रामाण्यात् । | २४१ |
| २ | २ | ६५ | व्यक्तिर्गुणविशेषाश्रयो मूर्त्तिः । | १६३ |
| २ | २ | ६२ | व्यक्त्याकृतियुक्ते ऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः । | १६० |
| ४ | १ | ५ | व्यभिचारादहेतुः । | २३८ |
| ४ | १ | ३३ | व्यवस्थानुपपत्तेः । | २५४ |
| ४ | १ | १५ | व्याघाताद्प्रयोगः । | २४३ |
| ३ | २ | ३३ | व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् । | २१४ |
| ४ | १ | ४० | व्याहतत्वादयुक्तम् । | २५७ |
| २ | १ | २७ | व्याहतत्वादहेतुः । | ९७ |
| ४ | २ | २५ | व्याहतत्वादहेतुः । | २८६ |
| ३ | २ | १७ | व्यूहान्तराद् द्रव्यान्तरोत्पत्तिः पूर्वद्रव्यनिवृत्तेरनुमानम् । | २०७ |


## श.


| अ | आ॰ | सू॰ | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| २ | २ | २ | शब्द ऐतिह्यानर्थान्तरभावादनुमाने ऽर्थापत्तिसम्भवाभावानामर्थान्तरभावाच्चाप्रतिषेधः । | १२९ |
| ४ | २ | १९ | शब्दसंयोगविभवाच्च सर्वगतम् । | २८२ |
| ५ | २ | १४ | शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् । | ३४० |
| २ | १ | ५३ | शब्दार्थव्यवस्थानादप्रतिषेधः । | ११३ |
| २ | १ | ४८ | शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् । | १११ |
| ३ | २ | ५४ | शरीरगुणवैधर्म्यात् । | २२६ |
| ३ | १ | ४ | शरीरदाहे पातकाभावात् । | १६८ |
| ३ | २ | ५१ | शरीरव्यापित्वात् । | २२५ |
| ३ | २ | ६७ | शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म । | २३१ |
| २ | १ | ६६ | शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः । | १२५ |

| अ | आ | सू | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ३ | १ | ३२ | श्रुतिप्रामाण्याच्च । .. | १८२ |
| | | | **स.** | |
| ३ | १ | २६ | सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः । ... | १७९ |
| ३ | १ | ६९ | सगुणानामिन्द्रियभावात् । ... | १९९ |
| १ | १ | ८ | स चायं द्विविधो दृष्टादृष्टार्थभेदात् । .. | १७ |
| ४ | १ | ४४ | सद्यः कालान्तरे च फलनिष्पत्तेः सशयः । . | २६० |
| २ | २ | १६ | सन्तानानुमानविशेषणात् । ... | १३८ |
| ३ | २ | २२ | सन्निकर्षाभावात् तदनुत्पत्तिः । ... | २१० |
| १ | २ | ३ | स प्रतिपक्षस्थापनाहीनो वितण्डा । .. | ५५ |
| ४ | २ | ३६ | समाधिविशेषाभ्यासात् । .. | २९२ |
| १ | १ | २९ | समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः । | ३८ |
| २ | २ | ६७ | समानप्रसवात्मिका जातिः । ... | १६४ |
| २ | १ | १ | समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न सशयः । ... | ७१ |
| १ | १ | २३ | समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः सशयः । | ३१ |
| ४ | १ | ६१ | समारोपादात्मन्यप्रतिषेधः । .. | २६९ |
| २ | २ | २५ | सम्प्रदानात् । .. | १४२ |
| २ | १ | ५० | सम्बन्धाच्चेति । ... | ११२ |
| १ | २ | १३ | सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् । ... | ७१ |
| ४ | २ | २२ | सयोगोपपत्तेश्च । ... | २८४ |
| १ | १ | २७ | सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसस्थित्यर्थान्तरभावात् । ... | ३७ |
| १ | १ | २८ | सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतः सर्वतन्त्रसिद्धान्तः । | ३७ |
| ५ | १ | ४० | सर्वत्रैवम् । .. | ३२८ |

| अ | आ· | सू | सूत्राणि । | पृष्ठाङ्काः । |
|---|---|---|---|---|
| ४ | १ | २९ | सर्वं नित्यं पञ्चभूतनित्यत्वात् । | ... २५२ |
| ४ | १ | ३४ | सर्वं पृथग् भावलक्षणपृथक्त्वात् । | ... २५४ |
| ४ | १ | २५ | सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् । | .. २५० |
| ४ | १ | ३७ | सर्वमभावो भावेष्वितरेतराभावसिद्धेः । | ... २५६ |
| २ | १ | ३३ | सर्वाग्रहणमवयव्यसिद्धेः । | ... १०१ |
| ३ | १ | ७ | सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् । | .. १७० |
| १ | २ | ४ | सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः । | ... ५७ |
| २ | २ | ६० | सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजशक्तुचन्दनगङ्गाशाकटान्नपुरुषेष्वतद्भावे ऽपि तदुपचारः । | ... १५९ |
| ४ | १ | ४१ | सव्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् । | २५८ |
| ५ | १ | २ | साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ । | .. ३०१ |
| १ | २ | १८ | साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः । | ... ७४ |
| ५ | १ | १ | साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः । | ... ३०० |
| ५ | १ | ३२ | साधर्म्यात् तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः । | .. ३२२ |
| ५ | १ | १५ | साधर्म्यात् संशये न संशयो वैधर्म्यादुभयथा वा संशये ऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः । | ... ३१३ |
| ५ | १ | ३३ | साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात् । | ... ३२३ |

860 "A word that is related to a known thing can alone aid us in understanding the sentence If, on the other hand, the meaning of *Brahman* and *soul* are known, then the proof is only secular"

861 The use of the word *atman* in the sole sense of Self does not make it uncommon (*alaukika*), and the word *Brahman* is well-known, in ordinary language, to convey the idea of greatness

862 After the word meaning is thus gathered from the word by means of secular proofs, what is there to prevent the Scriptural passage from conveying its own super-sensuous meaning?

863 In the case of results of rites (*apūrva*), deities, heaven, etc, though their word meanings are understood by ordinary means, their super-sensuous meaning is derived only from the Scriptural passage

864 There is no coherency in the use of mere words and their word-meanings, since they cannot by themselves complete the sense Conduct can result only from the sentence

865 In the practice of elders, a sentence is always uttered to convey its sentence-meaning, and the mutual relation of the words is here taken into consideration

866 By the addition of new parts and the omission of others, it is clearly seen that the variations of sentences and their meanings have for their cause words and their word-meanings

867 If, owing to the addition of any new part, any part of the meaning is also an addition, then, the former part is the cause of the latter part, and not its proof

868 It is therefore understood that sentences and their meanings are composed of parts, since, even in conveying a meaning, the sentence conveys a combined meaning

869 Thus it is established that a combination of words conveys a definite sense, and that a sentence and its meaning are composed of parts [1]

870 Hence sentences will bear the same meaning in Scripture as they bear in secular literature, for, only ordinary words are used in Scripture in its own manner

871 Doubts may spring up in lay literature owing to the intervention of human intentions, but, since Scripture has no human origin, it is direct authority for its meaning

872 Even under the supposition that Scripture is injunctory, the mere combination of words will not convey that meaning A word cannot convey a different meaning without our understanding its connection with other words

873 We have already established by arguments that Scripture [2] does not aim at injunction, nay more, that there is no injunction at all

874 The relation of a word to its meaning is the result of the immemorial usage of elders It need not therefore be suspected that it must have a beginning

---

[1] यतो वाक्यतदर्थयोरुक्तनीत्या भागवत्त्वमेव पदस्यैव स्वार्थयोग्यान्वित्वे शक्तिश्चस्थिता तत समूहस्य वाक्यस्य वाचकत्व प्रामाण्य प्राप्तमज्ञातविषयत्वाच्च पदवदप्रमाणता Anandagiri

[2] i e *Vēdānta*

॥ श्रीगणेशाय नमः ॥

# पदार्थतत्त्वनिरूपणम्[1] ।

## श्रीरघुनाथशिरोमणिविरचितम् ।

ॐ नमः सर्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥

अथ पदार्थतत्त्वं निरूप्यते । तत्र दि-

---

श्रीरघुदेवन्यायालङ्कारकृता

## पदार्थतत्त्वनिरूपणस्य टीका ।

नन्दनन्दपदद्वन्द्वं निधाय हृदि चिन्तया ।
तनोति कुतुकं किञ्चिद्रघुदेवः समासतः ॥

कामहस्तधृतसास्त्रकार्मुकं पौष्पमद्भुतमुदीक्ष्य कुप्यतः ।
धूर्जटेर्नयनकोणशोणता हन्तु सर्वजगतामुपद्रवम् ॥

पदार्थतत्त्वं यदिदं शिरोमणि-
निर्णीतवान् जीर्णमतस्य दूषणैः ।
तदेव तर्केण विचारयामः
सदर्थकेनेतरखण्डनेन ॥

प्रसङ्गात् पदार्थतत्त्वं निर्वक्तुं शिष्यावधानाय प्रति-

(१) अस्य ग्रन्थस्य पदार्थखण्डनमितिनाम्नापि प्रसिद्धिः । वङ्गाक्षरपुस्तके त्वन्ते पदार्थतत्त्वं समाप्तमिति देवाक्षरपुस्तके तु पदार्थतत्त्वनिरूपणं समाप्तमिति दृश्यते ।

क्कालौ नेश्वरादतिरिच्येते मानाभावात् तत्तन्नि-
मित्तविशेषसमवधानवशादीश्वरादेव तत्तत्का-

जानीते। अथेत्यादि। नञ्पदादेः संसर्गाभावत्वान्योन्याभावत्वादौ शक्यतावच्छेदकत्वव्यवस्थापनानन्तरं प्राचीनाभ्युपेतपदार्थानां कस्यचिदनतिरिक्तत्वं कस्यचित् खण्डनं कस्यचिदतिरिक्तत्वं तर्केण व्यवस्थाप्यत इत्यर्थः। तत्रेति। प्राचीनमताभ्युपेतपदार्थेषु मध्य इत्यर्थः। दिक्कालावित्यादि। दिक्कालयोरतिरिक्तत्वं यत् प्राचीनैः स्वीकृतं तन्न युक्तिसिद्धं तयोस्तदतिरिक्तत्वे(१) मानाभावादित्यर्थः। न चात्र दिक्त्वं पक्षतावच्छेदकीकृत्यातिरिक्तत्वाभावसाधने सिद्धासिद्धिव्याघात इति वाच्यम्। पूर्वस्यां दिशि घट इति प्रतीतिविषयीभूतविभुत्वस्यैव दिक्त्वरूपत्वात्। न च कालत्वं पक्षतावच्छेदकीकृत्यातिरिक्तत्वाभावसाधने तद्दोषतादवस्थ्यमिति वाच्यम्। इदानीं घट इति प्रतीतिविषयीभूतविभुत्वस्यैव कालत्वरूपत्वात्। विभुत्वं च मूर्त्तेतरद्रव्यत्वं न तु परममहत्परिमाणरूपम्। ईश्वरात्मनि तस्य निराकरिष्यमाणत्वेन विभुत्वाभावापत्तेः। ननु दिक्कालयोरतिरिक्तत्वानभ्युपगमे पूर्वस्यां घट इदानीं घट इत्याद्यनुगतप्रतीत्यनुपपत्तिः। न चेश्वरादेव तथा प्रतीतिनिर्वाह इति वाच्यम्। तथा सति प्राच्यां घटः प्रतीच्यां घट इत्यादेरिदानीं घटस्तदानीं घट इत्यादेश्च वैलक्षण्यानुपपत्तेरीश्वरस्यैकत्वादित्यत आह। तत्तन्निमित्तेति। तत्तत्कालोपाधितत्तद्दिगुपाध्यवच्छिन्नादित्यर्थः। तत्तत्कार्यविशेषाणामिति। प्राच्यां घट इत्यादिप्र-

(१) ईश्वरातिरिक्तत्वे।

र्यविशेषाणामुपपत्तेः[१] । परेषामेकैकस्माद्दिगा-
देरिव विलक्षणानां प्राच्यादिव्यवहाराणाम् ॥
शब्दनिमित्तकारणत्वेन क्लृप्तस्येश्वरस्यैव

---

तीतीनामित्यर्थः । परेषामिति । कालदिशोरतिरिक्तत्ववादिनामित्यर्थः । तथा च तेषां मते कालस्य दिशश्चैकत्वात् यथा तत्तदुपाध्यवच्छिन्नाभ्यां ताभ्यामेव प्राच्यां घटः प्रतीच्यां घट इत्यादेः इदानीं घटस्तदानीं घट इत्यादेश्च वैलक्षण्यनिर्वाहः तथा मन्मतेऽपि तत्तदुपाध्यवच्छिन्नादीश्वरादेव तादृशप्रतीतीनां वैलक्षण्यनिर्वाह इति भावः ॥

भावकार्यस्य समवायिकारणजन्यत्वनियमात् शब्दसमवायितयातिरिक्ताकाशसिद्धिः । ईश्वरस्यैव शब्दसमवायिकारणत्वं जीवस्य तथात्वमादाय विनिगमनाविरहेण निरस्तम् । न च जीवानामानन्त्यमेव विनिगमकमिति वाच्यम् । प्रत्येकं जीवमादाय विनिगमनाविरहसम्भवादिति सिद्धान्तिमतं दूषयति । शब्देति । तथा च जन्यमात्रं प्रति ईश्वरस्य कारणतायाः क्लृप्तत्वात् तत्र समवायित्वमात्रकल्पनमेव ईश्वरस्य शब्दसमवायित्वे विनिगमकं जीवानां तथात्वे कारणत्वसमवायित्वयोर्द्वयोः कल्पने गौरवादिति भावः । ननु जीवानां हेतुत्वमुभयवादिसिद्धमेव तथाहि शब्दो जीवजन्यो जीवादृष्टजन्यत्वात् सुखवदित्याद्यनुमानसम्भवात् । इत्थं च जीवानां तथात्वे समवायित्वमात्रं कल्प्यमित्यस्त्येव विनिगमनाविरह इत्यत

---

(१) उत्पत्तेः-पा २ पु ।

शब्दसमवायिकारणत्वम् । शब्दः तज्जन्यस्तददृष्टजन्यत्वात् सुखादिवदिति पुनरप्रयोजकम् । अदृष्टस्य शब्दजनकत्वे ऽपि तदाश्रयस्य जनकत्वे[1] मानाभावात् अस्मदादेश्च शब्दसमवा-

आह । शब्द इत्यादि । ननु कारणत्वं हि कार्यतावच्छेदकभेदेन प्रत्यासत्तिभेदेन च नाना तथा च कालिकसम्बन्धेन[2] जन्यत्वावच्छिन्नं प्रति हेतुत्वमीश्वरस्य क्लृप्तं न तु तादात्म्यप्रत्यासत्त्या शब्दत्वावच्छिन्नं प्रति तथात्वम् । इत्थं चेश्वरे ऽपि शब्दत्वावच्छिन्नस्य तादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायित्वं च द्वयं कल्प्यमित्यस्त्येव विनिगमनाविरह इत्यत आह । अस्मदादेश्चेति । विजातीयमनःसंयोगाश्रयसमवायरूपकारणस्य शब्दे ऽपि सत्त्वात् तस्य ज्ञानादिवल्लौकिकमानसत्वापत्तिरित्यर्थः । न च तत्संस्कारादीनामिव शब्दस्यापि मनसो ऽयोग्यतया न मानसापत्तिरिति वाच्यम् । सामग्रीसत्त्वे कार्यावश्यम्भावात् संस्कारादीनामनायत्त्या तादात्म्यप्रत्यासत्त्या प्रत्यक्षं प्रति प्रतिबन्धकत्वाभ्युपगमात् तद्वच्छब्दस्य प्रतिबन्धकत्वाभ्युपगमे तु कल्पनागौरवमेव विनिगमकमिति । अथ संस्कारादीनां प्रतिबन्धकत्वकल्पनापेक्षया लाघवाद्गुणलौकिकमानसत्वावच्छिन्नं प्रति ज्ञानादियोग्यविशेषगुणवृत्तिजातिविशेषावच्छेदेन हेतुत्वकल्पनाया एवोचितत्वात् शब्दस्य जातिविशेषानाक्रान्तत्वेन न तन्मानसापत्तिः । न चायोग्यसंस्कारादिष्वेव

(१) तथात्वे पा. २ पु. ।

(२) कालिकप्रत्यासत्त्या–पा २ पु ।

यिकारणत्वे ऽहं सुखादिमानितिवदहं शब्दवा-

जातिविशेषं कल्पयित्वा तदवच्छेदेन तादात्म्यप्रत्यासत्त्या प्रतिबन्धकत्वमादाय विनिगमनाविरहः। एतन्मते विजातीयगुणभेदत्वादिना हेतुतायां कारणतावच्छेदकगौरवे ऽपि विजातीयगुणत्वेन हेतुतायामपि गुणमानसत्वस्य विजातीयगुणमानसत्वस्यैव वा जन्यतावच्छेदकत्वस्य स्वीकरणीयत्वात् कार्यतावच्छेदकगौरवेण साम्यम्। मानसत्वमात्रस्य जन्यतावच्छेदकत्वे आत्मत्वादौ तादात्म्यप्रत्यासत्त्या विजातीयगुणाभावात् तन्मानसे व्यभिचारापत्तेः। प्रतिबन्धकतामते तु विजातीयसंस्कारादिगुणभेदस्य सर्वत्र मानसविषये सत्त्वेन व्यभिचाराभावात् मानसत्वमात्रस्यैव तादृशगुणभेदजन्यतावच्छेदकत्वादिति वाच्यम्। विनिगमनाविरहात् कारणत्वस्य प्रतिबन्धकत्वस्य वा स्वीकारे ऽपि शब्दस्य कारणतावच्छेदकवैजात्याभावेन प्रतिबन्धकतावच्छेदकवैजात्यसत्त्वेनैव वा मानसवारणादिति विनिगमनाविरहेणानन्तानां जीवानामीश्वरस्य च शब्दसमवायिकारणत्वकल्पनामपेक्ष्य शब्दसमवायिकारणत्वेनातिरिक्ताकाशकल्पनमेव समुचितमिति चेत्। मैवम्। विजातीयगुणत्वेन हेतुतायां तस्य कार्यतावच्छेदकं गुणमानसत्वं विजातीयगुणमानसत्वं वेति विनिगमनाविरहापत्तेः प्रतिबन्धकत्वकल्पनाया एव समुचितत्वात्। न च गुणत्वजातेर्दीधितिकृतैव निरसनीयत्वान्नायं विनिगमनाविरह इति वाच्यम्। तथापि घटाकाशसंयोगादिचाक्षुषवारणाय सामानाधिकरण्यसम्बन्धेन चाक्षुषविषयत्वाभावस्य प्रतिबन्धकत्वकल्पने त्रुटिप्रत्यक्षे व्यभिचारवारणाय द्रव्यान्यसचाक्षुषत्वस्य जन्यतावच्छेदक-

त्वकल्पनापेक्षया द्रव्यव्यावृत्तजातिविशेषं कल्पयित्वा विजातीयसचाक्षुषत्वस्यैव तज्जन्यतावच्छेदकतायाः क्लृप्तत्वात् तादृशविजातीयसन्मानसत्वस्य विजातीयगुणमानसत्वस्य वा जन्यतावच्छेदकत्वमादाय विनिगमनाविरहापत्तेः । न च गुणत्वजातौ मानाभावेन साङ्कर्यानवकाशात् तादृशजातेर्ज्ञानादिसाधारण्ये मानाभावात् विजातीयसन्मानसत्वस्यावच्छेदकत्वासम्भवान्न विनिगमनाविरह इति वाच्यम् । एवमपि तस्य कार्यतावच्छेदकं विजातीयगुणमानसत्वं विजातीयगुणप्रत्यक्षत्वं वेति विनिगमनाविरहतादवस्थ्यात् । न च ज्ञातो घट इत्यादिमानसोपनीतभानमादाय घटादौ व्यभिचारवारणाय विजातीयगुणलौकिकत्वस्य जन्यतावच्छेदकत्वे मानसत्वस्यानिवेशात् न विनिगमनाविरह इति वाच्यम् । विजातीयगुणलौकिकत्वावच्छिन्नस्य विषयतासम्बन्धेनात्मन्युत्पत्तेर्विजातीयगुणवृत्तिविषयताया विजातीयलौकिकविषयताया वा कार्यतावच्छेदकप्रत्यासत्तित्वे कार्यतावच्छेदकं मानसत्वं प्रत्यक्षत्वं वेति विनिगमनाविरहापत्तेर्दुर्वारत्वादिति । न च प्रत्यक्षत्वादिजातेरीश्वरज्ञानसाधारण्येन नित्यवृत्तितया अनवच्छेदकत्वेन न तस्या जन्यतावच्छेदकत्वमादाय विनिगमनाविरह इति वाच्यम् । विशेषणज्ञानजन्यतावच्छेदकतया सिद्धस्येश्वरज्ञानव्यावृत्तजातिविशेषस्यावच्छेदकत्वमादाय विनिगमनाविरहस्य तथाप्यनुद्धारात् । न च विजातीयगुणत्वेन प्रतिबन्धकतायामपि तस्य प्रतिबध्यतावच्छेदकं मानसत्वं प्रत्यक्षत्वं वेति विनिगमनाविरहोऽस्तीति वाच्यम् । आत्मसंयोगादीनामपि मानसानुदयात् प्रतिबन्धकतावच्छेदकजातेस्तत्रावश्यमभ्युपेयत्वात्

प्रत्यक्षत्वस्य जन्यतावच्छेदकत्वे संयोगे विजातीयगुणभेदासत्त्वे तच्चाक्षुषादावेव व्यभिचारात् योग्यसंयोगादौ तादृशजात्यस्वीकारे संयोगत्वादिना सङ्करप्रसङ्गात् । वस्तुतस्तु प्रतिबन्धकत्वं मानसत्वादिप्रत्येकधर्मावच्छिन्नं प्रति कारणत्वं वा कल्प्यत इति विनिगमनाविरहावकाशो नास्त्येव विजातीयगुणविषयकमानसत्वावच्छिन्नं प्रति विजातीयगुणत्वेन हेतुतायां विजातीयगुणान्यविषयकात्मत्वमानसस्यापि मनःसंयुक्तसमवायेन जननात् तादृशसामान्यसामग्रीबलात् संस्कारमानसस्योत्पत्तेर्वारणाय प्रतिबन्धकत्वकल्पनाया एव न्याय्यत्वात् । तत्राप्यात्मत्वादीनां हेतुत्वकल्पनान्नानुपपत्तिरिति चेत् एतत्कल्पनाया एवाधिक्यात् । न च संस्कारादीनां विजातीयगुणत्वेन प्रतिबन्धकत्वे ऽपि तादृशवैजात्यमेव शब्दसाधारणमस्तु तथा च शब्दस्य न मानसापत्तिरिति वाच्यम् । शब्दे तत्सम्बन्धकल्पनाया एवाधिक्यात् । न चेश्वरे शब्दसमवायस्वीकारे ऽपि मनःसंयुक्तेश्वरसमवायस्य सत्त्वात् तन्मानसापत्तिवारणाय शब्दे प्रतिबन्धकतावच्छेदकजातिकल्पनमावश्यकमिति वाच्यम् । ईश्वरे विजातीयमनःसंयोगानभ्युपगमात् परकीयज्ञानादिप्रत्यक्षवारणाय तत्पुरुषीयात्मसमवेतमानसं प्रति तत्पुरुषीयविजातीयमनःसंयोगाश्रयसमवायत्वादिनैव हेतुत्वाभ्युपगमादिति । परे तु भेर्यादीनामेव गुणः शब्दः त्वयापि भेर्यां शब्द इतिप्रतीतिबलात् तत्रावच्छेदकत्वाख्यस्वरूपसम्बन्धस्यावश्यं स्वीकरणीयत्वात् अवच्छेदकतासम्बन्धेन शब्दोत्पत्तौ भेरीदण्डसंयोगादीनां हेतुत्वस्य कल्पनीयत्वाच्च मन्मते समवायसम्बन्धेन शब्दोत्पत्तिं प्रत्येव तेषां हेतुत्वाभ्युपगमादिति । न चेश्वरे ऽतिरिक्तगगने वा शब्दसमवायित्वं स्वी-

क्रियते गौरवात्। न च भेर्यां शब्दसमवायित्वस्वीकारे भेरीनाशं विनापि शब्दनाशात् भेरीसमवेतनाशं प्रति भेरीनाशस्य हेतुतायां व्यभिचार इति वाच्यम्। सत्यामपि भेर्यां पाकादिना तदीयरूपनाशात्तत्र व्यभिचारवारणाय भेरीनाशकालीनभेरीसमवेतनाशत्वस्यैव तज्जन्यतावच्छेदकत्वाभ्युपगमेन व्यभिचारानवकाशात्। न च भेर्यां शब्दसमवायित्वस्वीकारे भेरीचक्षुःसंयोगदशायां चक्षुःसंयुक्तसमवायस्य तच्छब्दे सत्त्वात् रूपादिवत् तस्य चाक्षुषापत्तिः रसादीनामिव शब्दस्यापि प्रतिबन्धकत्वकल्पने च गौरवमिति वाच्यम्। रसादीनां प्रातिस्विकरसत्वादिरूपेण प्रतिबन्धकत्वकल्पनापेक्षया चक्षुरयोग्यगुणेषु जातिविशेषं कल्पयित्वा विजातीयगुणत्वेनैव चाक्षुषत्वाद्यवच्छिन्नं प्रति प्रतिबन्धकत्वकल्पनाया औचित्यात् तादृशवैजात्यस्य शब्दे स्वीकारेण तच्चाक्षुषादिवारणात् ईश्वरस्य शब्दसमवायिकारणत्वकल्पनापेक्षया शब्दनिष्ठतादृशजातिस्वीकारस्यैवोचितत्वात्। न च तुल्ययुक्त्या स्पार्शनप्रतिबन्धकतावच्छेदकतया सिद्धजात्या परस्परसाङ्कर्यात् कथं तादृशजातिसिद्धिः तथाहि तादृशस्पार्शनप्रतिबन्धकतावच्छेदकजातिः स्पर्शव्यावृत्ता रूपवृत्तिरपरा च रूपव्यावृत्ता स्पर्शवृत्तिः रसादौ च तयोः समावेश इति वाच्यम्। रूपस्पर्शव्यावृत्तजातिस्वीकारात् तदवच्छिन्नप्रतिबध्यतावच्छेदकं चाक्षुषत्वं स्पार्शनत्वं च एवं रूपत्वेन स्पार्शनं प्रति स्पर्शत्वेन चाक्षुषं प्रत्यपि प्रतिबन्धकत्वकल्पनात् न तयोश्चाक्षुषस्पार्शनापत्तिरित्यदोषः। अथास्तु विजातीयगुणत्वेनैव विजातीयगुणचाक्षुषत्वाद्यवच्छिन्नं प्रति रूपादीनां हेतुता एवं स्पर्शत्वेन चाक्षुषं प्रति रूपत्वेन स्पार्शनं प्रत्यपि प्रतिबन्धकत्व-

निति प्रतीत्यापत्तिः । श्रोत्रमपि च कर्णशष्कुली-

मिति विनिगमनाविरहः पूर्वमते कारणतावच्छेदकस्य गुरुतया साम्यादिति चेत् अस्त्वेवमपि शब्दे चाक्षुषादेरापादकाभावात् विजातीयगुणान्यविषयकचाक्षुषस्यापि प्रसिद्धा रसादौ तदापत्तेर्विजातीयगुणत्वेन हेतुत्वकल्पनया वारणासम्भवाच्चेति वदन्ति। अथातिरिक्ताकाशानभ्युपगमे किं श्रोत्रपदार्थः स्यात् तन्मते कर्णविवरावच्छिन्ननभोभागस्यैव श्रोत्रेन्द्रियत्वादत आह । श्रोत्रमपीति । तथा च तादृशेश्वरसमवाय एव शब्दग्रहे प्रत्यासत्तिः। वस्तुतस्तु शब्दग्रहे श्रोत्रसमवायस्य हेतुत्वे मानाभावः तद्ग्राहकान्वयव्यतिरेकाभावात् प्रत्यक्षस्येन्द्रियसन्निकर्षजन्यत्वनियमे मानाभावात् परं तु देशान्तरीयपुरुषस्य काशीस्थशब्दप्रत्यक्षवारणाय तत्पुरुषीयशब्दलौकिकप्रत्यक्षत्वावच्छिन्नं प्रति स्वावच्छेद्यत्वसम्बन्धेनैतत्कर्णत्वेन एतत्कर्णावच्छेद्यशब्दत्वेनैव वा तादात्म्येन(१) हेतुत्वं कल्प्यते । एवं शब्दत्वादिप्रत्यक्षे तत्कर्णस्य स्वावच्छेद्यसमवेतत्वसम्बन्धेन हेतुत्वं कल्प्यते न तु श्रोत्रसमवेतसमवायत्वेन। अथैवं शब्दोऽसमवेत एवास्तु तस्य समवेतत्वे मानाभावात् जन्यभावे समवेतत्वनियमस्याप्रयोजकत्वात् इति चेदस्तु किं तेन यदि न सिद्धान्तभङ्गभीतिः । अथवा कर्णशष्कुल्यां शब्दस्यावच्छेदकत्वं न स्वीक्रियते परं तु समवाय एवावच्छेदकतानियामकस्यैव समवायनियामकत्वाभ्युपगमात् । इत्थं च शब्दतत्समवेतप्रत्यक्षयोः कर्णसमवायतत्समवेतसमवाययोरेव हेतुत्वमभ्युपेयते काशीस्थशब्दस्य

(१) तादात्म्यप्रत्यासत्त्या—पा २ पु ।

विवरावच्छिन्न ईश्वर एव यथा परेषां तथावि-
धमाकाशम् ॥

मनोऽपि चासमवेतं भूतम्[१]। अदृष्ट-
विशेषोपग्रहस्य नियामकत्वाच्च नातिप्रसङ्ग इ-

समवायेनैतद्देशीयपुरुषकर्णे ऽनुत्पादान्नातिप्रसङ्ग इति कृतं पल्लवितेन । परेषामतिरिक्ताकाशाभ्युपगन्तॄणाम् ॥

मनसोऽतिरिक्तत्वं खण्डयति। मनोऽपि चेत्यादि। तथा च यदसमवेतं भूतं प्राचीनमते परमाणुरूपं नवीनमते त्रुटिस्वरूपं तदेव मनःपदवाच्यमित्यर्थः । अतिरिक्तमनः-कल्पने गौरवमिति भावः। क्वचिदसमवेतं मूर्तमिति पाठः। तत्र च मूर्तपदं मूर्तविशेषपरं तथा च मनोऽसमवेतमूर्तविशेषो भूतात्मकं मूर्तमिति यावदित्यर्थः । अत्र च मनसोऽसम-वेतभूतपर्यन्तानुधावनं सूक्ष्मत्वसिद्धान्तरक्षार्थमिति ध्ये-यम्। ननु मनसोतिरिक्तत्वानभ्युपगमे घटादौ चक्षुःसंयो-गत्वक्संयोगादिसत्त्वे एकदा ज्ञानद्वययौगपद्यापत्तिः नवी-नमते मनसः त्रसरेणुरूपतया तस्य च महत्त्वेन तेन सह एकदा चक्षुर्मनोयोगादीनां सम्भवेन नानाज्ञानोत्पादकना-नेन्द्रियमनोयोगरूपस्य कारणस्यापि तदानीं विद्यमानत्वा-दित्यत आह । अदृष्टेति । तथा चातिरिक्तमनोऽभ्युपग-न्तॄणामपि यदा मनसा सह चक्षुःसंयोगस्तदा त्वचा सह संयोगस्तथा कथं नोत्पद्यत इति तत्राऽदृष्टविशेषस्य नियाम-कत्वावश्यकत्वे ऽनुपपत्त्यभावात् मन्मते ऽपि तत्तज्ज्ञानादौ तत्तददृष्टविशेषस्य नियामकत्वकल्पनेनैव एकदा ज्ञानद्वय-यौगपद्यापत्तिवारणसम्भवादिति भावः । इदमत्र विचा-

(१) मूर्तम-पा १ पु ।

त्वावयोः समानम् ॥

परमाणुद्व्यणुकयोश्च मानाभावः त्रुटावेव विश्रामात् । त्रुटिः समवेता चाक्षुषद्रव्यत्वात् घटवत् ते च समवायिनः समवेताः[1] चाक्षुषद्रव्यसमवायित्वादिति चाप्रयोजकम् । अन्यथा

रयामः । अतिरिक्तमनसोऽनभ्युपगमे विनिगमनाविरहेण मनसो नानापरमाणुरूपतया नानात्रुटिरूपतया वा एतत्पुरुषीयात्ममानसत्वावच्छिन्नं प्रति एतत्पुरुषीयमनःसंयोगादिहेतुतायां नानापदार्थेऽववच्छेदकत्वकल्पने गौरवं दुष्परिहरमेव मनसोऽतिरिक्तत्वकल्पने त्वेकत्र तदवच्छेदकत्वकल्पने लाघवस्यातिस्फुटत्वात् । न च तत्र मनःसंयोगस्य विजातीयसंयोगत्वेन हेतुत्वकल्पनान्नोपदर्शितगौरवावकाश इति वाच्यम् । तथापि विनिगमनाविरहेण संयोगसम्बन्धेन मनसोऽपि हेतुत्वेऽनन्तपरमाणुषु त्रुटिषु वा कारणत्वकल्पनप्रयुक्तगौरवस्य दुःसमाधेयत्वात् । अत्र केचित् । द्रव्यलौकिकप्रत्यक्षत्वावच्छिन्नं प्रति इन्द्रियसंयोगस्य विजातीयसंयोगत्वेन हेतुत्वस्य सामान्यतः कल्पनात् तेनैवासन्निकृष्टात्मप्रत्यक्षवारणसम्भवे आत्ममानसत्वावच्छिन्नं प्रति मनःसंयोगत्वेन हेतुतायां मानाभाव इति नातिरिक्तमनसोऽनभ्युपगमे उपदर्शितगौरवप्रसङ्गः तथाविधसामान्यकार्यकारणभावावश्यकत्वं निरुक्तिप्रकाशे[2] व्यवस्थापितमिति ग्रन्थगौरवान्नेह प्रपञ्चितमिति दिक् ॥

ते चेति । चाक्षुषद्रव्यसमवायिनश्चेत्यर्थः । अन्यथा

(१) ते च समवेता -पा २ पु ।
(२) त्वन्यत्र-पा १ पु ।

**तादृशासमवायिसमवायित्वादिभिरनवस्थित-**

अप्रयोजकादपि अनुमानात् पदार्थसिद्धौ। **तादृशे**त्यादि। परमाणुः समवेतः चाक्षुषद्रव्यसमवायिसमवायित्वात् कपालिकावदित्यनुमानेनेत्यर्थः। अथ परमाणुद्व्यणुकानङ्गीकारे द्रव्यचाक्षुषे चक्षुःसंयोगस्य द्रव्यसमवेतचाक्षुषे चक्षुःसंयुक्तसमवायस्य च हेतुत्वकल्पनया गौरवं तदभ्युपगमे समवेतचाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायत्वेन हेतुत्वकल्पनात् त्रसरेणुतद्रूपादावपि चक्षुःसंयुक्तपरमाण्वादिसमवेतसमवायसत्त्वेनैव तच्चाक्षुषोपपत्तेस्तयोर्हेतुत्वाकल्पने लाघवमेव तत्सिद्धावनुकूलतर्क इति नाप्रयोजकत्वमिति। न चातीन्द्रियघटितसन्निकर्षाद् द्रव्यत्वादिचाक्षुषवारणाय द्रव्यान्यसमवेतचाक्षुषे चक्षुःसंयुक्तसमवेतचाक्षुषवन्निरूपितसमवायत्वेनैव हेतुत्वकल्पनात् तेन त्रुटिचाक्षुषासङ्ग्रहात् संयोगहेतुत्वमावश्यकमिति वाच्यम्। इत्थमपि द्रव्यान्यसमवेतचाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतो यश्चाक्षुषविषयः तन्निरूपितसमवायत्वेन द्रव्यचाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुःसंयोगत्वेन हेतुत्वकल्पनादेवोपपत्तौ संयुक्तसमवायस्य हेतुत्वाकल्पनात् त्रसरेणौ द्रव्यत्वादिचाक्षुषानुरोधेन द्व्यणुकसिद्धेरावश्यकत्वादिति चेत्। न द्व्यणुकाभ्युपगमे तद्घटितसन्निकर्षात् रूपत्वादिचाक्षुषवारणाय चक्षुःसंयुक्तसमवेतसमवायहेतुतायां समवेतांशे चाक्षुषविषयताया निवेशस्य आवश्यकतया कारणतावच्छेदकप्रविष्टयोः समवेतत्वचाक्षुषविषयत्वयोर्मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण कारणताद्वयकल्पनापत्तिरवच्छेदकगौरवं

चेति तदपेक्षया द्रव्यान्यस्मिन् वर्तते यस्तद्विषयकचाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायत्वेन द्रव्यसमवेतचाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुःसंयुक्तसमवायत्वेन द्रव्यचाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुःसंयोगत्वेन हेतुत्वकल्पनं समुचितमेव। न च भवन्मते ऽपि वायुघटितसन्निकर्षात् संयोगत्वप्रत्यक्षवारणाय चाक्षुषविषयतानिवेशस्यावश्यकत्वमिति वाच्यम्। पाकादिना नीरूपघटघटितसन्निकर्षात् संयोगत्वसंख्यात्वादिप्रत्यक्षवारणाय चाक्षुषविषयतानिवेशे ऽपि संयुक्तांशे रूपनिवेशस्यावश्यकत्वात् रूपवच्चक्षुःसंयुक्तसमवेतसमवायाभावादेव तद्वारणात्। न च चक्षुरिन्द्रियघटितसन्निकर्षाद् रूपत्वादिचाक्षुषवारणायानुद्भूतरूपाभावादिनिवेशापेक्षया चाक्षुषविषयतानिवेश आवश्यक इति वाच्यम्। अनुद्भूतरूपस्य दीधितिकृतैवाग्रे निरसनीयत्वात्। अथावयविनि पाकानभ्युपगमे रूपनिवेशस्यानावश्यकत्वात् चाक्षुषविषयतैव वाय्वादिघटितसन्निकर्षात् संयोगत्वादिचाक्षुषवारणाय निवेश्यते तथा च संयुक्तसमवायस्य हेतुत्वाकल्पनप्रयुक्तलाघवमस्त्येवेति चेत्। न। विजातीयचक्षुःसंयोगाश्रयसमवेतसमवायत्वादिनैव हेतुत्वकल्पनाद्वाय्वादौ विजातीयचक्षुःसंयोगानभ्युपगमसम्भवेनैव(१) तद्घटितसन्निकर्षात् संयोगत्वादिचाक्षुषवारणात् मन्मते ऽपि रूपाद्यनिवेशात् भवन्मते द्व्यणुकघटितसन्निकर्षात् रूपत्वादिचाक्षुषवारणाय चाक्षुषविषयतानिवेशस्य महत्त्वनिवेशस्य चावश्यकत्वेन पूर्वोक्तगौरवात्। न च वायुचक्षुःसंयोगादौ वैजात्यानभ्युपगमे तद्घटितसन्निकर्षात् रूपाभावादिचाक्षुषानुदय-

(१) नभ्युपगमेनैव-पा २ पु।

प्रसङ्गः अभावप्रत्यक्षे ऽपि विजातीयसंयोगाश्रयविशेषणताया एव हेतुत्वादिति वाच्यं अभावचाक्षुषजनकतावच्छेदकतया वैजात्यान्तरस्वीकारात् । न च मयापि द्व्यणुकचक्षुःसंयोगे वैजात्यानभ्युपगमान्न तद्घटितसन्निकर्षात् रूपत्वादीनां चाक्षुषापत्तिरिति वाच्यम् । त्रसरेणौ द्रव्यत्वचाक्षुषानुरोधेन त्वया द्व्यणुके विजातीयसंयोगस्यावश्याभ्युपेयत्वात् । न च चाक्षुषविषयत्वानिवेशे रूपस्य वैजात्यस्य वा जनकतावच्छेदककोटिप्रवेशे ऽपि घटचक्षुःसंयोगकाले तद्घटनीरूपघटान्तरद्वित्वादिघटितसन्निकर्षात् घटवायुद्वित्वादिसन्निकर्षाच्च द्वित्वत्वादिप्रत्यक्षापत्तिरिति चाक्षुषविषयतानिवेश आवश्यक इति वाच्यम् । द्वित्वत्वप्रकारकप्रत्यक्षस्य चाक्षुषाभावादिप्रतिबन्धकसत्त्वेनासम्भवात् केवलद्वित्वत्वनिर्विकल्पकस्वीकारे ऽपि क्षतिविरहात् निर्विकल्पकस्यातीन्द्रियतया तदुत्तरमनुव्यवसायाद्यापत्तिविरहात् । इत्थं च रूपमपि न निवेश्यते प्रयोजनाभावात् । वस्तुतस्तु यावदाश्रयसन्निकर्षविरहकाले द्वित्वादिप्रत्यक्षवारणाय विजातीयसचाक्षुषत्वावच्छिन्नं प्रति सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकचक्षुःसंयोगाभावाभावस्य हेतुत्वकल्पनवत् तदानीं तद्घटितसन्निकर्षात् द्वित्वत्वादिचाक्षुषवारणाय तत्र सामानाधिकरण्यसम्बन्धेन तादृशचक्षुःसंयोगाभावाभावस्य हेतुताया अवश्यं कल्पनीयत्वे विजातीयसत्समवेतचाक्षुषत्वस्यैव तज्जन्यतावच्छेदकत्वं स्वीक्रियत इति तादृशहेतुतयैव रूपादिसन्निकर्षविरहदशायां रूपत्वादिचाक्षुषवारणे संयुक्तसमवेतसमवायहेतुत्वं नाभ्युपेयते । न च तथापि चक्षुःसंयुक्तघटवायुद्वित्वघटपरमाणुद्वित्वसन्निकर्षाद् द्वित्वत्वादिप्रत्य-

तत्समवायिपरम्परासिद्धिप्रसङ्गात् । अणुव्यवहारश्चापकृष्टपरिमाणनिबन्धनो महत्यपि महत्तमादणुव्यवहारात् ॥

ईश्वरस्य च परिमाणवत्त्वे मानाभावः

---

त्त्वारणाय चक्षुःसंयुक्तसमवेतचाक्षुषवत्समवायत्वेन हेतुत्वमावश्यकमिति वाच्यम् । तादृशाभावाभावस्यैव स्वाश्रयचाक्षुषविषयसमवायरूपसामानाधिकरण्यसम्बन्धेन हेतुत्वाभ्युपगमात् विजातीयचक्षुःसंयोगाद्यभावाभावस्यैव वा सामानाधिकरण्यसम्बन्धेन हेतुत्वाद् वायुघटसंयोगे च सामानाधिकरण्यसम्बन्धेन विजातीयचक्षुःसंयोगाद्यभावाभावस्यासत्त्वेन तद्वारणात् । इत्थं च द्रव्यत्वादिप्रत्यक्षानुरोधेन संयुक्तसमवायहेतुत्वं कल्प्यते द्व्यणुकस्वीकारे च द्व्यणुकघटितसन्निकर्षात् रूपत्वादिचाक्षुषवारणाय तत्र चाक्षुषविषयतानिवेशस्यावश्यकत्वेन तेन त्रुटिचाक्षुषासङ्ग्रहात् द्रव्यचाक्षुषे चक्षुःसंयोगस्य हेतुत्वमावश्यकमिति द्व्यणुकस्वीकारो निरर्थकः चाक्षुषविषयत्वप्रवेशप्रयुक्तगौरवसम्पादकश्चेति कृतं पल्लवितेन । अथ अणुव्यवहारस्य स्थूलद्रव्यालम्बनत्वाभावेन तद्भिन्नद्रव्यविषयकत्वमावश्यकमिति तत्सिद्धिरित्यत आह । अणुव्यवहार इत्यादि । अपकृष्टपरिमाणनिबन्धनोऽपकृष्टमहत्त्वाश्रयद्रव्यविषयक इत्यर्थः । महत्यपीति । यदपेक्षया ये ऽपकृष्टपरिमाणवन्तस्तदपेक्षया तत्राणुव्यवहारादित्यर्थः ॥

ईश्वरस्य चेति । जीवात्मनो महत्त्वं प्रत्यक्षसिद्धमित्याशयः । तदनभ्युपगमे तदपि तद्गतिकमेवेति बोध्यम् ।

केचित्तु परमाणुद्व्यणुकाङ्गीकारे आत्ममहत्त्वमावश्यकमन्यथा परमाण्वादिप्रत्यक्षवारकमहत्त्वत्वेन हेतुत्वे आत्ममानसे व्यभिचारः स्यात् आत्मान्यद्रव्यप्रत्यक्षत्वस्य तज्जन्यतावच्छेदकत्वे चाक्षुषस्पार्शनत्वयोर्मिथो विशिष्य तथात्वे च गौरवमित्याहुः । तन्न । त्रुटिस्पार्शनवारणाय द्रव्यस्पार्शनत्वावच्छिन्नं प्रति सामानाधिकरण्यसम्बन्धेन महत्त्वस्य समवायसम्बन्धेन विजातीयमहत्त्वस्य वा हेतुतायां द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव महत्त्वत्वेन हेतुत्वकल्पनात् त्रुटिस्पार्शनस्वीकारेऽपि मूर्तप्रत्यक्षत्वस्यैव तज्जन्यतावच्छेदकत्वस्वीकारेणात्ममानसे व्यभिचारानवकाशात् । अथ परमाणुघटसंयोगचाक्षुषवारणाय द्रव्यान्यसत्प्रत्यक्षत्वावच्छिन्नं प्रति सामानाधिकरण्यसम्बन्धेन महत्त्वाभावस्य प्रतिबन्धकत्वकल्पनात् जीवानामीश्वरस्य च महत्त्वानङ्गीकारे ज्ञानादौ शब्दे च सामानाधिकरण्यसम्बन्धेन महत्त्वाभावस्य सत्त्वात् प्रत्यक्षानुदयापत्तेस्तदावश्यकम् । चाक्षुषस्पार्शनत्वादीनां विशिष्य प्रतिबध्यतावच्छेदकत्वे च कार्यकारणभावबाहुल्यमिति चेत् । न । आवश्यकद्रव्यान्यसचाक्षुषत्वावच्छिन्नं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन चाक्षुषाभावस्य द्रव्यान्यसत्स्पार्शनत्वावच्छिन्नं प्रति स्पार्शनाभावस्य प्रतिबन्धकत्वकल्पनादेव परमाणुघटसंयोगप्रत्यक्षवारणे महत्त्वाभावस्य प्रतिबन्धकत्वाकल्पनात् तयोरावश्यकत्वं तु वायुघटसंयोगगगनघटसंयोगादीनां चाक्षुषस्पार्शनवारणाय । अथ तत्र रूपाभावस्पर्शाभावयोः प्रतिबन्धकत्वेनैव नानुपपत्तिरिति चेत् । न । रूपमहत्त्वस्पर्शाभावानां त्रयाणां प्रतिबन्धकत्वकल्पनापेक्षया चाक्षुषस्पार्शनाभावप्रतिबन्धकत्वकल्पनस्यैव लाघवात् । न च पाकादिना

श्रीगणेशाय नमः ।

# खण्डनोद्धारः ।

## श्रीवाचस्पतिमिश्रविरचितः ।

अणोरणीयान् महतो महीयान्
एकः पुमान् विश्वजनीनवृत्तिः ।
जगत्प्रसूतिस्थितिभङ्गबीज-
मस्माकमन्तःकरणे चकास्तु ॥

आनन्दाद्वयवादिनी श्रुतिरपि त्रस्तेव मूकायते
तस्मिन्नेव जडीभवन्ति जगतां चेतांसि मायामुषि ।
निर्वाणप्रतिभूर्भविष्णु भजतामाभीरदारप्रियम्
वन्दे स्वात्मकचित्प्रकाशममलं तन्निर्विकारं महः ॥

क्षीराब्धेरुज्जिहानां त्रिदशपरिषदि प्रोल्लसद्भूरिभङ्गीम्
अङ्गीकुर्वन् कटाक्षैस्त्रिभुवनजननीं व्रीडया नम्रमौलिः ।
देवः पायादपायात् कुसुमशरपरीरम्भसञ्जातभावः
सद्यःस्विद्यत्तरेण स्मितकमलमुखीमाददानः करेण ॥

तर्ककान्तारचारिण्यः स्खलन्ति प्रायशो गिरः ।
तत् समादधति प्राज्ञा एष धर्मः सनातनः ॥

खण्डनमुद्दण्डमभूदुपर्युपरि कल्पनासहस्रेण ।
तन्मूलशुद्धमतिना वाचस्पतिना निरस्यते सम्यक् ॥

अथ कथायां वादिनोर्नियममेतादृशं मन्यन्ते यत् प्रमाणादयः सर्वतन्त्रसिद्धान्ततया सिद्धाः पदार्थाः सन्ति इति कथकाभ्यामभ्युपेयम् । तदपरे न क्षमन्ते । तथाहि प्रमा-

णादीनां यत् सत्त्वमभ्युपेयं कथकेन तत् कस्य हेतोः किं तदनभ्युपगच्छद्भ्यां वादिभ्यां(१) तदभ्युपगमनियतस्य वाग्व्यवहारस्य प्रवर्तयितुमशक्यत्वात् उत तत्कर्तव्यवाग्व्यवहारहेतुत्वात् उत लोकसिद्धत्वात् । अथवा तदनभ्युपगमस्य तत्त्वनिर्णयविजयातिप्रसञ्जकत्वादिति(२) ॥

अत्र यद्यपि प्रमाणादिसत्त्वाभ्युपगमनियतत्वं तद्धेतुकत्वं तथात्वेन लोकसिद्धत्वं तदधीनफलकत्वं चेति चतुष्टयमप्यविरुद्धमिति विकल्पो न कल्प्यते । तथापि पुरस्काराभिप्रायेण विकल्पः इदं वा पुरस्कृत्य तथा मन्यसे इदं वेति । ननु तथापि न्यूनो विकल्पः सर्वपुरस्कारपक्षस्यापि विकल्पनीयत्वादिति चेन्न । एकैकखण्डनेनैव सर्वखण्डनसिद्धौ तस्यार्थनः खण्डितत्वेन पृथगनुपन्यासादिति । अत्र नाद्यद्वितीयौ वेदान्तिमाध्यमिकचार्वाकवाग्व्यवहारस्य तेन विनापि सत्त्वात् । न तृतीयः लोको हि प्रमाणं वा वाहीकादिर्वा । अत्र नाद्यः प्रमाणादिसत्त्वाभ्युपगमः प्रमाणादिव्यवहारसिद्ध इत्यस्यापि विचार्यत्वात् । नापरः तद्व्यवहारस्य परीक्षकैरनादरणात् । नान्त्यः समयबन्धेनैव फलानतिप्रसङ्गादिति खण्डनम् ॥

अत्र प्राञ्चः । अलीकापेक्षवैलक्षण्यमात्रमेवेह सत्त्वं विवक्षितं तच्च प्रमाणादिवस्तुस्वरूपमेव । अस्तु वा अबाध्यत्वादिकं सत्त्वं धर्मधर्मिणोर्मया भेदोपगमात् तदवधारणमेव तदभ्युपगमः । अथ सर्वादृष्टेः(३) सन्देहात् स्वादृष्टेश्च व्यभिचारात् अबाध्यत्वं दुरवधारणमिति चेन्न । यस्य हि

(१) वादिप्रतिवादिभ्यामिति खण्डनखण्डखाद्ये पाठः ।

(२) एतत्पर्यन्तं खण्डनग्रन्थे दृश्यते अनन्तरं च पाठभेदः ।

(३) सर्वेषां बाधदृष्ट्यभावस्येत्यर्थः ।

वस्तुनो यावन्तः परीक्षाप्रकारा लोके प्रतीताः तावद्भिः परीक्ष्यमाणे तस्मिन् वस्तुनि चेदन्यथाभावो नावसीयते तदा तदबाधितमवगम्यते । तादृशमेव च विज्ञानं लौकिकैः प्रमेति तत्करणमेव प्रमाणमिति तद्विषय एव च प्रमेयमिति गीयते । तस्मादस्ति प्रमाणादीनां सत्त्वं च अभ्युपगमश्चेति । तद्धि नाभ्युपगम्यते यत्प्रतीयतएव न यथा खपुष्पादि । प्रतीतमपि वा बाध्यते यथा देहात्मत्वादि । उपाधिपुरःसरमेव वा प्रतीयते यथा कुङ्कुमारुणा तरुणीति । प्रमाणादि तु नैवं इति । न च तद्गृहीतेः प्रामाण्यसंशयादर्थपर्यन्तमनवधारणमिति । प्रवृत्तिसामर्थ्यादिना ज्ञातप्रामाण्यस्याप्यवधारणसम्भवादिति न च प्रतीतमपि प्रमाणादिकम् औत्तरकालिकबाधप्रतिसन्धानेन त्याज्यम् आसंसारं बाधानवतारात् तादृशबाधस्यापीदानीं विनिश्चायकाभावात् शङ्कापिशाच्याश्चातिदौर्बल्येनाकिञ्चित्करत्वात् त्वयापि च व्यवहारदशायां सर्वलोकसिद्धस्यैव वर्त्मनोऽनुसर्तव्यत्वात् । अत एवानुमानवैरिणं चार्वाकं प्रत्यनुमानप्रयोगं कुर्वाणो न चार्वाकैरभिधीयते (१) तत्प्रयोगस्य लौकिकैरुपगमात् वाद्यनुमतत्वस्यादोषत्वात् प्रकृतव्यवहारदशायां लौकिकं पन्थानं जहत् उपेक्षणीय एव भवति । नापि प्रपञ्चमिथ्यात्वावष्टम्भेन प्रमाणादेरसत्त्वाभ्युपगमः प्रपञ्चमिथ्यात्वे प्रमाणाभावात् । न हि प्रत्यक्षेण तत्सिद्धिः न हि तन्मिथ्यात्वे प्रत्यक्षमस्ति । नाप्यनुमानं प्रत्यक्षबाधात् (२) । नाप्यागमः विरोधिप्रत्यक्षबाधेन प्रपञ्चमिथ्यात्वश्रुतेरेवान्यपरत्वात् । किं च प्रपञ्चमिथ्यात्वं न तावदभावप्रति-

(१) चार्वाकादिरिति शेषः ।

(२) प्रत्यक्षेण बाधितत्वादिति भावः ।

योगित्वं सिद्धसाधनात्[1]। नाप्यत्यन्तासत्त्वं न हीदं प्रमा-
णेनालिङ्ग्यते खपुष्पवत्। नापि प्राचीनैः प्रमाणादिसत्ता
नाङ्गीकृतेत्यतोऽस्माकमपि तदनुपगम इति प्रपञ्चमिथ्यात्व-
मिति युक्तम्। अभ्युपगमबीजे सति प्राचीनानभ्युपगमस्या-
नभ्युपगमाहेतुत्वात्। तदेतत् दिगम्बरैर्दर्शनावरणीयं[2]
तम इत्युपहस्यते। किं च प्रमाणं स्वार्थविचारे कथायां च वि-
चारयितुः कथयितु श्चानियतोपस्थितिकम् अज्ञातस्य व्यवहा-
रानङ्गत्वात्। अत एव लौकिकानां स्वार्थविचारे कथायां चा-
ङ्गत्वात् प्रमाणादिकं तत्सत्त्वं च सर्वतन्त्रसिद्धान्त इति। न
तत् कथासाध्यम्। न हि तेन मय्येव प्रमा जन्यते न तु त्वयि
येन तस्य प्रमाकरणत्वं त्वां प्रति साधनीयं स्यात् तस्य त्व-
यि मयि च समवृत्तिकत्वात्। एवं च सति प्रमाणत्वास-
त्त्वाभ्युपगमवतः तदसत्त्वाभिधानम् औदासीन्याभिधानं
वा नूनं विप्रलम्भकवाक्यं तथा च प्रमाणादिसत्त्वेऽपि प्रमा-
णं कथायां वाच्यम् अकथायां वेति विकल्पस्यापि क्वावका-
शः तत्सत्त्वस्य सकलव्यवहर्त्रनुमतत्वेन तत्र प्रमाणाभि-
धानस्यैवानवकाशात्। किं च प्रमाणादिसत्त्वाभ्युपगम-
स्तावत् विचारकथयोः प्रवृत्तिहेतुः। तथा च तं विनैव यदि
ते मन्यसे तदा परप्रबोधहेतुभूतं वाग्व्यवहारमन्तरेणापि
परप्रबोधमिच्छ तथा च विरमय वाग्व्यवहारादपीत्यलम्
अतिपीडनया॥

नन्वियमपि प्रतिबन्ध्युपायव्यतिरेके फलं भवती-
त्यभ्युपगम्य वादिभ्यां प्रवर्तितायां कथायां त्वया वाच्या

(१) तथा च सिद्धसाधनस्थले पक्षताया असत्त्वात् मिथ्यात्वानु-
मानासम्भवात् प्रमाणान्तरस्य चार्थान्तरग्रस्तत्वादिति भावः।

(२) तमो यथा दर्शनेनावृतं न भवति परन्तु तमसा दर्शनमे-
वावृतं स्यात् तद्वदिति भावः।

अन्यथा प्रवर्तितायां वा । नाद्यः स्वयमपि तथोपगमेन तस्यामुपायव्युत्पादनानौचित्यात् । नापरः न्यायमते जगति तादृश्याः कथाया एवासम्भवात् । न ह्युपायासत्त्वं तदौदास्यं वा समाश्रित्य वादी वादिनौ वा कथां प्रवर्तयत इति । न्यायमतमिति चेत् । हन्त तर्हि त्वयापि नैयायिकेषु यद्दूषणं दीयते तत् तदङ्गत्वानभ्युपगमप्रवर्तितायां कथायाम् अथ प्रमाणसत्त्वाभ्युपगमाङ्गिकायाम् । नाद्यः तत्र तदभिधानानौचित्यात् स्वयमेव नैयायिकेन प्रमाणादेरनङ्गत्वोपगमात् । नान्त्यः त्वन्मते तादृश्याः कथाया एवासम्भवात् तस्मात् प्रमाणाद्यनभ्युपगमे कथैव न सम्भवति उन्मत्तकेलिप्रसङ्गात् इत्येव स्यात् ॥

नव्यास्तु प्रमाणस्य हि सत्त्वं नेत्यभ्युपगच्छन् प्रमाणेन कथं दूषयेत् नेति । नाभ्युपैमि किन्तु तत्रौदासीन्येन वर्त इति चेन्न । प्रत्यक्षखण्डनाय त्वया प्रमाणस्याहरणात् औदास्ये च तदसम्भवात् । न हि तत्रोदास्ते चाश्रयते चेति सम्भवति तस्मादौदास्याभिधानम् असत्त्वाभिधानं च विप्रलम्भकवाक्यमिति । सांव्यवहारिकेन प्रमाणेन कथयामि न तु पारमार्थिकीमपि सत्तामभ्युपैमि शेषे बाधोदयादिति चेत् । किमिदं सांव्यवहारिकत्वम् । अविचारितसुन्दरत्वमिति चेत् । तर्हि तदबाधकमेव प्रमाणम् । न हि बाध्येन किञ्चिद्बाध्यते किन्त्वबाध्येनैव । सर्वमेव बाधकं बाध्यम् उभयसिद्धबाध्याविशेषादिति(१) चेत् । इदमप्यनुमानं बाध्यम् अबाध्यं वा इत्युभयतः पाशारज्जुः । त्वत्कल्पितानि प्रमाणानि त्वत्कल्पितैरेव दूषणैरुपसृष्टानि विलीयन्ते एवं दूषणान्यपि सुन्दोपसुन्दवदिति ब्रूम इति चेत् । एवं हि

(१) उभयसिद्धबाध्यः शुक्तिरजतादिः ।

सर्वाणि प्रमाणानि त्वद्रीत्या बाध्यानीति त्वद्वचनार्थः सोपि व्याहतः तस्यैवाबाध्यत्वात् बाध्यत्वे चार्थासिद्धेः किं नश्छिन्नम् उपात्तस्य साधनस्य असाधनत्वे उपादातुरेव निग्रहात्। एतत् सर्वं बाध्यमेव शेषे बाधोदयादिति चेन्न। आसंसारं तदनुदयात्। व्यवहारदशोत्तरं बाधो भविष्यतीति चेन्न। आसंसारं व्यवहारदशाया एव सत्त्वात् तदुदीच्यापि दशा भविष्यतीत्यत्र प्रमाणाभावात्। उपनिषदां च तत्प्रमाणत्वाभिमतानाम् त्वया प्रामाण्याभावस्य मया चान्यपरत्वस्योपगमात् शङ्कामात्रस्य च दौर्बल्येनासाधकत्वात्। व्यवहारदशायां तावत् उपनिषदेव स्वप्रकाशशुद्धबुद्धस्वभावे ब्रह्मणि दशान्तरभूते[1] प्रमाणम् एतद्दशात्यये तु तदेव स्वस्मिन् स्वप्रकाशत्वादिति चेत्। दशान्तरे[2] तस्याः कुतो न प्रामाण्यम् अङ्गवैकल्याद्वा अङ्गिवैकल्याद्वा। नोभौ प्रागिव तदानीमपि बोद्धुर्योग्यताद्यवगतेरुपनिषदां च सत्त्वात् उपनिषज्जन्यबोधो हि वृत्तिलक्षणः स चानिर्वचनीयानाद्यविद्याद्वयमहिम्ना प्रादुर्भवति सारस्वत इव पवनोद्धूतस्य वीचिनिचयः। तदत्यये तु विलीयते तस्यैव निवातस्तिमितस्येवेति चेत्। भवेदेवं यदि ब्रह्मभिन्नो बोद्धा तदा न स्यात् स पारमार्थिको नास्त्येवेति चेन्न। साधयिष्यन्ते हि नानात्मानः॥

यत्तु प्रमाणादिसत्त्वाभ्युपगमस्य कथाङ्गत्वं नैयायिकेन तावत् साध्यते तत् कीदृश्यां कथायां न तावत् वैतण्डिकेन प्रमाणादिसत्त्वाभ्युपगमेनैव प्रवर्तितायां सिद्धसाधनापत्तेः। अथ तदनङ्गत्वाभ्युपगमेन तदङ्गत्वा-

(१) सर्वनिषेधावधीभूते इत्यर्थ.।
(२) अद्वैतदशायामित्यर्थः।

नङ्गत्वौदासीन्येन वा तेन प्रवर्तितायां तथासति तत्कथान्तरमपि तथैवास्तु न हि यया कथया प्रमाणादिसत्त्वाभ्युपगमस्य कथाङ्गत्वं साध्यते सा कथा तदङ्गत्वसिद्धौ सत्यां प्रवर्तत इति सम्भवति तदानीं साध्यस्य तदानीं सिद्धत्वासम्भवादिति। तत्तुच्छम् । कथा हि तावत् साधनदूषणपरवचनसन्दर्भविशेषः। न च साधनाद्यनङ्गीकारे तदौदास्ये वा स तादृशो वक्तुं शक्यते तस्मात् गलेपादिकयापि कथकेन साधनदूषणे मन्तव्ये तदनुमतिं विना तन्मध्यां कथायामेव प्रवेशासम्भवात् तस्मात्तदभ्युपगममन्तरेण कथैव न सम्भवति । तदुक्तम् भाष्यकृता । यदि नाभ्युपैति तदा उन्मत्तवदुपेक्षणीयः स्यात् । नहि तदङ्गत्वसाधिका कथा कथं तदङ्गत्वाभ्युपगममन्तरेण न कथञ्चिदित्यवेहि । साधनदूषणानङ्गीकारे तत्परवचनसन्दर्भरूपा कथैव कर्तुं न शक्यते नहि तन्नाभ्युपैति तेन च व्यवहरति इति सम्भवति तस्मात् ईदृशाव्यवहर्त्रा त्वयैवानीदृशोऽभिसन्धिरपि स्वयमेव हेय इत्यलमस्माकं तदङ्गतासाधनप्रयासेन इत्याहुः ॥

अथावश्यकत्वाल्लाघवाच्च समयबन्ध एवास्तु कथाहेतुर्न तु तस्मिन् सति प्रमाणादिसत्त्वाभ्युपगमोऽपि गौरवात् माध्यमिकादिकथाप्रयोगे व्यभिचाराच्चेति चेत् । स कीदृक् । तथाहि वादिना प्रमाणेन तर्केण च व्यवहर्तव्यम् प्रतिवादिनापि कथाङ्गतत्त्वज्ञानविरहलिङ्गप्रतिज्ञाहान्याद्यन्यतमं निग्रहस्थानं तस्य वक्तव्यं तद्व्युत्पादने च वादिनो भङ्गो व्यवहर्तव्यः तदव्युत्पादने तु प्रतिवादिन एव भङ्गः निरनुयोज्यानुयोगात् । यस्य च साधने परोक्तं दूषणं न लगति यदुक्तं च दूषणम् अनुद्धारं तौ जेतृतया व्यवहर्तव्याविति ।

ईदृशोऽसाविति चेत्। हन्त तर्हि साधकबाधकतर्कैर्व्यवहर्त्तव्यम् ते च नाङ्गीकर्तव्या इति दुर्घटम्। परपक्षस्तावत् नाङ्गीक्रियते तथा च तमादाय तत्प्रतिषेधलक्षणो व्यवहारः क्रियत एवेति चेन्न। प्रतिषेधस्य हि तत्र धीराहार्यरूपैवाङ्गम् प्रमाणादेरभ्युपगमरूपे ऽतिविशेषात् प्रमाणादेः प्रतिषेध्यकोटिप्रविष्टस्य प्रमाणादिर्व्यवहर्तव्यमिति स्वोपगमेन करणकोटावपि प्रवेशात्। ननु प्रमाणादेरप्यभ्युपगमो न प्रयोजको गौरवात् किन्त्वनभ्युपगमाभाव एव लाघवात् विशिष्टव्यवहारे भेदाग्रहवत्। अत एव प्रमाणादेर्नासत्त्वमङ्गीकरणीयं वैयर्थ्यात्। किं तु मध्यस्थयैव धिया व्यवहार इति ब्रूम इति चेन्न। आहारभिन्ना हि या प्रमाणादेः कथाव्यवहारादिहेतुत्वधीः सैव हि सत्त्वधीः स एव चाभ्युपगमः तथा च तयाभ्युपपन्नाहमभ्युपैमीति च वदन् स्फुटमतिधृष्टोऽसीति दूरमपसर। किं च त्वदुक्तो न समयबन्धः शास्त्रसिद्धे साधनदूषणयोः सिद्धिप्रतिषिद्धिव्याप्यत्वे समयबन्धस्याधिकत्वात्। अत एव समयबन्धमश्रुतवतामपि तटस्थानां तत्साधनदूषणश्रवणे सिद्धिप्रतिषिद्धिधीर्जयभङ्गधीश्चोत्पद्येते। किं तु यत्र शास्त्रं न जागर्त्ति तत्रैव समयबन्धो यथाऽनौष्ठ्यमेव वाच्यम् अप्रतिभैवोद्भाव्या अमुक एकदेशी समाश्रयणीय इत्यादि तत्र हि समयबन्धालिङ्गनादेव तदतिक्रमादौ जयपराजयसिद्धेः। प्रमाणतर्कयोस्तु साधकबाधकत्वे न सामयिके किन्तु स्वाभाविके एव तयोस्तथात्वस्य सर्वतन्त्रसिद्धान्तत्वात् इति न तत्र समयबन्धापेक्षेति। नन्वस्तु प्रमाणादिसत्त्वाभ्युपगमः कथाङ्गम् अन्यथा व्याघातात्। तथापि प्रमाणादिसत्ता तावन्न तात्त्विकी सेत्स्यति। सर्वदा सर्वथा सर्वस्य यत्र न बाधकावतारः तद्धि तात्त्विकं एतच्चाशक्यनिरूपणं कथाप्रवृत्तिसमये

सर्वथैवाज्ञेयं तस्मात् कतिपयप्रतिपत्तृनिष्ठः कतिपयकालव्यापकोऽभ्युपगमो लौकिकव्यवहारहेतुः स एव च कथाङ्गमपि तथा च सांव्यहारिकीं प्रमाणादिसत्तामभ्युपेत्य विचारारम्भ इति सिद्धं नः समीहितमिति चेत् । प्रमाणशरीरं वा दुरवधारम् तस्य प्रामाण्यं वा येनैवं मन्यसे । नाद्यः धूमादेः सर्वैर्धूमत्वादिनावधारणात् प्रमाणत्वेन तदवधारणं न शक्यमिति चेन्न । प्रमात्वस्य प्रवृत्तिसामर्थ्यादिना शक्यावधारणत्वेन तदुपहितप्रमाणत्वस्यापि शक्यावधारणत्वात । विषयिणि संशयात् विषयेऽपि प्रमाणादौ सर्वत्र संशयः स्यादिति ब्रूम इति चेत् । न हि विषयिणो ज्ञानत्वेनापि घटविषयत्वेनापि तस्य घटत्वप्रकारकत्वसंशयः । न हि अजानन् जानामीति प्रत्येति । नापि घटं जानन् घटं जानामीत्यनुव्यवसायाकारनिरस्त एवास्यान्यथाभावः । नापि गृहीतेः प्रामाण्यसंशयात् गृहीतेऽप्यामूलं संशयः । न हि ज्ञाने प्रामाण्यसंशयो भवत्येवेति नियमः तज्ज्ञानस्याज्ञानेन वा कोट्यस्मरणेन वोत्कटविषयान्तरसञ्चारेण वा तत्संशयानुत्पत्तेरपि सम्भवात् । तस्मात् प्रमाणसत्त्वालम्बनापि धीः तन्निश्चयरूपा तावदुत्पन्ना सा चागृहीतप्रामाण्यासन्दिग्धप्रामाण्या सती प्रमाणानि दर्शयन्ती प्रमाणादिसत्त्वे प्रमाणमिति अग्रेतनेन विचारेण प्रमाणादयो बाध्या भविष्यन्तीति शङ्कया नेदानीमप्यभ्युपेयतइति चेत् । न हि भविष्यतो बाधकस्य शङ्कापि बाधिका अतिप्रसङ्गात् । नातिप्रसङ्गः सर्वमेव हि बाध्यमेवेति चेन्न । तर्हि सर्वं बाध्यम् सर्वबाधकस्यैव वा बाध्यत्वात् तस्मात् सर्वं बाध्यमित्यादिकं वाक्यम् नानुप्रतिपत्तेरङ्गम् स्वक्रियास्ववचनस्वज्ञानादिव्याघातग्रस्तत्वेन बाधितार्थकतया योग्यताज्ञानविरहादिति ॥

नन्वेभिरपि बाधकैः प्रमाणादिसत्त्वाभ्युपगमस्य कथाङ्गत्वं साधनीयम् कथायामेव न ह्यकथाभूतो वादिनोर्वचनसन्दर्भः सम्भवति तथा चैतत्कथावत् कथान्तरमपि प्रमाणादिसत्ताभ्युपगमं विनैवास्तु इति चेन्न। कथातः पूर्वमेव स्वार्थप्रमाणेनोक्तव्याघातादिसहायेन त्वध्यवतीर्णेन त्वयि तदङ्गत्वसिद्धेर्निष्प्रत्यूहत्वात् । नन्वेवं प्रमाणादिसत्तायामपि तद्धीः प्रमाणम् एवमुत्तरत्रापि इति धीधारोपगमेनाऽनवस्था स्यात् । तदनभ्युपगमे च मूलपर्यन्तमसिद्धिः स्यादिति चेन्न । न ह्यविरललग्नवित्तितद्वित्तिधारोपेयते येनानवस्था स्यात् किं तु काचिद्धीरनुव्यवसीयते शेषा तु सामान्यलक्षणया योगजधर्म्मेण वा ज्ञायते इति सर्वा ज्ञायते नवानवस्थेति प्रमाणादिसत्ता त्वया कथाङ्गत्वेनाभ्युपेता सा च स्वरूपसत्ता न तु बुद्धिसिद्धाऽतो न बोधमात्रपरिशेषः ॥

अथ यथा त्वन्मते घटादेस्तज्ज्ञानस्य च सत्ताविशेषेऽपि ज्ञानमेव व्यवहारकं तथा मन्मते तयोरसत्ताविशेषेऽप्यसदेव ज्ञानं व्यवहारकं व्यवहारोऽप्याविद्यक एवेति न सत्करणापेक्षी सर्वेषामेव प्रमेयाणां ब्रह्मविवर्तत्वादिति चेत्तर्हि व्यवहारो न साध्यते सर्वदा ऽसत्ताविशेषात् ।

यदि चालब्धात्मकः सलब्धात्मकी क्रियत इत्युच्यते तदा लब्धात्मकमेव पूर्वावधितयाऽपेक्ष्येत । असत एव पूर्वावधित्वे दण्डाद्यसत्त्वकालादपि घटादिः स्यादिति सर्वकार्याणामनादित्वापत्तिः। अथ यथा सामग्री आद्यक्षणे ऽसत्यपि तत्काले कार्यजन्म नियमयति तथा कारणमपि तत्काले ऽसत्तत्काले कार्यजन्म नियमयिष्यतीति चेन्न। भ्रान्तोऽसि। सामग्री हि तत्काले ऽसती यद्यपि

तथापि पूर्वक्षणे ऽसती तत्काले कार्यजन्म नियमयतु तथा स्वभावत्वेनैव सिद्धत्वात् असत् कारणम् सर्वदैवासिद्धम् निःस्वभावकम् तत्केनावष्टम्भेन नियमयिष्यति कूर्मरोमवन्निरूपाख्यत्वात् । ननु कारणत्वं तावत् सत्ताघटितं नियतप्राक्सत्त्वरूपत्वात्तस्य तथा च तत् सत्ताविशिष्टे धर्मिणि वर्तते तदविशिष्टे वा । नाद्यः आत्माश्रयात् एकस्या एव सत्ताया धर्मधर्म्युभयविशेषणत्वात् । न च प्रत्याश्रयं विभिन्नैव सत्ता सत्सदित्यनुगतव्यवहारस्याननुगताभिस्ताभिर्निर्वाहणासम्भवात् तत्सम्भवे वाननुगतानि स्वरूपाण्येव सदित्यनुगतव्यवहारकाणि भवन्तु कृतमननुगताभिः सत्ताभिरिति वृद्धिमिच्छतो मूलमपि नष्टमिति कारणमसदायातम् । द्वितीये तु सिद्धं नः समीहितम् । तदुक्तम् ।

अन्तर्भावितसत्त्वं चेत् कारणं तदसत्त्वतः ।
नान्तर्भावितसत्त्वं चेत् कारणं तदसत्त्वतः ॥ इति ।

मैवं नहि सर्वेषां कारणानां महासामान्यरूपा सत्ताऽस्माभिरुपेयते प्रतिबन्धकाभावादेरपि मया कारणत्वोपगमात् तथा च तामादाय विकल्प्य यत् खण्डनं तच्छलम् ॥

अथ स्वरूपसत्तामेव स्वकारणानां मन्यसे इति तामेवाहं विकल्पयामीति ब्रूषे तदपि न । स्वरूपसत्तया हि वस्तुत्वमनलीकत्वं प्रमाणगम्यत्वं वा तच्च धर्मिविशेषणम् स्वरूपसत एवोक्तरूपस्य मया नियतपूर्ववर्तित्वलक्षणकारणत्वोपगमात् इयं च स्वरूपसत्ता धर्मिण्यन्या कारणत्वे चान्येति क्वात्माश्रयः । न चैवं कारणतायामननुगमो दोषाय इष्टत्वात् कारणता हि विषयप्रतियोगिभेदेन भि-

न्नैव । ननु स्वरूपसदप्यसदेव घटो नेत्यादिधिया घटत्वासत्तयोः सामानाधिकरण्यानुभवादिति चेत् । घटो धर्मी कदाचित् स्वरूपसन् कदाचिच्चासन्निति ब्रूषे सर्वदैव संश्चासंश्चेति वा । नाद्यः उभयोरपि दशयोस्तस्य त्वन्मते घटत्वमविशिष्टमस्तीति उभयोरपि ततो घटार्थक्रिया तुल्यैव स्यात् तथा चासन्नित्यपि न स्यात् अर्थक्रियाकारित्वात् । नान्त्यः विरोधात् तर्हि घटो नास्तीत्यस्य कोऽर्थः घटस्याभावोऽस्तीत्येव हि न ह्यसत्ताविशिष्टे घटे किमपि प्रमाणं प्रसरति इन्द्रियसन्निकर्षव्याप्त्यादेस्तेन सहासम्भवात् । शब्दोऽप्ययं प्रमाणविरोधी उक्तपर एवेति घटतदसत्तयोश्च न धर्मधर्मिभावः नित्यविरोधेन द्वयोः सहासम्भवात् ॥

किं च निरुपधिर्विरोधोऽनयोः परस्परप्रतिक्षेपरूपत्वात् इति प्रतियोग्यनुयोगिभाव एवानयोः न तु धर्मधर्मिभावः । अत एव गोपाङ्गना अपि स्तेनशङ्कायां(१) प्रदीपमुपादाय तेनापवरकादौ(२) स्तेनासत्त्वमवेत्य निःशङ्कं शेरते स्तेनप्रतिक्षेपात् । स्तेनधर्मत्वे तु तदसत्त्वस्य तेन स्तेनाप्रतिक्षेपात् त्वमिव ता अपि कांदिशिकी भवेयुः । कथं तर्हि घटो नास्तीति समानाधिकरणप्रयोगः घटाभावे तस्यैव साधुत्वानुशासनात् यथा सूर्यस्याप्यद्रष्टरि असूर्यम्पश्येति ।

ननु चासतो यदि घटत्वसत्ता तदा घटोऽभूत् भविष्यतीत्यादौ भूतभविष्यतोरिदानीमसतोर्घटयोः कथं सा । न कथञ्चित् न हीदानीं घटत्ववत्ता तयोः प्रतीयते किं तु स्वकाले घटत्ववतोस्तयोरिदानीं तत्कालस्पर्शेन कालास्पर्शेन वा तद्वत्तया प्रतीयमानयोरिदानीं प्रागभावप्रध्वंसौ परं प्रतीयेते अभावधियः प्रतियोगितावच्छेदकधर्मप्रकार-

(१) चौरशङ्कायामित्यर्थः । (२) आवृतदेशे ।

कप्रतियोगिधीसाध्यत्वनियमात् । नन्वयमभावः प्रत्यक्षो योग्यानुपलब्ध्या ग्राह्यः सा चेह नास्ति आहाररूपायाः प्रतियोग्युपलब्धेः सर्वत्र सत्त्वनियमादिति चेन्न । प्रतियोगिसत्त्वप्रसञ्जिताया उपलब्धेरभावस्य मयानुपलब्धित्वेनोपगमादिति दिक् ॥

अपि च बुद्धिसिद्धस्यापि स्वरूपासतः कारणत्वमनुपपन्नम् मानोरथिके वास्तवे च मोदकादिभक्षणे तृप्त्यादितौल्यं स्यात् । तदुक्तं स्थापकेन ।

आशामोदकतृप्ता ये ये चोपार्जितमोदकाः ।
रसवीर्यविपाकादि तुल्यं तेषां प्रसज्यते ॥

यत्तु मानोरथिकेनापि मोदकादिना तृप्त्यादिकमसद्रूपं जन्यत एवेति । तत्तुच्छम् । कारणाधीनं यस्योत्तरसमये स्वरूपं तस्यैव कार्यत्वात् अन्यथा वेमा घटस्य दण्डः पटस्य निगृहीतत्वं जयस्य सत्साधनप्रयोक्तृ भङ्गस्य कारणं स्यादिति सर्वं व्यत्यस्तमापद्येतेति साधुपाण्डित्यम् । न च जयभङ्गौ समयबन्धो नियमयिष्यतीति वाच्यम् । दृढीभूतं हि जयभङ्गकारणत्वं समयबन्ध आलम्बिष्यते तत्कारणत्वद्रढिमैव तु न स्यादसतोऽपि कारणत्वात् तस्मात् कार्यपूर्वसमये नियमतः स्वरूपसत् कारणम् । तदुक्तमाचार्यैः । पूर्वभावो हि हेतुत्वमिति । त्वमप्यात्थ पूर्वसम्बन्धो हेतुत्वमिति । पूर्वसम्बन्धनियमश्च स्वरूपासतो न सम्भवति तस्मात् पूर्वसम्बन्धे हेतुत्वे तुल्यएव नौ । हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथेति यत् त्वयोक्तम् तत् सर्वथैवानुपपन्नम् तथाहि नियमतः प्राक्समयसम्बन्धः कारणत्वम् स च खपुष्पादेः स्वरूपासतो न सम्भवति किं तु प्राक् स्वरूपसतः ईदृशो मत्पक्षः त्वत्पक्षोऽप्ययमेव तदा शान्तं विवादेन विप्लुतं च खण्डनेन ॥

अथ प्राक् कारणस्य स्वरूपसत्तां नाभ्युपैषि तदा नावयोः पक्षतौल्यमिति गाथापूर्वार्द्धमशुद्धम् । अपि च सत्त्वं यत्कारणत्वबहिर्भूतं ब्रूषे तत्तावत् स्वरूपसत्त्वं तदीयकारणत्वान्तर्भावस्य व्यवस्थापितत्वात् । अथ सत्ताजात्यभिप्रायेण ब्रूषे तदा व्यक्तम् निरनुयोज्यानुयोगस्तव। न हि वयं सत्ताजातिमपि कारणत्वनिर्वाहिकां ब्रूमहे विशेषादर्शनस्य भ्रमे दोषाभावस्य प्रामाण्ये विहिताकरणस्य प्रत्यवाये समवायस्य रूपादिप्रत्यक्षे मिथ्याज्ञानाद्यभावस्य मोक्षे अस्माभिः कारणत्वोपगमात्। अत एवाचार्या अप्याहुः। भावो यथा तथाभावः कारणं कार्यवन्मत इति। अथ यादृश्या धिया त्रिचतुरकक्षाविश्रान्तया सिद्धान्तिनः कारणस्य वस्तुसत्तावधारणं ममापि तादृश्यैव धिया तस्य कारणत्वावधारणं तदेतत् सांवृतं सत्त्वं किं तु सापि धीस्त्वन्मते स्वरूपसत्स्वेव न तु निरुपाख्येषु येन तेषामपि कारणत्वापत्तिः। मन्मते तु त्रिचतुरकक्षातस्तस्यापि बाध्यत्वावसायात्। मूलपर्यन्तं बाधावतारान्न कारणानां सत्तावधारणं इति चेत्तर्हि त एव पश्चिमाद्बाधान्न धीर्न वा तदधीनं कारणत्वावधारणम् न वा तत्सत्तावधारणमिति निरुपाख्यादविशेषः ॥

यत्तु संवृत्तिरपि सती व्यवहारयेत् असती वा। नाद्यः त्वयानभ्युपगमात्। नान्त्यः असत्त्वेनावधृतस्य कारणत्वोपगमात् इति नैयायिकदत्ते दोषे सा तावदिदानीं त्रिचतुरकक्षामात्रविश्रान्ता अविचारितसत्तासत्त्वैव व्यवहारयतीति ब्रूमः। अन्यथा प्रथमत एवैतादृशविचारावतारणे मतिकर्दमे व्यवहार एव न स्यात् । वस्तुतस्तु सा यदि सती तदा व्यवहारयितुं क्षमा यदि चासती तदापि तथैव। भ्रमविषयेणासता भ्रमे तथा भविष्यदादिविषयके ज्ञाने

ऽसतैव विषयेण तथा ऽसतैव कार्येण कारणशक्तेश्च विलक्षणव्यवहार इत्यस्य त्वयाप्यनुमतत्वादिति तन्न । उक्तक्रमेण तत्सत्त्वस्यैवावधारणात् न हि सम्भवति व्यवहाराय तामाश्रयते तस्याश्च सत्तासत्त्वयोरुदास्ते इति । दृष्टान्ताश्चायुक्ताः । तथाहि भ्रमस्तावदसद्वैशिष्ट्यावगाहितया व्यधिकरणप्रकारकतया वा विलक्षणव्यवहारविषयः क्रियते तच्च द्वयं तत्रास्त्येव एवं भविष्यदादिना घटादिना समं ज्ञानस्य विषयविषयिभावः सम्बन्धोऽस्त्येव तद्विषयत्वमेव च तस्य विलक्षणव्यवहारे हेतुः । असत्तु कार्यं कारणस्योपलक्षणमिति तदेवं खण्डनकारेण सर्वशून्यतावष्टम्भेन यद्दादिष्टम् तत् प्रत्यादिष्टमेव ।

अथेदानीं तत्रानुशयानेन तेन वेदान्तमतमाश्रीयते तथाहि सर्वशून्यता सिद्धा न वा अन्त्ये पूर्णतैव आद्येपि स्वतः परतो वा तत्राद्ये स्वप्रकाशत्वेन ज्ञानमस्त्येव परतः पक्षे तु परपदवाच्यम् प्रमाणमस्तीति सर्वथा न शून्यतास्तीति तस्मात् ज्ञानं परिशिष्यते तच्च स्वप्रकाशं तथाहि ज्ञानस्य ज्ञानान्तरवेद्यत्वे ऽनवस्थानात् स्ववेद्यतैव । ननु किं ज्ञानवेदनेन ज्ञानस्य स्वरूपसत्तयैवार्थव्यवहारसिद्धेरिति चेन्न । स्वरूपसत्तायां विप्रतिपत्तौ तद्वेदनस्याप्यवश्यानुसर्तव्यत्वात् । एवं तत्तद्वेदनेष्वपि इत्यनवस्थैव चरमवेदनस्यावेदने तस्य मानाभावेनासत्त्वे ऽर्थपर्यन्तमसत्त्वं वा स्यात् । तदुक्तम् । अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति इति । अथ सर्वा वित्तिरवश्यवेद्यैव प्रमेयत्वस्य केवलान्वयित्वात् । अविरललग्ना तु वित्तितद्वित्तिधारा नाभ्युपेयते तथाननुभवात् । किं तु काचित्तदैव काचिदन्यदा काचित् प्रत्यक्षेण काचिच्च लिङ्गादिना प्रतीयते इति ब्रूम इति चेन्न । प्रथमा ह्यर्थग्राहिणी व्यवसायात्मिका

द्वितीया अर्थावरुद्धज्ञानग्राहिणी अनुव्यवसायात्मिका घटज्ञानमिति तृतीया अर्थावरुद्धज्ञानावरुद्धात्मग्राहिणी घटं जानामीति। इतोऽधिका धीधारा त्वन्मतेऽपि नानुभूयते। अन्यथा घटं जानामीति जानामीत्याद्याकारा धीः कदाचित् केनचित् अनुभूयेत। तस्याः सविषयतत्तद्धीविषयकत्वनियमे घटपर्यन्तावगाहनावश्यकत्वात्। किं च चरमा धीर्न चरमसमानाधिकरणज्ञानग्राह्या अनिर्मोक्षापत्तेः। नापि व्यधिकरणज्ञानग्राह्या प्रमाणाभावात्। नापि चरमा स्वग्राहिका स्वप्रकाशापत्तेः। नाप्यग्राह्या मूलपर्यन्तं विलोपापत्तेः। नाप्युपान्त्ययाऽन्त्याया ग्रहः स्वविषयकतद्ग्रहे स्वप्रकाशापत्तेः। न च सामग्र्यनवस्थावज्ज्ञानानवस्था तस्याः प्रामाणिकत्वात्। अत्राहुः। ज्ञानस्यावश्यवेद्यत्वेऽपि नानवस्था ज्ञानं प्रमेयमित्यादिव्याप्तिज्ञानस्य तथा एतदनुव्यवसायस्यैतद्विषयभूतस्वग्राहकस्य तथा योगजधर्मज्ञानस्य तथा भगवत्प्रत्यक्षस्य च मयापि स्वप्रकाशत्वोपगमात्। अथ घटोऽयमित्यादिस्थले ज्ञानतज्ज्ञानधारा स्यात् ज्ञानस्य जातसम्बद्धत्वात् अपेक्षणीयान्तरस्य चाभावादिति चेत्। अत्राप्युत्कटविषयान्तराकर्षणेन मनसः प्रतिबन्धसम्भवात्। यत्र नोत्कटो विषयोपरागो न वा सुखदुःखरागद्वेषादिसामग्री तत्र धीतद्धीधारास्त्विति चेत्। वाढं तर्हि तत्र विषयशतभारमन्थराशेषा धीरवसीयेतेति चेत्। वाढं तत्र हि मूलविषये घटत्वे मध्यमानि परःशतान्यपि ज्ञानानि ज्ञानत्वेन आत्मा ज्ञानवत्त्वेन प्रतीयते तेन शेषापि धीर्घटं जानामीत्याकारिकैव॥

अथ या धीर्घटविषया सा च न वर्तमाना या च वर्तमाना सा न घटविषया तथा च कथमत्र घटं जानामीति

875 When the meaning of a word is not gathered from hearing it for the first time the reason for it is the want of learning on the part of the hearer, and not the inability of the word to convey any meaning

876 Though the eye is the organ of sight, it cannot perceive a thing in the absence of light The eye does not thereby lose its property, nor does that property for that reason belong to something else

877 The relation of the word to its meaning is not the result of our learning, when the relation is established, our knowledge of its meaning is got from the usage of elders

878 The eternal character of the relation is established by the facts that none can create the relation, that such a creator is not spoken of in books, and that usage is independent of any such creator

879 Though in cases like dilapidated wells, the non-mention of an author does not imply his absence, this case is not the same as the relation above spoken of

880 In some instances doubt may arise, owing to distance and other causes, in regard to things which are seen, but never with regard to a thing that is not seen at all Hence too the absence of an author for such a relation is established

881 It is thus established, both in secular literature and in Scripture, that the sentence is authoritative, since it conveys its own meaning in relation to connected meanings

882 Thus, Scripture is as authoritative as direct perception in regard to the Self, since it generates know-

ledge and since such knowledge is not shaken by any defective middle term

883 Scripture has the same authority in regard to the unity of Self as in the case of injunction for the reason that it points out what we aim at (*purushārtha*), —or, perhaps, a greater authority, since what we seek[1] is something pre-eminent

884 A person, desirous of gaining what he wants and avoiding what he does not, will also desire proper means if he is anxious to obtain the fruit

885 One may like to reach a desired village not yet reached, or, one my desire to regain the very coins in his hand under forgetfulness

886 In the same way, one may like to avoid loathsome objects like thorns etc which are to be avoided, or, he may like to avoid things like a rope mistaken for a serpent, though there is nothing to be avoided in them

887 In the case of objects to be attained or avoided, since they can be so done in a definite manner, the desire springs up for such means as are prescribed to the exclusion of such as are forbidden

888 Further, in the case of things already got or avoided, since they are veiled by ignorance, nothing but a knowledge of their real nature will make us reach the aim

889 For one who desires the destruction of all misery, when he understands the Scripture "Thou art *Brahman*," all his miseries disappear, owing to the cessation of ignorance[2]

---

[1] viz the supreme Self

[2] Hence the authority of the *Vēdānta*

890 When thus the authority of Scripture is established by reason of its making known what is unknown, it must be granted that it is as authoritative in the case of the unity of Self as in the case of injunction

891 If its authority must depend on its injunctory signification, then the latter too must depend on its inherent authority Thus there will be mutual dependence, since neither of them can result from the other

892 If so, prohibitions will lose their authority, since they mean only indifference Indifference is only inaction, and inaction is nothing but the retention of an existing condition [1]

893 In sentences like "he cried," their authority depends on their being auxiliary to injunction, because they do not teach any human aim As it is otherwise here, the above reason is inapplicable

894 Nor should it be suspected that the statement of a means to realise the unity of Self is untrue, for, the means is neglected only when the end is attained and our aim is thereby fulfilled

895 It is not untrue either before realising the unity of Self, for, there is no reason for such suspicion, or after such realisation, for, it is not needed because it has produced the desired result

896 The truth of a proof consists in nothing else than its making known the object to be attained Nor can a pot, though a true thing, imply fire, since it is not of the nature of a means

[1] Hence neither the indifference nor the inaction itself can be said to be a कार्य

897 In the case where a smoky appearance induced by tears etc, does not imply the existence of fire, the reason for it is not its untruth but its not being of the nature of a means

898 As in the case of smoke, the truth of the *Vēdāntas* is not established by their being a means, for, if so, the Scripture which treats of the unity of Self will become unauthoritative

899 Nor, as in the case of tears, can the other part of Scripture be said not to be a means for the reason that it is untrue The truth of the means is established by the fact that it removes our ignorance of the unity of Self

900 Since the purpose of the proof is complete as soon as the unity of Self is understood from Scripture, an examination of the means is fruitless, like any thought of a raft when the crossing is over

901 Perhaps such further doubt may arise in regard to external objects which are non Self, but here, where the Self itself is the object to be gained, what doubt can exist as to the proof?

902 Further, unlike as in other instances, the meaning of the sentence[1] is not one of difference[2] or relation,[3] since the supreme Self and the individual soul are identical

903 The condition of not soul imputed to the Supreme Self and that of the not-Self imputed to the soul, are the result of nescience and are destroyed by knowledge which springs from Scripture

[1] तत्त्वमसि

[2] e g गामानय

[3] e g नीलमुत्पलम

904 There is no Self apart from the soul and no soul apart from the Self Hence their identity is different from that of the lotus and its blueness

905 Though the conditions of not-Self and not-soul are the result of nescience, the conditions of Self and soul do not so result from the other Hence they are self-established

906 The connection between the two names thus results from the unity of Self independently of any active or qualitative meaning, nor can such meanings exist where there is no difference

907 As the atmosphere is deemed big in comparison with the air in the pot, the infinitude of the soul is not in the same way by comparison with its individuality

908 Infinity or secondlessness, like knowledge, does not depend on anything else Knowledge, for example, does not spring from the negation of other things, but from the removal of ignorance regarding the thing to be known

909 Though the Supreme Self is no other than the soul, it is affected by invisibility by reason of our nescience So, too, the soul, though being no other than the Supreme Self, appears to be differentiated

910 Scripture therefore encompasses our aim by removing the said invisibility and differentiation by the statement that the soul is *Brahman* Thus my view is established [1]

911 "Is not the unity of Self, like its proof, contradicted by injunctory and prohibitory passages which depend on duality and also by direct perception etc ?

[1] That liberation is the result of understanding from the Scriptural passage the unity of Self

912 "Nor can the text about the unity of Self be alternative or conjunctive with them in its authority, nor can their authority be affected by it in any way

913 "Though there are two contradictory proofs, there can be no alternation in the thing itself, nor can difference and non-difference, which are mutually opposite, exist together in any one thing

914 "You cannot say that the proofs are not contradictory, since the thing cannot be both differentiated and non-differentiated Further, how can there be any idea of difference, when such difference is expressly negatived by passages like 'nothing here is diverse etc'

915 "Nor are direct perception etc affected, which are the means to understand letters, words, etc, nor is that part of Scripture affected which tends to purification[1] and is thus helpful to the knowledge of Self

916 "The scope of Scripture, then, is flattery[2] or prayer And how can it affect direct perception etc, which have no other scope?"[3]

917 This is the answer The injunctory Scripture, dependent as it is on secular duality,[4] has for its object the attainment of the end and not the teaching of that duality

918 Since that duality is not a human aim, Scripture will become inauthoritative if that is its significance, for, the supporters of Vedic authority agree that that

[1] The कर्मकाण्ड

[2] ग्रामीणप्रधानपुसोऽद्वयत्वोपचारवत् Anandagiri

[3] सावकाशनिरवकाशयोर्निरवकाशबलवदितिन्यायात् Anandagiri.

[4] Such as doer etc

authority is based on the ground that Scripture teaches us our aim

919 The knowledge that springs from direct perception etc has reference only to the true nature of the thing perceived and not to any idea of duality They cannot therefore militate against the unity of Self

920 A proof deals only with its object, the object is a reality, and duality cannot be a reality, since reality is independent of a second thing

921 On the floor which is visible, a pot which is invisible may be negatived But a thing which is known by other proofs cannot be said to be unknown, lest everything be reduced to nothingness

922 Direct perception etc, which are real can only signify a thing and not mere non-entity which is unreal nor the mere exclusion of a thing

923 Hence there is no difference in the Self, since it is undifferentiated by nature Further, the Self is not something different from the proof, nor the proof from the Self

924 Non-entity and non-entity cannot be mutually different, since both are unreal, nor, in the same way, can non-entity and entity, or entity and entity differ from each other [1]

925 The relation between an attribute like perishability or absence and a thing like a pot, must be either conjunction (*samyōga*) or inherent connection (*samavāya*) or identity (*tādātmya*).

---

[1] वस्तुनिभेदाभावैानिरस्य भेदनिरासेहेत्वन्तरमुच्यते तत्रभेदस्य धर्मिप्रतियो-गिनाघभावैा वा भावाभावैावा भावावेव वा योगशब्देनभेदोलक्ष्यते Anandagiri

926 The knowledge of the presence of the pot etc arises in all cases of connection like that of container and contained, but no such knowledge arises in the mind of any one from any relation between entity and non-entity

927 Mere non-entity is not amenable to proof, either as separate from or as identical with entity Hence entity alone can give rise to practice (*vyavahāra*)

928 If it be said that non-entity too is real, since it generates the knowledge that a thing does not exist, what is the difference then between knowledge of entity and that of non-entity, since both become of the nature of entity

929 For one to whom all is real, how can there be non-entity, since that too is perceived? Nor can it be established, as entity itself cannot, as something apart from entity

930 If entity admits of its relation with non-entity like that of the lotus with blueness, then, since they are not contradictory of each other, non-entity cannot militate against entity

931 We see relation between two things that are established independently of each other, as, for instance, between two goats or two wrestlers Such is not the case with entity and non-entity

932 No relation exists between two non-entities like the offspring of a barren woman and the flower that grows in the sky, nor between entity and non-entity, since each is contradictory of the other

933 The non-existence of the pot is not, like the pot itself, perceived on the floor There is neither con-

धीरस्त्विति चेन्न। अस्या अपि परम्परया घटविषयकत्वात्। वीणायां शब्द इतिवत् समयसौक्ष्म्याच्च वर्तमानत्वधीः। अथ ज्ञाने उत्पन्ने सति न तस्याज्ञानसंशयविपर्यया इति तस्य प्रमा तावदावश्यकी। सा चैवंरूपेऽपि सुखादौ भवतु भिन्ना तस्यां प्रकाशत्वात्। ज्ञाने तु प्रथमज्ञानाभिन्नैव तद्भेदकल्पनेऽनिर्मोक्षापत्तेः। ज्ञानस्य ज्ञानकर्मत्वे घटवज्ज-डत्वापत्तिरिति चेन्न। न हि सर्वं ज्ञानं समानकालीनस-मानाधिकरणसाक्षात्कारविषयतानियतं ब्रूमो येन मान-सानुव्यवसायधारया निर्मोक्षो न स्यात्। किं तु किञ्चि-ज्ज्ञान व्यवहारेण किञ्चिल्लिङ्गान्तरेण किञ्चिन्मानसानु-व्यवसायेन किञ्चित्सामान्यलक्षणया किञ्चिद् योगजध-र्मलक्षणया च प्रत्यासत्या अवसीयत इति न किञ्चिदपि ज्ञानमवेद्यमिति ब्रूमः। नापि जडत्वापत्तिरप्रयोजकत्वात्॥

ननु चार्थो ज्ञानप्रकाशाधीनप्रकाशत्वाज्ज्ञाने प्रकाश-मान एव प्रकाशिष्यते। तथा च सिद्धं ज्ञानस्य स्वप्रकाशत्व ज्ञानार्थयोः प्रकाशद्वयस्यैकदानुदयादिति चेत्। किमिदं तदधीनत्वम्। न तावत्तद्धेतुकत्वम्। न हि ज्ञानप्रकाशहेतुको-ऽर्थप्रकाशः। तथा चासिद्धिः स्वप्रकाशत्वे साध्ये विरुद्धता च। न हि तद्धेतुकस्तदभिन्नो भवति। नापि तद्व्याप्यत्वं अभेदेऽसम्भवात्। नापि तदभिन्नत्वं साध्याविशेषात्॥

यत्तु घटादीनां तावज्जडत्वं ज्ञानकर्मत्वं स्वव्यवहारे परापेक्षत्वं वास्ति तत्तावत् न निर्बीजम्। नापि यत्कि-ञ्चिद्बीजम्। नाप्यनियतबीजम्। अतिप्रसङ्गात्। तस्मान् नियतकिञ्चिद्बीजं वाच्यम्। तच्च परिशेषादस्वप्रकाशत्व-मिति ज्ञाते जडत्वाद्यभावात् स्वप्रकाशत्वमिति। तन्न। जडत्वं हि प्रकाशान्यत्वम्। तच्च प्रकाशसामग्र्यजन्यत्वरूपं

निबन्धनं तज्जन्यत्वे प्रकाशत्वापत्तेः । ज्ञानकर्मत्वं हि ज्ञानविषयत्वम् । तच्च वस्तुत्वनिबन्धनं स्वव्यवहारे परापेक्षत्वमपि अस्वप्रकाशत्वनिबन्धनमेव । ज्ञानचतुष्टयभिन्नानि तज्ज्ञानानि जडानि च सर्वाणि स्वव्यवहारे परापेक्षाण्येव अस्वप्रकाशत्वादिति ॥

ननु ज्ञानं जिज्ञासावेद्यं न वा । आद्ये जिज्ञासापि हि सामान्यज्ञानपूर्विकेति जिज्ञासातः प्राक् ज्ञानस्य सामान्यज्ञानमायातम् । तदपि च जिज्ञासातः स्यात् ज्ञातस्यात् तज्जनन्यपि जिज्ञासा सामान्यज्ञानादिति जिज्ञासाज्ञानयोर्द्वारा द्वयमनिर्वृत्तमापद्येत । न वा पक्षेऽप्यवेद्यं वा स्यात् अजिज्ञासावेद्यं वा । अत्राद्ये ज्ञानव्यवहृतिर्न स्यात् ग्रहणाभावात् । ज्ञाततयापि न ज्ञानग्रहः ज्ञानाबोधे तस्या अबोधात् तस्या ज्ञानोपहितशरीरत्वात् । सा हि न चक्षुःपातमात्रवेद्या । नापि व्यवहारानुमेयं ज्ञानं व्यवहारेण ज्ञानोपस्थितौ व्याप्तिग्रहो गृहीतव्याप्तिकाच्च व्यवहारात् ज्ञानोपस्थितिरित्यन्योन्याश्रयात् । अजिज्ञासावेद्यत्वे चानिर्मोक्षो ज्ञानमनःप्रत्यासत्तेः सर्वदा सत्त्वादिति परिशेषादपि ज्ञानं स्वप्रकाशमिति । उच्यते । आत्ममनःसंयोगस्य यदेन्द्रियार्थसन्निकर्षः सहायीभवति तदा बाह्यार्थानुभवः । स एव सहायो यदा स्थिरस्तदा धारावाहिकानुभवः । यदा च संस्कारपरिपाकस्य स सहायः तदा प्रत्यभिज्ञा । यदा तु तत्सहायरहितः संस्कारपरिपाकः तदा स्मृतिः । यदा तु संस्कारपरिपाकेन्द्रियार्थसन्निकर्षरहित आरब्धज्ञान आत्ममनःसंयोगः तदानुव्यवसाय इत्युत्सर्गः । यदा त्वस्मिन् सत्यप्युत्कटविषयेन्द्रियसन्निकर्षः तदा तदर्थज्ञानम् । न तु ज्ञानज्ञानमित्यलमति-

विस्तरेण । तस्मादजिज्ञासावेद्यत्वे ऽपि ज्ञानस्य प्रबलविषयमहिम्ना धाराया निवारणात् । प्राबल्ये च फलमेव प्रमाणम् । किञ्चोक्तगत्यापि ज्ञानस्यैव स्वप्रकाशत्वसम्भावनापि । न तु ब्रह्माभिन्नस्य नित्यचैतन्यस्य तस्य घटाद्यनालम्बनत्वात् आसंसारमप्रतीयमानत्वाच्चेति व्यर्थस्ते स्वप्रकाशतासाधनश्रमः । किञ्च प्रकाशस्य स्वधर्मावरूढस्यैव प्रकाशमानस्य स्वप्रकाशत्वसिद्धेर्नाद्वैतसिद्धिः । धर्मानवरूढस्य तु तस्य स्वप्रकाशत्वेन भाने धर्मोपग्रहप्रवर्तिष्णुः शब्दविषयता तस्याविद्यादशायामपि न स्यात् । अथ शब्दान्तरं तावद् ब्रह्मणि न प्रवर्तते । किं तूपनिषत् । सापि न कण्ठतस्तदाह येन प्रकारतया धर्ममपेक्षेत् । किं तु विषं भुङ्क्ष्वेत्यस्य एकादश्यभोजने यथा तात्पर्यं तद्वत् प्रपञ्चनिषेधश्रुतेरपि ब्रह्माद्वैतविधौ तात्पर्यम् । तथा च ब्रह्माद्वैतमेव तच्छ्रुतेरर्थः यत्परः शब्दः स शब्दार्थ इति न्यायादिति चेन्न । न हि तात्पर्यमात्रं सामग्री कारणान्तरविलोपापत्तेः । नाप्युपलक्षणन्यायाच्छ्रुत्या ब्रह्मधीः काकपदोपस्थापितकाकस्मारितोत्तृणत्वादिविशिष्टगृहविशेषधीवत् श्रुतितो ब्रह्मधियोऽनुदयात् ॥

अथाविद्यादशायां श्रुतितोऽपि तद्धीः । तथाहि नित्येन तावदध्ययनविधिनाधीतस्वाध्यायो मुमुक्षुरापाततो वेदान्तवाक्यं श्रुत्वावगच्छति यत् आत्मनस्तु कामाय सर्वं प्रियं भवतीत्युपक्रमोपनिषदात्मौपाधिकमितरेषां प्रियत्वं वदन्त्यात्मैव निरुपधिप्रिय इति प्रतीते तत आत्मनि ज्ञाते सर्वमिदं विज्ञातं भवतीत्युपसंहारेणानन्दात्मकस्यात्मनः सर्वाभिन्नत्वमिति प्रतीतेः । अथ एतावदरे खल्वमृतत्वमित्युपसंहारशेषादानन्दात्मकब्रह्माभेददर्शनस्यामृ-

तत्त्वसाधनत्वमवेत्य कथं तद्दर्शनं स्यादित्याकाङ्क्षायां आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुत्वा मुमुक्षुर्मीमांसते । न च तस्य मीमांसनाऽसम्भवः । अधीत्य स्नायादिति श्रुतेर्मन्त्रब्राह्मणाध्ययनवत् गृहस्थीभविष्यत्स्वकरिष्यमाणाग्निहोत्राद्यनुष्ठानसाधनीभूततत्तद्वाक्यार्थविचारमूलस्तम्भत्वेनावश्यकतया कर्ममीमांसाध्ययनस्यापि तदानीं सिद्धेः । एवं च मीमांसामेनां विचारेण मुमुक्षुर्विचारयति । न हि तावदेते चत्वारोऽपि विधयः आत्मदर्शनस्य निदिध्यासनविधिविहितक्रियानुष्ठानमात्रसाध्यतया पृथक्कृतिसाध्यत्वासम्भवेन पृथग्विधानायोगात् । नापि श्रवणमनननिदिध्यासनानि त्रीण्येव यथोक्तक्रमवन्ति प्रधानानि एकस्मै फलाय विधीयन्ते तेषां परस्परनिराकाङ्क्षतया समुच्चयायोगात् ॥

अथ य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इति[1] छान्दोग्योपनिषदा आत्मज्ञानस्यैवेष्टसाधनत्वे गमिते ज्ञानस्य प्रकाराकाङ्क्षायामिष्टसाधनत्वमनूद्य द्रष्टव्यः श्रोतव्य इत्यादिविधयः प्रवर्तन्त इति चेन्मैवम् । एवमपि द्रष्टव्य इत्यस्यानर्थक्यादेव । न च सोऽनुवादः । न हि तस्येष्टसाधनत्वानुवादेनात्र किञ्चित्प्रयोजनम् प्रतिपत्तिचतुष्टयस्य तुल्यवदुपस्थितेः । तस्मात् पूर्वोक्तेनोपक्रमोपसंहारसंस्कृतवेदवाक्येनात्मदर्शनस्यावगतम् अपवर्गेष्टसाधनत्वम् आत्मा द्रष्टव्य इत्येकदेशेनानूद्य तदर्थितया श्रवणमङ्गि विधीयते लाघवात् । तत्फ-

(१) श्रुतिरियं छान्दोग्योपनिषदि अष्टमप्रपाठके दृश्यते ।

लीभूते चात्माद्वैतज्ञाने कुतर्काभ्यासदूषितान्तःकरणतया भेददृशामश्रद्धामलक्षालनरूपायोपकाराय मन्तव्य इत्यत्र मननं श्रवणाङ्गतया विधीयते मलक्षालने ऽपि सत्यात्मश्राविकाया उपनिषदो निदिध्यासनरूपेणोत्तरव्यापारेण नात्माद्वैतसाक्षात्कारफलपर्यवसानमिति दात्रस्य पांसुरुक्षणवत् शब्दस्य निदिध्यासनमपरमङ्गं विधीयते । तथा च मनननिदिध्यासनाभ्यामङ्गाभ्यां उपहतानि ब्रह्माद्वैतवाक्यानि मुक्तिहेतुभूतब्रह्माद्वैतसाक्षात्कारं फलन्तीति । शब्दश्च आत्मसाक्षात्कारे ऽस्मिन् करणम् असाधारणत्वात् । यदेव यस्यां बुद्धावसाधारणं तदेव तस्याः करणमिति मत्सिद्धान्तात्(१) । अद्वैतश्राविकास्तु उपनिषदः ऋग्वेदे प्रज्ञानं ब्रह्मेति । यजुर्वेदे अहं ब्रह्मास्मीति । तत्रैव बृद्दारण्यके एष त आत्मान्तर्याम्यमृतः । तत्रैव तैत्तिरीये स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्यादि । सामवेदे तत्त्वमसीति । अथर्ववेदे अयमात्मा ब्रह्मेति । एतानि तावन्महावाक्यानि । अत्र प्रथमवाक्ये प्रज्ञानपदेनैकादशेन्द्रियाधिष्ठातरि द्वितीयवाक्ये चाहमा जीवे चतुर्थवाक्ये ऽपीदमा स्वप्रकाशे जीव उक्ते सर्वत्र तस्य ब्रह्माभेदो ऽनुभाव्यते । तृतीयवेदवाक्ये तु तत्पदस्य वाच्यं यतो वा इमानि भूतानि जायन्ते सदेव सौम्येदमग्र आसीत् तमो वा इदमेकमेवाग्र आसीत् नासदासीन्नो सदासीत्तदानीं नासीद्रजो व्योमापरो यत् किमावरीवः कुहकस्य शर्मन्नम्भः किमासीत् गहनं गभीरं न मृत्युरासीत् अमृतं न तर्हि न राज्या अह्न आसीत् प्रकेतः आनीतवातं सुधया तदेकं तस्माद्वान्यं न परः किञ्च नासत्तम आसीत् तमसा

(१) व्यापारवदसाधारणं कारणं करणमिति लक्षणमनुमितिग्रन्थे दृश्यते ।

गूढमग्रे प्रकेतं सलिलं सर्वमा इदं तुच्छेनाभ्वपिहितं यदासीत्तपसस्तन्महिना जायतैकम्। तदैक्षत बहुस्यां प्रजायेयेत्यादिवाक्यार्थीभूतमनाद्यविद्यामायाश्रयो जगदुत्पत्तिस्थितिनिरोधकारणं सच्चिदानन्दैकरसं ब्रह्म। तत्पदस्य लक्ष्यं तु सत्यं ज्ञानमनन्तं ब्रह्म। ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म दक्षिणतः पश्चाच्चोत्तरेणाधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठमित्याद्युपनिषद्भिः(१) प्रतीतं नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयं ब्रह्म। त्वं पदस्य शक्यं तु देहेन्द्रियमनोबुद्धिप्राणाहङ्कारैः कृशस्थूलादिदेहधर्मैर्मूकत्वादीन्द्रियधर्मैः कामादिभिरन्तःकरणधर्मैः अस्तित्वोत्पत्तिविवृद्धिपरिणत्यपक्षयविनाशैः षड्भिर्भावविकारैः अशनायापिपासाशोकजरामरणैः षड्भिरूर्मिभिः त्वग्रुधिरमांसमेदोऽस्थिमज्जात्मकैः षड्भिः कोशैरुपेत आध्यात्मिकाधिदैविकाभौतिकेन तापत्रयेणाभिभूतः स्वर्गनरकाद्यनुभवी प्रत्यगात्मा। लक्ष्यं तु योऽयं विज्ञानमयो हृद्यन्तर्ज्योतिः पुरुष इत्यादिवाक्यैर्निरूपितो देहादिविलक्षणस्तत्साक्षीति॥

अत्र च जहदजहत्स्वार्थलक्षणया तत्त्वविरुद्धमाविधकं देहादिसम्भेदमपास्य त्वं पदार्थैकदेशं प्रत्यगात्मानमन्तर्ज्योतिरादिरूपं तत्पदार्थीभूतब्रह्माभिन्नतयाऽसिपदेनानुभाव्यते। लक्षणा च तात्पर्यमात्रम्। एतादृशमेव वाक्यार्थज्ञानमौपदेशिकं तत्त्वज्ञानं श्रोतव्य इत्यादिविधिविषयीभूतमिति। एवं च आत्मातिरिक्ते प्रकाशासम्बन्धेन निरस्ते प्रत्यगात्मनि च परमात्माभिन्नतया श्रुत्या तात्पर्यतोऽविद्यादशायामनुभाविते सिद्धं ब्रह्माद्वैतमिति वदन्ति॥

(१) श्रुतिरेषा मुण्डकोपनिषदि द्वितीयमुण्डके दृश्यते।

तत्रोच्यते । शब्दो न साक्षात्कारकारणम् चक्षुषा साक्षात्करोमीतिवत् शब्देन साक्षात्करोमीत्यनवगतेः । किञ्चात्मा वा अरे द्रष्टव्य इत्याद्युपक्रम्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं भवतीति शतपथे श्रवणात्तुल्यवत्प्रतिपत्तिचतुष्टयावगतेर्नाङ्गाङ्गिभावः । हन्तैवमात्मज्ञानेन सर्वं विदितं भवतीति शतपथादप्यात्माभिन्नं सर्वं सिद्ध्येदिति चेन्न । सर्वस्याविद्यकतयात्मनश्च तात्त्विकत्वेन तयोरभेदासम्भवात् किं तु तज्ज्ञानं स्तूयते । अपि च नित्यानित्यवस्तुविवेके शमादिमुमुक्षाभोगवैराग्यैर्ब्रह्मविचारेऽधिकार इत्यात्थ । अत्राद्यो न तावद् ब्रह्मविचारादेव अन्योन्याश्रयात् । नापि न्यायात् ब्रह्मविचारस्य न्यायपूर्वकत्वनियमापत्तेः । न चेष्टापत्तिरपसिद्धान्तात् । किञ्च श्रुतिजन्या ब्रह्माद्वैतविषया धीर्न तावद् ब्रह्माभिन्ना अजन्यत्वापत्तेः । नापि ब्रह्मभिन्ना परप्रकाशापत्तेः । तद्भेदाभ्यां न सा निर्वक्तुं शक्यत इति चेत् । सोऽयं पुंसोऽपराधो न तु वस्तुनः । वस्त्वेव तत्तथेति चेत् । अहो मोहो येन प्रमाणगोचरस्यावस्तुत्वं तदगोचरस्य तु वस्तुत्वमङ्गीकार्यसे नूनं गगनारविन्दादिकमपि वस्तु मंस्यसे । किञ्च सर्वशून्यतानगरं विज्ञाननगरं वा प्रविश स्वीकुरु वा पारमार्थिकीं प्रमाणगम्यतामिति । अपि च स्वप्रकाशत्ववत् स्वात्मिकाया लौकिक्याः प्रकाशक्रियायाः कर्मत्वं वाच्यम् । तच्च न । अभेदे क्रियाकर्मभावानुपपत्तेः । अलौकिकधीचतुष्के त्वगतिः समाधिः ॥

अथ किमिदं कर्मत्वम् । न तावत्क्रियाफलशालित्वम् । गमनक्रियाफलीभूतग्रामसंयोगशालिनो ग्रामस्येव चैत्रस्यापि कर्मतापत्तेः । किं तु परसमवेतेति क्रियाविशेष-

णाम् । ननु परत्वं न तावत् कर्मेत आत्माश्रयापत्तेः । नापि फलाश्रयतः कर्तुरपि संयोगविभागरूपफलाश्रयत्वादिति चेन्न । तत्क्रियानधिकरणत्वे सति तत्क्रियाफलशालिनः कर्मत्वात् । हन्त तर्हि वृक्षात् पतति पत्रे ऽपादानीभूतस्यापि वृक्षस्य पत्रनिष्ठस्पन्दक्रियाजन्यविभागरूपफलाश्रयतया कर्मतापि स्यात् । तथा च वृक्षं पत्रं पततीति स्यात् । न स्यात् धात्वर्थतावच्छेदकत्वेन फलविशेषणात् । पूर्वविभागस्तु न पतिधात्वर्थतावच्छेदक इति न तरुः पतेः कर्म । अत एव पत्रस्पन्दक्रिया यदा त्यजिनोच्यते तदा वृक्षः कर्मैव पूर्वविभागस्यैव त्यजिधात्वर्थतावच्छेदकत्वात् । यद्यपि यमेव स्पन्दं त्यजिराह तमेव पतिरपि । तथा च त्यजेरेव प्रयोगे तरुः कर्म न तु पतेरपि शब्दशक्तिवैचित्र्यात् । तथा च विशिष्यैव तत्तद्धात्वर्थतावच्छेदकफलशालित्वम् तत्तद्धातुप्रयोगे तत्तत्कारकस्य कर्मत्वमित्यननुगतमेव कस्याः क्रियायाः किं कर्मेति विशिष्यैवाकाङ्क्षोदयात् । नन्वेवं नदी वर्धत इत्यत्र वृद्धिरवयवोपचयरूपा धात्वर्थः । तत्फलं त्वप्राप्तदेशप्राप्तिः । तच्च तीरनिष्ठमतस्तीरं कर्म स्यात् । एवं पतेः स्पन्दविशेषोऽर्थः । तत्फलं त्वधःसंयोगः । स चाधो निष्ठ इत्यधः कर्म स्यात् । तेन नदीतीरं वर्धत इति भूतलं पत्रं पततीति च प्रयोगः स्यादिति चेदत्र प्राञ्चः । अप्राप्तदेशप्राप्त्युपहितावयवोपचयस्य विशिष्यैव वृद्धिधात्वर्थत्वम् । तथाऽधःसंयोगावच्छिन्नस्पन्दस्य पत्यर्थत्वमिति तीराधःपदार्थयोरुक्तसंयोगविशेषवतोर्धातुभ्यामेवोपस्थितिरिति न तत्र कर्मविभक्तिराकाङ्क्षाविरहात् । तदुक्तम् ।

धातोरर्थान्तरे वृत्तौ धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ इति ।

संगच्छते इत्यादौ धातोरर्थान्तरे वृत्तिः । वर्धते पततीत्यादौ धात्वर्थेनोपसंग्रहः । माघे माघे व्रजाम्यह-मिति काञ्चनमालिनीवाक्ये प्रयागमिति । प्रसिद्धेरविव-क्षातो यथा । गच्छ गच्छसि चेत् कान्तेत्यादाविस्याहुः ॥

नव्यास्तु वृधेर्व्यापारोऽर्थः अवयवोपचयः फलं तद-वच्छेदकमिति न तीरं कर्म तादृशफलभागित्वाभावात् । पतेस्त्वधः कर्मैव धात्वर्थोपलक्षणीभूततत्तत्फलरूपसंयो-गाश्रयत्वात् । कर्मविभक्तिरपि तत्र । अत एव ।

उद्धृत्य मेघैस्तत एव तोयमर्थं मुनीन्द्रैरिव संप्रणीताः ।
विलोकयामास हरिः पतन्तीर्नदीः स्मृतीर्वेदमिवाम्बुराशिं ॥

इति माघकाव्यमपि[1] ।

अत एव न अकर्मकधातुगणे लज्जासत्तास्थितिजा-गरण इत्यादौ पतेः पाठः द्वितीयाश्रितातीतपतितेत्यादिना नरकं पतित इत्यादौ समासश्च घटत इत्याहुः ॥

नन्वधस्तीरयोः कथं कर्मताशङ्कापि पतने वृद्धौ च कारकत्वाभावात् कारकविशेषस्य च कर्मत्वादिति चेद् भ्रान्तोऽसि । द्वितीयाप्रयोगो ह्यापाद्यते स चाकारके ऽपि प्रकृतक्रियाफलशालिनि यथा ग्रामादौ । कुत्र तर्हि की-दृशी द्वितीया व्रीहीन् प्रोक्षति घटं पश्यामीत्यादौ कर्मत्वे शाक्ती आत्मानं जानातीत्यादौ तु तत्र भाक्ती परत्वा-भावात् । ग्रामं गच्छतीत्यादावपि तथा ग्रामादेस्तत्क्रि-यायामकारकत्वात् । एवं वह्निमनुमिनोमीत्यादावपीति । विस्तरस्तु तत्त्वालोके मयैवोक्त इतीहोपरम्यते ।

यत्तु स्वकर्मत्वं स्वप्रकाशत्वमुक्तदोषैर्माभूत् अस्तु स्वविषयत्वमेव स्वप्रकाशत्वम् । यद्वा स्वव्यवहारे ज्ञाना-

(१) माघकाव्यस्य तृतीयसर्गस्य पञ्चसप्ततिसंख्यकोऽयं श्लोकः ।

न्तरानपेक्षत्वमेव स्वप्रकाशत्वं स्वस्मिन् सत्येव स्वव्यवहारात्। अथ विषयविषयिभावो भेदे दृष्टस्तथा व्यवहारो व्यवहर्तव्यज्ञानाद् दृष्टः। तथा च तदुभयं विनापि विषयविषयिभावस्य व्यवहारस्य चाङ्गीकारे दृष्टविरोधः स्यादिति चेन्न। यदि स्वप्रकाशो न स्यात् तदा ज्ञानमेव न सिद्ध्येत् परप्रकाशेऽनवस्थानादित्यन्यथानुपपत्त्या दृष्टविरोधविधूननादिति। तन्न। परप्रकाशपक्षेऽप्यनवस्थाया निरस्तत्वेनान्यथानुपपत्तेरनवतारात्। यत्तु स्वाविषयकेणाज्ञानेन स्वव्यवहारो जन्यत इति तन्न व्यवहारस्य व्यवहर्तव्यविषयकधीसाध्यतानियमात्। न ह्यजानन् न वान्यं जानन् अन्यद्व्यवहरति। सत्तायामपि सद्व्यवहारः सत्तावत्त्वधीजन्य एव। किं तु सा च तत्र भ्रान्तिर्बाधात्। एवं तद्गुणसंविज्ञानबहुव्रीहौ भुवादयः कुटादय इत्यादौ क्रियावाचित्वादिना गुणीभूतस्यापि भुवः कुटश्च धीश्चरेति क्वापि नाज्ञाते व्यवहारः॥

अथ सत्तासत्ताभ्यां विचारासहत्वाज्जगदेव शून्यमिति माध्यमिकः। चिद्व्यतिरिक्तमत एवैवमिति खाण्डनिकः। तथा च सूत्रम्। नासन्न सन्न सदसत्सदसतोर्वैधर्म्यादिति(१)। मैवम्। यैर्दोषैः प्रमेयजातं ग्रस्तनया विचारासहं ते दोषाः स्वकमपि ग्रसन्ति न वा। आद्ये क्व प्रमेयशून्यता तद्बीजभूतानां दोषाणामेव विलयात्। तथाप्यहमेव जयी मदुक्तदोषाणामेव प्रागल्भ्यादिति चेत्। धिङ्निस्त्रप व्याहतं ब्रुवाणोऽपि जैत्रतामिच्छसि। दूष्यदूषणसाध्यसाधनजयपराजयाः सर्वेऽप्यविद्याविल-

(१) सूत्रमिदं गौतमसूत्रस्य चतुर्थाध्याये प्रथमाह्निके ४८ संख्यायां वर्तते।

सिता एव मरुमरीचिकातोयवदिति चेत् । नूनमुन्मदिष्णुरसि यदेवं तत्त्वमवगच्छन्नपि निष्फले कथापथे प्रवर्तसे । न प्रवर्ते किं तु चिदात्मनि स्वप्रकाशे भरमवलम्ब्य सुखमास इति चेत् । तर्हि न त्वदुक्तदूषणानि मद्वाक्यस्पृंशि कथकानुक्तत्वादिति दूरमपसर । अन्त्ये तु दोषा एवावशिष्यन्त इति न सर्वशून्यतासिद्धिः । अथ तेषां सर्वेषां सत्त्वासत्त्वौदासीन्येन विचारं प्रवर्तयाम इति चेन्न । न हि तदाश्रयमाण इति सम्भवति केवलं वाङ्मनसविसंवादजन्मा प्रलापोऽयमिति । यत्तु अद्वैते प्रमाणमुपन्यसिष्यंस्तदवताराय नैयायिकप्रश्नमद्वैते किं प्रमाणमित्येवं रूपं खण्डनकृद् वर्णयामास तेन जानीमः स न्यायनयस्य किं वदन्तीमपि नाश्रौषीत् । तथाहि न्यायनये सर्वत्र प्रमितस्यैव धर्मीकरणात् अद्वैतस्य च त्वन्मतस्य त्वन्मते गगनारविन्दायमानत्वात् व्यावृत्तत्वस्य केवलान्वयित्वोपगमात् । किञ्च नायं बुभुत्सोः प्रश्नः । किं तु जिगीषोः स चाचिक्षिपसुस्तथा चाक्षेपयुक्तिं प्रत्यक्षबाधादिरूपां हृदि निधाय द्वैतनिषेधधिया किं करणमभिप्रैषीति प्रश्नः । तत्र च श्रुतिस्त्वदभिमतं करणं न घटते बाधादिति प्रष्टुर्भावः । तथा च त्वदुक्तं सर्वमेव प्रश्नखण्डनमलग्नकमिति ॥

अथेदानीमन्योन्याभावप्रतियोगित्वमत्यन्ताभावप्रतियोगि न वेति संशये सति विधिकोटिमद्वैतं साधयितुं खण्डनकृदेकमेवाद्वितीयम् नेह नानास्ति किञ्चनेति श्रुती तावदुदाजहार । तत्र च ब्रह्मेति प्रकृतम् । तेन यद्यपि ब्रह्मैकमेव द्वितीयं ब्रह्म नास्ति एवकारस्तत्राभेदं नियमयन् भेदाभेदं वारयति तथा अद्वितीयं ब्रह्मणि ब्रह्मप्रतियोगिकोऽन्योन्याभावो नास्तीत्यापाततो व्युत्पत्तिलभ्यो

ऽर्थः प्रतीयते। तथापि नात्र श्रुतेस्तात्पर्यम्। एवं कृत्वोद्गेयं गिरागिरेति ब्रूयादितिवदर्थवादत्वापत्तेः। किं तु श्रुत्यन्तरैकवाक्यत्वानुरोधादप्राप्ते शास्त्रमर्थवदित्यतश्चाद्वैते तत्तात्पर्यम्। न च घटपटादिभेदप्रत्यक्षबाधादिबलान्मुख्यमर्थमपास्य मुमुक्षुणा केवलात्मभावनानिष्ठेन भवितव्यमित्यत्र श्रुतेस्तात्पर्यमिति वाच्यम्। भेदप्रत्यक्षस्य घटपटादिविषयत्वेन श्रुतेश्चापाततस्तदविषयत्वेन विषयभेदेन बाधनायोगात्। क्रत्वङ्गीभूतहिंसाया विदिताया रागप्राप्तहिंसानिषेधः श्रुत्यैवेति। तथा अद्वैतश्रुतिर्घटपटादिप्रत्यक्षेण सह स्वजन्याभेदज्ञानस्य तथा घटेन पटेन तद्भेदेन च सह तद्विषयकप्रत्यक्षाणामेवं तेषां प्रत्यक्षाणामन्योन्यमभेदमवगाहताम्। न हि तेषामप्यन्योन्यं भेदः घटपटभेदग्राहिणा प्रत्यक्षेण प्रागग्राहीति। तथा च न श्रौतप्रत्यक्षेण श्रौतधीर्बाध्या स्वाभेदात् श्रुत्या तदभेदालिङ्गनात् घटपटादीनां सर्वेषामेव भेदप्रत्यक्षालिङ्गितानामप्यभेदोऽर्थात् सिध्यति। न हि सम्भवति घटाभिन्नज्ञानाभिन्नं पटादि परस्परं भिन्नमिति। अथ तेषामपि ज्ञानानां भेदः प्रत्यक्षेणालिङ्गनीयः। तदा तद्धियामभेदं श्रुतिरवगाहताम् तावतैव मूलपर्यन्तमनुपपत्तेरभेद आयास्यति। न च प्रत्यक्षेण तद्भेदालिङ्गनमपि अनवस्थानात् विषयान्तरसञ्चाराच्च। तथा च भेदधीर्यतो निवर्तते तदेवाश्रित्याभेदश्रुतिः प्रवृत्ता तदभेदं अर्थापत्तिसहकाराच्च मूलपर्यन्तमभेदं साधयिष्यति। तस्मात्

सुदूरधावनश्रान्ता (१) बाधबुद्धिपरम्परा।
निवृत्तावद्वयाम्नायैः (२)पार्ष्णिग्राहैर्विजीयते॥

(१) अलसेति यावत्। (२ विनिवृत्ताऽद्वयाम्नायैरित्यपि पाठ खण्डने दृश्यते।

पार्ष्णिग्राहः पृष्ठस्थोऽरातिः । न च तुल्यन्यायतया भेदप्रत्यक्षेण चरमबुद्धेरप्यालिङ्गनम् । न हि तुल्यन्यायता सामान्यलक्षणादिवत् प्रमाणसहकारिणी येन व्यवहितातीतानागतानपि गमयेत् ॥

अथ सर्वा बुद्धयः सर्वस्वविषयभिन्नाः बुद्धित्वादिति । न । सर्वतद्विषयावगाहने सार्वज्ञ्यापत्तेः अलौकिकप्रत्यक्षेषु व्यभिचाराच्च तेषु स्वस्यापि विषयत्वात् । अथ सर्वं भिन्नं प्रमेयत्वादिभ्य इति तदानुपसंहारस्वरूपासिद्ध्यादयः । न हि सर्वेषां पक्षीकृतानां स्वरूपं हेतुमत्तां वा किञ्चिज्ज्ञो वेद । अथ काचिदेव बुद्धिः पक्षः तद्धर्म एव च हेतुः तदा बुद्ध्यन्तरं द्वारीकृत्याद्वैतश्रुतिः प्रवेक्ष्यति । तथा च ।

हेत्वाद्यभावसार्वज्ञ्ये सर्वं पक्षयताऽऽस्थिते ।
किञ्चिच्च त्यजता दत्ता सैव द्वारद्वयश्रुतेः ॥

आस्थिते अङ्गीकृते । अथ घटपटौ भिन्नावित्यादिरूपया प्राथमिकधिया योऽनयोर्भेदो गृहीतः स एव बुद्धितद्बुद्धिधारायां अभेदे सति न निर्वहेत । न हि सम्भवति वस्त्वनेकम् तदभिन्नं तु तज्ज्ञानमेकमिति । तस्मादर्थभेदान्यथानुपपत्त्यैव धीधारायामपि भेद इति न तदभेदं श्रुतिराह बलवदर्थापत्तिविरोधादित्याशङ्क्य साप्यर्थापत्तिर्ज्ञाता भविष्यतीति तस्यास्तज्ज्ञानस्य चाभेदे श्रुतिः प्रवर्तिष्यत इति धीवेद्यभेदस्यान्यथानुपपत्तेस्तज्ज्ञानस्य चाभेदे श्रुतिः प्रवर्त्स्यतीत्यर्थः । अस्तु वा भेदप्रत्यक्षविषय एव घटादावभेदश्रुतिप्रवृत्तिः । योग्यताज्ञानं न शाब्दधीहेतुरङ्गुल्यग्रे करिशतमित्यादौ व्यभिचारात् । अस्तु वा तदपि । श्रौतधीश्चेयं प्रमैव श्रुतेरन्यत्रालब्धावकाशायाः प्रमाण-

त्वात्तद्विरोधेन भेदप्रत्यक्षस्यैवाप्रमाणत्वात् । अथ योग्यताया असंसर्गाग्रहादियमसंसर्गाग्रहरूपा । तथाप्यस्या असदसंसर्गाग्रहरूपत्वात् संसर्गसिद्धिः । न च प्रत्यक्षबाधं श्रुतिबाधेन परिहरतो वेदान्तिनोनौचित्यम् तदुद्भावितनिग्रहस्थानेनैवोद्भावितनिग्रहस्थानपरिहारस्य तत्त्वात् । तथा च तेन श्रुतेर्बाध इति वाच्यम् । श्रुतेः प्रमाणत्वात् तर्कस्य चाहार्यारोपरूपत्वात् । किञ्चानौचित्यात् तत् बाध्यते यस्य मूलं तया हूयते । प्रकृते तु नैवं अद्वैतश्रुत्यैव तर्कमूलव्याप्यव्यापकस्य भेदगर्भस्य खण्डनात् ॥

यत्तु प्रागन्तिमज्ञानतो भेदाग्रह उक्तः । तदयुक्तम् । तस्याप्युदाह्रियमाणतादशायां भेदग्रहणसम्भवादिति । तन्न । अन्तिमबुद्धेरिदानीं प्रत्यक्षेण ग्रहणासम्भवात् । न चानुमानेनानुपपत्त्या वा तद्ग्रहणम् अभेदाभिमानिनं वादिनं प्रति भेदधीमूलकयोस्तयोरप्रवृत्तेः । न च ममानुमानादितस्तद्भेदबुद्धौ मद्वचनाद्वादिनस्तत्र भेदसन्देहोऽप्यस्त्विति वाच्यम् । अभेदाभिमानिनः कोटिद्वैताभिमानेन निष्परिपन्थिश्रुतिरूपसाधकमानसत्त्वेन सन्देहस्याप्यनुदयात् । किञ्च परः किञ्चिद्वेत्तीति यत्रावगम्यते तत्र न तस्य घटादितो भेदो ग्राह्यः स्वरूपानवधारणात् । तथा चाभेदश्रुतिस्तत्रैव लब्धपदा तत्त्वाद्विश्वाभेदे पर्यवस्यति ॥

ननु कथं भेदानङ्गीकारे पदपदार्थवैचित्र्यव्यवहारः आविद्यकभेदोपगमात् । न च मयि व्याघातापादनमपि भेदाभावे आपादकस्यैवासिद्धेरिति खण्डनम् ॥

अत्रोच्यते । अभेदश्रुतिः प्रत्यक्षेण प्रतिरुध्यते । न च प्रत्यक्षश्रुत्योरविनिगमादुभयत्र प्रामाण्यसंशयः प्रत्यक्षस्य सकलप्रमाणोपजीव्यत्वेन भेदप्रत्यक्षस्योपजीव्यजातीयतया तेनैव श्रुतेर्बाधनात् ॥

ननु भवतु प्रत्यक्षमुपजीव्यम् । तथापि नेह नानास्ति किञ्चनेति श्रुतिस्तावदभेदबोधिका । अत्र किञ्चनेतिपदेनोपस्थिते सर्वत्रैवाभेदः श्रुत्या विधीयत इति नाभेदविधौ प्रत्यक्षोपजीवनमिति चेत् । तथापि किञ्चनेतिपदसमानविषयत्वादुपजीव्यत्वाच्च प्रत्यक्षं तां बाधेतैव । किञ्च यत्र भेदाभेदप्रत्ययौ परस्परस्पर्धिनौ तत्राप्यनन्यथासिद्धत्वाद्भेदधीस्तमेव अभेदधीस्तु तज्जातीयत्वमालम्बते ता एव चैत्रक्षपा इतिवत् । तथा च तद्वदत्रापि स्यात् । न च भेदधियो भ्रमत्वमपि सम्भवति भ्रान्तेरभ्रान्तिपूर्वकत्वात् त्वन्मते भेदस्यालीकत्वात् अलीकस्य च विधिनिषेधाङ्गीकारे उन्मत्तकेलिप्रसङ्गात् । अविवेकाद् बोधयतु वा श्रुतिरद्वैतम् । तथापि भेदप्रत्यक्षधिया तद् बाधनीयं ग्राहकस्य दौर्बल्यात् । पारमार्थिकत्वादद्वैतमबाध्यमिति चेन्न । असिद्धेः । न हि पारमार्थिकमबाध्यं दृष्टम् । लोके दृष्टमिति चेन्न । त्वन्मते लोके द्वयोरप्यदर्शनात् । एवं विषयान्तरे ऽपि गृहीते श्रुत्या नाभेदधीः तद्धियैवातादात्म्यग्राहिण्या स्वरूपभेदस्य गृहीतत्वात् । किञ्च विशिष्टबोधिकायां श्रुतौ विशेष्यमुद्दिश्य विशेषणं विधीयते । तथा चोद्देश्यत्वविधेयत्वलक्षणभेदावगनेरावश्यकत्वात् तयाप्युपजीव्यया श्रुतेर्बाधः । यच्च श्रुत्या भेदप्रत्यक्षास्पृष्टेनान्तिमज्ञानेन समं स्वजन्यज्ञानस्याभेदे ग्राहिते तदन्यथानुपपत्त्या मूलपर्यन्तमभेदः स्यादिति । तन्न । प्रत्यक्षेण घटादिभेदग्राहिणा श्रुतेरिवान्यथानुपपत्तेरपि बाधनात् विषयविरोधाविशेषात् । किञ्च तत्तद्विशेषरूपेण श्रुत्याऽभेदबोधने वाक्यभेदः स्यात् । न च श्रुतितो द्रागेव सर्वविषया अभेदधीरुदेति । मद्बुद्धिस्तु विचारजन्यत्वात्तस्याः

सर्वविषयत्वं गाहत इति इति चेन्न। घटपटयोर्भेदप्रत्यक्षेण तत्राभेदश्रुतेर्विघ्निततया प्राक् सर्वत्राभेदश्रुतेरप्रवृत्तेः। यच्च परः किञ्चद्रेत्तीत्याद्युक्तम्। तदप्ययुक्तम्। तन्मात्रे अर्थादावभेदग्रहे विरम्य व्यापारायोगः स्यात्। तत्रान्यत्र च प्रागेव सर्वत्र श्रुत्याऽभेदग्रहणं घटपटादिभेदप्रत्यक्षेण तत्र विघ्नः स्यात्। यच्चोक्तम् अन्तिमबुद्धौ श्रौतबुद्ध्या सममभेदधीरभेदश्रुतिल आदावस्त्विति। तन्न। अन्तिमबुद्धावज्ञातायां न तावदभेदः श्रुत्या बोध्यते उद्देश्याज्ञाने विधानासम्भवात् विधायकशब्दस्य च तथैव सर्वत्र प्रवृत्तिदर्शनात्। नापि ज्ञातायाम् तेनैव ज्ञानेन तस्याः स्वरूपभेदस्य गृहीततया तत्राप्यभेदश्रुतेरप्रवृत्तेः। एतेन सुदूरधावनश्रान्तेति निरस्तम्। किञ्चाभेदे बोध्यबोधकसहकार्यसहकारिजन्यजनकवाच्यवाचकप्रतिपन्नाप्रतिपन्नभेदविरहात् कथमभेदं श्रुतिर्बोधयतु। अथाविद्याकाद्भेदात् सर्वमिदं घटते तर्हि तत एव त्वद्यनिष्टापादनमपि घटताम्। सर्वमिदमनिर्वचनीयमिति चेत्। अहो पाण्डित्यं निर्वचनात्मकश्रुतिप्रामाण्यमुपक्रम्यानिर्वचने पर्यवसानम्। वयं वैतण्डिकाः किमपि न साधयामः किं तु भेदं निषेधाम इति चेत्। अविद्यादशायां श्रुतिरद्वैते प्रमाणमिति धुष्यन् पुरुषायुपमनैषीरथेदानीं तत्र दोषदर्शनादन्यथा वर्णयन् स्वाशयमपि नावधारयितुं क्षमसे। किञ्चाभेदो यः साध्यः स भेदाभावो भेदविरोधी वा। उभयथापि भेदः पारमार्थिक आपद्येत। न ह्यवस्तुनो विरहो विरोधी वा वस्तु सन्निति घटते। किञ्च श्रुतिः प्रपञ्चब्रह्मणोऽभेदमाहेत्यप्ययुक्तम्। ब्रह्मैव तत्त्वं प्रपञ्चस्त्वतत्त्वमिति शङ्कराचार्यवचनविरोधात्। अत एव तयोर्भेदं निषेधतीत्यपि

न। एवं हि ब्रह्मणः प्रपञ्चाभिन्नतया जडत्वेन स्वप्रकाशचिदानन्दानात्मकत्वे तदर्था मुमुक्षोः प्रवृत्तिरपि न स्यात्। तथा च श्रुतिः प्रपञ्चनिषेधपरेति वाच्यम्। तथा च क ब्रह्मप्रपञ्चयोरभेदगन्धोऽपि। अथ जीवपरमात्मनोरभेदं श्रुतिराह तत्त्वमसीत्याद्युक्तेरिति चेन्न प्रत्यक्षबाधात् परमात्मान्योन्याभावस्य प्रतिस्वं स्वात्मनि प्रत्यक्षत्वात् नाहं ज्ञानमितिवन्नाहं परमात्मेति प्रतीतेः। आत्मनि तत्तादात्म्यसत्त्वे तथोपलम्भापत्त्या तद्भेदस्य तत्राध्यक्षतोपगमात् प्रतियोगिसत्त्वविरोधिन्या एवानुपलब्धेर्योग्यानुपलब्धित्वात्। किञ्चाभेदश्रुत्या क्रमेणाभेदावगाहनमिति यदुक्तम्। तदप्ययुक्तम्। शब्दस्य विरम्य व्यापारायोगात्।

यत्त्वभेदश्रुत्या द्रागेव सर्वत्रैवाभेदधीर्जन्यते। न च घटादौ भेदप्रत्यक्षेण श्रुतिबाधनं वस्तुतः श्रुतेर्बलवत्त्वात्। तथा च श्रुतिर्निर्दोषत्वेन बलीयसी भेदप्रत्यक्षमेव प्रतिक्षिपेत्। तदुक्तम्।

पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः।<br>
बाधनादुपजीव्येन न विभेति मनागपि ॥<br>
एकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचित्।<br>
आस्ते न धीरवीरस्य भङ्गः सङ्गरकेलिषु ॥ इति।

तन्न। एवं हि सर्वेषामेकदैवाभेदबोधने बोद्धुः सार्वज्ञ्यं स्यात्। तच्च न मन्यसे। अन्यथा सामान्यप्रत्यासत्त्योपस्थितानां सर्वेषामेकदैव भेदे प्रत्यक्षेणावगते श्रुतिर्निरवकाशैव स्यात्। श्रुतेर्बलवत्त्वं च विचार्यमेवास्ति। किञ्च बोद्धुर्बाधावधारणमेव शाब्दधीविरोधि न तु याथार्थ्यमपि। तच्चात्रास्त्येव। न च भेदप्रत्यक्षस्यान्यथासिद्धि-

सम्भावनया दौर्बल्यम् श्रुतेरप्यन्यपरत्वसम्भावनया तत्सम्भवात् । न चैवं श्रुतिप्रत्यक्षयोर्बलाबलसन्देह एवास्त्विति वाच्यम् श्रुतेः सहकारिविरहादिना दौर्बल्यात् ।

नन्वेतत्सर्वमविद्याविजृम्भेन मयोक्तम् । वस्तुतस्तु परमात्मभिन्नं न किञ्चित्तत्त्वम् । एवं च श्रुतिश्चाविद्या च जगच्च सर्वमाविद्यकं विचारासहत्वात् । ब्रह्मैवैकं तत्त्वम् । तच्च स्वप्रकाशचिद्रूपत्वान्मेयमातृप्रमामानभेदशून्यमवाङ्मनसगोचरत्वाच्च न विचारगोचरोऽपीति चेत् । नूनं मत्तः सञ्ज्ञाशून्योऽसि यद्ब्रह्मणो वचनागोचरत्वं वचनेनैव प्रतिपादयसि । इदमप्याविद्यकमिति चेत् । यत्र प्रमाणानि प्रसरन्ति तन्न वस्तु यत्र तु न प्रसरन्ति तदेव वस्त्विति महती दुष्प्रत्याशा । तस्माज्जगत्कर्तारं ब्रह्मपदार्थमवेहि । तत्र च कार्यायोजनादि प्रमाणं जानीहि अभेदश्रुतीर्भावनापरत्वेन विद्धि विरम जगद्भेदाभिमानादित्यलमतिविस्तरेणेति । किञ्च केयमविद्या किंनिष्ठा कतिविधा चेति । तत्र परमात्मन्येका जीवेषु प्रतिस्वमपरेति टीका । तन्न । अविद्यावशेन हि जीवे ब्रह्मणो भिन्ने सत्यविद्या तमाश्रयेत । अविद्याश्रयणेन च स ब्रह्मणो भिन्नः स्यादित्यन्योन्याश्रयात्(१) । न चात्रानादितापरिहारो व्यक्तिभेदे हि स स्यात् बीजाङ्कुरवत् । अत्र तु न तथा । न हि जीवा अपि उदयन्ते व्ययन्ते चेति । येन व्यक्तिभेदः स्यात् ॥

एतेन जन्मप्रवृत्तिदोषमिथ्याज्ञानानामप्यन्योन्याश्रयचक्रकप्रतिबन्धिरपास्ता । आत्माश्रयानवस्थयोर्हि प्रामाणिकत्वं परिहारः । तच्चानवस्थायां व्यक्तिभेदादेव सम्भवति आत्माश्रये व्यक्त्यभेदादेव । अन्योन्याश्रयच-

(१) तदपेक्ष्यापेक्षित्वनिबन्धनोऽनिष्टप्रसङ्गोऽन्योन्याश्रयः ।

ककयोस्तु व्यक्तिभेद एव परिहारः । यथा जन्मप्रवृत्त्योः जन्मप्रवृत्तिदोषमिथ्याज्ञानानां चेति । तद्वन्नात्र व्यक्तिभेदोऽस्ति । परस्परापेक्षि च व्यक्तिद्वयं न सम्भवति कारणाभावादिति ॥

अथास्तु विवरणमतम् । तथाहि अविद्या हि ब्रह्ममात्राश्रिता एकैव । सा च ब्रह्मवदनादिरेव । ब्रह्मण्येव च स्थिता जीवानावृणोति । तथा च तयाऽऽवृता जीवा ब्रह्मणो भिन्नत्वेन बहुत्वेन चकासति । यदा तु तामावरिकां योगसमाधिमर्यादया जीवो व्यतिक्रामति तदा जीवन्मुक्त इत्युच्यते । यदा तु सर्वे तदा सर्वे जीवा ब्रह्मणि लीयन्ते अविद्या च व्येति कर्तव्याभावात् ब्रह्मैव निर्विकारमवतिष्ठत इत्येकदैव सर्वमुक्तिरिति । तन्न । सा ह्यविद्या ब्रह्माश्रिता ब्रह्मतो भिन्ना वास्तवी चेत्तदा द्वैतं स्यात् । ब्रह्माभिन्नाचेत्तदा तद्वयानुपपत्तिरपसिद्धान्तश्च । साप्याविद्यकी चेत्तदा तस्या अविद्यान्तरप्रभवत्वे अविद्यानन्त्यं स्यात् । किञ्चेयमविद्या मोहात्मिका वा तत्त्वज्ञानविरहात्मिका वा । नोभौ । न हि ब्रह्मणि तौ सम्भवतः । न हि [illegible]-भिज्ञं मूढञ्चेति स्वप्रकाशचिद्रूपत्वात्तस्य । अथ [illegible]-मवेतं मिथ्याज्ञानमविद्या ब्रह्म विषयीकरोति । त[illegible]था-न्याश्रयः । जीवे हि ब्रह्मतो भिन्ने सति तत्र मिथ्[illegible]ज्ञानं समवेयात् । समवाये च स ब्रह्मतो भिद्येतेति । अ[illegible]विद्याविजृम्भितं मायानगरं तथा विश्वमेवेति ब्रूम इति चेन्मायास्वरूपं पृष्टो मायाफलेनोत्तरयन्नूनमनभिज्ञोऽसि । किञ्चाऽविद्याऽस्तु यथा तथा । न हि सा ब्रह्म विषयीकरोति । न वा तत्र समवैतीति कथं ब्रह्माश्रितेत्युच्यते । ननु सत्त्वेनासत्त्वेन च सा निर्वक्तुं यथा न शक्यते तथा

भावत्वेनाभावत्वेन मोहत्वेन जीवनिष्ठत्वेन वा ब्रह्मनिष्ठत्वेनापि निर्वक्तुं न शक्यत इत्येव तदनिर्वचनीयत्वार्थ इति । धिङ्मूढ यां बोद्धुं व्याहर्तुं च न शक्नुषे तामाश्रित्य विवदमानो न लज्जस इति दूरमपसर । किं कुर्म एवं स्वभावैव सेति चेत् । निःस्वभावामेवं स्वभावां वदन् व्याघातादपि बिभेषि । तस्माद् यथा यथा परीक्षसे तथा तथा व्याघातसंघातनिर्घातघातमासाद्य माद्यन्नुन्माद्यन्नितस्ततः प्रलपसीति । अथाविद्या ब्रह्मावृणोतीत्ययुक्तम् तस्य स्वत एवावाङ्मनसगोचरत्वात् । आवृतत्वादेव तत्तथेति चेन्न । अपसिद्धान्तात् । अविद्या ब्रह्म नावृणोति किं तु तद्बलाद्ब्रह्म विवर्तत इति ब्रूम इति चेत् । कोऽयं विवर्तः । मिथ्यापरिणामः । कोऽयं परिणामः । प्रकृत्यनुवृत्तौ रूपान्तरा वृत्तिः । यथा हेम्नः कुण्डलादि । सोऽयं परिणाम आविद्यकत्वान्मिथ्येति ब्रूम इति चेत् । यथा हेम कुण्डलत्वेन पर्यवस्यति । तथा ब्रह्मासद्भूतादित्वेन पर्यवस्यतीति त्वद्वाक्यार्थः । स चायुक्तः । सदसतोश्चेतनजडयोरात्मानात्मभूतयोस्तादात्म्यासम्भवात् । न हि तात्त्विकस्यातात्त्विकः परिणामः सम्भवतीति । हिमान्या मायागन्धर्वनगरवदेतत् स्यादिति चेन्नैवम् । न हि हिमानी तथात्वेन परिणमते विवर्तते वा । किं तु हस्त्यश्वादित्वेन मूढैः प्रतीयते । ब्रह्म तु कथं तथा प्रतीयतां सर्वपरोक्षत्वादिति ॥

ईश्वरसिद्धिस्त्वेवम् । य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको ऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इति छान्दोग्योपनिषदा आत्मविषयकप्रतिपत्तिविधौ सा प्रतिपत्तिः

किंरूपा कतिविधा वेत्याकाङ्क्षायां आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयीति शतपथश्रुत्यात्मविषयकयथोक्तप्रतिपत्तिचतुष्कस्येष्टसाधनत्वेऽवगते इष्टाकाङ्क्षायां च न स पुनरावर्तत इत्यर्थवादेनापुनरावृत्तेर्मोक्षस्योपस्थितौ विध्यनुवादैकवाक्यतया च प्रतिपत्तिचतुष्टयस्य मोक्षसाधनत्वावगमे मोक्ष्यमाणप्रवृत्तिप्राप्तौ प्रवृत्तिविषयीभविष्यत्तदुपायविशेषजिज्ञासायां श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिरिति गुणविधिना वेदानुमानयोस्तदुपायत्वविधानात् । अथ श्रवणकारणवेदाकाङ्क्षायां सहोवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोवायु नाकाशमसङ्गमस्पर्शमगन्धमरसमचक्षुःश्रोत्रमरागमनोतेजस्कमप्राणमुखमनामागोत्रमजरममरमभयममृतमरजोऽशब्दमविवृतमसंवृतमपूर्वमनपरमबाह्यं न तदश्नोति कञ्चन तदश्नोति कश्चनेत्यादि शतपथश्रुत्यात्मनि श्रुते विधिबोधितद्वितीयप्रतिपत्तये निरञ्जनत्वादिश्रुतिसंजाताश्रद्धामलक्षालनाय च मननानुसरणे इतरभिन्नानुमितेर्व्याप्तिपक्षधर्मतासंवेदनसाध्यत्वेऽपि तस्यात्र प्रावादुकप्रवादनिरासक्षमात्मपञ्चावयवसाध्यतया साङ्गोपाङ्गन्यायस्वरूपनिरूपणाय षोडशपदार्थव्युत्पादनप्राप्तौ तत्रापि षोडशपदार्थनिरूपणस्य निरस्तसमस्तदोषानुषङ्गस्वलक्षणसाध्यतया लक्षणदोषनिरासस्य च लक्षणमन्तरेणासम्भवितया लक्षणस्य च धर्मिज्ञानसाध्यस्य तत्साधकोद्देशसाध्यतयोद्देशलक्षणपरीक्षात्मकप्रवृत्तित्रित्वे व्यवस्थिते यथोक्तहेतुहेतुमद्भावसङ्गत्योद्देशलक्षणपरीक्षाणां पौर्वापर्ये सिद्धे जातिनिग्रहस्थानविशेषलक्षणा नात्वभ्यर्हिततमप्रमाणादिपरीक्षाविषयकशिष्यबुभुत्सौत्कट्येन प्रतिबन्धे । अथ तत्पर्यासावस-

रतः करणादर्थतश्चरमभाव इति सर्वमभिसन्धाय दुःखपङ्क-निमग्नानुदीधीर्षन्नक्षपादो महामुनिस्तदुपशमस्य परम्परयो-पायभूतामान्वीक्षिकीं प्रणिनाय। तत्रापि चान्वीक्षिक्या साङ्गोपाङ्गया प्रावादुकप्रवादनिरासक्षमे पञ्चावयवे समु-पवर्णिते तेनैव मननात्मिका द्वितीया प्रतिपत्तिरपि साध्यते क्षित्यादेः कार्यत्वेन घटवत् सकर्तृकत्वानुमानात् ॥

नन्वादिपदस्य प्रकारवाचित्वेन कश्चिदेकः प्रकारो वाच्यो येन तत्र तत्र महामहीधरादयः संगृह्यन्ते। अत्राहुः। अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्यसमवेतजन्यत्वं तथा। अत्र कृत्यजन्यत्वेन पक्षविशेषणे कृते सर्वासंग्रहः सर्वस्य सन्दिग्धकर्तृकस्य स्वमते कृतिजन्यत्वादिति तदर्थं जन्येति। जन्यपदं तु स्वमते कृतौ विशेषणम् परं प्रत्या-पातत उपरञ्जकम्। एवमपि शब्दफूत्कारादीनां मृदङ्गा-दिगोचरकृतिजन्यानां जन्यकृतिजन्यत्वेन न पक्षत्वमिति तत्संग्रहायोपादानगोचरेति जन्यकृतिविशेषणम्। शब्दा-दयोऽपि हि गगनपवनगोचरजन्यकृत्यजन्या एव तयोर-तीन्द्रियत्वात्। नन्वेवमपि सर्वासंग्रहः। क्षित्यादयो हि परमाणुगोचरजन्यकृतिजन्या एव। तथाहि यागादिगोचरा यष्टुर्या जन्या कृतिः सापि यागहिंसादिकं भावयन्ती तत्फ-लीभूतं सुखं दुःखञ्चोत्पादयन्ती तदवरुद्धत्वेन तत्कारणी-भूतं परमाणुमपि विषयीकरोतीत्यतः सर्वसंग्रहायादृष्टा-द्वारकेति उपादानगोचरजन्यकृतिविशेषणम्। इयं तु कृतिरदृष्टाद्वारिकैवोपादानगोचरा भवति। एवमपि निरु-पादानानां प्रध्वंसानामदृष्टाद्वारकोपादानगोचरजन्यकृ-त्यजन्यतया पक्षप्रवेशे वृत्ते तदंशे सकर्तृकत्वानुमाने बाधः। न हि ध्वंसस्य निरुपादानस्योपादानगोचरापरोक्षज्ञानचि-कीर्षाकृतिमज्जन्यत्वलक्षणं सकर्तृकत्वं सम्भवतीति तद्वहि-

ष्करणाय समवेतपदम् । एवमपि सामान्यानां नित्यगुणानां च पक्षप्रवेशे वृत्ते तदंशे बाधः स्यादिति तद्वारणाय चरमं जन्यपदम् । साध्यं तु अदृष्टाद्वारकोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वम् । अत्राप्युपादानेत्यादौ कृतेऽदृष्टद्वारा उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतयः क्षेत्रज्ञस्य भवन्त्येवेति तद्विशिष्टक्षेत्रज्ञेनैवार्थान्तरमिति तद्वारणायादृष्टाद्वारकेति उपादानगोचरप्रत्यक्षज्ञानचिकीर्षयोः कृतेश्च विशेषणमिति केचित् । तन्न । न ह्यर्थान्तरवारणाय साध्ये विशेषणं साध्यगौरवेण व्याप्यत्वासिद्ध्यापत्तेः । किंत्वदृष्टाद्वारकोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमानेव हि कर्ता । यथा घटपटादौ कुलालकुविन्दादिः । एवं चैवं प्रयोगः । अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्यानि समवेतानि जन्यानि अदृष्टाद्वारकोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि समवेतत्वे सति प्रागभावप्रतियोगित्वात् । यद्यत् समवेतत्वे सति प्रागभावप्रतियोगि तददृष्टाद्वारकोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यम् यथा घटः । एतानि चादृष्टाद्वारकोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वव्याप्यसमवेतत्वसमानाधिकरणप्रागभावप्रतियोगित्ववन्ति । तस्मादुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि । नायं हेतुराभासस्तल्लक्षणायोगादिति नैयायिकेन स्थापितेऽनुक्तग्राह्योच्यमानग्राह्याभासबहिरुक्तग्राह्याणां यथायथमनुसन्धीयमानानामनवतारे उक्तग्राह्यविशेषेण हेत्वाभासेन मीमांसकः स्थापनां दूषयति । तथाहि कर्ता शरीरावच्छिन्न एवात्मा घटादौ दृष्टः स च पक्षे बाधितः । न हि शरीरी क्षित्यादि निर्मातीति त्वमपि ब्रूषे इति । प्रत्यक्षेणोपाधिना वा यद्यपि

नात्र शरीरजन्यत्वमुपाधिः साधनव्यापकत्वात्। क्षित्या-देरप्यदृष्टद्वारा शरीरजन्यत्वादिति । तथाप्यदृष्टाद्वारक-चेष्टाश्रयजन्यत्वं सः । न च लाघवात् तादृशचेष्टाजन्य-त्वमेवास्तूपाधिः चेष्टायामेव साध्याव्याप्तेः । न हि चेष्टापि चेष्टाजन्याऽनवस्थापत्तेः । स्थापनां निरस्य स एव स्वपक्षे प्रमाणमाह क्षित्यादीनि नादृष्टाद्वारकोपादानगोचरापरो-क्षज्ञानचिकीर्षाकृतिमज्जन्यानि शरीराजन्यत्वात् । यद्यत् शरीराजन्यं तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृति-मज्जन्यं न भवत्येव यथा व्योमेति महार्णववत्सेश्वरमते । नरसिंहहरिशर्ममते तु तदि न वीप्सेति । कण्टकोद्धारस्तु क्वापि मते नास्ति ॥

एवं प्रयुज्य विरतवाचि मीमांसके स्थापकः । न हि शरीरघटितमपि कर्तृत्वं गौरवात् । किं त्वदृष्टाद्वारकोपादा-नगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वमात्रम् । यत्तु कुला-लादेः शरीरित्वं तज्ज्ञानादिनिष्पत्तये क्षित्यादिकर्ता त्वज-न्यज्ञानादिमानेवेति किं तस्य शरीरेण । तथा च कर्तृस्वरूपे शरीराननुप्रवेशात् । ज्ञानेच्छाप्रयत्नवतश्च कर्तुः परं प्रति नित्यपरोक्षत्वान्न प्रत्यक्षबाधः । यत्तु शरीराजन्यत्वादिकं हेतूकृतम् । तत्र शरीरं नार्थे विशेषणम् प्रतियोगिनि वा । आद्ये स्फुटं व्यर्थविशेषणम् अजन्यत्वमात्रस्यैव कर्त्रजन्य-त्वसिद्धिक्षमत्वात् । अन्त्ये यदपि शरीरं हेतूकृताऽभावं न विशिनष्टि । तथापि जन्यत्वं विशिषत् विशिष्टाभावस्य हेतुतायां पर्यवस्यति । तथा च लाघवाद्विशेष्याभावमात्र-स्यैव कर्तृजन्यत्वाभावव्याप्यत्वम् । न तु विशिष्टाभावस्य गौरवादिति शरीरजन्यत्वाभावो व्याप्यत्वासिद्धः । एवं च हेत्वाभासेन मीमांसके पराजितेऽव्याहतहेतुप्रयोक्ता

नैयायिको विजयी । तदिदमीश्वरस्य जगत्कर्तृत्वमागमोऽपि संवदति । तद्यथा विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः । नन्वेवमीश्वरविषयकं प्रतिपत्तिचतुष्टयमपवर्गजनकमिति निर्गलितम् । तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुतिरप्येवमाह । एतच्चायुक्तम् । तत्त्वज्ञानस्य हि समानाधिकरणमिथ्याज्ञानध्वंसद्वारोपयोगात् दुःखजन्मेत्यादिसूत्रे तथैव सिद्धान्ताच्च । ईश्वरविषयकं तु मिथ्याज्ञानं न जीवस्य संसाराय । किं तु स्वविषयकमहं गौरोऽहं स्थूल इत्यादिना शरीरविषयकेण जीवाभेदभ्रमेण तदनुकूले रज्यते तत्प्रतिकूलं च द्वेष्टीति तदीयरागद्वेषमोहैरेव संसरति उच्यते तद्विषयकदोषत्रयोच्छित्तिस्तद्विषयकतत्त्वज्ञानादेवेति । सत्यम् । तदेव तु श्रवणमनननिदिध्यासनैः क्रमादुच्छ्रितैरुत्पन्नेनेश्वरसाक्षात्कारेण जन्यते । तथा च श्रुतिः । स हि तत्त्वतो ज्ञातः स्वात्मसाक्षात्कारस्योपकरोतीति । अस्त्वेवम् । तथापि शतपथे आत्मा वा अरे द्रष्टव्य इति श्रूयते । शाखान्तरे साक्षात्कर्तव्य इति । तच्चोभयमप्ययुक्तम् । निदिध्यासनप्रवृत्त्यैव साक्षात्कारसम्भवे तस्य प्रयत्नान्तरासाध्यत्वेन फलैकरूपतया च विधानायोगात् । कृतिसाध्येष्टसाधनत्वस्य च विध्यर्थत्वात् । अत एव यागविध्यनन्तरं नापूर्वविधिः यागानुष्ठानेनैव तत्सिद्धेरिति । मैवम् । आत्मा वा अरे द्रष्टव्य इत्येव दर्शनस्येष्टसाधनत्वमाह । कृतिसाध्यत्वं तु कथं तस्य दर्शनस्येत्याकाङ्क्षायां निदिध्यासितव्य इति । निदिध्यासनं च आसनप्राणायामप्रत्याहारधारणाध्यानसमाधियमनियमरूपाष्टाङ्गयोगेन चिरनिरन्तरादरसेवितेन परमपुरुषीयचित्तसन्तानरूपम् । एतच्च

सङ्गस्तु कस्य नाश्रद्धामलक्षालनं विना सम्भवतीति तदर्थं श्रुत्यात्मस्थिरीकरणाय मन्तव्य इति द्वितीयप्रतिपत्तेरानुमानिक्या विधानम् । सापि च धर्मिज्ञानसाध्येति । श्रवणसाक्षात्कृतवेदप्रभवायाः प्रथमप्रतिपत्तेर्विधानं श्रोतव्य इति । तथा चेष्टसाधनत्वं प्रतिपत्तिचतुष्टयस्यैव । कृतिसाध्यत्वं तु चतुर्थप्रतिपत्तेस्तृतीयप्रतिपत्तिद्वारेति तदुपपत्तये तत्साधनसमाधौ तृतीयप्रतिपत्तौ च तत उत्पन्नायां साक्षात्काराय चिन्तामेवं तनोतीति सर्वं सुस्थम् ॥

ननु भेदधीः श्रुतिबाधिकेति यदुक्तं तत्र को भेदः । स्वरूपमन्योन्याभावो वैधर्म्यमन्यद्वा । आद्ये घटः पटो नेत्यत्र पटः स्वभेदे विशेषणमुपलक्षणं वा । अत्र नाद्यः । पटविशेषितभेदात्मकत्वे घटस्य स्वात्मकभेदविशेषणीभूतपटात्मकता वज्रलेपायितैवेति । घटपटयोरभेद एव पटाद् भेदो घटस्य स्वरूपमिति धियाऽभावः प्रमित इति तद्विरोधेन पटाद्भिन्नो घट इति धिया विशेषणीभूतभेदजन्यया घटपटयोर्भेदो न प्रज्ञापणीयः उपजीव्यविरोधात् । तदुक्तम् ।

अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा ।
तथा चाद्ये प्रमा सा स्यान्नान्त्ये स्वापेक्ष्यवैशसात् ॥ [1] इति ।

आद्ये ऽभेदे । अन्त्ये भेदे । अथ घटो भेदमात्रात्मक एव । किं तु तेन तेन पटादिना प्रतियोगिना निरूप्यमाणः स्वस्मिंस्तत्तद्भिन्नधियं जनयतीति चेत् । पटप्रतियोगिकत्वं घटस्य स्वरूपं चेत् तदा पूर्ववद्घटपटयोरभेदः स्यात् । यदि तु तद्धर्मस्तदा घटः पटवान् स्यात् पटघटितपटप्रतियोगि-

(१) आद्ये अभेदे सा धीः प्रमा नान्त्ये भेदे स्वस्य भेदग्रहस्यापेक्ष्य उपजीव्योऽभेदग्रहस्तद्वैशस्मात् तद्विरोधादित्यर्थः ।

कत्ववत्त्वात् । एवं पटोऽपीति । किञ्च स्वरूपस्यावधिशून्यत्वेन घटो घटाद्भिन्न इत्यवधिघटितार्थधीर्न स्याच्च भिन्न इति । न हि स एव तद्वान् भवतीति । न च पटप्रतीतेर्विशिष्टघटप्रतीतिकारणतया पटादितीयं पञ्चमी । पटाद्भिन्न इत्यत्र हि भेदावधौ पञ्चमी । न तु विशिष्टधीहेतुभूतविशेषणधीविषये । अन्यथा विशिष्टधीहेतुर्निर्विकल्पकविषयतया घटत्वाद्घट इत्यपि स्यात् । उपलक्षणपक्षस्त्वतिप्रसङ्गान्निरस्तः । अन्योन्याभावस्तु भेदो दुर्निर्वचः । तथाहि स हि घटपटोभयतादात्म्यप्रतियोगिको न सम्भवति अत्यन्तासत्प्रतियोगिकतापत्तेः । नापि घटे पटतादात्म्यप्रतियोगिक एवं पटेऽपीति घटे पटतादात्म्याभावस्य व्यधिकरणाभावत्वेन संसर्गाभावत्वात् । वैधर्म्यमपि न भेदः तत्रापि वैधर्म्यान्तरस्य सत्त्वेऽनवस्थापत्तेरननुभवाच्च । असत्त्वे च वैधर्म्याणामभेदाद्धिधर्मणामप्यभेदे जगदभेद एव स्यात् । अपि चास्तु यः कोऽपि भेदः सोऽपि नाभिन्ने निविशते विरोधात् । किञ्चाभिन्ने भेदप्रवेशे एकाभावेनैकमपि न स्यात् तस्यैकसमूहत्वात् । नापि भिन्ने । एवं सति हि सोऽपि भिन्ने सोऽपि च भिन्ने इत्येकस्मिन्नेव घटे नियतायुषि क्रमेण तत्तद्भेदालिङ्गनमयुक्तम् । किञ्च विधेयीभूतभेदफलमधिकरणावच्छेदकीभूतभेदेनैव स्यादिति विधेयीभूतभेदधाराविलोपः स्यात् । अयमेव प्राग्लोप इहोक्तः । अथानन्ता भेदा अपि क्रमेणैव घटमालिङ्गन्ति तदा किं भेदविशिष्टे किं भेदवृत्तिरित्यशक्यावधारणम् । इदमेव चाविनिगम्यत्वम् । अपि च भिन्नबुद्धेरेकेनैव भेदेनोपपत्तावनन्तभेदकल्पने मानाभावः । अयमेव प्रमाणापगमः । तदुक्तम् ।

प्राग्लोपाविनिगम्यत्वप्रमाणापगमैर्भवेत् ।
अनवस्थितिमास्थातुरचिकित्स्यत्रिदोषता [१] ॥ इति ।

अथानवस्थाभयात् द्वितीयो भेदो धर्मिस्वरूपमेवोच्यते । तदा धर्मिस्वरूपं निःस्वरूपमेव स्यात् स्वरूपव्यावृत्त्यात्मकभेदात्मकत्वात् । अथ धर्मात्मको भेदः स्वरूपविशेषव्यावृत्तिर्न तु स्वरूपसामान्यव्यावृत्तिः तदा द्वावपि घटपटादिरूपौ भेदिनौ स्वरूपसामान्यरूपतयाऽभिन्नौ स्याताम् । किञ्च भेदः स्वप्रतियोगिस्वानुयोगिस्वधर्मस्वसम्बन्धैः समं यदि भेदान्तरेण भिद्येत तदानवस्था न चेत्तर्हि अद्वैतमेव ।

तदद्वैतश्रुतेस्तावद्बाधः प्रत्यक्षतः क्षतः ।
नानुमानादि तं कर्तुं तवापि क्षमते मते [२] ॥
अद्वैतागमनासीरे साधु सा धुन्वती परान् ।
सेवामेवार्जयत्यर्थापत्तिपत्तिपरम्परा [३] ॥

अद्वैतश्रुतयश्च वर्णपदादिभेदेनाविद्यकेनाद्वैतं पारमार्थिकं प्रतिपादयन्त्योऽपि न तेन दुर्बलेन बाध्यन्ते । तस्मात्

पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः ।
बाधनादुपजीव्येन विभेति न मनागपि [४] ॥

---

(१) तृतीयाविभक्त्यर्थः प्रयोज्यत्वम् । तथा च प्राग्लोपादिप्रयोज्या त्रिदोषतेत्यर्थः। अभिन्नत्वं वा अर्थः। तथा च प्राग्लोपाद्यभिन्ना त्रिदोषतेत्यर्थः ।

(२) प्रत्यक्षविषयाभावात् प्रत्यक्षबाधो न सम्भवतीत्युपसंहरति तदद्वैतेति । नानुमानादीति । अनुमानापेक्षया आगमस्य बलवत्त्वात् । अन्यथा नरशिरः कपालं शुचि प्राण्यङ्गत्वादित्याद्यप्यवकाशमासादयेत् ।

(३) अर्थापत्ते स्वपक्षानुकूलत्वमुक्त स्मारयति अद्वैतेति । अद्वैतागमस्य नासीरे पुरतः सा अर्थापत्ति परान् विरोधिनः प्रमाणाभासान् धुन्वती निराकुर्वन्ती सेवामानुकूल्यमर्जयति भजते ।

(४) श्रुतिः पारमार्थिकमद्वैतं शरणं प्रविश्य उपजीव्येन बाधनात् मनागपि ईषदपि न बिभेतीत्यन्वयः ।

श्रुतिजन्यत्वस्याप्याविद्यकत्वान्न ब्रह्माद्वैतधियो नित्यत्वविरोधः । तस्मात्

आपाततो यदिदमद्वयवादिनीनाम्
अद्वैतमाकलितमर्थतया श्रुतीनाम् ।
तत्स्वप्रकाशपरमार्थचिदेव भूत्वा
निष्पीडितादहह निर्वहते विचारात् (१) ॥ इति ।

अत्रोच्यते । यथायथं तावत्त्रयो भेदाः । तथाहि स्वरूपं तावद्भेदः भिद्यते व्यावर्त्यते अभेदधीविरोधिधीविषयीक्रियते ऽनेनेति व्युत्पत्तेः । स्वात्मना च पटस्तथा क्रियत एव अतो न स्वरूपस्य भेदत्वं पारिभाषिकं वैधर्म्यान्योन्याभाववत् स्वरूपे ऽपि व्युत्पन्नत्वात् । अत एवात्मतत्त्वविवेके । त्रीनपि भेदानाचार्या आहुः । ननु स्वरूपभेदवत्ता स्वरूपस्य न सम्भवत्यभेदात् । न हि स एव तद्वांस्तेनैव भवतीति चेत् । माभूत् । न हि स्वरूपभेदवतस्तेन भेदवत्त्वां ब्रूमः । किं तु प्रतियोग्यपेक्षविलक्षणधीविषयतामात्रम् । प्रतियोगित्वाभिमताभेदारोपविरोधिधीपर्यालोचननिबन्धनस्तत्र घटाद्भिन्नः पट इत्यादिः प्रतिभासः । तथा च स्वरूपभेदस्थले अभेदं नोल्लिखन्ती धीरित्यादि यदुक्तम् । तदयुक्तम् । न हि तत्र भेदो वा भिन्नता वा चकास्ति । किं तु भेदान्तरमन्तरेणैव विलक्षणधीमात्रं तत्रोदेति । तदुक्तम् । किञ्चिद्धि वस्तु स्वत एव विलक्षणमिनि । यद्वा घटादिव्यक्तेः पटादिसाकाङ्क्षत्वमेव तद्भेदत्वम् । यद्यपि घटादिव्यक्तिर्न स्वरूपेण पटा-

---

(१) अद्वयवादिनीनां श्रुतिनां यदिदमद्वैत आपाततोऽर्थतया आकलितम् विचारितम् तत्स्वप्रकाशचिद्रूपमेव भूत्वा निष्पीडितात् शोधितात् विचाराग्निर्वहते निर्वाह प्राप्नोतीत्यन्वय. ।

दिसाकाङ्क्षा । तथापि तत्प्रतियोगिको भेदो भवन्ती तत्साकाङ्क्षैव । प्रतियोगित्वं च पटादेः भेदत्वप्रकारकघटादिधीकारणीभूतधीविशेषविषयत्वम् । अन्योन्याभावस्तु यद्यपि तदात्मीभवतोर्घटपटयोर्नाभावौ । नापि तयोस्तादात्म्यस्याभावोऽसौ येनात्यन्तासत्प्रतियोगिकः स्यात् । नाप्यतदात्मीभवनोः । येन स्तम्भः पिशाचो न भवतीत्यत्र तस्यैकस्यैकमेव ज्ञानं स्तम्भे प्रत्यक्षं पिशाचे चाप्रत्यक्षमापद्येत । नापि घटे पटतादात्म्यस्याभावो येन संसर्गाभावः स्यात् । किं तु घटः पट इत्यारोपशरीरम् । एव च घटे पटत्वारोपः तथैवानुभवात् । निषेधस्तु पटस्यैव तस्यैव सामानाधिकरण्येनान्वयात् । वैयधिकरण्येन तु तदन्वये घटे पटो न घटे पटत्वं नेति बाधधीः स्यात् । तस्मादभावाधिकरणे प्रतियोगितावच्छेदकं धर्ममारोप्य यो निषेधः प्रतीयते सोऽन्योन्याभाव इति विज्ञेयम् । ननु धर्म आरोप्यते धर्मी निषिध्यत इति दुर्घटम् । आरोपितस्यानिषेधान्निषेध्यस्य चानारोपादिति चेन्न । आरोपे निषेधबुद्धौ च घटपटयोर्भानमित्यनुभवसिद्धम् । किं त्वनुभववैचित्र्यादारोपो धर्मप्राधान्येन । निषेधस्तु धर्मिप्राधान्येन तथैवानुभवादिति दिक् । वैधर्म्येषु वैधर्म्योपगमेऽनवस्था न दोषाय प्रामाणिकत्वात् तत्र स्वरूपभेदेन भिन्नधीसम्भवाद्वेति ॥

यत्तु भेदो भिन्ने निविशत इत्यादि । तत्तुच्छम् । तस्य नित्यसमाप्रपञ्चत्वात् । न हि तद्भेदविशिष्टे तद्भेदवृत्तिं नाप्यभिन्ने भेदवृत्तिं ब्रूमः । किं तु भेदोपलक्षिते भेदवृत्तेर्मयोपगमात् । किञ्च यदा यत्र भेदो वर्तते तत्तदा तद्भेदवदेव तत्पूर्वं तु नास्त्येव । न हि गौर्गोत्वादिशून्यः

क्षणमपि जातेर्जातसम्बन्धत्वात् अन्योन्याभावस्य स्वरूपभेदस्य च तत्समत्वात् स्वरूपभेदस्य पिण्डे निवेशानुपगमाच्च । एतेन प्राग्लोपेत्यादि खण्डितम् अप्रसक्तत्वात् । नूनं किं गवि गोत्वमुताऽगवीति वदता धर्मधर्मिभाववैरिणा बौद्धेन शिक्षितोऽसि यदीदृशान्यसाराणि प्रलपसि । धर्मधर्मिभाव एव मह्यं न रोचत इति चेत् । नूनमज्ञोऽसि यदभिन्नं प्रतिजानीषे धर्मधर्मिभावं त्वपजानीषे इति ।अभेदधर्मा हि धर्मी अभिन्न इति धर्मधर्मिभावाभावे क्वाभिन्नमिति । किञ्च भेदाभावे कथमभिन्न इति । न हि धर्मिमात्रम् नाप्यभेदमात्रमभिन्न इति । किं त्वभेदवानभिन्न इति । एवञ्चाभिन्नतापि भिन्नमुपजीव्यैव प्रवर्तते अभेदधर्मिणो भेदधियमन्तरेणाभिन्नताधियोऽसम्भवादिति । तस्मात्

अनुल्लिखन्ती भेदं धीर्नाभेदोल्लेखनक्षमा ।
तथा चाद्ये प्रमा सा स्यादन्त्ये स्वापेक्ष्यवैशसात् ॥ इति ।

त्वदुत्थापिता कृत्या त्वामेवाधाक्षीदिति । अथ निर्वचनानां सर्वेषामेव दोषवत्त्वे निर्वचनासिद्धावनिर्वचनतारूपो मत्पक्ष एव सिध्यतीति चेत् । निर्वचनमुपक्रम्य दोषमवेक्ष्यानिर्वचनीयतामाश्रयन् व्याघातमासादयन् ततस्त्वविभ्यत्त्वपेक्षणीयतामाभुवानो जड मैवं पुनर्वोचः । अन्योन्याभावात्यन्ताभावोऽभेदः तद्वति च तादात्म्यं वर्तत इति क्वात्माश्रय इति चेन्न । अन्योन्याभावात्यन्ताभावो हि घटत्वादिकं तदेव च तादात्म्यं तथा चात्माश्रय एव । अथ नाभेदेनावच्छिन्नेऽन्यो भेदो वर्तत इत्युच्यते तदा प्राग्लोपादिकं त्वदुक्तं त्वयि प्रहरतीति । अथाभेदो न धर्मिणो विशेषणम् किन्तु धर्मिणः

स्वरूपमेव त्वन्मते स्वरूपभेदवत्। तदा न हि स एव तद्धांस्तेनैव भवतीति स्वरूपभेदवदत्रापि दोषः। अथाभेदपक्षे धर्मितदभेदयोरप्यभेद एव। अन्यथा शतेनापि प्रमाणैरभेदे साध्यमानेऽप्यभेदो न स्यात्। अभेदतद्धर्मिणोर्वज्रलेपत्वादिति चेत्। मासैत्सीदभेदः किन्नश्छिन्नम्। अभेदोपलक्षितेऽभेदो वर्तत इति चेत्। क उपलक्षणार्थः। गवि गोत्वमित्यत्र यः तत्रैव कः। न हि गोत्वेनोपलक्षणानन्तरं गोत्ववृत्तिस्तत्र भवतीति चेत्। मैवम्। यो हि पिण्डो गोत्वेनैव विशिष्यते तत्र विशेष्यभागे गोत्ववृत्तिरित्येवोपलक्षितवृत्त्यर्थः। एवमभेदे चेदेवं भेदेऽपीति। यदपि च किञ्च भेद इत्यादि। तदप्यसत्। अनवस्थायाः प्रामाणिकत्वात्। एवञ्च भेदप्रत्ययस्य भेदालम्बनत्वे समर्थिते तदद्वैतश्रुतेरित्याद्यपि निरस्तम्। अर्थापत्तेस्त्वद्वैतागमोपकारकता प्रागेवापास्ता। यत्तु पारमार्थिकमद्वैतमित्यादि। तदप्यसत्। तस्य पारमार्थिकत्वे बीजाभावात्। अत एवापातत इत्युपसंहारो व्यपास्तः अद्वैतस्य योग्यताज्ञानविरहेण श्रुत्यापि प्रतिपादनायोगादिति। यत्तु तर्केण नैषा बुद्धिरपनेयेति श्रुतिराहेत्युक्तम्। तदपि नाद्वैतसिद्धौ प्रमाणं स्त्रियश्च धर्मप्रसेविका इतिवत्। तादृशभावनस्य मोक्षानुकूलत्वेऽपि तादृशवस्तुतत्त्वस्यासिद्धेरभेदधीप्रतिपादनमात्रस्य श्रुत्युपदिष्टत्वात्॥

अथैयता प्रबन्धेन प्राधान्येन स्वमतं व्यवस्थाप्येदानीं तैर्थिकमतानि खण्डयितुं खण्डनयुक्तीः प्रयोक्ष्यमाणः जल्पे तु स्थापनाघटिते तदवतारं कर्तुमशक्नुवानः जल्पस्त्वेका कथा न भवत्येव वितण्डाद्वयशरीरत्वात्। अन्यथा जल्पद्वयेनाप्येका कथा किमिति न भवतीति जल्पमेव

॥ श्रीः ॥

ॐ नम परमात्मने ।

# न्यायसिद्धान्तदीपः ।

श्रीशशधराचार्यविरचित' ।

श्रीशेषानन्ताचार्यविरचितया

न्यायसिद्धान्तदीपप्रभाख्यया टीकया

सहितः ।

ध्वंसितपरसिद्धान्त-
ध्वान्त गौतममतैकसिद्धान्तम् ।
नत्वा नित्यमधीशं
शशधरशर्मा प्रकाशयति ॥ १ ॥

श्रीगणेशाय नमः ।

दृष्ट्वा कौस्तुभदिव्यदर्पणमुरः सासूयमुत्क्षिप्तया
दृष्ट्या कामपि पूर्वपक्षरचनामालक्ष्य लक्ष्म्या हरेः ।
जीयासुः प्रतिवन्दिमुत्तरयितुं मुक्ता विवाहोत्सवे
तस्याः स्वप्रतिबिम्बचुम्बिनि कुचद्वन्द्वे कटाक्षच्छटाः॥१॥
स्तनकलशतटीपिपासुसूना-

वुदितपदे (१) परितोषयन्त्यपाङ्गैः ।
दलयतु दुरितानि तन्निनाद-
प्रमदविकम्पितकुण्डला मृडानी ॥ २ ॥
स्वप्रभूतप्रतापेन शेषक्लेशजिहीर्षया ।
जमदग्निकुले जज्ञे पद्मनाभः किल प्रभुः ॥ ३ ॥
संस्कारः पदलोचनोपनिषदामाश्चर्यकर्मोचितः
सत्कारः फणिरत्नसूचिशिखरप्रान्ते नटन्त्या भुवः ।
न्यक्कारो बलिनः कलेर्द्विजकुलप्राचीनपुण्याङ्कुर-
प्रस्तारः स हरेः सहस्रकरजिल्लीलावतारः परः ॥ ४ ॥
अलङ्करिष्यन् स महेन्द्रपीठ-
मुत्कण्ठया भक्तजनस्य भूयः ।
वियोक्ष्यमाणक्षितिखेदशान्त्यै
प्रतापनाम्नावतरं बभार ॥ ५ ॥
स्वर्गापवर्गफललग्नकजामदग्न्यो
यज्ञाशनैरपिहिताः स्वहितानुरागात् ।
तत्पूजनोपनिषदः कलिकालसिन्धौ
यः कर्णधार इव ताः पुनरुद्दधार ॥ ६ ॥
सदा सेव्यः स्वादुः परमऽचपलोल्लङ्घनलघुः

(१) न्यायसिद्धान्तदीपप्रभाख्यटीकाया आदर्शपुस्तकानि त्रीण्यत्र वर्तन्ते किन्त्वाद्यिम पद्य पुस्तकद्वये नास्तीति मङ्गलाचरणश्लोका एकस्मादेव पुस्तकान्मुद्रिताः तेषु प्राचीनत्वाल्लेखकदोषाद्वा क्वचित् दुष्पठान्यक्षराणि सङ्गत्या योजितानि । यथास्मिन्नेव श्लोके आदर्शपुस्तके "सूनकलशतटीत्तिपवासुवितपदे" इत्यत्र "स्तनकलशतटीपिपासुसूनावुदितपदे" इति । एव ४ श्लोके ऽपि "कार पितृप्तजनोपनिषदा" इत्यत्र "सस्कारः पदलोचनोपनिषदा" इति कल्पितमादर्शावलम्बेन गच्छता मयेति विद्वद्भिरादर्शान्तरसवादपूर्वकपाठेनानुग्राह्योऽहम् ।

श्रुतीनामध्वानं जलकलकलेनाऽविदलयन् ।
निबन्धो यस्योच्चैर्विविधविधिरत्नौघसुभगः
परीहासः सिन्धोरिव विशदबन्धो विजयते ॥ ७॥
साहित्यभक्तिरसरङ्गयदुक्तिभङ्गे
सद्यो निपातविधिना वसुधां विहाय ।
पातालसीमनि भुजङ्गसमर्पिताङ्गी
स्वर्गं सुधापि चकमे न पुनर्धरित्रीम् ॥ ८ ॥
ज्ञानाध्वानं शशधरकृतिव्याकृतिव्यक्तयुक्ति-
प्रत्यापन्नद्रढिमवपुषा न्यायतन्त्रेण सम्यक् ।
व्यक्तीकर्तुं सदुपकृतये स प्रतापावनीन्द्रः
शेषानन्तं प्रणयरुचिराध्येषणैर्निर्बबन्ध ॥ ९ ॥
सोऽयं शशधराचार्यकृतिव्याकृतिकैतवात् ।
सतः शार्ङ्गधरादिष्टपुष्टधीरुपतिष्ठते ॥ १० ॥
उचितमनुचितं वा कर्म निर्मातुमेकः
प्रभवति नरचञ्चा(१) सूत्रधारः स रामः ।
इति कृतिपुनरुक्तिं वक्तुमौचित्यनिष्ठा
तदपि गुरुकृपायामस्ति नः प्रत्ययोऽपि ॥ ११ ॥

विशिष्टशिष्टाचारानुमितश्रुत्युपदिष्टाभीष्टोपायताकमिष्टदेवतानमस्कारं शिष्यशिक्षायै निबध्नन् प्रेक्षावत्प्रवृत्त्यपेक्षितमनुबन्धचतुष्टयं सूचयन्नेव चिकीर्षितं प्रतिजानीते । ध्वंसितेत्यादिना । अत्र स्वस्य शशधरतानिर्वाहाय सम्भाविताशयदोषस्वोत्प्रेक्षामूलकताप्रयुक्तानादरनिवारणाय च प्रकाशयतीति । विशिष्य बोधयतीत्यर्थः । विषयादिविवक्षया स्वग्रन्थं प्रसिद्धानुबन्धचतुष्टयान्वीक्षिक्या सङ्गमयति । गौतमेत्यादिना । अत्र मत-

(१) नरचञ्चा तृणमयपुरुष. चञ्चा तृणमय. पुमानिति सिद्धान्तकौमुद्याम् ।

न्यायसिद्धान्तदीपोऽयं कथासु विजिगीषुभिः ।
धारणीयः प्रयत्नेन सत्तर्कस्नेहसुप्रभः ॥ २ ॥

पदस्य मतिबुद्धीति वर्तमानक्तान्तत्वे तद्योगे क्तस्य वर्तमाने इति षष्ठीप्रसङ्गात् तस्याश्च क्तेन च पूजायामिति समासनिषेधाद्भूतक्तान्तेन तेन सह तृतीया तस्याश्च समासः न च वर्तमानक्तेन बाधात् तद्विषये भूतक्तस्यैवासम्भवः । तेनेत्यनुवृत्तौ उपज्ञात इति पाणिनिनिर्देशात् तद्बाधज्ञापनात् । तथा च गौतमेन युक्तिभिरनुचिन्तितं मुख्यं सिद्धान्तमित्यर्थः । एकपदेन मुख्यत्वोत्कीर्तनम् । अस्यैवोपादानं बीजप्रदर्शनाय । यद्यप्यभ्युपगमगर्भसिद्धान्तपदार्थपर्यालोचनया मतपदमनर्थकम् तथापि पृथक्विशेषणपदसमवधाने विशिष्टपदानां विशेष्यमात्रपरतायाः स कीचकैर्मारुतपूर्णरन्ध्रैरित्यादौ व्युत्पन्नत्वात् सिद्धान्तपदमर्थमात्रपरं द्रष्टव्यम् । प्रकाशने उपायं दर्शयन्नवान्तरप्रयोजनमाह । ध्वंसितेत्यादिना । ध्वंसितानि परप्रतिकूलाः सिद्धान्ता एव ध्वान्तानि यत्रेति क्रियाविशेषणम् । प्राचीनग्रन्थावगतमपि गौतमसिद्धान्ततत्त्वं मीमांसकादिसिद्धान्तसन्तमसावृततया न यथावत् प्रथत इति तन्निवारणाय युक्तोऽयमुद्योग इति भावः । नित्यं सदा ईशितव्यसमयमभिव्याप्येति यावत् । अधीशं विषयनियमशून्यतया सर्वाधिकैश्वर्यम् । तदनेन विशेषणद्वयेन सर्वदा सर्वेश्वरमित्युक्तं भवति(१) ॥

तत्त्वजिज्ञासूपादेयतामुक्त्वा विजिगीषूपादेयतामाह । न्यायसिद्धान्तेति । कथासु विषयभेदभिन्नासु जल्प-

(१) भवतीति नास्ति ६ पु० ।

**इह[1] तावदभीष्टकर्मणो निर्विघ्नसमाप्ति-मुद्दिश्य बहुशः प्रवर्तमाना विनायकार्चनद-**

वितण्डाव्यक्तिषु ॥

इह समाप्तीतराफलकत्वे सति समाप्त्यफलकत्वेन वैफल्यादननुष्ठेयत्वं विवक्षन् पूर्वपक्षी विश्वजिन्न्यायबल-लब्धस्वर्गफलकतया मङ्गलाचारयुक्तानामित्यादिस्मृतिबोधितविनिपाताभावफलकतया वा सम्भाव्यमानां विशेषणासिद्धिं सकलशिष्टसम्मतिप्रदर्शनव्याजेन परिहरन् भूमिकामारचयति । इह तावदित्यादिना । इह जगति । बुद्धिस्थमवान्तरवाक्यजातरचनारूपमभीष्टकर्मैव वेदमोर्थः । सप्तमी च निमित्ततायाम् । कर्मयोगवचनस्य प्रायिकत्वात् । तथा च समाप्तिमुद्दिश्य तज्जनकावान्तरवाक्यरचनानिमित्तमित्यर्थः । तावदभीष्टकर्मारम्भात् पूर्वम् । अत्राभीष्टकर्मणो निर्विघ्नं समाप्तिमुद्दिश्य मङ्गले प्रवर्तमाना[2] दृश्यन्ते प्रेक्षावन्त इति । विशेषविधिनाशेषनिषेधलाभात्[3] मङ्गलं न समाप्त्यन्यफलकं तत्कामनां विना प्रेक्षावद्भिः क्रियमाणत्वादिति फलितानुमानाद् विशेषणासिद्धिनिरासः । न च परकीयस्य तदन्यकामनाव्यतिरेकस्यासिद्धिः समाप्तिकामोऽहमिदं कुर्वे इति प्रयोगादेवार्थतस्तत्सिद्धेः। समाप्तिफलकत्वभ्रमवता समाप्त्यन्यकामनां विना क्रियमाणायां पुरुषप्रवृत्तौ व्यभिचारवारणायोक्तं प्रेक्षावन्त इति । तदसिद्धिनिरासाय च बहुश इति । अहरहः क्रिय-

(१) चिकीर्षितस्य वादग्रन्थरूपस्य न्यायप्रकरणस्य निर्विघ्नपरिसमाप्त्यर्थं बहिरेव मङ्गलं विधाय बुद्धिस्थं मङ्गलवादमवतारयति । इहेति । इति न्यायसिद्धान्तदीपस्य कोमलाख्यायां टीकायां विश्वनाथः ।

(२) प्रवृत्ता—पा ५ पु॰ । (३) विशेषलाभात्—पा॰ ६ पु॰ ।

माणविनायकार्चनादिपक्षत्वे बाधासिद्धी माभूतामिति मङ्गलपदम् । आदर्शदर्शनादिसाधारणमङ्गलपदार्थमात्रपक्षत्वे बाधासिद्धिप्रसङ्गादाह । विनायकार्चनेति । अत्र केचित् स्वरूपेणैव दध्यादेर्मङ्गलत्वे देशान्तरे स्वरूपसता तेन निर्विघ्नपरिसमाप्तिसम्भवात् तद्दर्शनस्पर्शनादिप्रवृत्तिभङ्गप्रसङ्गादादानमादिरिति व्याचक्षते । तदपरे प्रत्याचक्षते । तथा सति नमस्कारादिरपि न स्वरूपेण मङ्गलं स्यादपि तु तदनुष्ठानमेव । किं बहुना दण्डादिरपि न स्वरूपेण घटादौ कारणं स्यादपि त्वादीयमानदण्डत्वादिना । अतस्तुल्यन्यायतया दधित्वादिनैव रूपेण तेषां मङ्गलत्वमिति । तदसत् । तथा सति तुल्यन्यायतया विनायकस्यापि स्वरूपेणैव मङ्गलत्वप्रसङ्गेऽर्चनपदवैयर्थ्यापातात् ॥

अथोच्यते । अन्वयव्यतिरेकगम्या दण्डादेः कारणता गृह्णतां तदवच्छेदकदण्डत्वाद्यवच्छेदेन इह तु वैधी सा । विधिश्च विनायकार्चनाद्याचारानुमितो न विनायकादिकं कुर्यादिति किं तु विनायकमर्चयेदिति । तत्र कथमप्रकृत्यर्थे विनायके लिङिष्टसाधनता बोध्यतामिति तर्हि दध्यादिदर्शनस्पर्शनानुमितो(१) विधिः न दध्यादि कुर्यादिति किं तु दध्यादि पश्येदित्यादिः तत्र कथमप्रकृत्यर्थे दध्यादौ लिङिष्टसाधनता बोध्यतामिति समं समाधानम् । न च समाहारेतरेतरयोगद्वन्द्वपक्षयोर्नुम्द्विर्वचनप्रसङ्गे यथाश्रुतसाधुत्वानुपपत्तिः विनायकार्चनादिसहितो दधिदूर्वादिरिति मध्यमपदलोपितत्पुरुषेणोपपत्तेः । वस्तुतस्तु दधिदूर्वापदयोः

(१) दर्शनस्पर्शनाद्याचारानुमितो—पा० ६ पु० ।

धिदूर्वादौ मङ्गले दृश्यन्ते प्रेक्षावन्तः । तत्र मङ्गलस्य तद्विशेषस्य वा नमस्कारस्य प्रतिबन्धकदुरितायुत्सारणद्वाराऽभीष्टसमाप्तिं प्रति

---

स्वार्थविशिष्टदर्शनादिक्रियायां लक्षणैव । आदिपदं तु प्रभृत्यर्थकम् प्रकारार्थकं वेति नतिस्तुत्यादिसंग्रहः साधुत्वं च । आदानस्यादिपदार्थत्वे तु तत्संग्रहानुपपत्तिरिति द्रष्टव्यम् । एवं भूमिरचनाव्याजेन विशेषणासिद्धिमुद्धृत्य निर्विघ्नसमाप्तिकामनया शिष्टाचारविषयो ऽभीष्टसमाप्तिसाधनं न वेति विप्रतिपत्तौ समाप्तिफलकतयाशङ्क्यमानां विशेष्यासिद्धिं निरसितुमुपक्रमते । तत्रेति । समाप्तीतरफलाभावे सतीत्यर्थः । मङ्गलस्य निर्विघ्नसमाप्तिकामनया शिष्टाचारविषयस्य । मङ्गलं न समाप्तिहेतुस्तद्व्यभिचारादिति विवक्षिते ऽनुमानवाक्ये विशेषतात्पर्यग्राहकविरहे मङ्गलपदेनादर्शदर्शनादिसाधारणस्वार्थोपस्थितेस्तदंशे सिद्धिसाधनभयादाह । तद्विशेषस्य वा नमस्कारस्येति । मङ्गलत्वविशेषितस्येत्यर्थः । यद्वा मङ्गलपदार्थः प्रागुक्त एव । नत्वेत्युपनिबद्धाया नतेरेवाननुष्ठेयताप्रयोजकतया समाप्त्यनुपायत्वं वक्तुमुचितं न मङ्गलसामान्यस्यार्थान्तरत्वादित्यस्वरसात् तु तद्विशेषस्येत्यादि अर्थान्तरत्वसूचनायैव चायं स्वरूपानुवाद इति ध्येयम् । प्रतिबन्धकेति । न च प्रतिबन्धकदुरितोत्सारणस्यैव द्वारत्वादित्यादिपदानुपपत्तिः । अभावमात्रसाधारणस्योत्सारणपदस्य विशेषे ध्वंसे पर्यवसानाय प्रतियोगिभूतं प्रतिबन्धकदुरितम् आदिः कारणं यस्येत्यपेक्षितस्य बहुव्रीहेस्तदेकसाध्यत्वात् ।

**कथमुपायत्वं ग्राह्यम्। श्रुतेरिति चेत्। न तथाविधश्रुतेरनाकलनात्। शिष्टाचारात् तदनुमानमि-**

---

न चोत्सारणपदं ध्वंसार्थकमेव भावस्याभावोत्सारणस्वरूपमेवेत्यादि कुसुमाञ्जलिग्रन्थे ऽभावसामान्ये ऽपि प्रयोगदर्शनादिति भावः। यद्वा प्रभृत्यर्थकेनादिपदेन प्रतिबन्धकदुरितकारणसंग्रहः। रवीश्वरेण प्रागभावस्यापि विघ्नसंसर्गाभावत्वेन द्वारत्वाङ्गीकारात् तत्साध्यतायाश्च तत्कारणोत्सारणपर्यवसायित्वादिति ध्येयम्। अत्राभीष्टसमाप्त्युपायतया ग्राह्यत्वमात्रं लौकिककर्मसु प्रसिद्धं मङ्गले मङ्गलनिष्ठतया ग्राह्यत्वं वा समाप्त्युपायत्वमात्रे प्रतिषिध्यते। न तु प्रतिबन्धकेत्यादिविशिष्टं विशिष्टे वा अप्रसिद्धेः। तदुपादानं तु परपक्षोपपादनायैव। कथमिति। न कथञ्चिदित्यर्थः। न तावत् प्रत्यक्षेण नियमगर्भकारणताग्राहिणस्तस्य व्यभिचारादर्शनसापेक्षत्वादिह च नास्तिकादिकर्मसमाप्तौ तद्दर्शनात्। न च व्यभिचारनिश्चयो नास्त्येव तत्संशयश्च ग्राह्यसंशयपर्यवसन्नतया न प्रतिबन्धकोऽतिप्रसङ्गादिति वाच्यम्। तत्प्रत्यक्षे ऽन्वयव्यतिरेकाभ्यां तादृशस्यापि तस्य प्रतिबन्धकत्वात्। अत एव व्यभिचारज्ञानमात्रं व्याप्तिग्रहे प्रतिबन्धकमिति सिद्धान्तः। नाप्यनुमानेन अबाधितत्वनिश्चयस्य तत्सहकारिणोऽभावादिति भावः। ननु माग्राहि प्रत्यक्षानुमानाभ्यां श्रुत्या तु न कुतः योग्यतासंशयपर्यवसायिनस्तस्य तत्र तन्निश्चयवदनुकूलत्वादित्याशयेन शङ्कते। श्रुतेरिति। साऽध्यक्षानुमिता वेति विकल्प्याद्ये दोषमाह। तथाविधेति। द्वितीयं शङ्कते। शिष्टाचारादिति। विषयविषयिभावेन पक्षवृत्तेः शिष्टकृतेर्लिङ्गादित्यर्थः। तदनुमानमभीष्टसमाप्त्युपायताबोधकश्रुत्यनुमानम्। निर्विघ्नसमा

ति चेत् । न शिष्टाचारस्यानिर्वचनात् । तथाहि किं शिष्टाचारत्वं वेदप्रामाण्याभ्युपगन्तृपुरुषोत्पाद्यमानत्वं वा उद्देश्यत्वविशेषितमेतदेव वा एवम्भूतपुरुषेण वेदमूलकतया स्वीक्रियमाणत्वं वा वेदमूलकतया प्रमीयमाणत्वं वा वेदोपदि-

ष्टिकामनया शिष्टाचारविषये नत्यादौ वेदोपदिष्टाभीष्टोपायताकत्वानुमानस्यापि पक्षधर्मताबलाद्वेदोपदिष्टाभीष्टसमाप्त्युपायताकत्व एव पर्यवसानादेतादृशस्य वेदस्य तादृशशिष्टाचारोपदेष्टृत्वानुपपत्तेः । ननु कथमनुमेयश्रुतेः समाप्त्युपायत्वग्रहसंभवः आकाङ्क्षोत्थापकविभक्त्यादिसमभिव्याहारविशेषाप्रतीतौ शाब्दबोधानुपपत्तेः तत्प्रतीतेश्च तन्नियतलिङ्गाभावेनासम्भवादिति चेत् । न ब्रूमो वयमिदानीमिष्टोपायताबोधाय श्रुतिरनुमीयत इति किं तु प्रत्यक्षतादशायां यावद्बोधिका आसीत् तद्बोधितेष्टोपायताकत्वमात्रं स्वतन्त्रप्रमाणमूलकत्वेनेदानीन्तनेष्टोपायतानुमानस्याप्रामाण्यशङ्कानिरासायेति भावः । स्वरूपासिद्ध्यादिना हेतुं तावद् दूषयति । न शिष्टेति । तदेवोपपादयति । तथाहीत्यादिना । वेदेति । वेदत्वेन प्रामाण्य(१)मभ्युपगच्छता पुरुषेणोत्पाद्यमानत्वमित्यर्थः । तेनाग्निर्हिमस्य भेषजमित्यादेः प्रामाण्यमभ्युपगच्छता बौद्धेनोत्पाद्यमाने मण्डलीकरणादौ न व्यभिचारः । अभ्युपगमश्चास्वप्नः स्वारसिको विवक्षित इति न तमादाय पूर्वव्यभिचार इति भावः । तृतीये एवंभूतेत्यादिविशेषणवैयर्थ्यादपरितुष्यन्नाह । वेदमूलकतयेति । अत्रापि वेदमूलकता न वेदज्ञाप्य-

(१) प्रामाण्यव्याप्ति—पा ६ पु ।

ष्टहेतुभावक्रियावत्त्वं वा अन्यद्वा। नाद्यः तथाविधपुरुषक्रियमाणजलताडनस्य[1] शिष्टाचारत्वप्रसङ्गात्। तथा च तेनापि वेदानुमानं स्यात्। न द्वितीयः। घटादेरपि शिष्टाचारत्वप्रसङ्गात्। न तृतीयः। अवेदमूलकेऽपि वेदमूलकतया तथाविधभ्रान्तपुरुषस्य स्वीकारसम्भवेना-

तामात्रं निषेध्ये व्यभिचारात्। किं तु वेदोपदिष्टाभीष्टहेतुताकत्वमेव[2] तथा च कृतं प्रमीयमाणत्वेनेत्यरुचेराह। वेदोपदिष्टेति। कल्पितदूष्यदूषणशङ्कानिरासायाह। अन्यद्वेति। वेदप्रामाण्याभ्युपगमः पुरुषस्योपलक्षणमित्याश्रित्य दूषयति। तथाविधेति। यद्यपि विशेषणत्वं सम्भवदुक्तिकं विधिजनितकर्तव्यताबोधाप्रामाण्यसंशयाहितार्थसंशयसद्भावे प्रवृत्त्यभावेन तदाधायकाप्रामाण्यशङ्कानिवर्तकतया तद्बोधकवेदप्रामाण्याभ्युपगमस्याप्याचारप्रयोजकत्वात्। प्रमाणान्तरमूलकप्रवृत्तौ च वेदप्रामाण्याभ्युपगमस्याकिञ्चित्करत्वेन व्यभिचारशङ्काभावात् तथापि संस्कारे व्यभिचाराद्वेदप्रामाण्याभ्युपगमप्रयोज्यकृतिसाध्यत्वपर्यवसाने चतुर्थेन समानदोषत्वाच्चोपेक्षितम्। अस्तु तदपि लक्ष्यमत आह। तथा चेति। तत्रैव व्यभिचारप्रसङ्ग इत्यर्थः। घटादेरिति। तस्य जलाहरणादिप्रयोजनत्वेनोद्देश्यत्वादिति भावः। यद्यपि जलताडनादिकमपि अङ्गुलाद्यवादिप्रयोजनतयोद्देश्यमेव अन्यथा तत्र स्वतन्त्रप्रवृत्त्यनुपपत्तेरिति घटाद्युपन्यासवैयर्थ्यं तथाप्यशो-

(१) जलताडनादेरपि—पा· २ पु।

(२) वेदोपदिष्टाभीष्टोपायताकत्वमेव—पा· ६ पु।

तिव्यापकत्वात् । न तुरीयः[1] । प्रकृते तदसिद्धेः । तथाहि नमस्कारो वेदबोधिताभीष्टोपायताकः वेदमूलकतया प्रमीयमाणत्वादित्यत्र साध्यसमो हेतुः । अत एव न पञ्चमोपि । नान्त्यः । तदनिर्वचनात् । किं च शिष्टाचारत्वेनैव[2] तदनुमानसम्भवादलं तेन श्रुतिमनुमाय तयाभीष्टोपायतावगमकल्पनया । किं च मङ्गलस्या-

---

कवनिकान्यायेन तदभिधानमिति[3] मन्तव्यम् । तथाविधो वेदप्रामाण्याभ्युपगन्ता । अतिव्यापकत्वं व्यभिचारः । हेतुकृतमसिद्धिसामान्यं सन्दिग्धस्वरूपासिद्धौ विशेषे पर्यवसाययितुमाह । तथाहीत्यादि । पञ्चमे क्रियात्ववैयर्थ्यमपि द्रष्टव्यम् । साध्यमपि दूषयति । किञ्चेत्यादिना । समाप्त्युपायत्वाभ्युपगमे ऽपीति शेषः । तेनानुपायताभिनिविष्टस्य समाप्त्युपायतानुमानसम्भवाभिधानं विरुद्धमिति निरस्तम् । तदनुमानसम्भवादिति । समाप्त्युपायतानुमानसम्भवादित्यर्थः । हेतूच्छित्त्यापत्त्या विपक्षबाधकतर्केणाभीष्टोपायत्वे व्यापकतावधारणेन हेतौ तद्व्याप्यतासम्भवादिति भावः । अलं तेनेति । अभीष्टोपायत्वमात्रेण शिष्टाचारात्मकहेतूपपत्तेः । श्रुतिबोधितत्वविशेषणावच्छेदेन साध्यव्यापकताग्राहकविपक्षबाधकतर्काभावाद्विशिष्टे साध्ये हेतोरप्रयोजकत्वादिति भावः । उभयतो व्यभिचारेणोपायताबाधसंशये तदनुमानानुपपत्तिरपीत्याह । किं

---

(१) न चतुर्थ –पा॰ २ पु॰ । (२) शिष्टाचारेणैव–पा॰ २ पु॰ ।
(३) न्यायेनैतदभिधानम्–पा ६ पु॰ ।

भीष्टसमाप्तिं प्रति कारणत्वे कथं तद्व्यतिरेकेण प्रमत्तनास्तिकाद्यनुष्ठितसमाप्तिः[१]। कथं वा साङ्गे तस्मिन्ननुष्ठितेऽपि कार्यानुदयः। श्रौतात् साङ्गात् कर्मणः फलावश्यम्भावनियमात्[२]। अन्यथा फलव्यभिचारशङ्कया यागादौ निःशङ्क

चेति। तत्र व्यतिरेकव्यभिचारमाह। मङ्गलस्येति। ननु जन्मान्तरीयमङ्गलस्यायोग्यतया न व्यभिचारनिश्चयस्तत्र किं तु तत्संशयः स च ग्राह्यसंशयपर्यवशायीति न्यायानुकूल एवेत्यस्वरसादन्वयव्यभिचारमाह। कथं वेति। साङ्गे सकलाङ्गे। ननु सहकारिसाकल्ये कार्यानुदयासिद्धेस्तदसाकल्ये तु तत एवानुदयोपपत्तेर्नायमपि दोष इत्यत आह। श्रौतादिति। व्यङ्गकाम्यव्यवच्छेदायाह। साङ्गादिति। सकलाङ्गनिरूपितसाहित्यनिरूपकादित्यर्थः। चैत्यवन्दनादिव्यवच्छेदाय श्रौतादिति। श्रुत्यवगतेष्टसाधनताकादित्यर्थः। न च तदङ्गत्वाभिमते फलवत्प्रधानान्वयाभावेनानङ्गत्वात्साङ्गपदादेव तद्व्यवच्छेद इति वाच्यम्। उपकारकस्यैवाङ्गपदार्थत्वात्। न चानुष्ठिते[३] साङ्गे प्रयाजादौ व्यभिचारः। कर्मपदेन प्रधानकर्मण एव विवक्षितत्वात्[४]। न च श्रौतपदार्थान्तर्गतश्रुत्यवगतभागवैयर्थ्यम् श्रुत्या फलसाधनतयावगतादपि फलानवश्यं भावे तद्बोधकश्रुतिप्रामाण्यभङ्गप्रसङ्गरूपविपक्षबाधकतर्कसूचनार्थत्वात्। वस्तुतस्तु श्रौतात् साङ्गादित्यनेन श्रौतस्वाङ्गजातसहितादिति वि-

(१) प्रमत्ताद्यनुष्ठिताभीष्टसमाप्ति –पा २ पु।

(२) फलावश्यम्भावात्–पा० २ पु।

(३) प्रधाने–इत्यधिकम् ६ पु। (४) विवक्षणात्–पा ६ पु०।

न प्रवर्तेत । किं च किंनाम नमस्कारत्वं न तावद्विघ्ननिवारकत्वम् अदृष्टादावतिव्यापकत्वात् । नापि तद्वारणासाधारणकारणत्वम् अनुगतरूपापरिचये कारणत्वस्यैव दुर्ग्रहत्वात् मङ्गलमात्रसाधारणत्वाच्च । न च मङ्गलमात्रस्यैव नमस्कारत्वं तथाव्यवहाराभावात् । न च कायिकादित्रिकसाधारणजातिविशेष एव नमस्कारत्वं साङ्कर्यप्रसङ्गात् । एवं मङ्गलत्वम-

वच्छिन्नम् । अन्यथा लौकिकयावत्प्रतिबन्धकाभावरूपाङ्गवैकल्यात् साङ्गत्वाभावादेव फलानुदय इति परेण सुवचत्वात् । तथा च न श्रौतपदानर्थक्यमिति प्रतिभाति । कीर्तनादिस्थले व्यभिचारस्तु वक्ष्यत एवेति न तदर्थमिदानीं विशेषणप्रक्षेपो युज्यत इति । श्रौताङ्गसाकल्ये ऽपि लौकिकाङ्गवैकल्यात् कार्यानुदयसम्भवादप्रयोजकत्वमाशङ्क्याह । अन्यथेति । हेतुसाध्ये दूषयित्वावच्छेदकानिर्वचनेन पक्षं दूषयति । किं च नमस्कारत्वमित्यादिना अपि चेत्यनेन प्राक्तनेन ग्रन्थेन । अदृष्टादौ साधारणकारणेषु । तद्वारणेत्यादि पक्षतावच्छेदकं नमःपदप्रवृत्तिनिमित्तं वेति विकल्प्याद्ये दोषमाह । अनुगतेति । कायिकत्वादेः परस्परव्यभिचारात् नमस्कारत्वेन च तद्ग्रहे परस्पराश्रयत्वादिति (१) भावः । असाधारण्यस्य दुर्ग्रहतरत्वमेवकारार्थः । द्वितीय आह । मङ्गलमात्र इति । इष्टापत्तिं निरस्यति । न चेति । जातिविशेष इति । स च व्यवहारसाक्षिकतया सुपरिचय

(१) परस्पराश्रयप्रसङ्गादिति–पा॰ ६ पु॰ ।

प्यशक्यनिर्वचनं विघ्नोत्सारणासाधारणकारणत्वस्यानुगतरूपस्यानुपस्थितावपरिच्छेद्यत्वात् । न च श्रुतौ स्मृतौ वा मङ्गलशब्दाभिधेयं यत् तदेव मङ्गलं मङ्गलशब्दप्रवृत्तिनिमित्तस्यापि तदभिधेयत्वेन मङ्गलत्वप्रसङ्गात् । न च मङ्गलशब्दा-

एवेति भावः । साङ्कर्येति । तरुकरसंयोगघटपदतज्ज्ञानेषु नमस्कारत्वाव्याप्यैः संयोगत्वशब्दत्वज्ञानत्वादिभिः स्वानधिकरणनमस्कारेषु अव्याप्यस्य नमस्कारत्वस्य करशिरःसंयोगादौ तत्समाविष्टजातित्वाभ्युपगमे व्याप्यव्यापकभावानापन्नयोर्जात्योरसमावेशनियमभङ्गप्रसङ्गादिति भावः । अस्तु मङ्गलत्वं पक्षतावच्छेदकमत आह । एवमिति । नमस्कारत्ववदित्यर्थः । विघ्नोत्सारणेति । अनुगतकारणतावच्छेदकस्यानुपस्थितौ विघ्नोत्सारणासाधारणकारणत्वस्यापरिच्छेद्यत्वादित्यर्थः । छान्दसमतं निरस्यति । श्रुतौ स्मृतौ वेति । एकैकगर्भं लक्षणद्वयमेतत् । तत्रापि प्राथमिकस्मृतौ तदनभिधानप्रसङ्गभयादाह । श्रुताविति । न च मङ्गलस्य वेदमूलकतानुमानात् पूर्वं तत्र श्रुतौ मङ्गलशब्दाभिधेयत्वाऽसिद्धिः । सिद्धौ वा तद्वेदमूलकतया सिद्धसाधनमिति वाच्यम् । श्रुतौ मङ्गलशब्दाभिधेयत्वसिद्धावपि तद्बोधितेष्टोपायताया असिद्धेः । तदभिधेयत्वेनेति । व्यक्त्याकृतिजातयस्तु पदार्था इति सूत्रे प्रवृत्तिनिमित्तमात्रोपलक्षणत्वाज्जातिपदस्येति भावः । मङ्गलत्वप्रसङ्गादिति । तथा च तस्यापि पक्षतापत्तौ बाधासिद्धिप्रसङ्ग इति भावः । विशेष्यत्वेनाभिधेयविशेषणान्न दोष इत्याशङ्क्याह । न चेति । यद्यपि विशेष्यत्वं केवलान्वयित्वा-

भिधेयं विशेष्यं यत् तदेव मङ्गलम् । एताव-द्प्रतिसन्धानेऽपि मङ्गलव्यवहारात् । अन्यस्यापि विशेष्यत्वे सति मङ्गलशब्दाभिधेयत्वसम्भावनायां सन्दिग्धव्यभिचारात् । अपि च विघ्नव-

द्व्यावर्तकम् मङ्गलशब्दाभिधेयत्वे सति तदभिधेयविशेष्यत्वं तु प्रवृत्तिनिमित्तेऽपि मङ्गलत्वमितिप्रयोगे तस्यापि मङ्गलशब्दाभिधेयत्वे सति तदभिधेयव्यक्तिविशेष्यत्वात् तथापि मङ्गलशब्दाभिधाजन्यस्मृतौ विशेष्यत्वमित्यर्थो विवक्षितः। एतस्य मङ्गलपदप्रवृत्तिनिमित्तत्वेन तावत् तद्वत्तयाऽज्ञाते नत्यादौ मङ्गलपदप्रयोग इति तज्ज्ञानं वाच्यम् । तथा च तदन्तर्गतमङ्गलपदाभिधेयत्वस्यापि प्रवृत्तिनिमित्ततज्ज्ञानाधीनज्ञानत्वादनवस्थापत्तिरिति क्वचित्तदप्रतिसन्धानेऽपि मङ्गलव्यवहार इति वाच्यम् । तथा च कथं तत्प्रवृत्तिनिमित्तं स्यादित्यत आह । एतावदिति । नत्यादिकमपरेभ्यो(१) भिद्यते मङ्गलशब्दाभिधेयत्वे सति विशेष्यत्वादित्यनुमाने ऽभिधेयतावच्छेदकस्य विशिष्यानिर्णये नत्यादिभ्योऽन्यत्र साध्याभाववति हेतुभावाभावानिश्चयात् सन्दिग्धव्यभिचारितापीत्याह । अन्यस्यापीति । मङ्गलं न वेदबोधितकर्तव्यताकम् अनिश्चिताधिकारकर्तृकत्वाच्चतुरङ्गबलसंग्रहवदिति । प्रतिपक्षमप्याह । अपि चेति । नाशार्थिप्रवृत्तौ नाश्यवतोधिकारस्य प्रायश्चित्तस्थले क्लृप्तत्वादिति भावः । अधिकार इति भावे घञ् । ततः किं तदित्याह । तथा चाधिकारेति करणे ऽत्र घञ् । येन विशेषणेन विघ्ने नाधिकारस्तन्निश्चयं विनेत्यर्थः(२) । वैदिके कर्मण्य-

(१) मितरेभ्यो-पा ६ पु ।

(२) विघ्ने नाधिकारत्वनिश्चय विनेत्यर्थः-पा· ६ पु ।

तो नमस्कारादावधिकारः। तथा चाधिकारनि-श्चयं विना कथं प्रवृत्तिः। न चात्मनो विघ्नवत्त्व केनापि प्रमाणेन प्रथमत एव तेनावधारितम्। न च विघ्नज्ञानवतोऽधिकारित्वं संशयस्यापि ज्ञानत्वमस्त्येव तथा च विघ्नसंशये ऽप्यधिका-

---

धिकारनिश्चयं विनाऽप्रवृत्तेरिति भावः। हेत्वसिद्धिमुद्धरति। न चेति। दृष्टप्रतिबन्धकाभावे ऽपि प्रतिबद्धकार्यत्वादिना तन्निश्चयमाशङ्क्याह। प्रथमत इति। श्रेयांसि बहुविघ्नानीत्यादिना तमाशङ्क्याह। प्रमाणेनावधारितमिति। प्रमत्तादिकर्मणि व्यभिचारेणास्य सम्भवमात्रपरत्वादिति भावः। ननु न विघ्नवत्त्वेनाधिकारः किं तु विघ्नज्ञानवत्त्वेन संशयनिश्चयसाधारणविघ्नज्ञानवच्छिष्टाचारानुमितश्रुत्या तथैव बोधनात्। स्वप्रवृत्तितया प्रधानप्रवृत्तिजननद्वारा फलनिर्वाहकत्वाच्च। तच्चेह संशयरूपं मनसा सुनिश्चयमेव कामनावदिति असिद्धो हेतुरित्याशङ्क्याह। न च विघ्नज्ञानवत इति। अधिकारित्वमधिकारः। स च स्ववृत्तिविघ्नज्ञानवतो न तन्निश्चयवतो न वा तद्वत इत्यर्थः। प्रायश्चित्तस्थले ऽपि नाश्यवतोधिकारोऽसम्प्रतिपन्न एवेति भावः। ननु ज्ञानमपि निश्चयपर्यवसन्नमेव उपस्थिते पुरोवर्तिनि उपस्थितविरुद्धनियतकोट्या संसर्गाग्रहरूपस्य संशयस्याज्ञानत्वादिति प्राभाकरशङ्कां निरस्यति। संशयस्यापीति। अधिकारेति। अधिकारस्याधिकारनिश्चयस्याविघातादित्यर्थः। यद्वा वैदिकप्रवृत्तावधिकारनिश्चयो न हेतुः प्रायश्चित्तादिषु नाश्यनिश्चयस्यैवाधिकारतया तन्निश्चयस्य हेतु-

राप्रच्यवात् प्रवृत्तिरुपपन्नैवेति वाच्यम्। एवं हि सति वस्तुतो निर्विघ्नेन विघ्नसंशयवता समारब्धान्मङ्गलात् फलोदयप्रसङ्गः। अधिकारिणा कृतस्य साङ्गस्य कर्मणः फलोपधाननियमादिति ॥

त्वाकल्पनात्। किं तु अधिकार एव स चेहाप्यविशिष्ट इति वैदिकप्रवृत्तेस्तत एवोपपत्तौ विपक्षबाधकाभावाद् प्रयोजको हेतुरित्येवंपरो ग्रन्थसन्दर्भः। तथा चाधिकारपदेन लक्षणा न च कामनारूपस्याधिकारस्य मनसा निश्चयात् प्रयोगपूर्वाङ्गके काम्ये वैदिकप्रवृत्तिदर्शनादन्यत्रापि तन्निश्चयस्य कारणत्वं युक्तम्। कामनाज्ञानस्य व्यभिचारेण पदप्रयोगेऽकारणत्वात्। प्रयोज्यमाणपदस्मृतौ सम्बन्धिसविकल्पकत्वेन हेतुतयाधिकारनिश्चयत्वेन कारणतानुपपादनाच्चेति द्रष्टव्यम्। विघ्नज्ञानस्य निश्चयसम्भवेऽपि नाधिकारत्वमिति विघ्नस्याधिकारत्वपरिशेषात् तस्य चानिश्चयान्नासिद्धिरित्याह। एवं हीति। यद्वा विघ्नज्ञानस्याधिकारत्वाभावादधिकारनिश्चयत्वेनैव प्रयोजकत्वं वाच्यम्। तथा च तेन रूपेण वैदिकप्रवृत्तिहेतुतासिद्धौ तद्व्यावृत्त्या वैदिकप्रवृत्त्यनुपपत्तेर्नाप्रयोजकत्वमित्याह। एवं हीति। वस्तुत इति स्वरूपानुवादमात्रम्। फलेति। विघ्नध्वंसविशिष्टसमाप्त्युदयप्रसङ्गः न चास्ति तथा ततो विघ्नध्वंसानुदयादिति भावः। अधिकारिणेति। न चानधिकृतकर्तृक(१)स्याधिकाररूपाङ्गवैकल्यात् साङ्गपदेनैव व्यावृत्तेरधिकारिपदवैयर्थ्यम्। अङ्गपदेन श्रौताङ्गस्य विवक्षणात्। कामनादेश्चाधिकारस्याविधेयतयाऽतथात्वादिति भावः ॥

(१) अनधिगतकर्तृक-पा॰ ५ पु॰।

**अत्रोच्यते । क्षीणदोषपुरुषत्वमेव शिष्ट-**

पूर्वपक्षिणोवधानाय सिद्धान्ताभिधानं प्रतिजानीते। अत्रेति। पूर्वपक्षे सिद्धान्त उच्यत इत्यर्थः। स्वरूपासिद्ध्युद्धाराय शिष्टाचारं लक्षयिष्यन् विशेषणीभूतशिष्टलक्षणमाह। क्षीणेति। पुरुषपदं कालव्यवच्छेदाय। न च सर्वाधिकरणत्वात् पुरुषत्वस्यापि तत्र वृत्तेर्दोषतादवस्थ्यम्। समवायवृत्त्या पुरुषत्वस्य लक्षणत्वात् काले तु पुरुषत्वस्य स्वरूपसम्बन्धविशेषेणैव वृत्तेः। बौद्धव्यवच्छेदाय क्षीणदोषेति। ननु क्षयो न तावत् प्रागभावः। यावत्कतिपयपक्षयोरसम्भवातिव्याप्तिप्रसङ्गात्। व्यधिकरणदोषप्रागभावस्य मन्वादावप्यभावात्(१) पाखण्डेष्वपि कतिपयतत्सत्त्वाच्च। अत एव न ध्वंसः नाप्यत्यन्ताभावः प्रतियोगिसमवायिदेशे यावत् तदत्यन्ताभावासम्भवात् व्यधिकरणतदत्यन्ताभावस्य पाखण्डसाधारणत्वात्। दोषाणामव्याप्यवृत्तितया तत्रापि तदत्यन्ताभावसम्भवेन यावत्पक्षाभ्युपगमेऽपि पाखण्डसाधारणत्वात्। नापि दोषवदन्योन्याभावः अन्योन्याभावस्य व्याप्यवृत्तितया प्राग्दोषवतो मन्वादेस्तदन्यत्वासम्भवात्। दोषपदस्य रागाद्यनेकार्थतया अन्यतमपदवैयर्थ्यं च तत्कथमिदं लक्षणमिति चेदत्राहुः। एकैकदोषगर्भस्य यावत् स्ववृत्तिरागध्वंसवदात्मत्वादेः (समानाधिकरणरागासमानकालीनरागध्वंसवदात्मत्वादेः (२) लक्षणत्रयस्यात्र विवक्षितत्वात् न दोष इति। अत्रेदृशस्य शिष्टपदार्थत्वे तेन तत्कार्यमुद्दिश्येति कथं न व्याहन्यते उद्देशस्य रागात्मनो यावत्स्ववृत्तिरागध्वंसवत्ययोगात्

(१) मन्वादावप्यसम्भवात्-पा० ६ पु०।

(२) ( ) एतन्मध्यस्थः पाठो नास्ति ६ पु०।

त्वम्। तथाभूतत्वं च मन्वादीनामेव सुप्रसिद्धम्। तदाचारत्वं च तेन परलोकानुकूलतया क्रियमाणत्वम् तेन प्रतिबन्धकदुरितवारणमुद्दिश्य क्रियमाणत्वं वा। अश्वमेधकारीर्यादौ च व्याप्तिः सुप्रसिद्धा। यत्कार्यं प्रति यस्य कारणत्वमन्वय-

तत्सत्त्वे च यावद्रागध्वंसाभावात् तस्यैव ध्वंसादिति चिन्त्यम्। तस्मादिह मोह एव दोषपदेन विवक्षितः। शेषं पूर्ववदेवेति द्रष्टव्यम्। लक्षणस्यासम्भवं निरस्यति। तथाभूतत्वं चेति। उत्पन्नतत्त्वसाक्षात्कारत्वादिति भावः। तदीयलौकिकाचारे व्यभिचारं व्यावर्तयन्नाचारं लक्षयति। तदाचारत्वं चेति। चस्त्वर्थे। परलोकपदस्य स्वर्गनरकान्यतरमात्रे प्रसिद्धेरसिद्धिमाशङ्क्याह। तेन प्रतिबन्धकेति। दाहप्रतिबन्धकमणिवारणोद्देशेन क्रियमाणे मुद्गरप्रहारादौ व्यभिचारादाह। दुरितेति। उद्देश्यवारणार्हतां दुरितस्योपपादयितुं प्रतिबन्धकपदं न हेतुप्रविष्टम्। उभयत्र व्याप्यत्वासिद्धिशङ्कां परिहरति। अश्वमेधेति। पूर्वस्याश्वमेधादावुत्तरस्य कारीर्यादावित्यर्थः। ननु वाशब्दस्य विकल्पार्थत्वे क्रमेण कारीर्याश्वमेधयोरेवाव्याप्तिः समुच्चयार्थत्वेऽप्रसिद्धिरिति अस्वरसादाह। यत्कार्यं प्रतीति। लिप्यादेर्लौकिकस्य समाप्तिकारणत्वमन्वयव्यतिरेकोपजीवनेनग्राह्यमेवेत्यसिद्धिवारणाय यस्येति। अन्वयव्यतिरेकौ चात्र शब्दानुपजीविनौ विवक्षितौ तेन मङ्गलस्य समाप्तौ शब्दोपजीव्यन्वयव्यतिरेकग्राह्यकारणताकत्वेऽपि नासिद्धिः। एतच्च मण्डलीकरणधूर्तपरिकल्पितौषधधारणादिसाधारणमिति शिष्टपदम्। नन्विदं शिष्टाचारत्वनिर्वचनमनुमानो-

व्यतिरेकोपजीवनेन गृह्यते तत्कार्यमुद्दिश्य शि-ष्टेन क्रियमाणत्वमेव शिष्टाचारत्वम्। एवमन्य-दप्यूहनीयम्। न च शिष्टाचारत्वेनैव नमस्का-रादीनामभीष्टसमाप्त्युपायतानुमानसम्भवे कि-मिति तदर्थं श्रुतिकल्पनमिति युक्तम् व्याप्ति-बलेन श्रुतेः कल्पनात्। तथाभूताचारस्य श्रुति-

पयोगि व्यवहारोपयोगि वा। नाद्यः मन्वाद्याचारादर्शि-नामस्मदाद्याचारेण श्रुत्यनुमानानापत्तेः। न च तदनुमिता-न्मन्वाद्याचारादेव श्रुत्यनुमानं तत्रापि शिष्टत्वविशेषणे ऽसिद्धेः। अन्यथा मण्डलीकरणादौ व्यभिचारात्। अव्य-भिचारे वा तत एव श्रुत्यनुमानसम्भवेऽनुमितानुमानस्य शिष्टनिर्वचनस्य च वैयर्थ्यात्। नान्त्यः इदानीन्तनशिष्टा-चारेष्वव्याप्तेः मन्वादेरपि क्षीणदोषत्वे मानाभावेनास-म्भवाच्च। न च स्मृतिकर्तृत्वान्यथानुपपत्तिसिद्धं सार्वज्ञ्य-मेव मानमिति वाच्यम्। साङ्गमीमांसाध्ययनसमासादि-तव्युत्पत्तिविशेषसध्रीचीनवेदानुसन्धानजन्मनोऽर्थावगमा-देव स्मृतिकर्तृत्वोपपत्तेरप्रयोजकत्वादित्यस्वरसादाह। एवमन्यदिति। वेदाप्रामाण्याभ्युपगमासम्भाविताविगी-ताचारत्वभ्रमाजन्यपरलोकोद्देश्यकाचारत्वादिकमित्यर्थः। अत्राद्ये भोजनादिव्युदासाय पूर्वभागः। रात्रिश्राद्धादि-व्युदासायोत्तरभागः। द्वितीये चैत्यवन्दनादिव्युदासाय पू-र्वभागः। भोजनादिव्युदासायोत्तरभागः। अप्रयोजकत्व-मुक्तं निरस्यति। न च शिष्टाचारत्वेनेति। तदर्थम् अभीष्टोपा-यताबोधार्थम्। व्याप्तिबलेनेति। तन्निश्चयबलेनेत्यर्थः। सैवा-सिद्धेत्यत आह। तथाभूतेति। निरुक्तशिष्टाचारस्येत्यर्थः।

व्याप्तत्वात् । न च प्रमत्ताद्यनुष्ठितकर्मसमाप्तौ व्यभिचारदर्शनात् तदकारणतैव मङ्गलस्येति युक्तम् । तत्रापि पूर्वजन्मकृततत्कारणत्वसेष्य-

श्रुतिव्याप्तत्वात् श्रुतिबोधिताभीष्टोपायताकत्वव्याप्तत्वात् । मूलभूतस्वतन्त्रप्रमाणानुपस्थितौ शिष्टाचारेन्धपरम्पराशङ्कयाभीष्टोपायतामात्रनिरूपितव्याप्तिनिश्चयानुपपत्तौ दृश्यमानसकलशिष्टव्यवहारलोपप्रसङ्गाद्धिशिष्टव्याप्तिरेष्टव्येति भावः । अत्रेदं चिन्त्यम् । पक्षे शिष्टाचारत्वं गृहीतमगृहीतं वा । आद्ये ऽभीष्टोपायत्वाभावे तत्प्रमाहेतुकस्य भ्रमाजन्याचारविशेषात्मनस्तस्योच्छिन्नत्त्यापत्त्या बाधकेनैवाभीष्टोपायताव्याप्यत्वग्रहसम्भवेन स्वार्थप्रमितये तत्प्रमात्वावधारणाय वा प्रमाणान्तरापेक्षा । न हि वह्निव्याप्यपक्षधर्मधूमज्ञानं वह्निमनुमापयदनाश्वासनिरासाय पर्वते वह्निसत्ताबोधिकां श्रुतिमपेक्षते कल्पितायामपि श्रुतावप्रामाण्यशङ्कानिरासस्यानुमानसाध्यत्वाच्च । द्वितीये तु स्वतन्त्रप्रमाणमूलकतासिद्धिरपीति व्यतिरेकव्यभिचारेण बाधमुद्धरति । न चेत्यादिना । तत्रापीति । नन्वेवमन्योन्याश्रयः । कार्यकारणभावग्रहे समाप्त्या तत्र मङ्गलानुमानं तत्र मङ्गलानुमानेन व्यभिचारनिरास इति चेत् न तत्र तदनुमाने ऽपि कारणताग्रहसम्भवात् । न च व्यभिचारग्रहात् तदसम्भवः । स हि न निश्चयः । ऐहिकामुष्मिकसाधारणमङ्गलमात्रव्यतिरेकस्य निश्चेतुमशक्यत्वात् । नापि संशयः । योग्यतासंशयपर्यवसायिनः तस्य श्रौतकारणताबोधाप्रतिबन्धकत्वात् । तदुक्तमाचार्यैः । निःप्रतिपन्थिश्रुत्या मङ्गलं समाप्तिसाधनमिति प्रमापिते तत्रा-

पि तेनैव लिङ्गेन जन्मान्तरीयतदनुमानादिति भावः। ननु नेदानीमध्यक्षा श्रुतिरस्ति या योग्यतासंशयसहकृता मङ्गले समाप्तिसाधनतां बोधयेत्। अनुमीयमाना तु सम्प्रति अबोधिकैवेति तत्र योग्यतासंशयसहायसम्पादनमन्धायादर्शदर्शनमेव। अथ प्रत्यक्षतावस्थायामेवायोग्यताप्रसक्तमबोधकत्वं योग्यतासंशयोपपादनेन निरस्यत इति मतम्। तथाप्यनुमानकाले वेदस्य मूकतया न प्रमत्तानुष्ठितसमाप्तौ मङ्गलकल्पकत्वमिति तत्र व्यभिचारसंशये ग्राह्येष्टसाधनतासंशयान्नेष्टोपायता न तरां तस्या वेदबोधितत्वमनुमीयेतेति शिष्टाचारविलयप्रसङ्गः। न च ग्राह्यसंशयो न प्रमाणपरियन्थी पक्षीयसाध्यसन्देहे व्यभिचारसन्देहात् सर्वोपसंहारेण व्याप्तिग्रहासम्भवात्। व्याप्तिग्रहात् पूर्वं विशेषदर्शनविरहकालीनव्यभिचारसन्देहस्य व्याप्तिग्रहप्रतिबन्धकत्वाभ्युपगमात्। साध्यव्यापकतासन्देहप्रयुक्तोपाधिसन्देहाहितव्यभिचारसन्देहस्याकिञ्चित्करत्वप्रसङ्गाच्च। क्षितिर्द्धिकर्तृका कार्यत्वादित्यादावप्रयोजकतायाः पक्षे व्यभिचारसन्देहपर्यवसन्नाया अनुद्भावनप्रसङ्गाच्च। न चैवं पक्षे तत्सन्देहादनुमानमात्रोच्छेदापत्तिः। तर्कविशेषदर्शनादिना तन्निरासे ऽनुमानसम्भवात्। न चेहाप्यनुकूलतर्केण तन्निरासः। मङ्गलासमवहितसामग्र्यजन्या समाप्तिः यदि मङ्गलासमवहितसामग्र्यजन्यत्वे सति मङ्गलसमवहितसामग्र्यजन्या स्यात् तर्ह्यजन्या स्यादित्यादेस्तर्कस्य पक्षापादकविशेषणासिद्ध्यान्यत्र निरासादिति चेत्। न मङ्गलं यदि समाप्तिफलकं न स्यात् तदा निर्विघ्नसमाप्तिकामनया शिष्टाचारविषयो न स्यात् इति तर्केण तत्संशयनिवृत्तावनुमानसम्भवात्। शाब्दज्ञाने संशयनिश्चयसाधारणयोग्यताज्ञानस्येवानुमितावपि तादृ-

माणत्वात् । यत्पुनरुक्तं कथं साङ्गे तस्मिन्ननुष्ठिते ऽपि कार्यानुदयः । श्रौतस्य साङ्गस्य कर्मणः फलोत्पत्तिनियमादिति । तदपि मन्दम् क्वचिद् विघ्नस्यैव प्रचुरतरत्वात् । अन्तरा विघ्नान्तरोत्पत्तेर्वा । विघ्नविरहदशायां कृतस्य नम-

शाबाधिततत्वज्ञानमात्रस्यैव हेतुत्वौचित्याच्च । एवं चानुमानादपि समाप्तिसाधनताबोधो निर्बाध एव । अत एव गङ्गेशचरणाः श्रुत्यनुमानाभ्यामित्यवोचन् । तर्कापाद्यगतशिष्टत्वग्रहश्च बहुशः प्रवर्तमाना इति सूचितया सकलशिष्टैकवाक्यतया । तर्कश्च विपर्ययपर्यवसानार्ह एवानुमानसहकारी न विपर्ययपर्यवसित इति नानुमानवैयर्थ्यमपीति द्रष्टव्यम् । अन्वयव्यभिचारेण बाधशङ्कां निरसितुमनुवदति । यत्पुनरित्यादिना । क्वचिदिति । मङ्गलाप्राचुर्यमेवकारार्थः । प्रायश्चित्ताद्यनष्टस्वसमसंख्यविघ्नविशिष्टाभीष्टसमाप्तौ तध्वंसद्वारा मङ्गलस्य कारणताभ्युपगमान्न तत्र व्यभिचारः । न वा सर्वज्ञस्यानध्यवसायः । वस्तुतः समसंख्यमङ्गलादेव तत्समाप्तिजननसम्भवात् पुरुषप्रवृत्तेश्च सम्भावनयैवोपपत्तेरिति भावः । सर्वे विघ्नाः शमं यान्तीत्यादेर्विनायकस्तवपाठादिमङ्गलविशेषार्थवादाद्विभ्यदाह । अन्तरेति । अत एवान्तरा विघ्नोत्पत्तिसंभावनया मध्ये ऽपि मङ्गलानुष्ठानं शिष्टानामिति भावः । वस्तुतो नानर्थक्यप्रसङ्गादर्थवादमात्रं तदिति पूर्वसमाधावेव तात्पर्यं द्रष्टव्यम् । नन्वेवमपि निर्विघ्नकृतमङ्गले व्यभिचारात् कथं कारणत्वग्रहः । विघ्नध्वंसरूपद्वारबाधेन द्वारिकारणताबाधावश्यम्भावादित्याशङ्कमानं प्रति किं यत्समाप्तिप्रति-

खण्डनकृत् प्रत्यादिदेश । यद्यपि जल्पे प्रथमकक्षायां स्थापनाकण्टकोद्धारः द्वितीयकक्षायान्तु प्रथमस्थापनाखण्डनं प्रतिस्थापना वेति न वितण्डाद्वयसम्भवः । तथापि अजहत्स्वार्थलक्षणया स्थापनैव स्वपक्षसिद्धिपरपक्षप्रतिषेधोभयधीपरा सत्प्रतिपक्षवदिति खण्डनार्थ इति प्राञ्चः ॥

आदौ प्रथमः स्थापयति ततो द्वितीयः खण्डयतीत्येका वितण्डा । ततो द्वितीयः स्थापयति ततः प्रथमः खण्डयतीत्यपरा वितण्डेति तु नव्याः ॥

अत्राहुः । परपक्षहननशक्तिमात्रजिज्ञासायां वितण्डा स्वपक्षरक्षणपरपक्षहननशक्तिजिज्ञासायां जल्प इत्यनयोर्भेदः । इतोऽधिका तु जिज्ञासैव न सम्भवति येन जल्पषृद्धयेनापि कथान्तरं स्यात् ॥

अथ खण्डनकृत् षोडशपदार्थीं खण्डयिष्यन् तत्र मूर्धन्यं प्रमाणं खण्डयितुं तदुपधायिकां प्रमामादौ खण्डयति स्म तत्त्वानुभूतिः प्रमेत्ययुक्तम् । तद्यथा । तत्त्वपदं यौगिकं रूढं वा । नाद्यः । तद्धि प्रकृतं न चात्र तदस्तिभवितुस्त्वशब्दार्थत्वाभावेन तत्प्रमायामव्याप्तेः । नान्त्यः । स्वरूपपर्यायतया भ्रान्तावतिव्याप्तेः । यत्र यदा यत् स्वरूपसत् तत्र तदा तदनुभूतिः प्रमेति चेन्न । देशकालप्रमयोरव्याप्तेः । देशे देशत्वं काले कालत्वमनुभूयत इति सापि धीः प्रमेति चेन्न । धर्मिप्रमायामव्याप्तेः । सा हि देशकालयोर्धर्मिणोर्न तु तत्त्वयोः । अनुभवत्वमपि न जातिः आगमेनानुमानेन वा भविष्यतोः सुखदुःखयोः प्रत्ययेऽपि सुखं दुःखं वानुभवामीति प्रतीतेरनुत्पत्तेः । नापि स्मृत्यन्यत्वमुपाधिः तयोरेव स्मृत्यन्यत्वप्रत्ययेऽप्यनुभवामीतिप्रत्ययानुदयात् । स्मृत्यन्यत्वे च लक्षणान्तरेण सिद्धे तेनै-

वेतरभेदसिद्धावस्य वैयर्थ्यात् । इत एव तत्सिद्धावात्माश्रयात् । असिद्धौ च स्वरूपासिद्धेरिति । उच्यते । यद्यस्य पारमार्थिकं रूपं तत्तस्य तत्त्वम् । यथा घटस्य घटत्वम् । तथा च तद्धर्मिणि तद्धर्मधीः प्रमेति लक्षणार्थः । तेन यत्र यदस्ति तत्र तस्यानुभवः प्रमेति निर्विकल्पकसविकल्पकोभयसङ्ग्राहकं लक्षणं पर्यवस्यति । यद्वा व्यवहारानङ्गत्वेन निर्विकल्पकं तिरस्कृत्य तदङ्गं विशिष्टप्रमामात्रं पुरस्कृत्य तद्वति तत्प्रकारकानुभवत्वमिति । न चाननुगमः । न ह्येकत्र प्रमा सर्वत्र प्रमा । किन्तु काचित् क्वचित् । तथा च किं ज्ञानं कुत्र प्रमेति जिज्ञासायामस्योत्थितावननुगमस्यादोषत्वात् । आकाशकालादिप्रमापि आकाशादौ तत्त्वधीत्वात् प्रमैव । ननु भविष्यद्रागे इदानीं श्यामे रक्तधीः प्रमा स्यात् । मैवम् । सा हीदानीं रागालम्बना वा भविष्यद्रागालम्बना वा कालास्पृष्टरागालम्बना वा । आद्ये इदानीं कालविशिष्टे रागो नास्तीति कुतः सा प्रमास्तु एतत्कालविशिष्टस्याधिकरणत्वात् तत्र च रागाभावात् । अन्त्ययोस्त्वनुमतिरेव । नन्वाद्यलक्षणे मूलावच्छेदेन तरौ कपिसंयुक्तधीः प्रमा स्यात् । न स्यात् । सा हि तरुः कपिसंयोगीति वा मूलावच्छिन्नस्तरुः कपिसंयोगी वा । आद्ये इष्टापत्तिः । अन्त्ये तत्र लक्षणमेव नास्ति । द्वितीयलक्षणस्थं तत्प्रकारकत्वन्तु न तद्रूपविशेषणज्ञानजन्यत्वमीश्वरप्रमायामव्याप्तेः । किन्तु तद्वैशिष्ट्यावगाहित्वम् । न च समवायस्यातीन्द्रियतया घटः पट इत्यादिप्रत्यक्षाव्याप्तिः न्यायमते तस्यापि प्रत्यक्षत्वोपगमादिति (१) । न च चलद्बलाहकसन्निहिते वस्तुतश्च-

(१) समवायस्य प्रत्यक्षत्वं समवायवादे 'प्रत्यक्षं समवायस्य विशेषणतया भवेदि'त्यादिकारिकायामपि प्रमाणीकृतम् ।

लति चन्द्रे चन्द्रश्चलतीति धीः प्रमा स्यादिति वाच्यम् । चन्द्रादिकर्मणोऽतीन्द्रियत्वेन सतोऽपि तस्यास्मदादिभिरग्रहणे बलाहककर्मण एव तत्रारोपाभ्युपगमात् । अनुभवत्वञ्च जातिरनुभवामीत्यनुगतमतिबलात् । न चैवं भविष्यत्सुखादावपि शब्दाद्यवगते सुखमनुभवामीति धीः स्यात् । इष्टापत्तेः । एवमपरोक्षकस्यापि स्यादिति चेत् । शब्देन भविष्यत्सुखं जानामीति तस्यापि प्रतीतिरेव । सुखदुःखानुभवो भोगमात्ररूप एवेति । मिथ्याधीदूषितान्तःकरणस्य तु दोषवशात् सुखमनुभवामीति धीर्नोदेतीति ॥

यत्तु अनुभवत्वं न जातिः प्रत्यभिज्ञायां धर्म्यंशे संस्कारेन्द्रिययोर्व्यापारात् तदंशज्ञाने स्मृतित्वानुभूतित्वयोः सङ्करादिति । तन्न । संस्कारेण स्मृत्योपनीयमानायास्तत्ताया धर्मीदन्ताग्राहिणेन्द्रियेण भानोपगमेनांशत्रयेऽपि प्रत्यभिज्ञायाः[१] साक्षात्त्वोपगमात् । न हि प्रत्यभिज्ञा ज्ञानद्वयमभेदासिद्ध्यापत्तेः । नापि ग्रहणस्मरणकरम्बिताकारमेकमुक्तसङ्करापत्तेः । नापि परोक्षापरोक्षानुभवाकारमेकं साक्षात्त्वस्यानुगतिमतिसिद्धाया जातेरव्याप्यवृत्तित्वापत्तेः । नापि स्मरणमात्राकारमेकमिदन्तायां संस्काराभावात् तस्मादुपनीततत्तासन्निकृष्टेदन्ताविशिष्टधर्मिग्राहीन्द्रियकरणकं साक्षात्कारीन्द्रियकरणकमेकं तदिति पश्यामः । तत्तायान्तु संस्कारघटिता इन्द्रियसम्बद्धविशेषणता प्रत्यासत्तिरिति निबन्धकृतः । तज्जनितस्मरणघटितेति वार्त्तिककृतः । अत्र तद्धेतोरेवेति न्यायात् प्रथम एव कल्पः श्रेयानिति केचित् । चिरध्वस्तानुभवस्य क्रमिकस्मरणं प्रति व्यापारत्वेन संस्कारकल्पनमिति धर्मि-

(१) जिज्ञासाया इति २ पुस्तके पाठः ।

ग्राहकप्रमाणेन स्मरणार्थमेव तस्य कल्पनात्। यथार्थोऽनुभवः प्रमेत्यपि निरवद्यं यथाशब्दोऽयमनतिवृत्तिवचनः। तेनानतिवृत्तोऽर्थो यस्येत्यर्थः। भ्रमार्थो ह्यतिवृत्तो भवति। प्रमार्थस्तु न तथा तस्मिन् घटत्वादौ घटादिषु सत्येव प्रमोदयात्। तेन घटत्ववति घटत्वप्रकारकोऽनुभवो घटप्रमेति तत्तत्प्रमितीनां लक्षणं तद्वति तत्प्रकारकत्वमिति तत्तत्सर्वलक्षणसूचनाय सामान्यलक्षणं तत्त्वस्यैकस्याभावात् प्रमात्वस्यापि विषयप्रकारभेदेन प्रतिव्यक्तिभिन्नत्वादिति। यत्तु द्यूतकारेण पाणौ पञ्च वराटकान् कृत्वा पृष्टस्य पञ्च वराटकास्त्वत्पाणौ सन्तीति अजाकृपाणीयन्यायेन संवादिवचनं तत्सम्भावनायोनि विप्रलिप्सायोनि वा। कारणाभावेन तत्र निश्चयमात्रस्यैवानुत्पत्तेः। उत्प्रेक्षासहितमनोजनितप्रमायोनि वा अनुमातुस्तृतीयलिङ्गपरामर्शाभासात्। वस्तुतो वह्निमति या वह्न्यनुमितिः प्रमाभूता सापि तद्व्याप्तिपक्षधर्मतावैशिष्ट्यावगाहिनो भगवज्ज्ञानरूपात् प्रमाणादिति न प्रमायाः प्रमाणातिपातः। एवं सम्यक् परिच्छित्तिः प्रमा समीचीनानुभूतिः विशेष्यावृत्त्यप्रकारिकानुभूतिरिति(२) यावत्। एतेनाव्यभिचार्यनुभवोऽविसंवाद्यनुभवो वा प्रमेति व्याख्यातम्। न चात्र भ्रमांशभूतप्रमायामव्याप्तिर्दोषः असङ्कीर्णप्रमाया एवात्र लक्ष्यत्वात्। अन्यथा अनुभूतिः प्रमेत्येतावतैव निर्वृणुयादिति। अनुगतैस्तु तैस्तैस्तत्तत्प्रमितीनां लक्षणैस्तास्ताः प्रमितय इतरेभ्यो भिद्यन्ते न तु सर्वा प्रमितिरेकदैव तत्तल्लक्षणानां प्रत्येकं भागासिद्धत्वात्॥

(२) तथा च स्वव्यधिकरणप्रकारनिष्ठप्रकारतानिरूपिता या या विशेष्यता तत्तदनिरूपकज्ञानत्वं फलितम्।

ननु लक्षणमेव पक्षतावच्छेदकमिह रूपान्तरस्यानभिधानात्। तथा च हेतुसाध्ययोः सामानाधिकरण्यबुद्धिरेव पक्षतावच्छेदकसाध्ययोः सामानाधिकरण्यधीः सा चानुमानफलमित्यनुमानमफलं स्यादिति चेन्न। अत्र व्यतिरेकसम्बन्धो गमकोऽन्वयसम्बन्धो गम्यत इति मत्सिद्धान्तात् । अत एवात्र व्यभिचारसम्बन्ध एवोपदर्श्यते ॥

एवं प्रमायां व्यवस्थितायां प्रमाणमपि स्ववचनं । प्रमायाः करणं हि प्रमाणं करणञ्च साधकतमं तमबर्थश्चातिशयः स च कारकान्तराचरितार्थकारकत्वम्। तथा हि कर्ता तावत् करणं हस्तपरश्वादि व्यापारयन् लिङ्गपरामर्शादिकञ्चोत्पादयंस्तत्र चरितार्थः। एवं कर्मापि करणस्य व्यापारमुत्पादयत्तत्रैव। न हि कर्म विना निरालम्बनः करणव्यापार उदीते । अधिकरणमप्येवं न हि तेन विना कर्ता निरालम्बनः करणं व्यापारयितुमीष्टे। सम्प्रदानापादाने तु क्काचित्के एव । तथा च कारकान्तराचरितार्थं क्रियामात्रान्वयि करणमिति व्याख्यायामन्तरपदार्थकल्पनया खण्डनम् । तदसत् । अन्तरपदार्थो हि समभिव्याहृतपूर्वपदप्रवृत्तिनिमित्तवत्त्वे सति प्रक्रान्तप्रवृत्तिनिमित्तसाक्षाद्व्याप्योपाधिभिन्नतादृशोपाधिमान् । यथाहि कठ उपस्थिते ब्राह्मणान्तरमानयेति शब्दः कठभिन्नं कण्वादिब्राह्मणमेवाह तत्रैव च प्रयुज्यते । न तु घटादिकमाह तत्र प्रयुज्यते वा तथा करणे प्रक्रान्ते कारकान्तरपदं करणकारकभिन्ने कर्मादौ कारके प्रयुज्यते तदेव चाहेति । अत एव हस्तः परशौ चरितार्थीभवन्नपि कारकान्तराचरितार्थ एव उभयोरपि करणत्वात् । एवञ्चान्तरपदस्यार्थान्तरं प्रकल्प्य यद्दूषणवचनम्। तच्छलं कल्पितदूष्यत्वादिति ॥

ननु करणप्रक्रमे करणभिन्नं कारकं कारकान्तरमित्यात्थ। तथा च करणज्ञानाधीनं कारकान्तरज्ञानं तदधीनं च करणज्ञानमित्यन्योन्याश्रय इति चेत्। नूनं शब्दवदर्थेऽप्यव्युत्पन्नोऽसि। तथाहि न हि लक्ष्यस्य लक्षणान्वयात् प्राक् प्रकारान्तरेणापि ज्ञानं न भवतीति सचेताः प्राह तथासति लक्षणविधिरपि तत्र न स्यात् उद्देश्यापरिचयात् उद्देश्यं ह्यनूद्य लक्षणं विधीयते एवमवधेरपि सामान्यमुखं तन्त्रम्। तथा च प्रक्रान्तकारकत्वेन कारकान्तरसाधारणेन करणस्य ज्ञानादन्तरपदार्थज्ञानं तज्ज्ञानाच्च तस्यैव प्रक्रान्तस्य करणत्वेन ज्ञानं फलं वदेति(१)। यथा वा बहिः सत्त्वेन विना जीविनो गृहासत्त्वमनुपपन्नमिति सामान्यमुखाद्बहिः सत्त्वालम्बिनोऽनुपपत्तिज्ञानादेवदत्ते पक्षे प्रवृत्तादेवदत्तो बहिः सन्निति विशेषमुखी धीः फलं वदेति(२)। अत एव यतोऽन्यत्वं तत्सिद्धेरग्रे तदसिद्धेरिति यत्प्रलपिष्यसि तदपि निरस्तम्। ननु किमिदं चरितार्थत्वं अन्यथा सिद्धत्वं वा परम्पराकारणत्वं वा। नोभयं कर्त्रादेरप्यतथात्वादिति। उच्यते। तत्तन्निष्ठान्यतरजनकत्वं तत्र चरितार्थत्वं कर्तुः कर्मणश्च करणनिष्ठव्यापारजनकत्वं मनसो हस्तादेः करणे चरितार्थत्वेऽपि न तस्य करणापेक्षया कारकान्तरतेति। कर्तृव्यापारविषयत्वं वा तत्त्वम्। न च कर्तृव्यापारफलेऽतिव्याप्तिः यदधिकृत्य हि कर्तृव्यापार उदेति स एव तद्विषयतयोक्तो यथा हस्तादि। गोचरता हि द्वयी उद्देश्यतयानन्यपरकृतिव्याप्यतया चेति मतसिद्धान्तात्। पिपक्षोर्हि पाकानु-

(१) वद इति छेदः।
(२ वद इति छेदः।

कूलो यत्नस्तत्करणं हस्तमधिकृत्योदेति । अथ शरीरचालनाय प्रयत्नः शरीरमधिकृत्योदेतीति शरीरं करणं स्यात् तथा च शरीरं चालयतीतिवच्छरीरेण चालयतीत्यपि स्यात् । भवत्येव दध्नाजुहोति पयसा जुहोतीति श्रौतप्रयोगदर्शनात् । अपौरुषेयत्वादयमपर्यनुयोज्य इति चेत् । मांसेन भुक्त्वा तृप्तो भवतीति मैत्रेयप्रयोगस्यापि दर्शनात् । सर्वेषामस्तीदृशः प्रयोग इति चेत् । किमतः प्रयोगे सति बीजानुसरणं न तु निमित्तवत्त्वादेव प्रयोगापादनं तस्य प्रयोगसमनियमाभावात् । अत एवारोपे सति मिमित्तानुसरणं न हि निमित्तमस्तीत्यारोप इत्याचार्याः । कथमीदृशः प्रयोगसङ्कर इति चेत् । निमित्तसमावेशादिति गृहाण । तथा च यदा कर्तृव्यापारविषयतापुरस्कारस्तदा करणतया यदा तु करणव्यापारविषयत्वपुरस्कारस्तदा कर्मतया प्रयोग इति । अत एवाधिकरणीभूतेऽपि देशे समेन देशेन यजेतेति । ननु करणत्वं कारकान्तराचरितार्थत्वगर्भं अधिकरणे तच्चरितार्थे कथमस्तु । तदुक्तं खण्डनकृता । अधिकरणस्यापि कर्मण इव करणे चरितार्थत्वमतः कर्मण्यधिकरणे च न कारकान्तराचरितार्थत्वरूपस्य करणत्वस्य समावेश इति । मैवम् । न ह्यधिकरणं विना करणं परश्वादि तद्विशेषणमुद्यमनादि वा नोदेतीति । एतेन कर्मापि निरस्तं तयोरसार्वत्रिकत्वात् तेन विनापि परशुतदुद्यमनयोरात्मलाभात् । एवं कर्तृव्यापारविषयत्वमप्यधिकरणकर्मणोर्नासम्भवि आद्ये प्रचरणादेव अन्त्ये प्रक्षेपणादेः कर्तृव्यापारस्य सम्भवात् । क्रियया ऽयोगव्यवच्छेदेन सम्बन्धित्वं वा तत्त्वम् । अत्र क्रिया प्रधानक्रियोक्ता तस्या एवोद्देश्यत्वेन वाग्बुद्धिस्थत्वात् । एवञ्च प्रधानक्रियासम्बन्धित्वमात्र उक्ते कारकमात्रे ऽतिव्याप्तिः

परम्परयापि तेषां तत्सम्बन्धित्वादतस्तद्वारणायायोगेत्यादि। तृतीया चेयं लक्षणे। अयोगश्चेह प्रधानक्रियाया असम्बन्धः तस्य व्यवच्छेदकरणेनाव्यवहितोत्तरकाले प्रधानक्रियाया अभावः। तेनेदमुक्तं भवति यत् करणे सव्यापारे सति प्रधानक्रियायास्तत्र क्षणमप्ययोगो नास्ति किन्तु नैरन्तर्यमेव तेन प्रधानक्रियाकारकत्वे सति प्रधानक्रियया सममव्यवधानेन सम्बन्धित्वं करणत्वम्। काञ्चनेन धनीतिवदभेदे वा तृतीया। तेनायोगव्यवच्छेदात्मकं प्रधानक्रियासम्बन्धित्वं तत्त्वमिति। अत एव कृत्तिकोदयं प्रति रोहिण्यासत्तेः करणत्वमपास्तं तस्यास्तं प्रत्यकारकत्वात् कारकविशेषस्य करणत्वात्। एवञ्च सामग्र्यामपि नातिव्याप्तिः तस्या अकारकत्वात्। तथाहि सा हि कारणसमाहारः स च यदि कारणं स्यात्तदा तं समाहारमन्तर्भाव्य कारणसमाहारो वाच्यः सोऽपि च समाहारः पूर्ववत् कारणमिति कारणसमाहारात्मिका सामग्री न निर्वहेत् कारणञ्चापरिसङ्ख्येयं स्यात्[१]। अथ कारणप्रागभावानाधारः कार्यप्रागभावाधारः क्षणः सामग्रीकः क्षणः उपाधिर्वा उपधेयो वा उपहितो वा। आद्ये न हि रवेः स्पन्दो विशेषं कारणम्। अस्तूपधेयः कालो विश्वाधारतया विश्वकारणमिति चेत्। बाढम्। स तु न सामग्री अविलक्षणैकरूपत्वात्। नान्त्यः न ह्युपाधिसहस्रेणापि कालो भेत्तुं शक्यते आत्मवत्। अन्यथा जितमौपनिषदैरुपाधिभेदवादिभिः। तस्मात् कारणान्येव समाहारः। स च न कारणम्। न हि कारणान्येव कारणमिति। हन्तैवमपि कर्म विभागे स च पूर्वसंयोगध्वंसे स

(१) तथा चानवस्थादि दोषापत्तिरित्यर्थः।

चोत्तरसंयोगे करणं स्यात् तत् कारणत्वे सति तन्नैरन्त-र्यादिनि चेत् । बाढम् । यदि च करणे व्यापारवत्त्वनियम-स्तदात्र निर्व्यापारे करणत्वशङ्का नास्त्येव । हन्तैवं हस्त-श्छिदाकरणं न स्यात् छिदया समं नैरन्तर्येण सम्बन्धा-भावात् । तथा च हस्तेन परशुना वृश्चतीति न स्यात् हस्तस्याकरणत्वादिति चेत् । न । न हि परशुं व्यापार्य हस्तो विरमति यदि तु स विरमेत्तदा परशुः पतेत् । नतु स पात्येत यत्र तूत्तरकरणं व्यापार्योत्पाद्य वा प्रथमं करणं विरमति तत्समद्रव्ये च प्रधानक्रियायामाद्यं तद्वितीय-करणक्रियायां करणं यथा अनुयाजप्रयाजौ । अत एव प्र-धाने रागादङ्गे वैधी प्रवृत्तिरन्यथोभयत्रापि रागजैव सा स्यात् द्वयोः स्वर्गसाधनत्वाविशेषादिति(१) । हन्तैवमपि सुखदुःखयोः स्वभोगे करणता स्यात् ताभ्यामव्यवधानेन स्वभोगस्यावश्यमुत्पादनाहिति चेन्न । तादृशव्यापारवत एव कारकस्य मया करणत्वोपगमात् सुखदुःखयोश्च तादृ-शव्यापाराभावात् । आस्तां वा ते अपि तत्र करणे अयो-गव्यवच्छेदेन सम्बन्धात् । न चैवं सुखेन भुङ्क्ते इत्यपि स्यात् । ईदृशसूक्ष्मेक्षिकावर्ता भवत्येव । अत एव मांसेन भुक्त्वा तृप्तो भवतीति मैत्रेयप्रयोगो घटते । व्यापारश्च तज्जन्यत्वे सति तज्जन्यजनकः २ । अत्र व्यापारिवारणायाद्यं फलवारणाय त्वन्यं विशेषणं यथा यागस्यापूर्वमनुभवस्य संस्कारः । तृतीयलिङ्गपरामर्शस्तु न करणं किन्तु व्याप्ति-स्मृत्यात्मकस्य करणस्यासौ व्यापारः । यत्राप्याप्तोक्तश-

(१) तथा च प्रधाने मुख्यफलेच्छया प्रवृत्तिर्भवति अङ्गे च प्रधाने-च्छया इति वस्तुस्थितिः । एवञ्चोभयोरपि मुख्यफलसाधनत्वे उभयत्रैव मुख्यफलेच्छया प्रवृत्तिः स्यादिति भावः ।

ऽद्योनिस्तृतीयलिङ्गपरामर्शस्तत्रापि व्याप्तिस्मृतिरादौ पदार्थज्ञानं विना वाक्यार्थधियो ऽनुदयनियमात् ॥

ननु लिङ्गाभासजन्या यत्र प्रमाभूतानुमितिस्तत्र तत्प्रामाण्यमीश्वरतृतीयलिङ्गपरामर्शरूपानुमानात् गुणजन्यमिति तावदात्थ तत्र हि स व्यापारभूतो न भवति नित्यत्वादिति चेत् । सत्यम् । जगत्कारणत्वात्तदत्रापि कारणं तत एव चानुमानकर्तुस्तस्य गुणादनुमितिः प्रमा । करणस्तु तत्रापि अनुमितिभाज एव तृतीयपरामर्शजननी व्याप्तिस्मृतिरिति । शब्दसाक्षात्कारे तु यद्यपि इन्द्रियसन्निकर्षो न व्यापारो नित्यत्वात् । तथापि आद्यः शब्द एव तत्र श्रोत्रस्य व्यापारः । ननु कर्मणः कथं करणकोटौ प्रवेशः उपाधिसमाधिवेशादित्युक्तं प्राक् । यत्तु चक्षुर्घटसंयोगं व्यापारमुदाहृत्य घटस्य कारणकोटिप्रवेशमाशङ्क्य तदपि माभूदित्याशयेन बाधे ऽन्यसाम्यादित्युक्तम् । तदयुक्तम् । न हि घट इन्द्रियसंयोगे तद्व्यापारभूते निविशते इन्द्रियाजन्यत्वात् किन्तु घटबहिर्भावेणैवेन्द्रियसंयोग इन्द्रियव्यापार इति भ्रमः ॥

ननु करणस्य प्रधानक्रियया समं नैरन्तर्यमुक्तं तद्यागे नास्ति अपूर्वेण स्वर्गव्यवधेरिति चेन्न । स्वाङ्गस्याव्यवधायकत्वात् प्रथमगृहीततत्कारणतानिर्वाहार्थमेवापूर्वस्य तन्निर्वाहकस्य यागव्यापारत्वेनाक्षेपणात् । यत्र तु निरन्तरयोः सम्बन्धग्रहे सति पश्चात्तद्द्वारा पूर्वतमस्यापि सम्बन्धो गृह्यते तत्र मध्यमजं प्रत्येव पूर्वतमस्योपयोगः । तेनैव च तस्य व्यवधिर्यथा पुत्रजन्ये घटे तत्पितुः । एतेन फलाव्यभिचारिव्यापारकत्वं करणत्वमित्यपि समर्थितम् । यद्वानेव करोति तत्करणमिति । कर्ता स्वजन्यासु सर्वास्वेव क्रियासु यत्कारकमपेक्षत एव तत् करणम् । कर्मा-

दिचतुष्कन्तु नैवं तेषां सर्वत्रानपेक्षणात् । करणमेव तथा तेन विना कर्तुः क्रियाप्रचयानुदयात् । एवं यद्वानेव प्रमिमीते तत्प्रमाणं केन प्रमितिकारकेण सहित एव कर्ता प्रमिमीते करणेनेति ब्रूमः । तथा हि प्रमितौ सम्प्रदानापादाने तावदसम्भाविते एव । अधिकरणन्तु प्रमितेः प्रमातैव । न च स एव तद्वान् भवति मेयस्य चाधिकरणं नावश्यकम् आत्मादेर्निरधिकरणस्यापि प्रमेयत्वात् । यत्राप्यस्ति तत्रापि न नियतभानं घटः पट इत्यादिप्रमितेरपि दर्शनात् । कर्म तु प्रमितौ पाक्षिकं अनागतादेरपि प्रमितेः । विषयमात्रन्तु न कर्म अकारकसाधारण्यात् । करणन्तु प्रमितौ नियतमेव तेन विना प्रमित्यजनासम्भवादिति । अत एव करणस्य यश्चरमो व्यापारः स न करणं न वा प्रमाणं तस्य निर्व्यापारत्वेनाकारकत्वात् व्यापारवत्कारणस्यैव मया कारकत्वोपगमात् । तद्विशेषस्य च करणत्वात् ॥

नन्वन्यथासिद्धनियतप्राक्सत् कारणं तदेव सव्यापारं कारकं तदेव साधकतमं करणमिति तावन्न्यायमतम् । तथा च व्यापारविशिष्टस्य करणतां गतस्य व्यापारान्तरान्वयाभावात् करणमपि करणं न स्यात् । मैवम् । यत्र रूपं तत्र स इतिवत् यस्य करणं तस्य व्यापारान्वय इति व्याप्त्युपगमात् । घटमुद्यम्य निपात्य प्रत्याचालयतो घटः कर्मैव करणं स्यात् तद्वानेव हि तं चालयति नातद्वानिति चेत् । अबोधात् । न हि यद्वानित्यत्र यत्पदेन वस्तुमात्रमुक्तं प्रमेयत्वादावति व्याप्तेः । नापि कारकमात्रं तत एव । नापि प्रकृतक्रियाकारकमात्रं पटस्यापि स्वचालने करणतापत्तेः । नापि प्रकृतक्रियाकरणमात्माश्रयादननुगमाच्च । किन्तु कर्तुः स्वक्रियायां क्रियात्वेनावश्यापेक्षणीयं कार-

कमुक्तं क्रियात्वेन हि रूपेण क्रियाभिः करणमेवापेद्यते करणं विना क्रियामात्रस्यैवानिष्पत्तेः । कर्मादि तु नैवं तेषां सर्वासु क्रियास्वन्वयनियमाभावात् । कर्मादिकं चतुष्कं विनापि क्रियोदयदर्शनात् । एवं कर्मणि पटे कः प्रसङ्गः । न हि स क्षालनेन क्रियात्वेनापेद्यते किन्तु क्षालनत्वेनैवेति विद्धि ॥

ननु चक्षुरादेः परस्परव्यभिचारितया यद्वानेव प्रमिमीते इति न घटत इति चेत् । भ्रान्तोऽसि । प्रमया फलेन परिचायितं करणं प्रमाणमित्युच्यते । तथा च प्रकृतां प्रमारूपां क्रियां यद्वानेवार्जयतीति वचोभङ्ग्यापि प्रमाकरणमेव प्रमाणमुक्तं भवति । प्राक् करणे लक्षिते प्रमाणलक्षणाय तत्र प्रमान्वयमात्रस्य विधित्सितत्वात् । प्रमाकरणवत एव प्रमार्जनं नातद्वत इति नियमाच्च । ननु किं करणत्वं साधकतमत्वं तच्च निरुक्तम् । अथ करणत्वेनयानि लक्षयसि तेषां किमेकं रूपं लक्षतावच्छेदकमिति चेत् । धिङ्मूर्ख समनियतयोरेवैकं लक्ष्यतावच्छेदकं अपरं लक्षणं पृथिवीत्वगन्धवत्ववत् स्वबोधमेवैतत् । नापि साधकतमत्वं करणत्वमित्यादौ पौनरुक्त्यमर्थाभेदादिति देश्यं विवरणरूपत्वात् विवरणत्वेनैव विशेषात् । नाप्यात्माश्रयः पिकः कोकिल इत्यत्र । यथा कोकिलः पिकपदार्थ इत्यर्थस्तथा साधकतमत्वं करणपदार्थ इत्यत्रापि पदार्थान्तर्भावेनात्माश्रयापनोदात् । यदभावात् कर्तृकर्मणी न क्रियां जनयतः तत्त्वं करणत्वमिति वा । कर्त्रा क्रियात्वावच्छिन्नकार्ये कर्तव्ये स्वसहकारितया यदवश्यमपेद्यते तत् करणम् । कर्मादिचतुष्कं नैवं तस्य क्रियासामान्येऽनावश्यकत्वात् । कर्त्रा च करणेन च विना क्वापि क्रिया नोदेतीति । एवं प्रमातृप्रमेये यदभावात् प्रमां

न जनयतस्तत् प्रमाणं प्रमात्रा हि प्रमात्वावच्छिन्ने कार्ये कर्तव्ये स्वसहकारितया यदवश्यमपेक्ष्यते तत् प्रमाणम् । प्रमेयाधिकरणे तु नैवं तयोः प्रमासामान्ये ऽनावश्यत्वात् प्रमात्रा च प्रमाणेन च विना क्वापि प्रमा नोदेतीति कर्म-प्रमेयपदे त्वत्र निरुक्तिद्वये सम्पातायाते न कर्तृवत् कर्मापि क्रियासामान्येऽपि प्रमातृवत् प्रमेयमपि जन्य-प्रमासामान्ये हेतुर्येनोक्तिसम्भवो ऽपि स्यात् । यच्च द्विक-र्तृके क्षेत्रस्य करणत्वमापादितं तदबोधात् । न हि भगवता क्रियासामान्योत्पत्तये क्षेत्रज्ञोऽपेक्ष्यते अङ्कुरोत्पत्त्यादाव-नपेक्षणात् । करणन्तु तत्राप्यपेक्षत एवेति । चरमव्या-पारवत्त्वं वा तत्त्वम् । कारकव्यक्त्यन्तरापेक्षया करणस्यैव चरमो व्यापारः । न च हस्ताद्यव्याप्तिः तद्व्यापारस्यापि परशुकाष्ठसंयोगपर्यन्तमनुवृत्तौ हस्ते ऽपि लक्षणसत्त्वात् । अनुवृत्तौ तु छिदायां हस्तस्य न करणत्वं किन्तु परशुव्यापार एवेति मदुपगमात् । अनुमानस्य तु व्याप्तिस्मृत्यात्मकस्य च-रमो व्यापारो विशिष्टपरामर्श एव । ईश्वरज्ञानजन्ये ऽपि घट-पटादौ क्षेत्रज्ञस्य यत्नादिर्न चरमः किन्तु तत्रापि तज्जन्यो दण्डवेमादिव्यापार एव तथेति । ननु पटक्षालने निर्णेजकस्य-व्यापारो जलरूपो यद्यपि न चरमस्तथापि काष्ठपटसंयोग-रूपश्चरम एव स च हस्तवत्पटस्यापीति पटः कर्मवत् स्व-क्षालने करणमपि स्यादिति चेत् । न । क्रियात्वेन क्रियया कर्तृकरणे एवापेक्ष्येते इति नान्यत्र प्रसङ्गगन्धोऽपीति तत्रा-पि करणस्यैव चरमो व्यापारः कर्तृव्यापारेण प्रयत्नेन चेष्टा-या एव निर्माणात् । तथा च क्रियात्वेन क्रियया यत्कार-कमपेक्षते तत्करणमिति प्रागुक्तं तदेव चरमव्यापारकं सत्करणमित्यधुनोच्यते । अस्तु वा मांसपचपटेपि तृतीया अनन्तरफलकत्वं वा तत्त्वम् । फलं हि प्रधानक्रिया सा च

क्रियात्वेन रूपेण कर्त्तृकरणे एवापेक्षते न तु कर्मादि चतुष्कं तस्य क्रियामात्रे व्यभिचारात्। तत्रापि करणस्यैव व्यापारोऽनन्तरफलको भवति कर्त्तृव्यापारस्य यत्नादेः करणव्यापारेणैव व्यवधापितत्त्वात्। करणस्य तु करणव्यापारेण न व्यवधापनम् स्वाङ्गत्वात्। नन्वेवं लिङ्गपरामर्शेण व्यापारेण चक्षुरादिकमप्यनुमितौ करणमस्त्विति चेत्। न। व्यभिचारेण हि तेषामनुमितौ कारणतापि नास्ति दूरे तु करणताशङ्केति। हंत तर्ह्यव्यभिचारितया अनुमितौ मनः करणमस्तु वाढम्। तर्ह्यनुमितिरिन्द्रियजन्यतया साक्षात्कारिणी स्यादिति चेत्। नूनं स्मृतावप्येवं वक्ष्यसि। तत्रापि मनोजन्यतया साक्षात्त्वमप्यस्त्वित्यपि ब्रूम इति। चेत् नूनमज्ञोसि यत आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति शातपथी श्रुतिश्चतस्रः प्रतिपत्तीः प्रत्यक्षपरोक्षप्रस्थानाः प्राह लोकोऽप्येवमेव व्यवहरति त्वं पुनस्तदुभयविरोधी प्राज्ञम्मन्यः कथमुत्पथं यासि। मनोजन्यत्वाविशेषेपि कथं त्वदुक्तं वैलक्षण्यमिति चेत्। इत्थं इन्द्रियजन्यत्वेनेन्द्रियजन्यसाक्षाद्धीः लिङ्गपरामर्शजन्यानुमितिःवाक्यजन्या शाब्दी सादृश्यवैसादृश्यान्यतरधीकरणिका उपमितिः संस्कारजन्या स्मृतिः। इयं च याचितमण्डनमिव याथार्थ्यं दधत्यपि न प्रमेति चतस्र एव प्रमाः चत्वार्येव तत्करणानि प्रमाणानीति। हन्तेन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारि प्रत्यक्षमिति तावन्मुनिनोक्तं तदिदं न प्रत्यक्षप्रमामात्रलक्षणमीश्वरप्रत्यक्षाव्याप्तेः। नापि लक्षणोपलक्षणमाधिक्यात् इन्द्रियोत्पन्नमित्येतावतैव तत्सम्भवादिति चेत्। उच्यते। साक्षात्त्वं प्रत्यक्षधीमात्रलक्षणं तदेव प्रमात्वेन विशेषितसाक्षात्कारिप्रमितीनां एतदुपलक्षणाय विभागाय तद्विशेषलक्षणाय च सूत्रम्। साक्षात्त्वं तु जातिः साक्षा-

त्करोमीत्यनुगतमतिसाक्षिका अतो न लक्षणस्य दुर्ज्ञेयता लक्ष्यतावच्छेदकं तु ज्ञानाकरणकज्ञानत्वमतो न लक्ष्याणामसंग्रहः । तथा च ज्ञानाकरणकानि ज्ञानानि साक्षात्त्ववन्ति तेभ्यो भिद्यन्ते साक्षात्कारित्वादिति व्यतिरेकी । एवं च प्रत्यक्षं लक्ष्येतरेभ्यो भिद्यत इत्यत्र साध्ये ऽनुमेयाभावः लक्ष्यादन्येषां लक्ष्यादन्यत्वे प्रतीयमाने लक्ष्याणामपि तेभ्योऽन्यत्वं तदैव प्रतीतमित्यपास्तं साक्षात्त्वरहितेभ्यो भिद्यत इत्यस्य साध्यत्वात् । जन्याजन्यविभागतल्लक्षणाप्तये च सौत्रो निर्देशः तथाहि तच्च प्रत्यक्षं द्वेधा अजन्यं जन्यञ्च तत्राजन्यं भगवज्ज्ञानं तस्य तु साक्षात्त्वं च धर्मिग्राहकप्रमाणसिद्धम् । जन्यमपि द्वेधा षोढासन्निकर्षान्यतमजन्यं तदजन्यञ्च तत्राद्यस्यार्थत्वेनार्थजत्वं लक्षणम् आत्मानुमितिस्मृतिशाब्दास्तु यद्यप्यात्मना तासामनुभूतेन जन्यत्वे तथापि न तत्रात्मनोऽर्थत्वेन जनकता किन्तु समवायित्वेन अन्यथा जन्यत्वाविशेषात् सर्वा एवात्मधियः परोक्षा एव वा प्रत्यक्षा एव वा स्युः । अर्थत्वेनार्थजन्यधियां तु षोढासन्निकर्षान्यतमजन्यत्वं लक्षणं जन्यसाक्षाद्धीमात्रस्य तु इन्द्रियत्वेनेन्द्रियजन्यत्वं एता अपि द्वेधा षोढान्यतमजन्यास्तदजन्याश्च तत्राद्या गन्धादिधियः अन्त्यास्तु योगिधियः तथाहि योगजधर्मसंस्कृतेन मनसा चक्षुरादिना वा व्यवहितेषु विप्रकृष्टेषु चक्षुषा रूपवत् स्वपरमाणुष्वपि जन्यते । तदुक्तम् ।

तत्राप्यतिशयो दृष्टः सस्वार्थानतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ हि न रूपे श्रोत्रवृत्तिता ॥ इति ।

तथा च भगवज्ज्ञानं योगजप्रत्यक्षं च द्वयमलौकिकमेव सामान्यलक्षणया तु यद्धूमादिप्रत्यक्षं तच्चक्षुःसन्निकृ-

धूमांशे लौकिकं शेषे त्वलौकिकम् । एवं सर्वे व्यवसायानुव्यवसाये लौकिका व्यत्यये त्वलौकिका इत्युभयेऽप्यमी लौकिकालौकिकरूपा इति । एवञ्चानागतगोचरसाक्षात्कारहेतुप्रत्यासत्त्यजन्यप्रत्यक्षत्वं लौकिकप्रत्यक्षाणां लक्षणं लक्ष्यतावच्छेदकं तु तेषां सामान्यप्रत्यासत्त्यजन्ययोगजधर्माजन्यस्वविषयकसविकल्पकाजन्यजन्यप्रत्यक्षत्वं सन्निकृष्टे हि धूमे संयोग एव प्रत्यासत्तिः न तु धूमत्वमेवं व्यवसाये संयुक्तसमवाय एव मनसः प्रत्यासत्तिः न तु ज्ञानलक्षणा अतस्तेऽपि ज्ञाने तयोरंशयोर्ज्ञानसामान्यप्रत्यासत्त्यजन्ये एवेति तदंशे लौकिकप्रत्यक्षे एवेति तदिन्द्रियजन्यत्वं जन्यप्रत्यक्षस्य तावल्लक्षणमुक्तम् तदयुक्तम् प्रत्यक्षविशेषाणामनुगतैकरूपाग्रहे इन्द्रियजन्यत्वग्रहणासम्भवात् । हन्त जन्यप्रत्यक्षत्वमेव तेषामेकमवच्छेदकं रूपमित्यपि न । जन्यत्वेऽप्यवच्छेदकं रूपमित्यस्यापि मया सुवचत्वादिति मैवम् । जन्यत्वे प्रागभावप्रतियोगित्वमवच्छेदकमिन्द्रियजन्यहेतुजन्यप्रत्यक्षमिति मदुपगमात् । हन्तैवं जन्यप्रत्यक्षत्वमेव तेषामितरभेदकमस्तु न तु नियमतश्चरमवेद्यमिन्द्रियजन्यत्वमिति चेत् । न । उपायस्यानुपायतादोषो न तूपायान्तरसंभव इत्याचार्यवचसैव निरस्तत्वात् अमी प्रत्यक्षविशेषा इन्द्रियजन्या इत्यादिना आप्तोपदेशेन द्रागिन्द्रियजन्यत्वस्यैवावगमसम्भवाच्च । एवमर्थजन्यत्वादावप्यूह्यम् । ननु साक्षात्कारिविज्ञानं स्वविषये साक्षात्कारि भवतु जातेः साधारण्यादिति चेत् । धिङ्मूर्ख यदि स्वाविषयः कथं विषयसमीयं स्वाविषय इति । अथ सोपि स्वविषय एव कथन्तर्हि स्वाविषयो विरोधात् । ननूक्तिदोषोयं तथा च साक्षात्कारिज्ञानं स्वविषयमिव तदन्यमपि प्रतिसाक्षात्कारि भवतु

नीरूपनिःस्पर्शघटघटितसन्निकर्षात् संयोगादिप्रत्यक्षवारणाय रूपाभावस्पर्शाभावयोः प्रतिबन्धकत्वमावश्यकम् तत्र चाक्षुषादिविषयतायाः सत्त्वे तदभावासत्त्वादिति वाच्यम्। एवं सति चक्षुर्घटसंयोगे प्रभाघटसंयोगे च चाक्षुषस्पार्शनवारणाय उद्भूतरूपाभावादीनां सामानाधिकरण्यसम्बन्धेनैव प्रतिबन्धकत्वकल्पनापेक्षया चाक्षुषस्पार्शनाभावयोः प्रतिबन्धकताया आवश्यकत्वात् अवयविनि पाकानभ्युपगमे रूपाभावादीनां प्रतिबन्धकताया अनावश्यकत्वात्। न चावयविनि पाकाभ्युपगन्तॄणां नैयायिकानां मते यद्यनुद्भूतरूपादिकं नाभ्युपेयते तदा रूपस्पर्शाभावयोः प्रतिबन्धकताया आवश्यकत्वात् चाक्षुषस्पार्शनाभावापेक्षया द्रव्यान्यसत्प्रत्यक्षत्वावच्छिन्नं प्रति महत्त्वाभावस्यैव प्रतिबन्धकत्वकल्पने लाघवात् परममहत्त्वस्वीकार इति वाच्यम् । एवमपि त्रसरेणुघटसंयोगस्य स्पार्शनवारणाय द्रव्यान्यसत्स्पार्शनत्वावच्छिन्नं प्रति सामानाधिकरण्यसम्बन्धेन विजातीयमहत्त्वाभावस्य स्पार्शनाभावस्य वा प्रतिबन्धकताया आवश्यकत्वे द्रव्यान्यसचाक्षुषत्वस्यैव महत्त्वाभावाभावजन्यतावच्छेदकत्वाभ्युपगमेन ज्ञानादिमानसे व्यभिचारानवकाशात्। अस्तु वा मानसादिव्यावृत्तचाक्षुषस्पार्शनवृत्तिजातिविशेष एव महत्त्वाभावाभावजन्यतावच्छेदक इति आत्मादिमहत्त्वानभ्युपगमेऽपि न ज्ञानशब्दादिप्रत्यक्षे व्यभिचार इति। न च तादृशवैजात्ये मानाभाव इति वाच्यम्। अनन्तानामात्मनामनन्तमहत्त्वकल्पनापेक्षया तादृशजातिकल्पनाया एव समुचितत्वात्। इत्थं च चाक्षुषे स्पार्शने च रूपस्पर्शयोरपि हेतुत्वं न स्वीक्रियते। वाय्वादिचाक्षुषस्य प्रभादिस्पार्शनस्य च वा-

रणाय सचाक्षुषस्पार्शनयोः रूपाभावस्पर्शाभावयोः वायुघट-संयोगप्रत्यक्षवारणाय प्रतिबन्धकतायाः सामानाधिकरण्यसम्बन्धेन कल्पनाद् वाय्वाद्यवयवपरम्पराया अपि नीरूपत्वात् तत्र सामानाधिकरण्यसम्बन्धेन रूपाभावादिसत्त्वादेव वारणात्। आत्मादिचाक्षुषस्पार्शनयोश्च महत्त्वस्य विजातीयप्रत्य प्रति हेतुत्वकल्पनेनैव वारणात् तन्मते आत्मादिचाक्षुषवारणाय तयोरनावश्यकत्वादित्यपि लाघवम्। इत्थं च त्रुटिसंयोगस्पार्शनाभ्युपगमः। अथवा अणुपरिमाणस्यैव सामानाधिकरण्यसम्बन्धेन द्रव्यान्यसत्प्रत्यक्षत्वावच्छिन्नं प्रति प्रतिबन्धकत्वं तत एव परमाणुघटसंयोगप्रत्यक्षवारणे महत्त्वाभावस्य प्रतिबन्धकत्वाभावान्नात्मादिमहत्त्वसिद्धिः। आत्मादेः परमाणुपरिमाणाभावेन सामानाधिकरण्यसम्बन्धेन तस्याभावो ज्ञानशब्दादावपि वर्तत इति व्यभिचारानवकाशात्। न चाणव एव निःपरिमाणाः किं न स्युरिति वाच्यम्। विभूनां महत्त्वाभ्युपगमे महत्त्वाभावाभावत्वेन हेतुत्वकल्पनायां कारणतावच्छेदके गौरवात् अणूनां परिमाणाभ्युपगमे तादृशविजातीयपरिमाणाभावत्वेन हेतुत्वे लाघवात्। इत्थं च द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति अणुपरिमाणस्यैव समवायसम्बन्धेनाभावो हेतुरभ्युपेयते। वस्तुनस्तु मूर्तप्रत्यक्षत्वावच्छिन्नं प्रति महत्त्वस्य हेतुत्वकल्पनान्नानुपपत्तिः। मूर्तत्वजात्यनभ्युपगमेऽपि द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति महत्त्वस्य हेतुताबलान्नात्ममहत्त्वसिद्धिः। गुरुत्वादेः प्रत्यक्षतावारणाय लौकिकप्रत्यक्षत्वावच्छिन्नं प्रति लौकिकविषयताया हेतुत्वकल्पनस्यावश्यकतया तेनैव परमाण्वादिप्रत्यक्षवारणसम्भवे महत्त्वहेतुताकल्पनस्य निर्युक्तिक

द्रव्यत्वस्य त्रुटित्वादेरिव परिमाणस्यासाधकत्वात् । तस्य चापरिमितावृत्तित्वमसिद्धम् ।

त्वात् । न चैवं सति उपदर्शितस्पार्शनादिविषयत्वाभावाभावादिहेतुताकल्पनं निर्युक्तिकमिति वाच्यम् । तावताप्यभावात् । न चान्योन्याश्रयान्नोपदर्शितकार्यकारणभावकल्पनं सम्भवद्युक्तिकमिति वाच्यम् । विषयताया नित्यत्वेनोत्पत्तावन्योन्याश्रयाभावात् । परमाणुद्व्यणुकानङ्गीकर्तॄणां नव्यानां मते तु महत्त्वकल्पनैव नास्ति आपत्त्यभावात् । तथा च जीवात्मन्यपि महत्त्वाङ्गीकारो निर्युक्तिक एवेति निपुणतरमालोचयामः । ननु द्रव्यत्वेन हेतुना परिमाणवत्त्वं साध्यमित्यत आह । **द्रव्यत्वस्येति** । अप्रयोजकत्वादित्यादिः । प्राचीनाः पृथिव्यादीनां रूपादिमत्त्वनियमात् घ्राणेन्द्रियादावपि अतीन्द्रियरूपादिकं स्वीकुर्वन्ति तन्मते च घ्राणेन्द्रियादीनामपि रूपवत्त्वान्महत्त्ववत्वाच्चक्षुचाषापत्तिरिति तद्वारणायानायत्या उद्भूतरूपस्यैव हेतुत्वमभ्युपेयते । अथ तस्य हेतुता नोद्भूतरूपत्वेन उद्भूतत्वानिर्वचनात् । न चोद्भूतरूपत्वं जातिः नीलत्वादिना साङ्कर्यात् । तथाहि नीलत्वजातिः उद्भूतत्वाभाववत्घ्राणेन्द्रियनीलवृत्तिः इयं तु घटादिपीतवृत्तिः घ्राणेन्द्रियनीलव्यावृत्ता घटादिवृत्तिनीलादौ तयोः सङ्कर इति । न चोद्भूतत्वं नानैव नीलत्वशुक्लत्वादिव्याप्यभेदादिति वाच्यम् । व्यभिचारात् तादृशधर्मावच्छेदेन कारणत्वकल्पनासम्भवात् । न च नीलप्रत्यक्षं प्रति नीलत्वव्याप्योद्भूतत्वेन शुक्लप्रत्यक्षं प्रति शुक्लत्वव्याप्योद्भूतत्वादिना हेतुत्वकल्पनान्न व्यभिचार इति वाच्यम् । भाविनीलादिविषयकपीतघटप्रत्यक्षस्य विषयतासम्बन्धे-

नेदृशघटेप्युत्पत्तेस्तत्र चोद्भूतनीलाभावेन व्यभिचारात्। न च नीलशुक्लादिविषयकचाक्षुषत्वादेर्जन्यतावच्छेदकत्वान्न दोष इति वाच्यम्। अन्यदीयनीलादिविषकपीतघटप्रत्यक्षस्य विषयतासम्बन्धेन तादृशघटेप्युत्पत्तेस्तत्र चोद्भूतनीलाभावेन व्यभिचारात्। न च नीललौकिकविषयतायाः कार्यतावच्छेदकत्वाददोष इति वाच्यम्। अनुभूयमाननीलाद्यारोपे व्यभिचारात्। न च स्वविषयीभूतनीलवद्वृत्तिविषयतायाः प्रत्यासत्तित्वात् पीतघटनिष्ठविषयतायाश्च स्वविषयनीलासमानाधिकरणत्वान्न दोष इति वाच्यम्। तदीयरूपादिग्रहप्रतिबन्धकसमवधानकाले रूपान्तरविषयकभ्रमस्यासंग्रहप्रसङ्गात्। वैशेषिकमते एकस्मिन्नवयविनि नानारूपाभावात् नीलवत्प्रत्यक्षत्वस्य जन्यतावच्छेदकत्वसम्भवेऽपि तादृशोद्भूतनीलवत्प्रत्यक्षत्वस्य जन्यतावच्छेदकत्वमादाय विनिगमनाविरह इति। न चोद्भूतत्वव्याप्यं नीलत्वमेकमस्तु तद्विरुद्धमपरमिति नीलत्वादिकं नानैवेति वाच्यम्। तथा सति विजातीयोद्भूतनीलत्वावच्छिन्नं प्रति उद्भूतनीलत्वादिनैवासमवायिकारणस्य हेतुता स्यादिति उद्भूतनीलेनानुद्भूतनीलानारम्भापत्तेः। तद्विरुद्धवैजात्याच्छिन्नं प्रत्यपि अनुद्भूतनीलत्वादिना हेतुत्वकल्पने कार्यकारणभावबाहुल्यापत्तेरिति। मैवम् अनुद्भूतनीलेष्वेव नीलत्वादिव्याप्यजातीः कल्पयित्वा तदवच्छिन्नाभावादीनामेव चाक्षुषत्वावच्छिन्नं प्रति हेतुत्वकल्पनात्। तथा च नीलादिजन्यतावच्छेदकजातिव्याप्याः षट् जातयः। पाकजन्यतावच्छेदकव्याप्याश्च षट् जातय इति तदवच्छिन्नाभावकूट एव प्रत्यक्षे हेतुः। नीलादिजन्यतावच्छेदिकाः षट् पाकादिजन्यतावच्छेदिकाश्च षडिति चतुर्विंशतिः नीलत्वादयश्च षट्। न चानुद्भूतत्वं नीलजन्यपाकजन्यनील-

साधारणमेवैकम् नीलादिजन्यतावच्छेदकजातिस्तु नानैवे-
त्येवं किं न स्यादिति वाच्यम् । तथा सति नीलजन्यताव-
च्छेदिका द्वादश पाकजन्यतावच्छेदिकाश्च द्वादश नीलत्वा-
दयोऽनुद्भूतत्वानि चेति द्वादशेति जातिकल्पनाया आधि-
क्यात् । वस्तुतस्तु घ्राणेन्द्रियादौ पाकानभ्युपगमात् नीला-
दिजन्यतावच्छेदकजातिव्याप्याः षट् एवानुद्भूतत्वजात-
यः शुक्लत्वादिव्याप्यैव वा अनुद्भूतत्वजातिः घ्राणेन्द्रिया-
दौ शुक्लरूपस्यैवाभ्युपगमात् । न च नीलत्वादिप्रत्येकव्याप्य-
त्वमादाय विनिगमनाविरह इति वाच्यम् । रसनादौ शुक्ल-
रूपस्यैव सत्त्वेन तत्र पृथिवीत्वासम्भवात् । न च घ्राणेन्द्रि-
यादावपि पाकादिना नीलाद्युत्पत्तौ बाधकाभाव इति वा-
च्यम् । तत्र तथापाकानभ्युपगमात् । एवं च शुक्लरूपदशाया-
मेव परमाणुर्घ्राणारम्भक इति नानुपपत्तिगन्धोऽपि । अथवा
घ्राणादिरूपादिषु अनुद्भूतत्वजातिरेव नाभ्युपेयते । स्पार्शन-
चाक्षुषसाधारणप्रत्यक्षत्वावच्छिन्नं प्रति अनुद्भूतानुष्णा-
शीतस्पर्शत्वेन प्रतिबन्धकत्वकल्पनादेव तच्चाक्षुषादिवार-
णात् । एवमनुद्भूतशीतोष्णस्पर्शयोरपि स्पार्शनं प्रति प्रति-
बन्धकत्वात् न रसनेन्द्रियप्रभास्पार्शनापत्तिः । अनुद्भूतशु-
क्लस्य चाक्षुषाप्रतिबन्धकत्वाच्च चक्षुरिन्द्रियादीनां न चाक्षु-
षमिति चत्वार एव कार्यकारणभावाः । अथ नियतारम्भ-
कत्वे प्रत्यक्षं प्रति घ्राणनीलादेः प्रतिबन्धकत्वे नीलपीता-
दिसाधारणमनुद्भूतत्वमेकमेव नीलत्वादिकं तु नानास्तु अ-
नुद्भूतत्वस्य नानात्वे प्रत्यक्षस्थलीयकारणताबाहुल्यापत्तेः ।
नीलत्वादेर्नानात्वे ऽसमवायिकारणताबाहुल्ये ऽपि प्रत्य-
क्षकार्यकारणभावे कारणतावच्छेदकगौरवेण तादृशकारण-
ताया आधिक्ये ऽतिगौरवादिति चेत् न एतन्मते जातिक-

ल्पनाया आधिक्यात् कारणताकल्पनाया आधिक्याच्च। तथाहि अनुद्भूतत्वमेकं नीलत्वादयो नीलादिजन्यतावच्छेदकजातयश्च तद्व्याप्यविरुद्धभेदेन द्वादश पाकजन्यतावच्छेदिका अपि व्याप्यविरुद्धभेदेन द्वादशेति सप्तत्रिंशज्जातयः। प्रत्यक्षानुद्भूतरूपाभावयोरेकः कार्यकारणभावः नीलादीनां द्वादश पाकस्य द्वादशेति पञ्चविंशतिकार्यकारणभावाः। अनुद्भूतत्वजातेर्नानात्वकल्पने ऽपि नीलत्वादयः षट् जातयः नीलजन्यतावच्छेदकजातयश्च षट् पाकजन्यतावच्छेदकजातयश्च षट् अनुद्भूतत्वानि द्वादश पाकजन्यतावच्छेदकजातिव्याप्यविरुद्धभेदेनेति त्रिंशज्जातयः। रूपपाकयोर्द्वादश अनुद्भूतरूपाभावस्य प्रत्यक्षं प्रति द्वादशकार्यकारणभावा इति चतुर्विंशतिरेव। न चैवमेतत्कल्पे घ्राणादौ पाकानभ्युपगमे क्षतिविरहेण पाकजन्यतावच्छेदकजातयस्तत्कार्यकारणभावाश्च षडेवेति वाच्यम्। घ्राणारम्भकपरमाणुनीलानां पाकजन्यत्वस्यावश्यकत्वात् तत्र चानुद्भूतत्वजातेरस्वीकारे ततोऽनुद्भूतरूपानारम्भापत्तेः तत्स्वीकारस्यावश्यकतया घटादिनीलपरमाणुनीलादिसाधारणैकजन्यतावच्छेदकजात्यभ्युपगमे ऽनुद्भूतत्वजात्या साङ्कर्यं स्यादिति। तत्र पाकजन्यतावच्छेदकजात्यन्तराणां तदवच्छिन्नं प्रति पाकस्य कारणत्वान्तरकल्पनायाश्चावश्यकत्वात्। अत एव नियतारम्भकल्पे उद्भूतत्वजातिरेका नीलत्वं तु तद्व्याप्यविरुद्धभेदेन नानेत्यपि परास्तम्। केचित्तु घ्राणादिरूपादौ नीलत्वादिजातिसत्त्वे मानाभावात् नीलत्वादिविरुद्धमेवानुद्भूतत्वमेकं तदवच्छिन्नाभावस्यैकमेव हेतुत्वम्। वस्तुतस्तु तद्व्यापकमुद्भूतत्वमेव जातिः अनुद्भूतत्वस्य तथात्वे तदवच्छिन्नाभावरूपयोर्हेतुताद्वयकल्पनापेक्षया उद्भूतत्वेनैव हेतुत्वकल्पनाया उचितत्वादिति।

रूपादीनां च नेन्द्रियग्रहणायोग्यत्वम् । वाय्वादौ रूपं[1] नास्तीति सार्वलौकिकप्रत्ययात्[2] । अन्यथातीन्द्रियप्रतियोगिकत्वेन पिशाचात्यन्ताभावस्येव[3] तत्सामान्याभावस्याप्रत्यक्षताप-

---

अथवानुष्णाशीतत्वव्याप्यपृथिवीस्पर्शमात्रवृत्तिजातिविशेषं कल्पयित्वा तादृशविजातीयस्पर्शत्वेन पृथिवीप्रत्यक्षं प्रति चाक्षुषस्पार्शनसाधारण एकः कार्यकारणभावः कल्प्यते एवं जलतेजोवृत्तिजातिविशेषं कल्पयित्वा तादृशवैजात्यावच्छिन्नचाक्षुषं प्रति शुक्लत्वव्याप्योद्भूतत्वेन हेतुता । एवं जलस्पार्शनं प्रति उद्भूतशीतत्वेन एवं तेजःस्पार्शनं प्रति उद्भूतोष्णस्पर्शत्वेन हेतुता कल्प्यते । उपदर्शितप्रत्यक्षत्वावच्छिन्नं प्रति अनुद्भूतोष्णस्पर्शादिना प्रतिबन्धकत्वकल्पनेऽपि चतुष्टयकार्यकारणभावसाम्येऽपि रूपस्य हेतुत्वकल्पनाया आधिक्येन गौरवादिति वदन्ति इति । प्राचीनमतं दूषयति । **रूपादीनामित्यादिना । ग्रहणायोग्यत्वम्** लौकिकसाक्षात्कारस्वरूपायोग्यत्वम् । तथा च रूपादिकं जन्यसाक्षात्कारयोग्यं न वेति विप्रतिपत्तिः । अत्र च विधौ पक्षतावच्छेदकरूपत्वाद्यवच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् नांशतः सिद्धसाधनं दोषः । निषेधे सामानाधिकरण्येन सिद्धेरुद्देश्यत्वान्नांशतो बाधो दोषः । साक्षात्कारे जन्यत्ववि-

---

(१) रूपादिक-पा ३ पु० ।

(२) प्रत्यक्षात-पा ३ पु ।

(३) पिशाचप्रतियोगित्वाद्यभावस्येव-पा १ पु ।

शेषणात् नेश्वरप्रत्यक्षमादाय बाधः योग्यत्वप्रवेशेन जन्यप्रत्यक्षागोचरतृतीयक्षणादिविनष्टरूपादिव्यक्तिविशेषे न बाधः। योग्यत्वं च द्रव्यत्वव्याप्यव्याप्ययोग्यजातिसामानाधिकरण्यम् अयोग्यजात्यसामानाधिकरण्यं वा। प्राचानमते रूपादीनामयोग्यचक्षुष्ट्वादिजातिसामानाधिकरण्याभ्युपगमेन सिद्धिसाधनानवकाशात्। रूपत्वादिकमिन्द्रियाग्राह्यवृत्ति न वेत्यादयोपि बोध्याः। अथावयवरूपादिना चक्षुरादौ रूपादिजनने बाधकाभाव इति चेत्। न रूपत्वाद्यवच्छिन्नं प्रति चक्षुष्ट्वादिना प्रतिबन्धकत्वकल्पनात्। न च तदेव गौरवमिति वाच्यम्। भवन्मतेऽप्यनुद्भूतरूपादीनां घटादावुत्पत्तिवारणाय तत्र चक्षुरादीनां हेतुत्वकल्पनाया आवश्यकत्वात्। न च रूपादिकं प्रति चक्षुर्भिन्नत्वादिना कारणत्वे ऽवच्छेदकगौरवादिति तदपेक्षया लाघवात् अनुद्भूतरूपं प्रति चक्षुष्ट्वादिना(१) हेतुत्वं कल्पयितुमुचितमिति वाच्यम्। भर्जनकपालस्थवह्न्यादौ अनुद्भूतरूपोत्पत्त्या व्यभिचारात् चक्षुःसमवेतानुद्भूतरूपत्वादीनामेव भवन्मते चक्षुरादिजन्यतावच्छेदकत्वस्वीकारेण गौरवात्। न चानुद्भूतरूपानङ्गीकारमते रूपत्वस्य नित्यसाधारणतया जन्यतानवच्छेदकत्वेन जन्यरूपत्वादिकमेव जन्यतावच्छेदकं वाच्यम्। तत्र च जन्यत्वं प्रागभावप्रतियोगित्वं कालिकसम्बन्धेन घटत्वादिमत्त्वं वेति विनिगमनाविरहेणातीव गौरवमिति वाच्यम्। पृथिवीरूपवृत्तिवैजात्यस्य शुक्लत्वव्याप्यजातेश्चेन्द्रियादिप्रतिबध्यतावच्छेदकत्वात्। प्रत्यक्षं प्रत्यनुद्भूताभावहेतुत्वस्यानुद्भूतरूपादिनियामककारणत्वकल्पनापेक्षया अनन्तरूपादीनां च क-

(१) रूपादिकं प्रति चक्षुर्व्यभिचारात् चक्षुःसमवेतानुद्भूतरूपत्वादीनामेव चक्षुष्ट्वादीना हेतुत्व-पा॰ ३ पु।

त्तिः । अतीन्द्रियानन्तस्पर्शकोटिकल्पनामपेक्ष्य लाघवात्[1] मूर्तत्वेनैव द्रव्यसमवायिकारणत्वम् ॥

मूर्तत्वं तु स्पन्दसमवायिकारणतावच्छेदको

ल्पनापेक्षया एतत्कल्पनाया एवोचितत्वात् । अथ तत्तज्जातिविशेषावच्छेदेन रूपस्य नित्यस्पर्शव्यावृत्तजातिविशेषावच्छेदेन स्पर्शस्य च पृथक्पृथक्कार्यत्वाभ्युपगमे कार्यकारणभावबाहुल्यापेक्षया चाक्षुषस्पार्शनसाधारणप्रत्यक्षत्वावच्छिन्नं प्रति चक्षुरादीनां प्रतिबन्धकत्वं समुचितम् । तथा चावयवरूपादिना चक्षुरादौ रूपादिकं जन्यत एव तेषां च चाक्षुषाभावादिना प्रतिबन्धकत्वान्न चाक्षुषापत्तिः। अनुद्भूतत्वादिजात्यनभ्युपगमाच्च न तदवच्छिन्ननियामककारणत्वादिकल्पनागौरवम् । अनुद्भूतत्वव्यवहारश्चायोग्यत्वनिबन्धन इति चेत् । न चक्षुराद्यारम्भकपरमाणूनां नीरूपत्वा[2]द्यभ्युपगमे क्षतिविरहात् तादृशपरमाणुभिश्च रूपवद्द्रव्यान्तरानारम्भादिति सङ्क्षेपः । ननु जन्यद्रव्यत्वावच्छिन्नं प्रति स्पर्शवत्त्वेन समवायिकारणत्वात् चक्षुराद्यवयवानामनुद्भूतस्पर्श आवश्यकः तादृशहेतुत्वाकल्पने गगनादिना द्रव्यारम्भापत्तेरत आह । अतीन्द्रियेति । अतिरिक्तमनसोऽनभ्युपगमेनेदम् ॥

ननु तादृशजातिरप्रामाणिकीत्यत आह । मूर्तत्वं त्विति । स्पन्दत्वावच्छिन्नं प्रति मूर्तत्वेन हेतुत्वाकल्पने

(१) अनन्तस्पर्शमपेक्ष्य लाघवात-पा १ पु । (२) नानारूपत्वा-पा॰ ३ पु ।

जातिविशेषः । भूतत्वमपि तदेव । समवेतेन्द्रियग्राह्यगुणवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं

गगनात्मादिष्वपि स्पन्दापत्तेरिति भावः । वस्तुतस्तु तादृशयुक्तिरकिञ्चित्करी । गगनादौ स्पन्दासमवायिकारणविजातीयाभिघातादीनामनभ्युपगमादेव तत्र तदापत्त्यभावात् । न च क्रियाविशेषं प्रति प्रयत्नवदात्मसंयोगादीनां हेतुत्वकल्पनात् तादृशसंयोगस्य च आत्मन्यपि सत्त्वात् तत्र स्पन्दवारणाय आत्मभेदविशिष्टसंयोगहेतुत्वकल्पनायां विनिगमनाविरहेण तादृशकारणताद्वयकल्पनादवच्छेदकगौरवाच्च तदपेक्षया मूर्तत्वेन हेतुताकल्पनस्यैवौचित्यात्(१) तादृशजातिसिद्धिरिति वाच्यम् । तत्र विजातीयसंयोगसम्बन्धेनात्मन एव हेतुत्वकल्पनात् तेन सम्बन्धेन स्वस्मिन् स्वासत्त्वादेवापत्त्यभावादिति बोध्यम् । परंतु वायुप्रत्यक्षानङ्गीकारकल्पे रूपस्यात्मभिन्नद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति हेतुत्वकल्पनेऽवच्छेदकगौरवात् मूर्तप्रत्यक्षत्वस्यैव तज्जन्यतावच्छेदकत्वौचित्यात् तादृशजातिसिद्धिः । न च मानसव्यावृत्तप्रत्यक्षनिष्ठजातिविशेष एव सिद्ध्यति तज्जन्यतावच्छेदकतयेति किं मूर्तत्वजात्येति वाच्यम् । विनिगमनाविरहेणैव तत्सिद्धेरिति । ननु भूतत्वेन सह तुल्यव्यक्तिवृत्तितया कथं मूर्तत्वं जातिरित्यत आह । **भूतत्वमपि तदेवेति** । मनसो गगनस्य चानभ्युपगमादिति भावः । **समवेतेति** । आत्मत्वजातिमादायात्मन्यतिव्याप्तिवारणाय वृत्त्यन्तम् तत्रैवातिव्याप्तिवारणाय समवेतेतीन्द्रियविशेषणम् । सत्तादिजातिमादायाति-

(१) हेतुत्वकल्पनाया एव समुचितत्वात्-पा २ पु ।

**तदित्यपि केचित् । अन्त्यावयविनिरासस्त्वावयोः समानः ॥**

---

व्याप्तिवारणाय द्रव्यत्वव्याप्येति द्रव्यवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकत्वार्थकम्। घटात्मसंयोगादिकमादायातिप्रसङ्गवारणाय जातीति नित्यत्वार्थकम्। तद्वत्त्वं च समवायेन बोध्यमिति। **तत्** मूर्तत्वम् । केचिदित्यनेनास्वरसः सूचितः । स च तादृशोपाध्यपेक्षया लाघवादावश्यकक्लृप्तजातिविशेषस्यैव भूतपदशक्यतावच्छेदकत्वमुचितमिति । ननु मूर्तत्वजातेर्द्रव्यसमवायिकारणतावच्छेदकत्वे ऽन्त्यावयविनापि द्रव्यारम्भापत्तिरित्यत आह । **अन्त्यावयवीति । समान इति** । स्पर्शवत्त्वेन कारणताया अपि सहकार्यन्तरविरहेणान्त्यावयविनि न द्रव्योत्पत्तिरित्यवश्यं वाच्यत्वात् । सहकार्यन्तरं चान्त्यावयविभेदादि । अथान्त्यावयवित्वस्यैकस्याभावात् कथं तदवच्छिन्नभेदत्वेन हेतुता । न च द्रव्यसमवाय्यन्यत्वं तत् । इतरकारणसत्त्वे द्रव्यसमवाय्यन्यत्वस्य प्रयोजकत्वाभावात्। यद्विरहप्रयुक्तं तस्य द्रव्यवदन्यत्वं तादृशकारणस्यावश्यं वाच्यत्वात्। अन्यथा चाक्षुषादिकं प्रति चाक्षुषविषयान्यत्वादिना प्रतिबन्धकत्वादेव नीरूपादीनां चाक्षुषवारणोपपत्तौ रूपादिमहत्वादिहेतुताविलयप्रसङ्गात्। अन्यत्र च बहुतरकारणताविलयप्रसङ्गादिति चेत् । न अनायत्याघटत्वादिना विशिष्य प्रतिबन्धकतायाः स्वीकारात्(१) । अथवा

---

(१) प्रतिबन्धकत्वस्वीकारात–पा २ पु ।

**पृथक्त्वमपि न गुणान्तरम् । अन्योन्याभावादेव पृथक्त्वव्यवहारोपपत्तेः । पृथक्त्वप्रतीतिस्तु**

---

जन्यद्रव्यत्वावच्छिन्नं प्रति विजातीयैकत्ववत्त्वेनैव हेतुत्वमभ्युपेयते । अन्त्यावयविनामेकत्वे तादृशवैजात्यानभ्युपगमादेव न तत्र द्रव्योत्पादापत्तिरिति । प्रागभावविरहेण न द्रव्योत्पाद इत्यन्ये । वस्तुतस्तु विजातीयसंयोगरूपासमवायिकारणविरहादेव न तत्र द्रव्योत्पाद इति समीचीनम् ॥

पृथक्त्वस्य गुणत्वं निराकरोति । **पृथक्त्वमपीत्यादि** । घटात्पटः पृथगिति प्रतीतिप्रकारोपि गुणपदवाच्यो नेत्यर्थः । प्रमाणाभावादिति भावः । यत्तु न गुणान्तरमित्यस्य गुणत्वजात्यभाववदित्यर्थ इति । तन्न गुणत्वे जातित्वस्याग्रे निराकर्तव्यतया(१) तथा व्याख्यातुमशक्यत्वात् । ननु पृथग्व्यवहारविषयस्यान्यत्र कुत्राप्यन्तर्भावासम्भवेनान्यथानुपपत्त्या गुणपदवाच्यताभ्युपगम आवश्यक इत्यत आह । **अन्योन्येति** । ननु पृथक्त्वं नाभावः सावधिकत्वादित्यनुमानेन तत्राभावत्वाभावनिर्णयेन नाभावपदार्थान्तर्गततेत्यत आह । **पृथक्त्वप्रतीतिस्त्विति** । **न सावधित्वावलम्बनेति** । न सावधित्वविशिष्टधर्मविषयिणीत्यर्थः । तथा चोपदर्शितानुमानेहेत्वसिद्धिरिति भावः । ननु पृथक्त्वस्य सावधित्वानङ्गीकारे घटात् पटः पृथगित्यत्र पञ्चम्यर्थावधित्वान्वयानुपपत्तिस्तथा च पृथक्पद-

---

(१) गुणत्वजातेरग्रे निराकर्तव्यत्वेन-पा २ पु ।

न सावधित्वावलम्बना मानाभावात् । घटात् पटः पृथक् इतरोऽन्यो भिन्नोऽर्थान्तरमित्यादौ च तत्तच्छब्दविशेषप्रयोगे पञ्चम्यानुशासनकी ॥

परत्वापरत्वे अपि न गुणान्तरे । विप्रकृष्टत्वसन्निकृष्टत्वाभ्यां ज्येष्ठत्वकनिष्ठत्वाभ्यां च

---

समभिव्याहारे पञ्चमीविधायकसूत्रस्य नैष्फल्यम् । न च तत्र पञ्चम्याः प्रतियोगित्वार्थकतया तस्य तादृशवाक्यजन्यबोधविषयीभूतान्योन्याभावेऽन्वयसम्भवेन न काप्यनुपपत्तिरिति वाच्यम् । तथा सति घटात् पटः पृथगित्यस्यैव घटान्न पट इति प्रयोगस्यापत्तिरिति घटाद्भिन्न इत्यादौ पञ्चम्यनुपपत्त्या अन्याराादितरदित्यादि पञ्चमीविधायकसूत्रेऽन्यपदस्यान्यत्वबोधकपदपरत्वस्यावश्यकतया नञ्योगे ऽपि पञ्चम्याः सम्भवादित्यत आह । घटादिति । घटात् पटः पृथगित्यादौ पृथगादिशब्दयोगे पञ्चम्यनुशासनसिद्धेत्यर्थः । तथा चोपदर्शितसूत्रे ऽन्यपदं विशिष्य पृथगादिपरं न त्वन्योन्याभावबोधकपदसामान्यपरमिति भावः ।

परत्वापरत्वयोर्गुणत्वं निराकुरुते । परत्वापरत्वे अपीति । परापरव्यवहारप्रकाररूपे इत्यर्थः । न गुणान्तरे । न संयोगादिभिन्ने । ननु तर्हि विप्रकृष्टसन्निकृष्टयोर्ज्येष्ठकनिष्ठयोश्च अयमस्मात्पर अयमस्मादपर इत्यादिव्यवहारः कथं स्यात् तत्राह । विप्रकृष्टेत्यादि । विप्रकृष्टत्वसन्निकृष्टत्वाभ्यां बहुतरसंयुक्तसंयोगाल्पतरसंयुक्त-

**तथाविधव्यवहारोपपत्तेः । अत्राद्ये तृतीयमपेक्षते । अन्त्ये तु परस्पराश्रयमिति विवेकः ।**

**विशेषोऽपि च न पदार्थान्तरं मानाभावात् ।**

---

संयोगाभ्यामित्यर्थः । तथा च विप्रकृष्टत्वसन्निकृष्टत्वयोः परापरबुद्धिप्रकारतया दैशिकपरत्वापरत्वे संयोगातिरिक्तगुणरूपे न सिद्ध्यत इति भावः । **ज्येष्ठत्वकनिष्ठत्वाभ्याम्** तत्प्रागभावाधिकरणक्षणवृत्तित्वरूपज्येष्ठत्वतदुत्पत्तिक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वरूपकनिष्ठत्वाभ्याम् । तथा च ज्येष्ठत्वकनिष्ठत्वयोः परापरबुद्धिप्रकारतया न कालिकपरत्वापरत्वे गुणरूपे सिद्ध्यत इति भावः । **तथाविधव्यवहारोपपत्तेः** । उपदर्शितस्थलेषु परापरव्यवहारोपपत्तेरित्यर्थः । **आद्ये** दर्शितविप्रकृष्टत्वसन्निकृष्टत्वे । **तृतीयम्** । तृतीयदेशम् । **अपेक्षत इति** । प्रयागतः काशीविप्रकृष्टा मथुरा मथुरातः काशीसन्निकृष्टः प्रयाग इति व्यवहारादिति भावः । **अन्त्ये** ज्येष्ठत्वकनिष्ठत्वे । **परस्पराश्रयमिति** । अपेक्षते इत्यनुषङ्गः । तथा च ज्येष्ठत्वव्यवहारेण कनिष्ठत्वाश्रयो विषयीक्रियते । कनिष्ठत्वव्यवहारेण ज्येष्ठत्वाश्रयो विषयीक्रियते । लक्ष्मणात् रामो ज्येष्ठः रामात्कनिष्ठो लक्ष्मण इति व्यवहारादिति भावः ।

**विशेषोऽपि न पदार्थान्तरमिति** । न द्रव्यादिपञ्चभिन्नो भाव इत्यर्थः । ननु समवायित्वे सति समवायि यद्व्यक्तेर्यद्व्यावृत्तं तत्परस्परासमवेतसमवेतशून्यधर्मसमवायीतिव्याप्तिर्घटपटादावववधारिता । अत्र च स

**विनापि व्यावर्तकं धर्मं परेषां विशेषाणामिव नित्यानां द्रव्याणामपि स्वत एव व्यावर्तकत्वा-त्(१) । योगिनोऽतिरिक्तं विशेषमीक्षन्ते(२) । एवं तर्हि त एव सशपथं पृच्छ्यन्तां किमेते ऽतिरिक्तं**

---

त्तादिकमादाय सिद्धसाधनवारणाय परस्परासमवेतेति । एकत्वादिकमादाय सिद्धसाधनवारणाय समवेतशून्येति । प्रमेयत्वादिकमादाय तद्वारणाय समवायीति । अभावे व्यभिचारवारणाय हेतौ समवायित्वे सतीति । घटपट-समवायित्वविशिष्टाया अभावव्यावृत्तेः कपालतन्त्वादौ सत्त्वेन हेतुसत्त्वात् साध्यासत्त्वेन व्यभिचारः स्यादतो हेतौ समवायीति । तथा च तादृशव्याप्तिबलात् सजा-तीयनित्यद्रव्ययोः परस्परासमवेतसमवेतशून्यधर्मसिद्धौ अर्थादतिरिक्तविशेषसिद्धिरत आह । **विनापीति** । **व्यावर्तकं धर्ममिति** । समवायेन व्यावर्तकं धर्ममि-त्यर्थः । **परेषाम्** । अतिरिक्तविशेषस्वीकर्तॄणाम् । **स्वत एवेति** । तादात्म्येनैवेत्यर्थः । **व्यावर्तकत्वादिति** । परस्परव्यावृत्तिबुद्धिजननादित्यर्थः । तथा चोपदर्शितव्या-प्तेरप्रयोजकतया शशविषाणतुल्यैव तर्करसिकानामिति भावः । नन्वतिरिक्तविशेषसिद्धिर्योगिनां प्रत्यक्षबलादि-त्याशङ्कते । **योगिन इति** । काक्वा समाधानं क्रियते । **एवं तर्हीति** । तथा च तेषां तद्विषयकप्रत्यक्षे मानाभा-

---

(१) व्यावृत्तत्वात-पा० १ । २ । ३ पु० ।

(२) प्रत्यक्षत एवेति चेत्-इत्यधिकम् ३ पु० ।

विशेषमीक्षन्ते न वेति ॥

रूपादिकं चाव्याप्यवृत्त्यपि सविषयावृत्ते-र्व्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तिताविरोध-स्तु निष्प्रामाणिकः। पक्के च घटे रक्तप्रतीतिर्ना-प्रमा बाधकाभावात्। उपलभ्यते च भग्ने तस्मि-न्नन्तःश्यामत्वम्। स्मृतिरपि।

लोहितो यस्तु वर्णेन मुखे पुच्छे तु पाण्डुरः।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते॥ इति

---

भावादिति भावः।

रूपादेरव्याप्यवृत्तित्वं व्यवस्थापयति। **रूपादिक-मिति**। ननु रूपादेरव्याप्यवृत्तित्वाङ्गीकारे सविषयावृ-त्तिव्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तित्वाभावनियम-भङ्गप्रसङ्ग इत्यत आह। **सविषयावृत्तेरित्यादि**। तथा च प्रमाणाभावेन तादृशव्याप्तेरभावात् न कोपि दोष इति भावः। ननु तथापि रूपादेरव्याप्यवृत्तित्वे प्रमाणाभाव इत्यत आह। **पक्केऽपीत्यादि**। **श्यामत्वं** नीलरूपम्। तथा चैकस्मिन्नधिकरणे उपलभ्यमानयोरेककालावच्छेदेन विरुद्धयोः रक्तनीलयोरवच्छेदकभेदं विना अनुपपन्नतया अवच्छेदककल्पनस्यावश्यकतया किमवशिष्टमव्याप्यवृ-त्तित्वे इति भावः।

रूपादेरव्याप्यवृत्तितायां लौकिकप्रमाणमुक्त्वा स्मृति-रूपशब्दप्रमाणमप्याह। **लोहित इत्यादि**।

**चित्रमपि नातिरिक्तं रूपं समानाधिकरणवि-जातीयरूपसमुदायादेव तथाविधव्यवहारोपपत्तेः नीलादेर्नीलाद्यतिरिक्तरूपाजनकत्वाच्च ॥**

नानाजातीयरूपवदवयवारब्धघटादौ अतिरिक्तचित्ररूपवादिनां प्राचां मतं दूषयति । **चित्रमपीति** । ननु अतिरिक्तचित्ररूपानङ्गीकारे चित्रं रूपमिति प्रतीतेः का गतिरित्यत आह । **समानाधिकरणेत्यादि** । विजातीयरूपसमुदायात् अव्याप्यवृत्तिनीलपीतादिसमूहादित्यर्थः । **तथाविधव्यवहारोपपत्तेः** । चित्रमिति प्रतीत्युपपत्तेरित्यर्थः । ननु चित्रमिति प्रतीतीनां सर्वत्र नानारूपविषयकत्वकल्पने गौरवात् तदपहाय लाघवादतिरिक्तैकचित्रविषयकत्वकल्पनाया एवोचितत्वादिति तादृशप्रतीतिविषयतयातिरिक्तचित्ररूपसिद्धिरप्रत्यूहैवेत्यत आह । **नीलादेरित्यादि** । नीलादेर्नीलाद्यतिरिक्तरूपाजनकत्वनियमाच्चेत्यर्थः । तथा चातिरिक्तचित्ररूपस्वीकारे तादृशनियमभङ्ग इति नानाजातीयरूपवदवयवारब्धे घटादौ अव्याप्यवृत्तिनानारूपस्वीकार एवोचित इति भावः ।

अत्र प्राचीनमतानुयायिनः । दर्शितनियमस्याप्रयोजकतया नातिरिक्तचित्रे किञ्चिद्बाधकम् । न च चित्ररूपाङ्गीकारे नीलघटादौ चित्रापत्तिवारणाय चित्रत्वावच्छिन्नं प्रति नीलादिषडभावानां स्वाश्रयसमवेतत्वप्रत्यासत्त्या अनेकहेतुत्वकल्पने गौरवमिति वाच्यम् । तत्राव्याप्यवृत्तिनानाजातीयरूपाङ्गीकर्तृमतेऽपि नीलाद्यवयवावच्छेदेन पीताद्यापत्तिवारणाय अवच्छेदकतासम्बन्धेन नीलादिकं

प्रति समवायसम्बन्धेन नीलत्वादेर्हेतुत्वकल्पनायाः साम्यात्। ननु तथापि कारणतावच्छेदकसम्बन्धादिगौरवाशङ्काकलङ्कितं चित्ररूपवादिमतमिति चेद्भ्रान्तोसि। न हि वयमुपदर्शितप्रत्यासत्त्या नीलाभावत्वादिना हेतुत्वं चित्रत्वावच्छिन्नं प्रति कल्पयामः येन गौरवावकाशः किंतु स्ववृत्तिप्रागभावप्रतियोगित्वस्वाश्रयसमवेतसमवेतत्वकालिकविशेषणतैतत्त्रितयसम्बन्धेन रूपविशिष्टचित्ररूपं प्रति स्वसामानाधिकरण्यविशिष्टस्वनिष्ठभेदप्रतियोगितावच्छेदकजातिचित्रत्वान्यतराश्रयसमवायिसमवेतत्वसम्बन्धेन रूपत्वेन हेतुत्वं तत्र नाव्याप्यवृत्तिनानारूपमतापेक्षया गौरवावकाशः। तन्मते उपदर्शितरीत्या नीलादीनां षट्कार्यकारणभावकल्पनाधिक्यात्। यदि चात्रापि स्वपदार्थपर्यालोचनक्रमेण किञ्चिद्दोषमुद्भावयसि तथापि चित्ररूपवादिमतमेव समीचीनम्। यथाहि विजातीयनानारूपवदवयवारब्धे घटादौ अव्याप्यवृत्तिनानाजातीयरूपाङ्गीकारे नीलावयवावच्छेदेन पीतादिवारणायावच्छेदकतासम्बन्धेन पीतादिकं प्रति समवायादिना पीतादीनां षट्कार्यकारणभावकल्पने गौरवम्। चित्ररूपवादिमते तु सर्वनीलादिस्थले चित्रापत्तिवारणाय चित्रत्वावच्छिन्नं प्रति कार्यकालवृत्तितया चित्रेतररूपाभावत्वेनैकहेतुत्वकल्पने स्फुटमेव लाघवम्। तथा च लाघवतर्कोपोद्बलकप्रमाणसिद्धचित्ररूपनिराकरणं गीर्वाणगुरुणाप्यशक्यमित्यवेहि। न च चित्ररूपवादिमते चित्रघटे नीलाद्यापत्तिवारणाय विजातीयनीलादिकं प्रति नीलाभावादेः स्वाश्रयसमवेतत्वप्रत्यासत्त्या प्रतिबन्धकत्वकल्पने गौरवमिति वाच्यम्। तस्योत्तरकालिकत्वेन

**स्पर्शोऽपि चाव्याप्यवृत्तिः । अन्यथा सुकुमारकठिणाभ्यामवयवाभ्यामारब्धे ऽवयविनि सुकुमारावच्छेदेन[1] त्वक्संयोगे काठिन्यस्याप्युपलम्भप्रसङ्गः[2] । न च सुकुमारत्वकठिनत्वे संयोगविशेषौ चानुपत्वप्रसङ्गात् ॥**

फलमुखतयाऽदोषत्वात् । एवमेतादृशरीत्या चित्रस्पर्शादिकमपि आत्मलाभपदवीं विदधातीत्युक्तमधिकं चित्ररूपविचारे ऽनुसन्धेयमिति सङ्क्षेपः ॥

**स्पर्शोऽपि चेति** । सुकुमारकठिणस्पर्शवदवयवारब्धे ऽवयविनीत्यादिः । ननु व्याप्यवृत्तय एव स्पर्शास्तत्र किमिति नाङ्गीक्रियन्ते इत्यत आह । **अन्यथेति** । तत्र व्याप्यवृत्तिनानास्पर्शाङ्गीकारे इत्यर्थः । **सुकुमारावच्छेदेनेत्यादि** । न चाव्याप्यवृत्तिस्पर्शाङ्गीकारे ऽप्येष दोष इति वाच्यम् । सामान्यतोऽव्याप्यवृत्तिस्पार्शनत्वावच्छिन्नं प्रति स्वावच्छेदकावच्छेद्यत्वसम्बन्धेन त्वक्संयोगस्य हेतुत्वकल्पनात् । न च व्याप्यवृत्तित्ववादिनापि कठिनस्पर्शादिस्पार्शनत्वावच्छिन्नं प्रति कठिनस्पर्शादिमदवयवावच्छेदेन त्वक्संयुक्तसमवायत्वेन हेतुत्वकल्पनात् नानुपपत्तिरिति वाच्यम् । तथा सति गौरवप्रसङ्गादिति भावः । ननु सर्वमिदं सुकुमारकठिणभेदेन पृथिव्याः स्पर्शद्वैविध्ये तदेव तु दुर्लभं सुकुमारत्वकठिनत्वादेः संयोगवृत्तिजातित्वादित्याशङ्क्य निषेधति ।

(१) सुकुमारावयवावच्छेदेन–पा॰ २ पु ।
(२) उपलब्धिप्रसङ्ग–पा ३ पु ।

रसोऽपि चाव्याप्यवृत्तिः । अन्यथा तिक्तमधुराभ्या[१] मारब्धे ऽवयविनि तिक्तावयवावच्छेदेन रसनायोगे[२] माधुर्योपलम्भप्रसङ्गः । नीरस एव वा तत्रावयवी ॥

---

नचेति । संयोगविशेषाविति । आरम्भकसंयोगवृत्तिजातिविशेषावित्यर्थः ।

रसोपि चेति । तिक्तमधुरादिनानारसवदवयवारब्धे घटादावित्यादिः । तत्र व्याप्यवृत्तिरसाङ्गीकारे बाधकमाह । अन्यथेति । अर्थस्तु पूर्ववत् । ननु नानाजातीयरसवदवयवारब्धे ऽव्याप्यवृत्तिनानारसाङ्गीकारो निरर्थकः न च तत्र तथानभ्युपगमे रससाक्षात्कारानुपपत्तिः । चित्ररसमादाय तदुपपत्तेः । न च यत्र द्व्यणुकपर्यन्त चित्ररसादिस्वीकारस्य गौरवदोषग्रासेन नीरसत्व एव पर्यवसानादिति वाच्यम् तत्रावयवगतरसमादाय तदुपपत्तेः । न च यत्र द्व्यणुकपर्यन्तं नीरसस्तत्र कागतिरिति वाच्यम् । तत्र रसांशे उपनीतभानात्मकपरमाणुगतरसविषयकप्रत्यक्षस्यैवाङ्गीकारादिति मनसि कृत्वाह । नीरस एवेति । तत्रेति । नानारसवदवयवारब्धे ऽवयविनीत्यर्थः । ननु तत्र रसोत्पत्तौ बाधकाभावोऽवयवरसरूपकारणसत्त्वादिति चेन्न । रसत्वावच्छिन्नं प्रति स्वसामानाधिकरण्यविशिष्टस्वविजातीयरससामानाधिकरण्यसम्बन्धेन रसत्वेन प्रतिबन्धकत्वकल्पनादिति भावः । इदं त्वापाततः ।

---

(१) मवयवाभ्याम्-इत्यधिक क्वचित ।

(२) रसनसयोगे-पा २ पु० ।

एतेन गन्धो व्याख्यातः ॥

कर्माऽपि चाव्याप्यवृत्ति । चलन्तीषु सर्वासु शाखासु निश्चलमूले वृक्षे[१] चलतीतिप्रत्ययात् । शाखा एव परं चलन्ति न पुनर्वृक्ष इत्यपि प्रत्ययोऽस्तीति चेत् तस्य सर्वावयवावच्छेदेन चलनाभावो विषयो न पुनः सर्वथैव चलनाभावः उक्तप्रत्य-

---

तत्र चित्ररसस्वीकारयुक्तेरुक्तत्वादिति ध्येयम् ॥

एतेनेति । दर्शितक्रमेणेत्यर्थः । गन्धो व्याख्यात इति । नानाजातीयगन्धवदवयवारब्धे ऽवयविनि अव्याप्यवृत्तित्वेन गन्धो व्याख्यात इत्यर्थः । इदमुपलक्षणम् । तत्रावयवी निर्गन्धो वेत्यपि द्रष्टव्यम् ॥

चलतीतिप्रत्ययादिति । तथा च कर्मणोऽव्याप्यवृत्तित्वाङ्गीकारे तत्र तथाविधप्रतीत्यनुपपत्त्या तदव्याप्यवृत्तित्वाङ्गीकार आवश्यक इति भावः । ननु तत्र शाखा एव चलन्ति न वृक्ष इतिबाधकप्रतीतिसत्त्वाच्चलतीति प्रत्ययो भ्रम एवेत्यभिप्रेत्याशङ्कते । शाखा एवेति । इत्यपीति बाधक इति शेषः । तस्य चेति । शाखा एवेत्यादिना दर्शितप्रत्ययस्येत्यर्थः । सर्वावच्छेदेनेति । सर्वावयवावच्छेदेनेत्यर्थः । सर्वथैवेति । सर्वावयवानामवच्छेदकत्वावगाहनं विनेत्यर्थः । उक्तप्र-

---

(१) महीरुहे-पा २ पु ।

यविरोधात् । अत एव सदा सकम्पोऽश्वत्थ इति प्रसिद्धिरपि । सर्वैश्च नीलैरारब्धे ऽवयविनि नीलान्नीलं स्वस्वावच्छेदेनोत्पद्यमानमविरोधाद्व्यापकमेवोत्पद्यते सजातीयविजातीयेषु नानापदार्थेषु जायमानं समूहालम्बनरूपमिवैकं ज्ञानम् ॥

एकत्वं च न सासमवायिकारणकम् अस(१)-

त्ययविरोधादिति । तथाविधवृत्ते चलतीति प्रत्ययरूपप्रतिबन्धकसत्त्वादित्यर्थः । तथा च तयोः परस्परविरोधेनाप्रामाण्यापत्त्या विषयव्यवस्थया प्रामाण्याभ्युपगम एवोचित इति भावः । अत एव कर्मणोऽव्याप्यवृत्तित्वादेवेत्यर्थः । ननु भवत्प्रदर्शितरीत्या कर्मणोऽव्याप्यवृत्तित्वं रूपादेरव्याप्यवृत्तित्वं तु प्रतिकूलतर्कग्रस्तत्वाद्धेयमेव । तथाहि नानारूपवदवयवारब्धे घटे ऽव्याप्यवृत्तिनानारूपवत्सर्वनीलावयवारब्धे ऽपि घटे स्वस्वावच्छेदेन नानानीलोत्पादप्रसङ्गोवच्छेदकतासम्बन्धेन नीलजनकस्य नीलस्य तत्र सर्वावयवावच्छेदेन सत्त्वादित्यत आह । सर्वैश्चेत्यादि । स्वस्वावच्छेदेनेत्यनेन व्याप्यवृत्तेरप्यवच्छेदकत्वमङ्गीक्रियत एवेति ध्वनितम् । तथा च तत्र लाघवादेकमेव नीलमङ्गीक्रियत इति भावः ।

अवयव्येकत्वं प्रति अवयवैकत्वहेतुतां खण्डयति । एकत्वं चेति । एकत्वमित्युपलक्षणम् द्वित्वादिकमपि न

(१) स्वासमवायिकारणकम् स्वाम–पा क्वचित ।

मवायिकारणत्वेन कारणत्वाभावात् भावकार्य-मात्रस्यासमवायिकारणजन्यत्वे मानाभावात् । द्रव्यनाशे च सर्वत्रासमवायिकारणनाश एव कारणम् नित्यसमवेतद्रव्यनाशे क्लृप्तत्वात् ॥

सासमवायिकारणकमित्यपि बोध्यम् । न च द्वित्वादिकं प्रति एकत्वद्वित्वादेरसमवायिकारणत्वाभावे घटद्वय एव द्वित्वमुत्पद्यते न त्रिष्वित्यत्र नियामकाभाव इति वाच्यम् । तत्र समवायिकारणद्वयस्यैव विशेषतो नियामकत्वसम्भवात् । न च तत्र समवायिकारणद्वयस्य विशेषतो हेतुत्वकल्पने तत्रैकत्वद्वयहेतुताकल्पनमादाय विनिगमनाविरह इति वाच्यम् । तत्तत्समवायिकारणसमवेतरूपादीनां व्यक्तिस्थानीयापत्तिवारणाय तत्तद्व्यक्तिसमवेतं प्रति तत्तद्व्यक्तित्वेन हेतुत्वकल्पनाया आवश्यकत्वस्यैव विनिगमकत्वादिति भावः । **असमवायिकारणत्वेनेति** । आत्माश्रयदोषेणेति शेषः । ननु मास्त्वसमवायिकारणत्वेन कारणत्वं तथापि भावकार्यस्य सासमवायिकारणत्वनियमेनावयव्येकत्वं प्रति स्वाश्रयसमवेतत्वसम्बन्धेनावयवैकत्वादिनाऽसमवायिकारणत्वमावश्यकमित्यत आह । **भावकार्यस्येति** । तथा चाप्रयोजकत्वात् उपदर्शितनियम उपेक्षणीय इति भावः । द्रव्यनाशं प्रति असमवायिकारणनाश एव सर्वत्र कारणं न तु समवायिकारणनाश इति व्युत्पादयति । **द्रव्यनाशेति** । असमवायिकारणनाश एवेत्येवकारेण समवायिकारणनाशस्य हेतुत्वव्यवच्छेदः । ननु विनिमनाविरहेण समवायिकारणनाश-

स्यापि तत्र हेतुत्वमावश्यकमित्यत आह । **नित्यसमवेतेत्यादि** । तथा च द्व्यणुकनाशानुरोधेन द्रव्यनाशं प्रति असमवायिकारणनाशस्य हेतुताया आवश्यकत्वस्यैव विनिगमकत्वादिति भावः ॥

अत्र प्राचीनानुयायिनः । स्वातन्त्र्येण चेद्द्रव्यनाशं प्रति समवायिकारणनाशस्य हेतुता कल्प्यते तदैव प्राचीनमते गौरवावकाशः । तदेव न किं तु कपालादिसमवेतरूपादिनाशानुरोधेनावश्यकतया कपालादिसमवेतनाशं प्रति कपालादिनाशहेतुतयैवोपपत्तेः । तथाहि कपालादिनाशस्य कार्यतावच्छेदकं न तत्तद्रूपनाशत्वादिकं गौरवात् किं तु कपालसमवेतनाशत्वं तच्च घटनाशसाधारणमिति कपालादिनाशात् घटनाशोत्पत्तौ बाधकाभाव । अथ कपालादिनाशस्य कार्यतावच्छेदकं न कपालादिसमवेतनाशत्वम् अग्निसंयोगनाश्यकपालादि(१) समवेतरूपनाशे व्यभिचारात् । नाप्यग्निसंयोगजन्यकपालादिसमवेतनाशत्वं तथा उत्तरसंयोगजन्यकपालादिक्रियानाशे व्यभिचारात् । उत्तरत्वस्य दुर्वचतया तद्भेदस्य तत्र निवेशासम्भवात् । संयोगत्वेनानुगतीकृतयोरुत्तरसंयोगाग्निसंयोगयोरजन्यत्वनिवेशस्तु सुदूरपराहतः । कालोपाधिविधया संयोगादिजन्यस्य कपालादिनाशजन्यकपालादिसमवेतनाशस्यासंग्रहप्रसङ्गात् । तथा चानायत्या तत्तद्रूपविनाशं प्रति कपालादिनाशत्वेनैव हेतुता कल्पनीया । तथा च न समवायिकारणनाशाद् द्रव्यनाशसम्भव इति तदनुरोधेनातिरिक्तकार्यकारणभाव आवश्यक इति चेत् न स्वप्रतियोगिसमवेतत्वका-

(१) अग्निसंयोगजन्यकपालादि-पा २ पु ।

द्रव्यस्पार्शनप्रत्यक्षे स्पर्शवत्त्वमेव प्रयोजकम् ।

लिकविशेषणतोभयसम्बन्धेन नाशवान् यस्तद्वृत्तिप्रतियो- गितासम्बन्धेन नाशत्वावच्छिन्नं प्रति स्वप्रतियोगिसम- वेतत्वसम्बन्धेन कपालादिनाशत्वेन हेतुतायाः क्लृप्तत्वात् तत्र च नोपदर्शितानुपपत्तिः । पाकादिजन्यरूपादिना- शस्य तथाविधप्रतियोगितासम्बन्धेनानुत्पत्तेः । केचित्तु द्रव्यनाशं प्रति समवायिकारणनाशस्य हेतुत्वमते ऽसमवायिकारणनाशजन्यद्रव्यनाशे व्यभिचारवारणा- य समवायिकरणनाशाजन्यत्वस्य समवायिकारणनाश- जन्यतावच्छेदककोटौ निवेशेन गौरवात् सर्वत्रास- मवायिकारणनाशादेव द्रव्यनाश उचित इत्याहुः । तदसत् कपालनाशजन्यारम्भकसंयोगनाशोत्पत्तिकाले घटादावुपदर्शितकारणसत्त्वेन तथाविधप्रतियोगितासम्ब- न्धेन नाशत्वावच्छिन्नस्यापत्तिवारणाय तथाविधप्रति- योगितासम्बन्धेन द्रव्यान्यनाशत्वावच्छिन्नं प्रति द्रव्य- भेदत्वेनापि हेतुत्वस्याधिकस्य कल्पनीयतया तत्र तत्सह- कारित्वस्य कल्पनीयतया च तुल्यत्वात् । तस्माद् द्रव्य- नाशं प्रति समवायिकारणनाशस्यापि हेतुतावश्यकीति हृदयम् ।

चक्षुःसंयोगादिरूपकारणबलात् गगनादेः प्रत्यक्ष- तावारणाय बहिर्द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति उद्भूतरू- पत्वेन हेतुतां कल्पयित्वा प्राञ्चो वायोरप्रत्यक्षत्वमङ्गी- कुर्वन्ति तन्मतं दूषयति । द्रव्यस्पार्शनप्रत्यक्ष इति । स्पर्शवत्त्वमेवेत्येवकारेण रूपव्यवच्छेदः । प्रयोजकं जनकम् । अत एव द्रव्यस्पार्शने स्पर्शस्य हेतुत्वा-

**अत एव शीतो वायुरित्यादिप्रत्ययोऽपि[1] स्पार्श-नःसाधु सङ्गच्छते। त्रुटेरस्पार्शनत्वे तु प्रकृष्टतमं परिमाणमपि तथा गौरवान्मानाभावात्। त्व-ग्व्यापारानन्तरं वायुर्वातीति सार्वलौकिकप्रत्य-त्तस्यान्यथानुपपत्त्या च रूपं तत्र न निवेशनी-यम्। फूत्कारादौ च स्फुटतरप्रत्यक्षाः सङ्ख्यादयः चाक्षुषद्रव्यप्रत्यक्षे रूपं तथा गौरवान्मानाभावा-च्च। निःस्पर्शायामपि प्रभायां चलनादिप्रत्ययाच्च**

देवेत्यर्थः । ननु द्रव्यस्पार्शनं प्रति स्पर्शस्य हेतुत्वे त्रुटेः स्पार्शनापत्तिरित्यत आह । **त्रुटेरस्पार्शनत्वे त्विति** । तुकारेण त्रुटेः स्पार्शनाभ्युपगमे तत्त्यभावः सूचितः । **प्रकृष्टतमं परिमाणमिति** । त्रसरेणुमहत्त्व-व्यावृत्तयावन्महत्त्वसाधारणजात्यवच्छिन्नमित्यर्थः । तादृशजातिसिद्धिस्तु स्पार्शनजनकतावच्छेदकतयेति भावः । स्पार्शनजनकतावच्छेदककोटौ रूपनिवेशे बाधकमाह । **गौरवादित्यादिना** । प्रामाणिकं गौरवं न दोषायेत्यत आह । **मानाभावादिति** । तत्रेति स्पार्शनजनकतावच्छे-दककोटावित्यर्थः । द्रव्यस्पार्शनं प्रति स्पर्शस्य हेतुत्वं व्यव-स्थाप्य द्रव्यचाक्षुषं प्रति रूपस्य हेतुतां व्यवस्थापयति । **चाक्षुषद्रव्यप्रत्यक्षे त्वित्यादिना** । तथेति कारण-मित्यर्थः द्रव्यचाक्षुषजनकतावच्छेदककोटौ स्पर्शनिवेशे बा-

(१) इत्यारोपोऽपि–पा १ पु ।

स्पर्शोऽपि न तथा द्रव्यस्य समवेतेन्द्रियजन्य-

धकमाह। गौरवादित्यादिना । न तथेति । न कार-णमित्यर्थः । अयमाशयः । बहिर्द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति रूपस्य हेतुत्वं न सम्भवति। बहिष्ट्वस्य दुर्वचत्वात् । न चात्मभिन्नत्वमेव बहिष्ट्वं तथापि मानसान्यद्रव्य-प्रत्यक्षत्वमादाय कार्यतावच्छेदके विनिगमनाविरहस-म्भवात् । न च लाघवान्मूर्तप्रत्यक्षत्वमेव रूपजन्यता-वच्छेदकमस्तु वायोः प्रत्यक्षतासन्देहेन मूर्तप्रत्यक्षत्वस्य सन्दिग्धव्यभिचारकतया रूपकार्यतावच्छेदकत्वासम्भ-वात् । अपि च मूर्तप्रत्यक्षत्वावच्छिन्नं प्रति रूपस्य हेतु-तामभ्युपेत्य वायोः प्रत्यक्षत्वानङ्गीकारे वायोः स्प-र्शस्य स्पार्शनानुपपत्तिः । घटगगनसंयोगस्पार्शनवारणाय क्लृप्तस्य विजातीयसत्स्पार्शनत्वावच्छिन्नं प्रति स्वाश्रयसम-वेतत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्पार्शनविषयत्वा-भावाभावरूपहेतोरभावात् । न च स्पार्शनविषयत्वाभा-वाभावकार्यतावच्छेदककोटौ विजातीयसदंशे स्पर्शान्य-त्वमपि निवेश्यत इति वाच्यम् । विनिगमनाविरहेण कार्य-कारणभावानन्त्यात् कार्यतावच्छेदकगौरवाच्च । स्पार्शन-विषयत्वाभावाभावासहकृततत्सामान्यसामग्र्याः स्पर्श-स्पार्शनस्थले प्रसिद्धायाः गगनघटसंयोगादिप्रत्यक्षापत्ते-र्दुर्वारत्वाच्च । न च चरमदोषवारणाय स्पार्शस्पर्शनत्वाव-च्छिन्नं प्रति स्पर्शत्वेनापि हेतुत्वं कल्पनीयमिति वाच्यम् । तादृशकार्यकारणभावकल्पनस्यापि नैयायिकमते ऽधिक-गौरवसम्पादकत्वादित्यादिकं बहुतरमूहनीयं वायुप्रत्य-क्षतावाद इति । नन्वेवं सति बहिरिन्द्रियजन्यद्रव्यप्रत्यक्ष-त्वावच्छिन्नं प्रति अनात्मसमवेतरसगन्धशब्दजातीतरयो-ग्यधर्मसमवायित्वं कारणमिति समुदायार्थः । अत्रात्मनि

प्रत्यक्षे तु अनात्मसमवेतशब्दरसगन्धजातीतर-योग्यधर्मसमवायित्वम् । तथा सुखादिसमवायिकारणतावच्छेदकत्वेन सिद्धमात्मत्वं जातिर्ने-

---

रसादीतरज्ञानादिरूपयोग्यधर्मसमवायित्वात् बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नापत्तिवारणायानात्मसमवेतत्वं धर्मविशेषणम् । आकाशादौ शब्दरूपतादृशधर्मसत्त्वात् तद्धर्मावच्छिन्नापत्तिवारणाय शब्देतरत्वस्य निवेशः। वाय्वानीतजलीयभागचम्पकभागयोः रसगन्धरूपतादृशयोग्यधर्मसत्त्वात् तत्रोपदर्शितधर्मावच्छिन्नापत्तिवारणाय रसगन्धेतरेति । द्रव्यत्वादिजातिरूपतादृशधर्मसमवायित्वमादाय गगनादौ तादृशधर्मावच्छिन्नापत्तिवारणाय जातीतरेति । एतानि सर्वाणि विशेषणानि नित्यस्य स्वरूपयोग्यस्य फलावश्यम्भाव इति व्याप्त्यङ्गीकारे सार्थकानि तदनङ्गीकारे तु तत्तद्विशेषसामग्र्यभावादेवात्मादौ बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नस्यापत्तिवारणसम्भवात् तादृशविशेषणान्यनुपादेयानीति हृदयम् । अत्र कारणतावच्छेदककोटौ योग्यत्वविशेषणस्य व्यावृत्तिमाह । सुखादीति । तथा चात्मत्वजात्यवच्छिन्नभिन्नसमवेतत्वार्थकानात्मसमवेतत्वरूपविशेषणघटितोपदर्शितकारणतावच्छेदकस्य ज्ञानादिकमादायेश्वरात्मनि सत्त्वात् तत्र तादृशधर्मावच्छिन्नापत्तिवारणाय धर्मे योग्यत्वं विशेषणमिति भावः । अनात्मसमवेतेत्यत्र विषयिधर्मासमानाधिकरणविवक्षायां तु योग्यत्वस्य दर्शितव्यावृत्तिर्न सङ्-

श्वर इति[१] तदीयज्ञानादिपिशाचादिसंयोगवारणाय योग्येति । विषयिधर्मासमानाधिकरणे[२]त्यभिधाने तु शब्दो नोपादेयः । अस्मदादिनय-

च्छन्न इत्यतो व्यावृत्त्यन्तरमाह । पिशाचादिसंयोगेति । तथा च पिशाचादिसंयोगादिरूपतादृशधर्मसमवायित्वबलात् पिशाचादौ तद्धर्मावच्छिन्नापत्तिवारणाय योग्यत्वेन धर्मो विशेषित इति भावः । विषयिधर्मासमानाधिकरणेति । विषयिधर्मसमानाधिकरणत्वावच्छिन्नप्रतियोगिताकभेदस्य तद्व्यक्तित्वेन निवेशिने त्वित्यर्थः । नातो ज्ञानादिसमानाधिकरणत्वावच्छिन्नप्रतियोगिताकभेदमादाय विनिगमनाविरहः । तथाविधभेदस्यैतादृशभेदसमनियततया ऐक्येन तद्व्यक्तित्वेनैकनिवेशनेनैव सर्वनिवेशसम्भवादिति ध्येयम् । शब्दो नोपादेय इति । आकाशस्येश्वरादनतिरिक्ततया शब्दस्य विषयिज्ञानादिसमानाधिकरणतया शब्दे तद्भिन्नत्वाभावेन गगने तथाविधधर्मसमवायित्वाभावान्नोक्तापत्तिः सम्भवतीति भावः । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति अनात्मसमवेतत्यादिविशेषणविशिष्टधर्मसमवायित्वस्य हेतुत्वे गौरवात् तदपहाय तत्र लघुकारणान्तरमाह । अस्मदादीत्यादि । अस्मदादेर्जीवात्मनः न नयनसंसृष्टपित्तद्रव्यस्य चेत्यर्थः । परिमाणशून्येत्यादि । इदं तु यथानिर्देशक्रममन्वेति । तथा च जीवस्य परिमाणशून्यत्वमते

(१) सिद्धमात्मत्व नेश्वरे-पा २ पु । सिद्धात्मत्वजातिस्तु नेश्वरे-पा ३ पु
(२) विषयिधर्माधिकरणे-पा १ । ३ पु० ।

नसंसृष्टपित्तद्रव्यस्य परिमाणशून्यत्वम्। परिमाणवत्त्वमते तु तादृशप्रत्यक्षे परिमाणवत्त्वमेव तथा। यद्वा नयनसंसृष्टपित्तद्रव्यं नीरूपमेव। अन्यथा पुरुषान्तरेण तत्पीतिमोपलम्भापत्तिः। स्मर्यमाणस्तु पीतिमा दोषवशाच्छङ्खादावारो-

---

नयनसंसृष्टपित्तद्रव्यस्य परिमाणवत्त्वमते त्विति समुदायार्थः। इदमुपलक्षणम्। वाय्वानीतच.यकभागादेरपि परिमाणानङ्गीकारे इत्यपि बोध्यम्। **तादृशप्रत्यक्षे**। बहिरिन्द्रियजन्यप्रत्यक्षे। **तथा**। कारणम्। ननु नयनगतपित्त द्रव्ये परिमाणवत्त्वे प्रमाणाभावस्तदनुपलम्भादनुमानस्याप्रयोजकत्वात् प्रमाणान्तरस्याभावात्। तथा चोपदर्शितप्रत्यक्षे परिमाणस्य हेतुत्वे नयनसंसृष्टपित्तद्रव्यप्रत्यक्षानुपपत्तिरित्यत इष्टापत्त्या कल्पान्तरमाह। **यद्वेति**। **नीरूपमेवेति**। तथा च तत्र परिमाणानङ्गीकारेपि न क्षतिः। रूपस्वरूपविशेषकारणाभावात् तस्याप्रत्यक्षत्वेन उपदर्शितकार्यकारणभावे व्यभिचाराभावादिति भावः। अन्यथा तथाविधपित्तद्रव्यस्य रूपस्वीकारे इत्यर्थः। ननु नयनसंसृष्टपित्तद्रव्ये रूपानङ्गीकारे कथं शङ्खः पीत इत्यारोपः। तत्र नयनसंसृष्टपित्तद्रव्यरूपस्यैवानुभूयमानस्य शङ्खादावारोप्यमाणस्येवति स्मर्यमाणनयनसंसृष्टद्रव्यनिष्ठपीतमिवारोपादित्यत आह। **स्मर्यमाणस्त्विति**। **शङ्खादावारोप्यत इति**। तथा च नयनगतपित्तद्रव्यरूपस्यानुभूयमानस्य शङ्खादावारोपानभ्युपगमाददोष इति

प्यत इति । द्रव्यप्रत्यक्षे च शब्दरसगन्धजातीतर-
योग्यधर्मसमवायित्वम् । तथा रसनगतं च
पित्तद्रव्यं न रूपवत् न वा स्पर्शवत् रसना च
न द्रव्यग्राहिकेति न तत्प्रत्यक्षम् ॥

एतेन वायूपनीतसुरभिचम्पकभागोपि[१]
व्याख्यातः ॥

भावः । द्रव्यप्रत्यक्षत्वावच्छिन्नेऽनुगतनियामकमाह । द्रव्यप्रत्यक्षे चेत्यादि । तथा कारणम् । ननु रसेतरत्वस्योपदर्शितकारणतावच्छेदके निवेशे रसनगतपित्तद्रव्यप्रत्यक्षे व्यभिचारः । तत्र तथाविधयोग्यधर्मसमवायित्वाभावादत आह । रसनगतं चेत्यादि । रूपवदित्यनेन चाक्षुषप्रत्यक्षनिरासः न स्पर्शवदित्यनेन स्पार्शनप्रत्यक्षनिरासः । रसना च न द्रव्यग्राहिकेत्यनेन रासनप्रत्यक्षनिरासः । तथा च रसनगतपित्तद्रव्यस्य प्रत्यक्षाभावान्नोपदर्शितकार्यकारणभावे व्यभिचार इति भावः ।

एतेनेति । वाय्वानीतचम्पकभागादौ रूपादिसत्त्वे मानाभावेन प्रत्यक्षतानभ्युपगम एवेत्यर्थः । वाय्वानीतचम्पकभागोऽपीति वाय्वानीतचम्पकभागे व्यभिचारोपीत्यर्थः । व्याख्यातः प्रत्युक्त इत्यर्थः । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षादौ कारणकथनं तु प्रौढ्या । वस्तुनस्तस्याभावेपि न क्षतिः । गगनादेः प्रत्यक्षवारणं तु लाघवादवश्यक्लृप्तेन द्रव्यलौकिकस्पार्शनत्वावच्छिन्नं प्रति स्पर्शहेतुत्वेन द्रव्यचाक्षुषं प्रति

(१) चन्दनभागोऽपि-पा २ । ३ पु ।

घटत्वादेश्चाभावो न घटत्वत्वादिना रूपेण प्रत्यक्षः तस्यातीन्द्रियत्वात्। एवं न जातित्वादिना रूपेणापीति सर्वथैवाप्रत्यक्षः ॥

सत्ता च न द्रव्यगुणकर्मवृत्तिरेका प्रत्यक्षसिद्धा जातिः। धर्मादीनामतीन्द्रियत्वेन तत्र प्रत्यक्षायोगात् जात्यादावपि सद्व्यवहाराच्च।

रूपहेतुत्वेन सम्पादनीयमिति ध्येयम् ॥

घटत्वाभावस्य लौकिकप्रत्यक्षाभावमुपपादयति। घटत्वादेरभाव इत्यादिना तस्य घटत्वस्य। अतीन्द्रियत्वादिति। घटेतरावृत्तित्वे सति घटनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपतया तस्यातीन्द्रियत्वादिति। घटेतरावृत्तित्वस्य कालादिघटितत्वादित्यर्थः। तथा चातीन्द्रियधर्मावच्छिन्नप्रतियोगिताकाभावस्य लौकिकप्रत्यक्षासंभवे तत्तद्घटत्वत्वावच्छिन्नप्रतियोगिताकाभावस्य लौकिकप्रत्यक्षमिति भावः। एवमिति। अतीन्द्रियधर्मावच्छिन्नप्रतियोगिताकाभावस्य लौकिकप्रत्यक्षाभावेनेत्यर्थः। जातित्वरूपेणेति। जातित्वस्य नित्यानेकसमवेतत्वरूपतया अतीन्द्रियध्वंसादिघटितनित्यत्वघटितत्वेनातीन्द्रियत्वादिति भावः। अत्र तत्तद्व्यक्तित्वेन घटत्वाद्यभावलौकिकप्रत्यक्षवारणं तु सुधीभिश्चिन्त्यम्। तत्तद्व्यक्तित्वं च अतिरिक्तं घटत्वादितादात्म्यस्वरूपं वेत्यन्यदेतत् ॥

सत्तायाः जातित्वं निराकरोति। सत्ता चेति। ननु यावद्द्रव्यगुणकर्मसु प्रत्यक्षसिद्धा सा जातिः कथमपलपनीयेत्यत आह। द्रव्यगुणेत्यादि। धर्मादीनामिति।

# वेदान्ततत्त्वविवेकः ।

## श्रीगणेशाय नमः ।



विश्वस्य योनिं विश्वेशं विज्ञानानन्दविग्रहम् ।
नरकेसरिणं वन्दे प्रत्यञ्चं पुरुषोत्तमम् ॥ १ ॥
साक्षात्कृतब्रह्मभासा प्रहसन्मुखपङ्कजम् ।
महीयांसमहं वन्दे गरीयांसं जगत्पतिम् ॥ २ ॥
गुरुणा करुणापूर्वमुपदिष्टाऽद्वयात्मनः ।
कुर्वे तत्त्वविवेकं तं वीक्षतां नरकेसरी ॥ ३ ॥

इह खलु कश्चित्कुतश्चिद्भाग्योदयाच्छिर्यलीकं नित्यादिभिराराधिताराध्यपादभगवदनुग्रहवशादतिविमलमानसः स्वयमेवेत्थं जगत्तत्त्वमालोचयति । ननु कर्मणां स्वतन्त्रफलसाधनानां कथं मनोवैमल्यहेतुत्वम् । तथा च संस्कारकर्मतापत्तिरिति चेत् । न तावदर्थविरोधः । नित्यादीनां पापनिवर्तकस्वभावत्वात् । ब्रह्मज्ञानोपकारकत्वे ऽपि गुणकर्मताऽनङ्गीकारेण 'कर्मणा पितृलोक' इति श्रुत्यवगतस्वतन्त्रफलसाधनत्वाऽविरोधाच्च । नापि प्रमाणाऽभावः । 'धर्मेण पापमपनुदति' 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वा ऽऽत्मशुद्धये' इत्यादिश्रुतिस्मृत्योः सत्त्वात् । अथ वा 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेने'ति वाक्येन 'खादिरं वीर्यकामस्येति' नित्यमिव खादिरत्वं वीर्य्यायाऽग्निहोत्रादयो ज्ञानाय विधी-

यन्ते । न च व्यवहिताऽग्निहोत्रादयः प्रकरणान्तरन्यायेन यज्ञश्रुत्या परामृष्टुं न शक्यन्तइति वाच्यम् । आख्याताऽसमानाधिकरणस्य स्वातन्त्र्येण सुबन्तस्य व्यवहितपरामर्शित्वसंभवात् । अन्यथा 'एष वाव प्रथमो यज्ञो यज्ञाना'मित्यत्रापि तन्न स्यात् । अत्र च एकवाक्यगतत्वेन वेदाऽनुवचनादिकं समुच्चितं तथापीह फलैक्यान्नैककर्मकृद् दर्शादिवत्फलैक्ये ऽपि प्रयोगस्य भिदाश्रुतेः भिन्नकालप्रयोगस्थमेवात्राप्युपतिष्ठते ।

अपरे तु विविदिषा कर्मसाध्येत्याहुः । तदुक्तं 'यज्ञेनेत्यादिवाक्यं शतपथविहितं कर्मवृन्दं गृहीत्वा स्योत्पत्त्याज्ञानसिद्धं पुरुषविविदिषामात्रसाध्ये युनक्ती'ति । तस्या अप्याख्यातान्तपदाभिधेयतया साध्यत्वाऽवगमात् । ननु मुक्तिसाधनस्य कथं विविदिषासम्बन्धः । न कथं चित् । कथं तर्हि कर्माणि विविदिषाहेतव इति । शृणु । कर्मणा ब्रह्मात्मैक्ये ऽविद्यानिवृत्तौ वा ऽसमर्थत्वेन चित्तशुद्धिद्वारा विविदिषायामिष्यमाणज्ञानेन वा श्रुत्यादिभिर्हेतुत्वाऽवगमात् । प्रमाणाऽभावादपि न कर्मणां मुक्तिहेतुत्वम् । विविदिषावाक्यस्योक्तविधया तत्राऽप्रमाणत्वात् । 'विद्यां चाऽविद्यां चे'ति वाक्यस्यापि शुद्धिमात्रहेतुत्वपरत्वात् । 'नाऽन्यः पन्थे'त्यादिना प्रतिषेधाच्च ।

ननु जगत्तत्त्वमालोचयतीत्युक्तं, किं तत् । उच्यते । आ मनुष्यादाब्रह्मलोकं पुण्यकार्यं 'कर्मणा पितृलोको विद्यया देवलोक' इति श्रुतेः । विद्या चाऽत्रोपासना । सा च विहिततया कर्तृपरतन्त्रा क्रियैव । कर्तृकार्यं च सर्वमनित्यमेव घटादिवत् । 'तद्यथेह कर्मचितो लोकः क्षीयते एव मेवाऽमुत्र पुण्यजितो लोकः क्षीयते' इति श्रुतेश्च । आत्मा च नित्यो मोक्षवादिभिः सर्वैरभ्युपेयः ।

स च परमप्रेमास्पदत्वा'देषो ऽस्य परमानन्द' इति श्रुतेश्चाऽऽनन्दः । नन्वेवं स्वयमेव कश्चित् न्यायं श्रुत्यर्थं वा नानुसंधत्ते ऽन्यथैवमितरोपि न्यायः श्रुत्यर्थश्चाऽनुसंधीयेत 'किं चाऽक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती'-ति चातुर्मास्यफलविशेषस्याऽक्षय्यत्वश्रवणाच्च नैकान्ततः कर्मफलस्याऽनित्यत्वमिति । मैवम् । पापशताकुलमानसस्य तव नैतत्प्रतिसंधानमिति किं नीलगिरिशिखरशिरसि विद्योतमानतेजःपुञ्जस्य श्रीभगवतः श्रीनृसिंहस्य निःसीमकरुणाकटाक्षितस्य पुरुषधौरेयस्यापि तन्न संभवेत् । न वा येनैकं ज्ञायते तेनेतरदपि ज्ञातव्यमिति नियमः । एवं सति धूमाऽग्निनियमविदा सर्वो ऽपि नियमो ज्ञात इति न तदर्थं वैशेषिकादिरारभ्येत । कर्मफले चाऽक्षय्यत्वश्रुतिर्विध्यनपेक्षितत्वात्पूर्णाहुत्या सर्वकामप्राप्तिवचनवद् गुणार्थवाद एवेति न सा विशेषश्रुतिः । एवमेवा-'ऽमुत्र पुण्ये'ति श्रवणविध्यपेक्षितार्थतया स्वर्गार्थवादवद्भूतार्थवाद एवेति ततस्तत्सिध्यति । यत्कृतकं तदनित्यमिति न्यायानुग्रहादपीयं बलवती । ततः कर्मफलेभ्यो विरज्यते । ननु प्रथममेव वैराग्यसिद्धौ किं रं हतिपादारम्भेण । तस्य वैराग्यं फलं 'तस्मा ज्जुगुप्सेते'ति तत्सबन्धिश्रुतेरिति । न तत्राऽनित्यत्वकृतविवेककृतं वैराग्यं जुगुप्सावाक्यार्थः । किं तु कर्मफलगत्यागतिविवेकफलम् । तच्चैतद्वाक्यायेति न पुनरुक्तिवैयर्थ्यं वा । श्रुतिरपि प्रथमं वैराग्यं दर्शयति । 'परीक्ष्य लोकान् कर्मचितान्ब्राह्मणो निर्वेदमाया'दिति । ततः शरीरेन्द्रियचेष्टाया मनोरथादिवृत्तेश्च निमित्ताऽभावाच्चित्तेन्द्रिययोर्व्यापारोपरमरूपौ शमदमौ भवतः । ततस्तितिक्षादि । ततो ऽविक्षिप्तचित्तो निरस्ताऽनर्थव्राताऽन्तःतिशऽऽयानन्दगलिताऽखिलभेदमात्मानं वेदान्तवाक्येभ्यो

ऽवगम्य मुमुक्षु 'ब्रह्मविदाप्नोति परं' 'तरति शोकमात्मवि'-दित्यादिश्रुत्यवष्टम्भेन जिज्ञासते ।

ननु किं जिज्ञासया, वेदान्तवाक्यादेवाऽवगतत्वात् । न च सा ऽवगतिरापातरूपैव न निश्चय इति वाच्यम् । निःसामान्यविशेषब्रह्मबोधे सामान्यविषयतालक्षणापातताया असम्भवात् । वेदवाक्यात्संशयाऽसंभवात् । अपरोक्ष ब्रह्मणि परोक्षज्ञानाऽसंभवाच्च । तस्मात्प्रथमं ज्ञानं वेदान्तादुत्पन्नं चेदपरोक्षनिर्णय एवेति । न चेन्न मुमुक्षा जिज्ञासा वा, धर्मिज्ञानाऽभावादिति चेत् । सत्यम् । यद्यपि प्रथमं निर्विशेषब्रह्मसाक्षात्कारः शब्दान्निष्पन्नस्तथापि सो ऽनवधारण एव । अग्रे संशयदर्शनात् । नन्वेककोटिज्ञानमात्रं निश्चय एवेति न संशयः स्यादिति चेत् । न तावन्निश्चयत्वं जातिश्चाक्षुषत्वादिना सांकर्यात् । त्वन्मते धर्मिज्ञाने तदभावप्रसङ्गाच्च । अत एव न संशयाऽन्यज्ञानत्वं, नापि संशयत्वाऽनधिकरणज्ञानत्वम् । धर्मिज्ञानस्य संशयाऽभिन्नत्वेन तदभावात् । अत एव न संशयत्वाऽभाववत्त्वम् । धर्मिज्ञानांशे तदुभयमस्तीति चेत् । न । ज्ञानेंशाऽभावात् । न च धर्मिविषयतावच्छेदेन तदस्तिता, ज्ञानस्वरूपविषयत्वस्य ज्ञानमात्रनया विरुद्धप्रकारकज्ञानाऽभिन्नत्वं संशयत्वं, तच्च तत्राप्यस्तीति वाच्यम् । संशयाऽभिन्नधर्म्यंशज्ञानस्यापि तत्सत्त्वात् । न च तद्विरुद्धप्रकारकज्ञानत्वे सतीति विशेषणान्नाऽतिप्रसङ्ग इति वाच्यम् । लाघवेन स्वाऽऽकारविरुद्धाऽऽकारसमबलज्ञानाऽविरोधित्वस्यैव संशयशब्दार्थत्वात् ।

यत्तु स्वसमानप्रकारकसंशयत्वं धर्म्यंशे नास्तीति स निश्चय इति । तन्न । परमते इदन्त्वस्य केवलान्वयितया तत्प्रकारकसंशयाऽप्रसिद्धेः । नाप्येकविशेष्यकैकप्रकारकज्ञा-

नत्वम् । अयं पटो द्रव्यमित्यादिज्ञाने तदभावात् । स्थाणुत्वस्याऽप्येकत्वात् । एकमात्रप्रकारकत्वं तु धर्मिज्ञाने नास्त्येव । तस्माद्यद् ज्ञानं यत्संशयनिवृत्त्यनुकूलस्वरूपविशेषवत् तत्तन्निश्चय इति । इतरत्तु न तथेति । एककोटिकमपि किंचित् पुरुषदोषादनवधारणं किंचित्तु तर्कादिकारणमहिम्ना तदनतिरिक्तविषयमपि निश्चय इति अनवद्यम् । नन्वेवं संशयनिवृत्तावननुगतो हेतुः स्यादिति चेत् । अनुगताऽसम्भवे तस्याप्याश्रयणीयत्वात् । समानप्रकारकत्वस्यापि ज्ञानविशेषस्वरूपाऽतिरिक्तस्याऽनुगतस्याऽसम्भवात् । संशयनिवृत्तेरन्यतोपि सम्भवेन तन्मात्रे ऽनुगतकारणाऽभावाच्च । नन्वेवमपि न निर्विशेषब्रह्मजिज्ञासा भवितुमर्हति । संशयविरोधि ज्ञानं हीष्यते । तच्च संशयसमानप्रकारकं, निर्विकल्पकादिदमिति ज्ञानाच्च संशयाऽनिवृत्तेः । निर्विशेषे च ब्रह्मणि तदभावात् । न च कल्पितः प्रकारो ऽस्तीति वाच्यम् । तत्त्वावेदकश्रुतिजन्यज्ञानस्य तदविषयत्वादिति । मैवम् । ज्ञानं हि समानविषयतयाऽवधारणात्मकं तत्संशयं निवर्त्तयति न तु तत्समानप्रकारकतया । अन्यविषयात्तददर्शनात् । समानविषयत्वमप्यपेक्षितमिति चेत् । संशयादपि प्रसङ्गः । निश्चयत्वमप्यपेक्षितमिति चेत् । तर्हि समानविषयनिश्चयो निवर्त्तको लाघवात् । निर्विकल्पकमेव नास्ति । अनवधारणत्वादपि न तत्तन्निवर्त्तकम् । इदमिति ज्ञानं तु घटत्वादिवैशिष्ट्याऽविषयत्वान्न तत्संशयं निवर्त्तयति । अन्यथा घट इति ज्ञानात्तद्गोचरे घटत्वे इदं घटत्वं न वेति संशयो न निवर्त्तेत । तस्मिन् घटत्वाऽतिरिक्तप्रकारकत्वाऽभावात् । अनभ्यासदशायां जले जलत्ववैशिष्ट्यविषयप्रामाण्यसंशयो न स्यात्, जलज्ञानस्य निकटस्थजलज्ञानवत्तत्सत्तानिश्चयरूपत्वात् । कि

चैवं प्रमेयवानिति ज्ञानादपि त्वदभिमतनिश्चयाद् घटत्वादिप्रकारकासंशनिवृत्त्यापत्तिः । तत्र सामान्यधर्मप्रकारकत्वं प्रतिबन्धकं चेदिदमिति ज्ञाने ऽपि तथा भविष्यतीति समानप्रकारकत्वं व्यर्थम् । अशाब्दनिष्प्रकारकज्ञानस्याऽप्रमाणत्वात् । तस्माच्छाब्दनिष्प्रकारकज्ञानात् संशयनिवृत्तिरुपपन्नेति न निर्विशेषब्रह्मजिज्ञासाऽनुपपत्तिः ।

अत्र चाऽधिकारिविशेषणं मुमुक्षैव । कामाधिकारे कामनाया एव पुष्कलाऽधिकारनिमित्तत्वात् । विवेकवैराग्यादिकं तु तया ऽपेक्ष्यते । न च सर्वेषां श्रुतौ सङ्कीर्त्तनादधिकारिनिमित्तत्वम् । मुमुक्षाऽनुमाने सङ्कीर्त्तनस्याऽर्थवत्त्वात् । दृष्टद्वारा हेतुत्वे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् । अन्यथा सर्वविशेषणानामेकवाक्यस्थत्वाऽसम्भवेन प्रसज्यप्रतिषेधप्रसङ्गात् ।

एवं साधनचतुष्टयसम्पन्नो जिज्ञासुः संन्यासस्य ज्ञानसाधनत्वमुपश्रुत्य नित्यादीनि कर्माणि संन्यस्यति ।

स च संन्यासो 'ऽथ परिव्राडेकशाटीपरिहितो मुण्डोदरपाण्यरण्यनित्यो भिक्षार्थं ग्रामं प्रविशेदासायं प्रदक्षिणनाऽविचिकित्सन्सार्ववर्णिकं भैक्षचर्यमभिशस्तपतितवर्ज्जमयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीतेति' मैत्रायणीश्रुत्या 'ऽत ऊर्ध्वं यज्ञोपवीतमासनशिखायष्टयः शिक्यं जलपवित्रं कमण्डलुं पात्रमित्येतानि वर्जयित्वा ऽथ दण्डमादत्ते सखा मा गोपाये' ति बौधायनश्रुत्या विहितः परमहंस एव, न त्रिदण्डः । अकर्मफलमोक्षैषिणः सकर्मके तस्मिन्ननधिकारात् । तत्त्यागस्यापि विहितत्वाच्च । तदुक्तं सुरेश्वराचार्यैः ।

सर्वकर्मपरित्यागात्सन्त्यक्ताऽशेषसाधनः ।
श्रुत्युक्तो ऽत्र परिव्राट् स्यादैकात्म्यज्ञानजन्मने ॥

मुण्डोऽपरिग्रहश्चेति प्रत्यक्षश्रुतिवाक्यतः।
तद्विरुद्धं स्मृतेर्वाक्यं नाऽपेक्ष्यं दुर्बलत्वतः॥

संन्यासश्च ज्ञानप्रतिबन्धककल्मषनिवृत्तिद्वारा ज्ञानसाधनम्। स च श्रवणेन समुच्चीयते। 'शान्तो दान्त' इति वाक्येन तयोः समुच्चयविधानात्। शान्त्यादिपदैरेव तद्वत्कर्तृकविचारस्योपस्थितत्वात्। 'वेदानिमं लोकममुं च परित्यज्याऽऽत्मानमन्विच्छेदि'ति क्रमविधानात्प्राग्विचारात्कर्तव्य इति।

त्यक्ताऽशेषक्रियस्यैव संसारं प्रजिहासतः।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता॥

इति वार्त्तिकं क्रमपरं न विरुध्यते। स च जन्मान्तरकृतोपि ज्ञानउपकरोति। तद्द्वारस्य ज्ञानप्रतिबन्धनिवृत्तेस्ततोपि सम्भवात्। 'यद्यातुरः स्यान्मनसा वाचा वा सन्यस्ये'दिति श्रुत्या ऽऽपत्संन्यासविधानाच्च। न चायं संन्यासो ज्ञानार्थो न भवतीति वाच्यम्। प्रसिद्धस्यैव संन्यासस्य दशाविशेषे 'आज्यभागौ जुहोती'तिवदित राज्ञव्यावृत्त्यभिप्रायेण विधानात्। 'एष पन्था ब्रह्मणा ह्यऽनुवित्त' इत्युत्तरवाक्येन तस्यापि परामृष्टत्वाच्च।

एवं साधनचतुष्टयसम्पन्नो जिज्ञासुः कृतसंन्यासो 'ऽथातो ब्रह्मजिज्ञासे'ति सूत्रेणा'ऽऽत्मा वा ऽरे द्रष्टव्यः श्रोतव्यो मन्तव्य' इत्यादिवाक्यार्थमद्वैताऽऽत्मज्ञानसाधनवेदान्तश्रवणादिकर्त्तव्यत्वं विनिश्चित्य तस्या'ऽऽचार्य्यवान्पुरुषो वेद' 'तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठ'मित्यादिवाक्यादाचार्याऽधीनत्वमवगत्य करतलीकृतब्रह्मतत्त्वमाचार्यमुपसर्पति। ततस्तत्प्रधाने ऽद्वैतब्रह्मणि तत्त्वमस्यादिवेदान्ततात्पर्यं निश्चित्य तदर्थमित्थं मनुते, तदेव वादिप्रतिवादिविचाररूपेण प्रदर्श्यते।

ननु त्वम्पदार्थस्य प्रमातृत्वकर्तृत्वभोक्तृत्वविशिष्टस्य तद्विपरीतब्रह्मणा कथमभेदः । न हि बाधितमर्थमागमोऽपि बोधयेदिति चेत् । न । प्रमातृत्वादिधर्मिणो ऽहङ्कारस्यात्मनि कल्पितत्वात् तदधिष्ठानात्मन एव श्रुत्या ऽभेदप्रतिपादनात् । तथा हि । अस्ति तावच्छुक्तिकादाविदं रजतमिति ज्ञानम् । तत्र तावद् ज्ञानद्वयम् । ततो रजतार्थिप्रवृत्त्यनुपपत्तेः । न चेदमिति ज्ञानात्प्रवृत्तिः । अतिप्रसङ्गात् । रजतज्ञानं च शुक्तिविषयत्वं विना तत्र न प्रवर्तकम्, अन्यविषयादन्यत्र प्रवृत्त्ययोगात् । न चोपस्थितेष्टभेदाऽग्रहात्प्रवृत्तिः । लाघवेनोपस्थितेरेव प्रवर्त्तकत्वात् । रजतज्ञानं च शुक्तिविषयं तद्गोचरव्यवहारहेतुत्वात् शुक्तिज्ञानवदिति सिद्धं तावच्छुक्तिरजतविशिष्टं ज्ञानम् । न च तद्रजतं तत्रास्ति, शुक्तौ रजतं नास्तीति त्रैकालिकतदभावस्याऽनुभवात् । तर्ह्यन्यत्रास्तु दोषवशाच्छुक्तिकायां देशान्तरीयं रजतात्मना ग्रहोपपत्तेरित्यन्यथाख्यातिरिति चेत् । तन्न न तावदिदं ज्ञानं परोक्षं, पुरोदेशे रजतं साक्षात्करोमीत्यनुभवात् । नापीन्द्रियजन्यं तत्, रजतज्ञानं नेन्द्रियजन्यं तत्सन्निकर्षाऽजन्यत्वात् अनुमितिवत् । न चाऽप्रयोजकत्वं, क्लृप्तसहकारिणं विनेन्द्रियस्य कार्याऽजनकत्वात् । विशेष्यसन्निकर्षविशेषणज्ञानादिविशिष्टधीसामग्र्यां सत्यामपि विशेषणसन्निकर्षाऽभावे विशिष्टधियो ऽदर्शनात् । किं चैवं पर्वते वन्हिविशिष्टं प्रत्यक्षमेव स्यात् न त्वनुमितिः । विशेषणसन्निकर्षाऽतिरिक्तप्रत्यक्षसामग्रीसत्त्वात् । प्रत्यक्षसामग्र्याश्च संशयाऽनन्तरमिवाऽनुमितिसामग्रीतो बलवत्त्वात् । न च प्रमायामेव विशेषणसन्निकर्षः कारणं, लाघवेन विशिष्टप्रत्यक्षमात्रे तस्य हेतुत्वात् । न च ज्ञानं संस्कारो वा प्रत्यासत्तिरिति वाच्यम् । ज्ञानस्य प्रत्यासत्तेरन्यत्र

निरस्तत्वात् । शुक्तौ रजतस्य पूर्वमननुभूतत्वेन तत्र ज्ञानस्य प्रत्यासत्तित्वाऽयोगाच्च । नापि दोष एव प्रत्यासत्तिः । तस्य यथार्थविशेषणांशज्ञानाऽजनकत्वात् । किं च ज्ञानस्य स्वविषये प्रवर्तकत्वात् अन्यत्रैवास्मिन्नर्थेऽपि प्रवर्त्तेत । रजतज्ञानविषयरजतस्याऽन्यत्रैव सत्त्वात् । ननु रजतं तस्य न विषयः, शुक्तिरेवेति चेत्, अन्याकारज्ञानस्य अन्यालम्बनत्वसंविद्विरोधात् । ननु रजतत्ववैशिष्ट्यं शुक्तौ विषयीकरोति ज्ञानमिति नाऽनुभवविरोधो न वा तत्र प्रवृत्त्यनुपपत्तिः । यत्रेष्टतावच्छेदकवैशिष्ट्यं विषयीक्रियते तत्र ज्ञानस्य प्रवर्त्तकत्वादिति चेत्, न । इदं रजतमिति ज्ञानं हि पुरोवर्त्तिनि रजतत्वविशिष्टाऽभेदं विषयीकरोति न तु पुरोवर्त्तिनि रजतत्वसंसर्गं, रजतमिति स्मृतावुपसर्जनस्य तस्याऽऽरोपाऽसम्भवात् । आरोपे च आरोप्यस्वतन्त्रोपस्थितिर्हेतुः । अन्यथा संसर्गाऽभावधीनियामकप्रतियोग्यारोपसमये तादात्म्याऽऽरोपप्रसङ्गात् । स्वतन्त्रोपस्थितिरजतारोपसामग्र्यां सत्याम् उपसर्जनस्यैव आरोप इति नियन्तुमशक्यत्वात् । न चोभयारोपे प्रमाणमस्ति । न च रजतत्वमिति स्मरणम् भ्रमपूर्वं नियमेन कल्पयितुं शक्यम् । तस्माद्रजतत्ववैशिष्ट्यं रजते एव विषयीक्रियतइति तत्रैव प्रवृत्तिः । रजतज्ञानं शुक्तिमपि विषयीकरोतीति चेत् । अन्याकारं ज्ञानमन्यालम्बनमिति संविद्विरोधः । एवमसतो वैशिष्ट्यस्याऽपरोक्षप्रतीत्यनुपपत्तिः । अत्राऽपरोक्षज्ञानविषयस्य देशान्तरसत्त्वे प्रमाणाऽभावाच्च । अस्तु तर्हि भ्रमविषयो ऽत्यन्तासदेव । देशान्तरसत्त्वे प्रमाणाभावात् । अत्रापि बाधविरोधेन सत्त्वाऽयोगात् । अत एवाऽसदेव रजतमभादित्यनुभव इति चेत् । असतो ज्ञानविषयत्वाऽनुपपत्तिः । न ह्यसतः केन चिदिन्द्रियेण सम्बन्धोस्ति । न च

संविदभिन्नत्वं, तस्य रजतत्वादिविशेषाऽभावाच्च । एवमसतो बाधाऽयोगाच्च । न ह्यत्यन्ताभावो ऽसतोऽस्ति । न च असद् नाम किं चिदस्तीत्युक्तमन्यत्र ।

किं तर्हि रजतमिति । अध्यस्तमिति ब्रूमः । ननु किमिदमध्यस्तत्वं रजतादेः । न तावद्दोषजन्यत्वं, भवन्मते ऽविद्यादावसम्भवात् । दोषोपि न तावदुपादानं, प्रमातृकरणदोषयोर्बाह्यार्थं प्रति तदनुपपत्तेः । नापि सादृश्यमुपादानं, गुणाद्यात्मनस्तस्य द्रव्योपादानत्वाऽयोगात् । इतरव्यावृत्तजन्यविशेषस्याऽज्ञानमन्तरेण तदुपादानत्वग्रहाऽसम्भवाच्च । दोषस्याऽऽवश्यकज्ञानं प्रत्येव हेतुत्वेनाऽर्थं प्रत्यहेतुत्वाच्च । अत एव दोषस्य न तत्र निमित्तत्वम् । नापि संस्कारजन्यत्वं, स्मृतावतिव्याप्तेः । भावनासंस्कारस्याऽर्थाऽहेतुत्वाच्च । नापि सम्प्रयोगजन्यत्वम्, अनुभवे ऽतिव्याप्तेः । स्वस्य परस्य वेन्द्रियसम्प्रयोगेणाऽर्थस्याऽजन्यत्वात् । स्वप्नाध्यासादावव्याप्तेश्च । मनसो ऽतीन्द्रियत्वात् अन्तःकरणरूपाऽहङ्काराऽध्यासात्पूर्वं मनःसम्प्रयोगाऽभावाच्च । अत एव सम्प्रयोगसंस्कारदोषजन्यत्वमध्यासलक्षणमिति प्रत्युक्तम् ।

नापि भ्रमविषयत्वम् । तत्र भ्रान्तिर्यदि दोषजन्यज्ञानत्वम् अविद्याभ्रान्त्यादावव्याप्तिः, रजतादिभ्रमस्यापीन्द्रियाद्यजन्यस्य तद्दोषजन्यत्वाऽनुपपत्तेः । नापि संस्कारजन्याऽनुभवत्वं, प्रत्यभिज्ञायामतिव्याप्तेः । अभिज्ञायां तु न क्वापि संस्कारो हेतुः । नाप्यसद्विषयज्ञानं भ्रमः । असत्ख्यात्यनभ्युपगमात् । अतीतादिज्ञाने प्रत्यभिज्ञातत्तांशज्ञाने ऽतिव्याप्तेश्च । नापि व्यधिकरणप्रकारकज्ञानत्वम् । अन्यथाख्यात्यनभ्युपगमात् । घटरूपमिति ज्ञाने घटप्रका-

रके ऽतिव्याप्तेश्च । न च तत्र घटरूपत्वमेव प्रकारो न घट इति वाच्यम् । रूपे घटवैशिष्ट्यस्य प्रकाशमानत्वाद् घटस्य पूर्वमुपस्थितत्वाच्च । घटरूपत्वस्यापि घटघटितत्वाच्च । स्वरूपसम्बन्धवादिनो रजतत्वादेरवैयधिकरण्याच्च । बाधस्य समवायिविषयतया ऽप्युपपत्तेः । एवं च सर्वप्रत्यययाथार्थ्यं सिध्यति । अत एव न तदभाववति तत्प्रकारकज्ञानत्वम् ।

नन्वर्थस्य मिथ्यात्वमध्यस्तत्वमिति चेत्, किमिदं मिथ्यात्वम् । न तावदत्यन्ताभावस्य स्वसंसृज्यमानाऽधिकरणवृत्त्यत्यन्ताभावस्य वा प्रतियोगित्वं, संयोगादावतिव्याप्तेः । नाप्येकावच्छेदेन स्वसंसृज्यमानाऽधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वं, विरोधेनाऽसम्भवात् । नापि ज्ञाननिवर्त्यत्वं, घटादावतिव्याप्तेः । नापि जडत्वं मिथ्यात्वं, सत्यत्वविरोधिमिथ्यात्वस्याऽनिवार्यत्वात् । नाप्यनिर्वचनीयत्वं मिथ्यात्वं, तच्च सदसद्भिलक्षणत्वमिति वाच्यम् । यदि प्रत्येकं विलक्षणत्वम्, असति ब्रह्मणि चातिव्याप्तिः । यदि समुदितविलक्षणत्वं तदा प्रतियोग्यप्रसिद्धेरसम्भवः । विरुद्धोभयवैलक्षण्यस्यापि विरुद्धत्वात् । अत एव न सत्त्वाऽनधिकरणत्वे सत्यसत्त्वाऽनधिकरणत्वं निर्द्धर्मके ब्रह्मण्यतिव्याप्तेश्च ।

नाप्यध्यस्तत्वादौ प्रमाणं पश्यामः । प्रत्यक्षेणाऽननुभवात् । न च दृश्यत्वादिना तदनुमानं, दृष्टान्ताऽभावात् । न चाऽसच्चेन्न प्रतीयेत, सच्चेन्न बाध्येत, इदं च प्रतीयते बाध्यते चेति तदुभयविलक्षणमिति वाच्यम् । असतः प्रतीतिबाधयोरभावे इदमसन्न भवतीति प्रतीतिबाधयोरयोगात् । असतो ऽपरोक्षभानं नेति चेत्, यदसत्तन्नाऽपरोक्षमिति व्याप्तिज्ञानस्यैवाऽपरोक्षत्वादिति । मैवम् । न ता-

यदध्यासलक्षणाऽनिरूपणम् । स्मृतिरूपत्वे सति पूर्वदृष्टजातीयत्वस्य तल्लक्षणत्वात् । स्मृतिः स्मर्यमाणं, तद्रूपत्वं च तत्सदृशत्वम् । तच्च प्रमाणाऽजन्यज्ञानविषयत्वम् । इदं च प्रातिभासिकाध्यासलक्षणमिति न घटादावव्याप्तिदोषः । अध्यासमात्रलक्षणं परत्राऽवभासः । अवभास्यतइत्यवभासः । स्वाऽधिकरणताऽयोग्याधिकरणकत्वमिति यावत् । तदत्यन्ताभावत्वेन तद्वत्त्वेन वा तदाश्रयस्य तदधिकरणतायोग्यत्वम् । न च विरोधादसम्भव इति वक्ष्यते । एतदभिप्रेत्य भगवता भाष्यकारेणोक्तं 'स्मृतिरूपः परत्र पूर्वदृष्टाऽवभास' इति ।

अत्र केचित्स्मृतिरूपपदेन पूर्वोक्तसंप्रयोगादिकारणत्रितयजन्यत्वस्य विवक्षितत्वात्कार्याऽध्यासलक्षणमित्याहुः । तत्र लक्षणशब्दः स्वरूपपरः । संप्रयोगादिविशेषणत्रयस्योपयोगाऽभावात् । दोषजन्यत्वे सति संस्कारजन्यत्वं वा लक्षणम् । दोषत्वेन कारणत्वं न विवक्षितमिति न व्यर्थविशेष्यत्वम् । अनुमितौ न लिङ्गं कारणमिति दोषलिङ्गाऽनुमितौ न सिद्धान्ते ऽतिव्याप्तिः । संप्रयोगशब्देन च तज्जन्यमधिष्ठानसामान्यज्ञानं विवक्षितं, ततश्चाऽधिष्ठानसामान्यज्ञानजन्यत्वे सति दोषजन्यत्वं लक्षणान्तरम् । दोषादेरनन्यथासिद्धाऽन्वयव्यतिरेकाभ्यां विनिगमकाऽभावेन चोभयत्रापि हेतुत्वमिति नाऽसम्भवः ।

मिश्रास्तु स्मृतिरूपपदेनाऽसंनिहितत्वं विवक्षित्वाऽसंनिहितत्वे सति परत्राऽवभास इत्याहुः । असंनिहितत्वमपि वस्तुनो ऽधिष्ठाने ऽसत्त्वमिति नाऽन्यथाख्यातिरिति तद्व्याख्यातारः । एतच्च परत्रेति पदसामर्थ्यादुक्तमिति न वैयर्थ्यम् । नापि मिथ्यात्वस्याऽनिरुक्तिः, प्रतिपन्नोपाधावभावप्रतियोगित्वस्य तल्लक्षणत्वात् ।

तत्रैकावच्छेदेन स्वसंसृज्यमानाऽधिकरणनिष्ठाऽत्यन्ताभावप्रतियोगित्वमिति केचित् । अस्ति हि शुक्तौ रजतप्रत्यक्षं, तच्च नाऽसद्विषयं, देशान्तरीयरजतविषयं वेत्युक्तम् । ततश्च तत्रैव रजतमभ्युपगन्तव्यं, न ह्यत्र सत्कालत्रयेपि इदं रजतं न भवतीति प्रतीतेः । सा च प्रतीतिः रजतप्रतीतिरिव न बाध्यतइत्यभावः परमार्थः । ततो न विरोधादसंभवः । समानसत्ताकयोरेव भावाऽभावयोर्विरोधात् । अयं चाऽभावो ऽधिष्ठाने एव वर्त्तते, ऽन्यत्र वर्त्तमानस्तु प्रतियोगिसमानसत्ताको ऽन्य एव, परैरपि स्वोपादाने ऽन्यत्र वर्त्तमानाऽभावयोर्भेदाऽभ्युपगमात् । न च कल्पिताऽभावस्य कथं परमार्थत्वमिति वाच्यम् । प्रतियोगिनः कल्पितत्वाऽभावे तदधिकरणे तदभावस्य वस्तुत्वाऽयोगात् । अतीताद्यसत्प्रतियोगिकस्यैवाऽस्यापि बाधाऽभावात् । अथ वा सत्तावच्छिन्नप्रतियोगिकस्वाऽत्यन्ताभावसमानाधिकरणत्वम् । सत्त्वं चाऽधिष्ठानस्वरूपमेवाऽवच्छेदकं न तद्गतमिति न तत्प्रतियोगिना सामानाधिकरण्याऽनुपपत्तिः ।

अन्ये तु कल्पितप्रतियोगिकविरहैकस्वभावाऽभावस्य न परमार्थत्वं वक्तुं शक्यते, तद्विरहत्वस्य वास्तवत्वाऽयोगात् । तदभावे च तस्य तद्विरहात्मत्वं कल्पितमेव, न विरहरूपाऽभावसिद्धिः । न हि निष्प्रतियोगिको विरहरूपो ऽभावो ऽस्ति । ब्रह्माऽतिरिक्तवस्त्वभ्युपगमे ऽद्वैतश्रुतिविरोधाच्च । तस्माद्भूतलाद्धटाद्यभाववत् अधिष्ठाने आरोपिताऽभावो न ततो ऽतिरिच्यते, किं तु सर्वाऽधिष्ठानं निराश्रयचैतन्यमेवाऽधिकरणाद् भिन्नसत्ताकप्रतियोगिकाऽभावस्यैवाऽधिकरणभेदात् । न च लाघवात्प्रतियोगिभेदमात्रम-

भावस्याऽधिकरणभेदे प्रयोजकमिति वाच्यम् । रजता-ऽधिकरणे तत्कालीनतया प्रमीयमाणाऽभावस्याऽधिष्ठाना-द्भेदाऽनुपपत्त्या गुरुशरीरस्यापि भिन्नसत्ताकस्यैव प्रयोजक-त्वात् । अत एव घटादौ शुक्तिरजताद्यभावो ऽन्य एव । तथा च स्वाऽनधिकरणाऽनधिकरणाऽत्यन्ताभावप्रतियो-गित्वम् । स्वस्याऽनधिकरणं यद् घटादि तदनधिकरणं यस्य तत्प्रतियोगित्वम् । ब्रह्मरूपाऽत्यन्ताभावश्चैवमिति ना-ऽसम्भवः । सत्यज्ञानाऽऽनन्दात्मन एव ब्रह्मणः प्रपञ्चा-त्यन्ताभावत्वमिति न शून्यतापत्तिः । एतच्चाऽन्यत्राप-पादितमिति नाऽत्र प्रपञ्च्यते ।

एतदेवाऽनिर्वचनीयत्वम् । तदुक्तम् । 'मिथ्याशब्दो द्विविधो ऽपह्नववचनो ऽनिर्वचनीयतावचनश्चे'ति । अथ वा सदन्यत्वमनिर्वचनीयत्वम् । न चाऽस यतिव्या-प्तिः । अन्यत्वादिधर्मयोग्याऽसद्रूपाङ्गीकारे तस्य प्रपञ्चा-ऽन्तःपातित्वाद् बाह्याऽभ्युपेताऽसतो निःस्वरूपत्वात् । किं चाऽसन्नाम किं चिदस्ति चेदसत्त्वव्याघातः, नास्ति चेत्कुत्राऽतिव्याप्तिः । सच्च बाधाऽयोग्यस्वरूपं, न तु सत्त्व-विशिष्टम् । सत्त्वस्यैवाऽसत्त्वापातात् । न च सत्त्वे ऽपि सत्त्वं वर्तते । सत्त्वान्तरे प्रमाणाऽभावात् । स्वस्य स्ववृ-त्तित्वाऽयोगाच्च । अतो निर्धर्मके ब्रह्मणि नाऽतिव्याप्तिः । न च सत्त्वविशिष्टे प्रपञ्चे ऽव्याप्तिर्वा, तत्त्वद्वादिनं प्रति प्रपञ्चस्य सत्त्वादिविरुद्धसाध्याऽभिप्रायेण सिद्धान्तग्रन्थे सदन्यत्वे त्वसदन्यत्वे सत्युभयात्मकाऽन्यत्वमित्युक्तम् । तत्र चाहृदयवचसामहृदयमुत्तरमिति न्यायेन सदन्यत्वं प्रपञ्चस्योक्तं न तु तत्त्वाऽभिप्रायेण । असदाकारज्ञानाऽऽ-भासस्य निर्विषयताया अन्यत्रोपपादितत्वात् । तस्मादित्थं-त्थमध्यासादिलक्षणम् ।

प्रमाणं च सदिदं रजतमिति तावत्प्रत्यक्षमनिर्वचनीयत्वे प्रमाणम् । तत्र न तावद्रजतस्वरूपं सत् । सच्छब्दस्य रजतपर्यायत्वेनाऽप्रसिद्धेः । प्रपञ्चमात्राऽनुगतसद्बुद्धेस्तद्विषयत्वाऽनुपपत्तेश्च । नापि सत्ता तस्य धर्मः । चैतन्याऽतिरिक्तसत्ताधर्मे प्रमाणाऽभावात् । सत्ताजातेः सर्वत्राऽसिद्धेश्च । बाधाऽयोग्यत्वस्यात्मनो ऽन्यत्र प्रमाणाऽभावात् । प्रपञ्चे तद्बुद्धेरन्यथाप्युपपत्तेः । शुक्तिरजतादेः प्रत्यक्षं बाध्यमानत्वाच्च । तस्मादधिष्ठानसद्व्यक्तितादात्म्यमेवेदं ज्ञानं विषयीकरोति । सदन्यद्रजतं प्रत्यक्षविषयः । अनुमानं च विमतं सदन्यत् बाध्यत्वात् यन्नैवं तन्नैवं यथा ऽऽत्मा । एवं मिथ्यात्वेपि प्रयोक्तव्यम् । अव्याप्यवृत्त्यत्यन्ताभावाऽप्रतियोगिशुक्तिरजतं स्वसमानाधिकरणात्यन्ताभावप्रतियोगि दृश्यत्वात् संयोगवत् । घटादिकं च पक्षतुल्यम् । एवं स्वसमानाधिकरणाऽत्यन्ताभावाऽप्रतियोगिशुक्तिरजतं स्वाऽनधिकरणमात्राऽवृत्त्यत्यन्ताभावप्रतियोगि दृश्यत्वात् संयोगवत् । अन्यथाख्यात्यादिनिराकरणेन शुक्तिरूप्यस्य साधितत्वात् नाश्रयासिद्धिः । भ्रान्तिज्ञानत्वप्रसिद्ध्यन्यथानुपपत्त्यापि ज्ञेयस्य मिथ्यात्वम् । सत्त्वे बाधाऽनुपपत्तेः । असत्त्वे ऽपरोक्षत्वाऽयोगाच्च सदन्यत्वमसदन्यत्वं च । न चैवं सदन्यत्वे ऽपरोक्षत्व,मसदन्यत्वे च बाधो ऽसद्वदात्मवच्च न स्यादिति वाच्यम् । तत्किं सत्त्वमपरोक्षत्वप्रयोजकं येन तदभावे तन्न स्यात् । तथा च सति नित्याऽतीन्द्रियेपि तत्प्रसङ्गः । न च सतो रूपादिमतो ऽपरोक्षत्वम्, तद्यावश्यकेन तेनैवाऽलं किं सत्त्वेन । न चाऽपरोक्षत्वे सत्त्वं व्यापकं, व्याप्त्यसंप्रतिपत्तेः । न चात्मनि व्याप्तिः । चैतन्यस्योपाधित्वात् । व्याप्तिग्राहकतर्काऽभावाच्च । एव-

मसत्त्वस्यापि बाधाऽप्रयोजकत्वान्न तद्व्यतिरेके ऽबाध्य वम् । अपरोक्षत्वाऽभावे त्वसत्त्वं रूपाद्यभावसंपादकतया प्रयोजकमेव । बाह्येन तुच्छस्याऽपरोक्षत्वाऽनङ्गीकाराच्च ।

यत्तु यदसत्तन्नाऽपरोक्षमिति व्याप्तिग्रहएव व्यभिचार इति । तन्न देशकालादिसंबन्धशून्ये ऽसति व्याप्त्यसंभवेन निर्विषयाऽसज्ज्ञाने ऽपरोक्षविषयत्वनिषेधाऽभिप्रायत्वात्तस्य ।

यत्तु सदसत्त्वयोः परस्परं विरोधात्तदुभयनिषेध एकत्र न संभवति विरुद्धयोरिव तदुभयनिषेधस्याप्येकत्राऽभावादिति । तन्न । घटाऽभावे घटतदभावाऽधिकरणत्वस्य, घटोत्पत्तेः पूर्वं तन्तुषु पटध्वंसतदभावाऽधिकरणत्वस्य चाऽभावात् । सत्त्वधर्मे सत्त्वतदभावयोरभावाच्च । तस्मात् सिद्धमनिर्वचनीयादिस्वभावं शुक्तिरजतादि ।

तत्र चाऽन्वयव्यतिरेकाभ्यां दोषादि निमित्तकारणम् । दोषजन्यज्ञानस्याऽन्यस्याऽभावाच्चार्थ एव तत्कारणम् । एवं स्थिते प्रयुज्यते, ऽहङ्कारो ऽध्यस्तो दृश्यत्वाच्छुक्तिरजतवत् । न च सादृश्याभावान्नाऽहङ्काराध्यास उपपन्न इति वाच्यम् । तस्य ज्ञाने ऽनित्यत्वजडत्वाद्यारोपे व्यभिचारेणाऽध्यासमात्राऽहेतुत्वात् । नन्वेवमव्यभिरात्संस्कारः कारणं, स चात्र नास्तीति चेत् । पूर्वभ्रमजन्यसंस्कारस्य सत्त्वात् । न चाहङ्काराधिष्ठानस्य दृश्यत्वाऽयोगात् स्वप्रकाशत्वं वक्तव्यं, तत्र च नारोपसम्भव इति वाच्यम् । स्वप्रकाशस्याप्यविद्याप्रतिबद्धप्रकाशत्वात् । तत्र च प्रमाणं वक्ष्यते ।

स्यादेतत्, यद्यहङ्कारातिरिक्तात्मनि किं चित्प्रमाणं भवेत्, तत्रयद्यपि त्वंपदार्थो न देहो न चेन्द्रियं, रूपादिमत्त्वाज्जन्मनाशवत्त्वात्, आत्मनश्च जन्मान्तरीयानुसंधा-

नेनानाऽदित्वात् । स्वप्नावस्थायां मनुष्यादिदेहाभावेपि अहमित्यनुभवदर्शनात् । करणस्य वास्यादिवदनात्मत्वाच्च । प्रत्यभिज्ञाऽनुपपत्तेश्च । तथापि नाऽहमनुभवगोचरादन्य आत्मा । अहम एवात्मत्वाऽनुभवात्तदन्यात्मनि प्रमाणाऽसद्भावात् । न तावत्तत्र प्रत्यक्षं प्रमाणं, नाप्यहङ्कारोऽनात्मा दृश्यत्वाद् घटवदिति पक्षधर्मताबलात्तत्सिद्धिरिति वाच्यम् । अहङ्कारपदेनाऽन्तःकरणाद्यभिधाने सिद्धसाधनात् । तदतिरिक्ताऽहमितिव्यवहारविषयाभिधाने सिद्धान्ते बाधात् । दृश्यत्वं च ब्रह्मणि व्यभिचारि । अहङ्कारे आत्मज्ञानाश्रयत्वादिभ्यो व्यतिरेकेण घटादिवदिति प्रतिप्रयोगाच्च । अहङ्कारस्याऽनात्मत्वे ऽहं मुक्तः स्यामिति मुक्त्यर्थिप्रवृत्तिबाधश्च । अत एव श्रुत्यापि न तदतिरिक्त आत्मा सिध्यति । ततश्च नाऽहङ्कारो ऽध्यस्त इत्यहमर्थस्य कर्त्तुर्भोक्तुः प्रतिशरीरं भिन्नस्य न तद्विरुद्धब्रह्माऽभेद इति वाक्यमभेदोपासनापरमुचितमिति चेत् । न । 'अथातो ऽहङ्कारादेश' इत्यहङ्कारमात्मानमुपदिश्या-'ऽथात आत्मादेश' इत्यात्मनो ऽहङ्कारात्पृथङ्निर्देशेनात्मनो ऽन्यत्वात् । अन्यथा भेदनिर्देशवैयर्थ्यात् । नन्वेवं परमात्मनोपि भेदप्रसङ्गः । 'स एवाऽधस्ता'दित्यादिना तस्यापि पृथङ्निर्देशादिति चेन्न । तयोर्भेदस्य प्रत्यक्षसिद्धत्वेन श्रुत्यनपेक्षत्वात् । भेदे तयोः सर्वात्मत्वोपदेशाऽयोगाच्च । अहङ्कारे च तदुपदेशस्य तदभिन्नचैतन्यविषयत्वात् । एवं 'स एष इह प्रविष्ट आनखाग्रेभ्य' इति जगत्स्रष्टुः शरीरे जले इव सवितुः प्रवेशवाक्यमपि तत्र मानम् । न च प्रविष्टस्याऽन्तर्यामित्वमेव न तु जीवत्वमिति वाच्यम् । अप्रविष्टस्यापि कारणत्ववन्नियन्तृत्वोप-

पत्तेः । प्रविष्टे प्राणनादेर्मौढ्यादेश्च निश्चितजीवधर्मस्य श्रवणाच्च । अनुमानमपि, अन्तःकरणधर्माऽतिरिक्ताऽहमनुभवगोचरो न स्वद्रष्टा, अहमनुभवे प्रकाशमानस्वव्यतिरिक्तद्रष्टृको वा, दृश्यत्वाद् घटवत् । अस्मन्मते ऽपि वक्ष्यमाणरीत्या ऽहमाकारप्रतिबिम्बितचैतन्यस्याऽहमनुभवस्य सत्त्वाद् न पक्षासिद्धिः । दृश्यत्वं च प्रकाशविषयत्वं, प्रकाशश्चास्मन्मते चैतन्यमेव न वृत्तिरिति न वृत्तिवेद्ये ब्रह्मणि चैतन्याऽविषये व्यभिचारः । न च ज्ञानाश्रयत्वात्तस्यात्मत्वं, वृत्तेर्ज्ञानपदवाच्यत्वे ऽपि ज्ञानत्ववत्परमते ज्ञानादन्यत्वात् । चैतन्यस्य च सर्वाधारस्याऽहङ्काराऽनाश्रयत्वात् । लाघवेन ज्ञानत्वस्यैव तत्प्रयोजकत्वाच्च । न चैवमहं मुक्तः स्यामिति प्रवृत्त्यनुपपत्तिः । अहंपदार्थस्य चिदचित्संवलिततया ऽहमित्यनुभवे ऽस्मदात्मनो ऽपि प्रकाशमानत्वादहमर्थस्य स्वमुक्तिप्रवृत्त्युपपत्तेः । न चाऽप्रयोजकत्वम् । लाघवेन दृश्यत्वस्यैवोक्तसाध्यव्याप्यत्वात् । विपक्षे प्रतिशरीरमात्मभेदप्रसङ्गेन गौरवाच्च । न चाऽलौकिकात्मकल्पनागौरवम्, अस्मदभिमताऽन्तःकरणादहङ्कारात्परैरप्यात्मनो भेदस्याऽङ्गीकृतत्वात् । अत एवाऽहङ्कारो ऽहङ्कारद्रष्टृको दृश्यत्वादित्यहङ्कारान्तरबाधे तस्यैव द्रष्टृत्वमिति प्रत्युक्तम् । अहङ्कारस्यात्मत्वे दुःखादेरत्यन्तोच्छेदाऽसम्भवेन मुक्त्यर्थिप्रवृत्त्यनुपपत्तेश्च । 'स्वमपीतो भवती'ति स्वापे ऽहङ्कारस्य विलयश्रवणाच्च न तस्यात्मत्वम् । अहङ्कारस्य सुषुप्तावविनाशे जाग्रतीवाऽहमित्यनुभवः स्यात् । जाग्रति क्लृप्तप्रमाणस्य साक्षिणस्तत्रापि सत्त्वात् । अतो ऽनुपलम्भात्तदभाव एव । किं च अस्ति ताव'न्न दृष्टेर्द्रष्टारं पश्येत् न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते'

इत्यादिवाक्यादहङ्कारधर्मातिरिक्तं नित्यं ज्ञानम् । अस्ति च जाग्रति घटादिधारातदाश्रयाहङ्काराऽनुसन्धानमेतावन्तं कालमहमिदमनुभवन्नेवासमिति च । न चैनत्तत्काले धारातदाश्रयसाक्षिणमहङ्कारधर्माऽतिरिक्ताऽनुभवं विनोपपद्यते । घटगोचरधाराज्ञानेन तदविषयधारातदाश्रययोः स्मृत्यसम्भवात् । न चेदं न स्मरणं किं त्वनुभव एवेति वाच्यम् । विनष्टानां तेषां प्रत्यक्षाऽसम्भवात्, ततो व्यवहाराऽभावेनाऽनुमानाऽयोगाच्च । न चार्थस्मृत्या ज्ञानाऽनुमानं, मध्ये स्मरामीति ज्ञानाभावेपि तद्दर्शनात् । स्मृतेरनुभवजन्यत्वादज्ञानसंशयविपर्ययदशायामपि तद्दर्शनात् । एवं सुखादिव्यवहाराय कल्पयमपि ज्ञानं लाघवादेकमित्यहङ्कारधर्माऽतिरिक्तमेव । दुःखाद्युत्पादविनाशव्यतिरेकेण तत्स्फुरणेन तदनुभवात् । अन्यथा ऽन्वयादिदर्शनाऽसम्भवेन ज्ञानसुखादीनां कार्यकारणत्वग्रहाऽसम्भवात् ।

अस्तु तर्हि ज्ञानस्य स्वप्रकाशत्वमिति चेद् न । कार्यस्य रूपादिवत्तदयोगात् । सुखादिसाधनार्थं क्लृप्तानित्यज्ञानस्यैव स्वयंप्रकाशत्वेन निखिलव्यवहारोपपत्तौ जन्यज्ञाने तत्कल्पने प्रमाणाऽभावात् । मनसः सर्वप्रमाणसहकारिणः पृथक्प्रमाणत्वाऽयोगात् । न हि प्रमाणं प्रमाणस्य सहकारि, सर्ववृत्तिसाधारणस्य तात्पर्यस्य पृथग्वृत्तित्वाऽदर्शनात् । सुखादिविषयाऽनन्तज्ञाने प्रमाणाऽभावाच्च, स्वप्रकाशेनापि घटादिज्ञानेनात्मनोऽसिद्धेश्च । ज्ञानस्य स्वस्मादन्यस्मिन्विषयएव संशयादिनिवर्त्तकत्वाच्च । एवं तदा नेतः परमद्राक्षमित्यज्ञानाऽनुसंधानार्थं ज्ञानान्तरमावश्यकमिति सिद्धमहंकारधर्माऽतिरिक्तं ज्ञानमिति ।

नन्वेवं किं वृत्तिकल्पनया । ज्ञानद्वैविध्ये प्रमाणाऽभावात् । न च जानामीत्यनुभवात्तत्सिद्धिरिति वाच्यम् । त्वदभ्युपगतचैतन्यविषयत्वे ऽपि तदुपपत्तेः । वृत्तिकार्यस्येन्द्रियसंयोगेनापि निर्वाहयितुं शक्यत्वाज्जडत्वस्योभयत्राऽविशेषादिति चेद् न । कादाचित्कज्ञानं विना ऽपरोक्षघटादेः कादाचित्काऽविद्यानिवृत्त्यनुपपत्तेः । न चेन्द्रियसंबन्ध एव वृत्तिरिव चैतन्यसहकारी भवत्विति वाच्यम् । आत्माऽविद्यानिवृत्तौ तदभावात् । न च तत्र शब्द एव सहकारी । अननुगमात् । न च प्रमाणत्वेनाऽनुगमः, प्रमाणशब्दस्य प्रमाकरणार्थत्वेन वृत्तेरावश्यकत्वात् । तस्याऽनुमानादिसाधारणत्वाच्च । तस्माल्लाघवेनाऽपरोक्षवृत्तिरेव तद्धेतुः । एवं ज्ञानपदवाच्यत्वेनापि सा कल्प्यते । स्वरूपज्ञानमात्रस्य ज्ञानपदवद्वाक्यार्थस्य तद्वाच्यत्वाऽयोगात् । एवं 'वेदान्तविज्ञानसुनिश्चितार्था' इत्यादिवाक्यादपि तत्सिद्धिः । न च जानामीत्यनुभवो ऽपि स्वरूपज्ञानं विषयीकरोति, चैतन्यस्याऽदृश्यस्य चैतन्यविषयत्वाऽयोगात् । सम्बन्धाऽभावेन स्वस्य स्वविषयत्वाऽयोगाच्च । न चाऽभेदः सम्बन्धः । भेदाऽभावस्य विशिष्टप्रत्ययाऽविषयत्वात् । स्वरूपमात्रस्याऽविशिष्टप्रत्ययसाधारणस्य विशिष्टधीनियामकत्वाऽयोगाच्च । कथं तर्हि घटस्य स्वरूपमिति प्रमितिः । का ऽत्र कथन्ता । स्वरूपघटशब्दयोरपर्यायत्वेनाऽर्थभेदसत्त्वात् । अन्यथा घटस्य घट इति धीप्रसङ्गात् । औपचारिकव्यवहारमात्रं वा ऽस्तु । अभेदसम्बन्धे प्रमेयत्वमपि नोदाहरणम् । अतो जानामीत्यनुभवो वृत्तिमेव विषयीकरोतीति सिद्धा वृत्तिः ।

सा चाऽन्तःकरणधर्मः । 'कामः सङ्कल्पः' इत्या-

दिश्रुतेः । परिशेषाच्च । न चात्मैव तदाश्रयः । अहंकारा-ख्यान्तःकरणाऽतिरिक्तात्मनः परमते ऽप्रसिद्धेः । अस्मन्मते तस्य ज्ञानस्वरूपत्वेन ज्ञानपरिणामाऽयोगात् । निरवयवस्य निमित्तसंयोगाऽभावेन तदनुपपत्तेश्च । न हि स्वात्यन्ताभावसमानाधिकरणस्य तस्य निर्भागे वृत्तिः सम्भवति । अव्याप्यवृत्त्यवच्छेदकभेदस्यापि तत्राऽसम्भवात् । न चोपाधिभेदव्यतिरेकेण सत्यप्रपञ्चवादिन औपाधिकाऽधिकरणभेदः सम्भवति । नन्वन्तःकरणस्य युगपज्ज्ञानाऽनुत्पत्तिलिङ्गेन करणतया क्लृप्तस्य कथमुपादानत्वमिति चेद् न । अहं जानामीति ज्ञानाश्रयत्वेनाऽनुभूयमानस्य करणत्वाऽयोगात् । अन्यथा धर्मकल्पनालाघवेनात्मन्येव क्रमजननशक्तिमात्रकल्पनेनाऽन्यथासिद्धा तदसिद्धेश्च । नियतक्रमस्याऽदृष्टादेव परमते इवोपपत्तेः ।

तत्र च चक्षुरादि करणम् । रूपादिकं जानामीत्यनुभूयमानस्य चक्षुराद्यन्वयव्यतिरेकाऽनुविधानदर्शनात् । आलोकश्च तमोनिवृत्तावेव कारणम् । तत्रैवाऽन्वयव्यतिरेकदर्शनात् । रूपज्ञाने पृथक्तयोरभावाच्च । न चाऽऽलोकोत्कर्षाद्रूपज्ञानोत्कर्षो ऽस्तीति स तत्र हेतुः । तत्रापि तमोनिवृत्त्युत्कर्षादेव तदुत्कर्षात् । अन्यथा ऽतिस्थूलप्रदीपेन सर्वात्मना तमसि निवृत्ते ततोपि स्थूलदीपेन ज्ञानोत्कर्षप्रसङ्गात् । स्वस्वाऽभावज्ञाने व्यभिचाराच्च नालोकश्चाक्षुषज्ञाने कारणम् । एवं प्रतिबन्धकाऽभावोपि न कारणम् । सामग्रीकालीनकार्याऽनुत्पादप्रयोजकतया ऽन्यथासिद्धत्वेन तद्धेतुत्वे प्रमाणाऽभावात् । किं च मणित्वादिकमेव मण्यादेः कार्याऽनुदये प्रयोजकं, न तदभावाऽभावत्वमिति मण्याद्यभावव्यतिरेको ऽन्यथासिद्धः । न च मणित्वादिकमेव

मण्याद्यभावाऽभावत्वं, तस्य निष्प्रतियोगिकत्वात् । मणि-र्मण्यभावाऽभाव इति पृथक् प्रतीतेश्च । अभावमात्रं च न कारणमिति न किं चिदनिष्टम् । एवं विशेषणज्ञानमपि न कारणम् । तत्सन्निकर्षादेव विशिष्टज्ञानोपपत्तेरित्येतत्स-कलमन्यत्र निरूपितम् ।

सा च वृत्तिरिन्द्रियसम्बन्धाज्जायमाना विषयदेश-स्थैव जायते, न च परमते इवाऽन्तरेवाऽवतिष्ठते, न वा ऽन्तर्जाता गच्छति । अन्तःस्थत्वे घटादीनामपरोक्षत्वा-ऽयोगात् । न चेन्द्रियजज्ञानविषयत्वमर्थस्याऽपरोक्षत्वमिति तदन्यथापि सिध्यतीति वाच्यम् । सुखादेस्तदभावप्रस-ङ्गात् । तस्य केवलसाक्षिभास्यत्वात् । परपक्षे मनोजन्या-ऽनुमितिविषयपरमाण्वादेरपि तदापत्तेश्च । न चाऽपरोक्षत्वं जातिः । अविद्याऽतिरिक्तजडजातौ प्रमाणाऽभावात् । न हि सर्वमुक्तौ घटत्वादिसद्भावे प्रमाणमस्ति । तस्मादप-रोक्षाऽर्थविषयत्वमेव ज्ञाने ऽपरोक्षत्वम् । अर्थस्य चाऽपरो-क्षत्वमपरोक्षाऽनावृत्तसम्वित्तादात्म्यात् । न स्वतः । जडस्य तदयोगात् । सम्विदश्च स्वत एव तत् 'यत्साक्षाद-परोक्षा'दिति श्रुतेः । तत्र साक्षादिति घटादिवद् ज्ञानद्वारा ऽपरोक्षत्वस्य निरस्तत्वात् । सम्वित्तादात्म्यमात्रेण घटादे-रापरोक्ष्ये सर्वं सर्वस्य सर्वदा परोक्षं स्यादिति अनावृत्ते-त्युक्तम् । तस्माद्यदा ऽन्तःकरणवृत्त्या घटावच्छिन्नचैतन्य-मुपधीयते तदा ऽन्तःकरणावच्छिन्नघटावच्छिन्नचैतन्ययो-र्वस्तुत एकत्वे ऽप्युपाधिभेदाद्भिन्नयोरेकोपाधिसम्बन्धेनै-क्याद्भवत्यभेद इत्यन्तःकरणावच्छिन्नचैतन्यस्य विषया-ऽभिन्नतदधिष्ठानचैतन्यस्याऽभेदसिद्ध्यर्थं वृत्तेर्निर्गमनं वा च्यम् ।

एवं घटाद्यवच्छिन्नचैतन्याऽऽवरणाऽज्ञाननिवृत्त्यर्थमपि तत्कल्प्यम् । यन्मते घटाद्यवच्छिन्नचैतन्यावरकाऽज्ञानं तन्निष्ठम् । ज्ञानं हि स्वसमानाश्रयविषयमज्ञानं निवर्त्तयति । अन्यथा ऽतिप्रसङ्गात् । मूलाऽज्ञाननिवर्तके तथा दृष्टत्वाच्च । न च वृत्तिनिर्गमनं विना ऽन्तःकरणचैतन्यगतज्ञानस्य विषयचैतन्यस्थता भवति । न चाऽन्तरेव जाता निर्गच्छति । कार्यस्य कारणं विना ऽन्यत्राऽगमनात् । अन्तःकरणस्य सर्वात्मना गमनात् । अत एव वृत्तिर्न गुणो न वा क्रिया । ननु परिच्छिन्नेनाऽन्तःकरणेन कथं बहुदेशव्यापिकार्यारम्भ इति चेन्न । चक्षुरादेरिव लोके जलूकादेरिव तदुपपत्तेः । परोक्षे तु मनसो बहिरस्वातन्त्र्याद् न निर्गमनम् । अत एवाऽपरोक्षविषयः फलव्याप्यः, परोक्षस्तु वृत्तिव्याप्य एवेति सिद्धान्तः । अभिव्यक्तं विषयावच्छिन्नं चैतन्यं फलं तेन तादात्म्येन संबद्धं फलव्याप्यम् । तच्चापरोक्षएव सम्भवति । परोक्षे तु विषयावच्छिन्नचैतन्याऽभिव्यक्तेरभावात् । तदेव स्फुरणमित्युच्यते । ज्ञानजन्यज्ञातताख्यस्फुरणे प्रमाणाऽभावात् । ननु परोक्षे वह्निः स्फुरतीत्यनुभवात्तच्चैतन्याभिव्यक्तिरस्तीति चेत् । आप्तवाक्यादिना ऽवगतेपि चन्द्रपरिमाणादौ भ्रमदर्शनेन तत्राऽज्ञानस्य सत्त्वात् । वृत्त्याकारतया ऽऽन्तरचैतन्यसम्बन्धादेव स्फुरतीत्यनुभवोपपत्तेश्च ।

सा च वृत्तिर्नश्यति । चक्षुरादिजन्यज्ञानपदवाच्यस्य ज्ञानं नष्टमित्यनुभवात् । भावकार्ये तन्नियमाच्च । अत एव सा नैकेत्युत्पत्तिविनाशवदन्तःकरणवृत्तिरूपमेकं ज्ञानमहंकारतद्धर्मसाधकं, तदतिरिक्तस्वेतरमिति सिद्धम् ।

एतच्च ज्ञानमेकं, भेदे मानाऽभावात् । अभेदे चाऽनुभ-

वैकाकारा बुद्धिः प्रमाणम्। न चैकाकारा बुद्धिर्जातिविषया, गवाद्यनुगतबुद्धिवदिति वाच्यम् । निश्चितभेदव्यक्तौ हि तथा । तत्सन्देहे तु व्यक्त्यैक्यमेवाऽऽकाशाऽनुगतबुद्धिवद्विषयीकरोति । अन्यथा अनेका व्यक्तयो जातिश्चेति गौरवात् । एवं घटः स्फुरतीत्यनुभूयमानं स्फुरणं पटादिस्फुरणप्रतियोगिकस्वसमानसत्ताकभेदवन्न भवति स्फुरणत्वात्पटादिस्फुरणवत् । घटादौ च निषेध्यप्रसिद्धिः, स्फुरणमात्रं पक्षीकृत्य व्यतिरेकि लिङ्गं वा ऽस्तु । घटादौ साध्यव्यतिरेकस्य प्रसिद्धत्वान्न व्याप्तिग्रहाऽनुपपत्तिः । विपक्षे च गौरवं बाधकम् । न च ज्ञानभेदाऽनुभवविरोधः । तस्य वृत्तिविषयत्वादौपाधिकविषयत्वाच्च । अत एवाऽनाद्यनन्तं स्फुरणं, सकलविषयग्राहिस्फुरणस्य जनकस्य वा ऽसम्भवात् । न हि चक्षुरादीनामेवं सामर्थ्यमस्ति ।

तदेव हि स्फुरणं स्वप्नस्य साधकम् । अन्यथा स्वप्नाऽनुभवाऽसम्भवात् । न च स्मृतिरेव स्वप्न इति वाच्यम् देशविशेषवैशिष्ट्यस्य पूर्वमननुभूतत्वात् । न च मानसाऽऽरोपः स्वप्न इति वाच्यम् । बहिर्मनसो ऽप्रवृत्तेः । ज्ञानं च न प्रत्यासत्तिः । प्रत्यासत्तिरपि तद्यत्र यद्वैशिष्ट्यं पूर्वमनुभूतं तत्रैवेत्युक्तमन्यत्र । अन्धेनाऽनुभूयमानशौक्ल्यवत् स्वप्नस्य परोक्षतापत्तेश्च ।

स च स्वप्नपदार्थो ऽन्तःकरणोपहितसाक्षिण्येवाध्यस्यते न तु तद्विशिष्टे, अहं गज इत्यप्रतीतेः । नाप्यनुपहितचैतन्ये । 'स्वे शरीरे यथाकामं परिवर्त्तते' इति श्रुतेः । बाह्यचैतन्यस्याऽन्तःकरणावच्छिन्नचैतन्याऽसम्बन्धेनाऽनुभवाऽयोगाच्च । अन्यथा ऽन्यस्वप्नाऽनुभवप्रसङ्गः । एवं

सुखमहमस्वाप्समिति परामर्शसिद्धसुषुप्तिसाद्यपि स एव, सुषुप्तौ जन्यज्ञानाऽसम्भवात् । तस्मादनुभव एको ऽनादिरनन्तो ऽवस्थात्रयसाक्षीति सिद्धम् ।

स चाऽनुभवो ऽविद्यादिविषयोपधानदशायामर्थं प्रकाशयति, प्रदीपप्रकाश इव घटादीन् । तदभावे तु मुक्तौ स्वमहिमस्थ एव स्वयं प्रकाशते । नन्वेवमर्थप्रकाशत्वाऽभावान्न ज्ञानं स्यात्तस्य तल्लक्षणत्वादिति चेत् । अविद्यानिवृत्त्यनुकूलस्वरूपविशेषप्रकाशस्यैव तल्लक्षणत्वात् । न चाऽननुगमः । ज्ञानव्यक्त्यैक्यस्योक्तत्वात् । परमते ऽपि प्रकाशत्वमात्रस्यैव लक्षणत्वे सम्भवत्यर्थपदवैयर्थ्यात् । कदा चिदर्थप्रकाशत्वेनापि तदुपपत्तेश्च । तस्य पारिभाषिकप्रमाऽप्रमाबहिर्भावेपि न दोषः । पराऽभ्युपेतनिर्विकल्पकवत् ।

स एव न आत्मा । तद्भेदे प्रमाणाऽभावात् । मयि ज्ञानमित्यादेर्वृत्तिविषयत्वात् । अभेदे चा'ऽत्रायं पुरुषःस्वयंज्योति' रित्यादिश्रुतिरुक्ताऽहङ्काराऽनात्मतानुमानं च प्रमाणम् । किं च या वृत्त्यतिरिक्ताऽवस्थात्रयाऽनुगता जन्मविनाशरहिता संविन्निरूपिता सा आत्मनो न,भिद्यते संवित्त्वाद् व्यतिरेकेण घटादिवत् । न चाऽहं जानामीति तस्य ज्ञानाश्रयत्वाऽनुभवविरोधः । तस्य वृत्तिविषयत्वादित्युक्तम् । इदानीमेव जानामीत्याश्रितज्ञाने कादाचित्कत्वाऽनुभवात् आत्मनो ज्ञानेन सम्बन्धाऽनिरूपणाच्च न तदाश्रयत्वम् । तत्र न,तावत् संयोगो,ऽयुतसिद्धयोस्तदयोगात् । नापि समवायः । जन्यसम्बन्धस्य यावत्सम्बन्धिजन्यत्वेन तदुत्पत्तिकाले सम्बन्धाऽभावेन युतसिद्धिप्रसङ्गात् । समवायस्य समवायान्तराऽपेक्षायामनवस्थाप्रसङ्गात् । नापि

नित्यः समवायः । सम्बन्धिना रूपादिना तत्प्रतीत्या च विना सतः प्रतीयमानस्य च संबन्धत्वाऽनुपपत्तेः । घटे इदानीं श्यामता संबन्धो नास्तीत्यनुभवेन तस्य कादाचित्कत्वाच्च । न च श्यामताऽभावमेवाऽभावो विषयीकरोति, न सम्बन्धाऽभावमिति वाच्यम् । अन्यत्र श्यामतायाः सत्त्वात् । अत्र नास्तीति चेत् । तस्यां च सत्यां सत्सम्बन्धे च सति तदभावाऽयोगात् । अतो विनिगमकाऽभावादुभयाऽभावो वाच्यः । न चैवं कार्यसमवायस्यापि समवायान्तरापत्तिरिति वाच्यम् । तस्याऽसमवेतत्वात् । समवेतकार्यस्यैव समवायिजन्यत्वात् । अस्य च ध्वंसवन्निमित्तमात्राऽधीनत्वात् । जन्ययोर्नित्यसम्बन्धे प्रामाणाऽभावाच्च । अभावविशिष्टप्रत्यक्षवद्रूपादिविशिष्टप्रत्यक्षस्य तेन विना ऽप्युपपत्तेः । क्लृप्तस्वरूपादेवोपपत्तावक्लृप्तसमवायकल्पने गौरवात् । किं चैवं त्वन्मते वस्तुत्वमेवैकं गुणगुण्यादिविशिष्टधीविषयः सम्बन्धो ऽस्तु, क्लृप्ते विशिष्टधीनियामकत्वकल्पने लाघवात्किं पदार्थान्तरेण । स्वरूपसम्बन्धस्यापि स्वरूपादन्यत्वेनैकतया समवायाऽविशेषाच्च । तस्मान्नास्ति समवायः । नापि तादात्म्यम् । न तावत्तादात्म्यमभेद एव । धर्मधर्मिभावाद्यसंभवात् । अभेदस्य सम्बन्धत्वाऽयोगात् । नापि भेदाऽभेदौ । समानसत्ताकयोस्तयोर्युगपदेकत्राऽसम्भवात् । घटादेर्मृदाद्यभेदे तदुत्पत्त्यनुपपत्तेश्च । भेदो ऽप्यस्तीति तत उत्पत्तिरिति चेत्तर्हि जायमानं मृद्भिन्नं प्राङ् नास्तीति वक्तव्यं, घटादिश्च जायमान एव । प्राक्तच्छब्दबुद्ध्योरभावात् । प्रागसतश्च सतो भेद इति कुत्राऽभेदः । एवं मृज्जायते विनश्यतीति बुद्ध्यभावाच्च न जनिविनाशवतो मृदभेदः । तस्मा-

यज्जायते विनश्यति तत्तदुपादानादत्यन्तं भिन्नमेव ।

कस्तर्हि गुणगुणिनोः सम्बन्धः । तादात्म्यमिति ब्रूमः । किं तत् । तद्भिन्नत्वे सत्यभिन्नसत्ताकत्वं, सत्ताऽनवच्छेदकभेदवत्त्वमिति यावत् । घटादिर्हि दण्डादेरिव मृदादेरपि भिन्न एव । अन्यथा प्रागुक्तदोषाऽनपायात् । परं तु मृद्धटभेदो विद्यमानोऽपि नात्मसत्तावच्छेदक इत्यसन् । दण्डघटभेदस्तु सत्तावच्छेदक इति सन् । मृद्धट इति प्रतीत्या मृत्त्वं विना सत्त्वाऽदर्शनेन च तद्भेदस्य ततो विलक्षणत्वात् । ननु स एव भेदोऽन्यत्रापि वर्त्तते, स च सन्नेवेति चेत् । न । तथाप्येतदवच्छेदेन सत्तावच्छेदकत्वाऽभावात् । समवायस्य वाय्वादिवृत्तित्वेन रूपाऽनिरूपितत्ववदस्याऽविरोधात् । अस्मन्मते तु भेदेऽप्यौपाधिकभेदोऽप्यस्तीति न कोपि दोषः । एतदेव सिद्धान्ते कल्पितभेद उपादानोपादेययोरुच्यते । अन्यादृशस्य दण्डादिभेदव्यावृत्तस्याऽसम्भवात् । न चायं ज्ञानात्मनोः सम्बन्ध इति वाच्यम् । पारमार्थिकयोर्मिथ्याभेदेऽभेदस्यैव वस्तुत्वात् । एवं गुणसम्बन्धस्य मिथ्यात्वे निर्गुणमेव वस्तु । न चैवं घटरूपादेरप्यभेदो घटादेर्निर्गुणत्वं चेति वाच्यम् । वास्तवभेदाऽभावरूपाऽभेदस्याऽनिवार्यत्वात् । स्वरूपैक्यं तु कार्यकारणादीनां न केनापि वक्तुं शक्यम् । नापि निर्गुणत्वम् । ब्रह्मणोऽज्ञानप्रयुक्तगुणसम्बन्धस्य यावद्व्यवहारमनिवार्यत्वात् । किं चात्मनः केन चित्सम्बन्धाऽभावादपि न जन्यज्ञानाश्रयत्वम् । निष्प्रदेशे आत्मनि स्वाश्रयवृत्त्यत्यन्ताभावप्रतियोगिसंयोगस्याऽसम्भवेन— मनःसंयोगादेरसम्भवात् । न च तत्राप्यवच्छेदभेदेन संयोगतदभावयोर्वृत्तिरिति वाच्यम् । व्यधिकरणनाना-

वच्छेदकं विना तदयोगात् । नानाधर्माश्रयएकत्र तददर्शनात् । न च नित्यज्ञानाश्रयत्वे आत्मनः प्रमाणमस्ति । तस्मान्न ज्ञानं गुणः । न चैवं ज्ञानत्वसम्बन्धाऽभावे ज्ञानमेव न स्यादिति वाच्यम् । न तावत्प्रत्यक्षेण जडव्यावृत्तस्वरूपबोधाय तदपेक्ष्यते । अविद्यानिवृत्त्यनुकूलप्रकाशस्वरूपादेव तस्य सिद्धेः । लिङ्गविधया व्यावृत्तिबोधस्तु कल्पितज्ञानत्वेनाप्युपपद्यतइति सम्विदात्मेति सिद्धम् ।

स चाऽसङ्गस्वभावो, निरवयवत्वात् । 'असङ्गो ह्ययं पुरुषः' 'असङ्गो न हि सज्यत'इति श्रुतेः । नापि कर्त्ता भोक्ता वा । ज्ञानाऽनाश्रयत्वात् । घटादिवत् । न च ज्ञानाऽन्यत्वमुपाधिः । ज्ञाने साध्याऽव्यापकत्वात् । निरवयवतया मनःसंयोगाद्यनाश्रये तस्मिन् कर्त्तृत्वाद्यसम्भवाच्च । कथं तर्हि करोमि भुञ्जइति प्रतीतिः । न च बुद्धिनिष्ठा सेति वाच्यम् । चैतन्यसम्बन्धप्रतीतेः । आत्मनः संसाराऽभावे तन्निवृत्तये श्रवणादिप्रवृत्त्यनुपपत्तेः । न च बुद्धिनिष्ठमेव कर्त्तृत्वमनुभूय स्वस्मिन्नारोपयतीति वाच्यम् । धर्मिद्वयाऽप्रतीतेरिति । मैवम् । अहमित्यनुभवस्यैव धर्मिद्वयविषयत्वात् । अस्ति तावदहमनुभवगोचरे दुःखित्वमस्ति च तत्काले तस्मिन्परमप्रेमास्पदत्वम् । अन्यथा तदानीं दुःखे द्वेषाऽसम्भवात् । उदासीनदुःखे तददर्शनात् । न च दुःखं केवलस्य सुखस्य भवितुमर्हति । अन्तःकरणसमवेतज्ञानाज्जायमानं तत्तस्यैव धर्मः । न च तस्याऽनानन्दस्य परमप्रेमास्पदत्वमित्यानन्दात्मान्तःकरणं च कल्पिततादात्म्यादहमित्येकतया प्रतीयतइति मिथ्याविशिष्टात्मधर्म एव कर्त्तृत्वादिरिति नाऽऽत्मनो वास्तवं कर्त्तृत्वं न वा तस्य मुक्तये प्रवृत्त्यनुपपत्तिः । न चैवं तस्य

द्रष्टृत्वादिश्रुत्या कर्मकण्डेन वा विरोधः । द्रष्टृत्वादिश्रुतेरुक्तकर्त्तृत्वाद्यनुवादकत्वात् । न हि प्रत्यक्षसिद्धमपि श्रुत्या प्रतिपादनीयम् । 'तत्केन कं पश्ये'दिति विरोधाच्च । अत एव न कर्मकाण्डस्यापि तात्पर्यं किं त्वन्यतो ऽनवगतसाधनत्वादिमात्रे । कर्त्तृत्वादेर्वस्तुत्वे मुक्त्यसम्भवाच्च । लोके सत्यस्य ज्ञानान्निवृत्त्यदर्शनात् । शुक्तिरजतादिकं च ज्ञानान्निवर्तते । सिद्धान्ते घटादिकं च तदुपादानाऽज्ञाननिवर्त्तकज्ञानाभावान्न निवर्त्तते । न च सुहृज्ज्ञानाद्दुःखं पुण्यवस्तुज्ञानात्पापं च निवर्त्ततइति वाच्यम् । सुहृज्ज्ञानस्य सुखद्वारा दुःखोत्पत्तिप्रतिबन्धमात्रत्वात् । पापादिकं च ज्ञानमात्रान्न निवर्त्तते । श्रद्धानियमादेरप्यपेक्षितत्वात् । ब्रह्मज्ञानं तु नाऽन्यदपेक्षते 'नान्यः पन्था' इति श्रुतेः । न वा पापादि ज्ञानैकनिवर्त्यम् । तस्माद्यद् ज्ञानमात्रनिवर्त्यं यच्च ज्ञानैकनिवर्त्यं तन्मिथ्यैवेति कर्त्तृत्वादिकमपि मिथ्या । तस्मादसङ्गोदासीन आत्मा ।

स चात्मा सुखान्न भिद्यते । 'एषोऽस्य परमानन्द' इति श्रुतेः । अनौपाधिकप्रेमगोचरत्वाच्च । व्यतिरेकेण दुःखादिवत् । न चाऽप्रयोजकत्वं, सुखसमवायित्वेन तदुपपत्तेरिति वाच्यम् । दुःखसमवायितया निरुपाधिद्वेषप्रसङ्गात् । आगामिसुखे संशयदशायामपि दुःखदशायामात्मनि प्रेमदर्शनात् । आत्मनः स्वत इच्छायोग्यत्वाऽभावे उपेक्षणीयस्य सुखे इव स्वसुखेऽच्छाया असम्भवात् । सुखोत्पत्तिविनाशप्रतीतिः सुखपदवाच्यवृत्तिविषया । सुखरूपस्यात्मनः सुखपदवद्वाक्यार्थतया तदेकदेशसुखपदवाच्यत्वाऽयोगेनाऽनानन्दवृत्तेरेव सुखात्मकसुखत्वतादात्म्येन सुखपदवाच्यत्वात् । परै-

रपि सुखत्वविशिष्टव्यक्तेरेवोत्पत्त्याद्यभ्युपगमात् । परं त्वस्माकं सा ऽसुखं, सुखत्वमेव सुखमिति विभागः । न चाऽसुखस्य सुखपदवाच्यत्वाऽसम्भवः, त्वन्मते ऽपि जातेस्तदभावप्रसङ्गात् । वृत्तिवैचित्र्यात्सुखवैचित्र्यप्रतीतिरुपपद्यते । एतेन सुखविनाशादिप्रतीतेस्तद्व्यञ्जकवृत्तिविषयत्वकल्पनमयुक्तम्, अर्थविषयबुद्धेर्ज्ञानविषयत्वकल्पनाऽयोगादिति निरस्तम् । चन्दनाद्यनुभवजन्यस्यैव हि नाशाऽनुभवः । स तथैवाऽस्मन्मते ऽपीत्यन्यविषयत्वाऽभावात् । एवं सुखमहमस्वाप्समिति परमार्शादप्यात्मा सुखम् । न च दुःखाऽभाव एव तथा परामृश्यतइति वाच्यम् । प्रकाशात्मकसाक्षिसुखविषयत्वे बाधकाऽभावात् । दुःखाऽभावस्य सुषुप्तावननुभूतस्य स्मर्त्तुमशक्यत्वाच्च । न चोत्थितस्य तद्गोचरानुमितिरेव न स्मृतिरिति वाच्यम् । स्मृतित्वाऽनुभवविरोधात् । स्वापकालीनसुखाऽनुभवव्यतिरेकेण तदनुमानाऽयोगाच्च । न च साक्षिरूपसुखप्रकाशस्याऽविनाशात्संस्काराऽभावेन न तत्स्मृतिरिति वाच्यम् । सुखाद्याकाराऽविद्यावृत्त्यभ्युपगमेन घटाद्यविशेषात् । तस्मादात्मा सुखम् ।

एवमसङ्गोदासीनानन्दात्मा स्वप्रकाशः । 'अत्रायं पुरुषः स्वयंज्योति'रिति श्रुतेः । आत्मव्यवहारः स्वगोचरप्रकाशजन्यः व्यवहारत्वात् संमतवत् । स च प्रकाशो लाघवात्परिशेषाच्चात्मैव । स्वगोचरप्रकाशत्वं च स्वगोचरसंशयादिनिवर्त्तकप्रकाशत्वम् । अथ वा वर्णिता ऽनुभूतिः स्वप्रकाशा अनुभूतित्वाद् यन्नैवं तन्नैवं यथा घटः । ननु यदि स्वप्रकाशत्वं प्रकाशस्वभावत्वं तदा सिद्धसाधनं, वेद्याऽनुभूतेरपि प्रकाशत्वात् । नापि ज्ञानाऽविषयत्वम् । अनुभूते-

रपि वृत्तिविषयत्वात् । फलव्याप्यत्वं नास्तीति चेत् । तद्यदीन्द्रियजन्यवृत्त्यभिव्यक्तचैतन्यविशिष्टाऽन्यत्वं तर्हि नित्यपरोक्षेष्वतिप्रसङ्गः । नापि चैतन्याऽविषयत्वं, चैतन्येऽपि तदभावात् । अन्यथा तद्व्यवहाराऽनुपपत्तेरिति । मैवम् । अवेद्यत्वं स्वप्रकाशत्वं, तच्च चैतन्याऽगोचरत्वम् । न चाऽसम्भवः । चैतन्यस्यैकत्वेन तस्मिंस्तद्गोचरत्वाऽसम्भवात् । कल्पितभेदाऽधीनविषयत्वेन न वास्तववेद्यत्वसिद्धिः । नन्वेवं तद्व्यवहाराऽसम्भवः । व्यवहारस्य स्वगोचरचैतन्यसाध्यत्वात् । न च वृत्त्यैव तद्व्यवहार इति वाच्यम् । इच्छादिव्यवहारे व्यभिचारेण व्यवहारमात्राऽहेतुत्वात् । घटादिव्यवहारे क्वचिदेव तस्या अपेक्षणादिति । व्यवहारसामान्ये व्यवहर्त्तव्यज्ञानत्वेन ज्ञानं न हेतुर्गौरवात् किंतु ज्ञानत्वेन । न चैवमतिप्रसङ्गः । अनात्मव्यवहारे व्यवहर्त्तव्यज्ञानस्यापि हेतुत्वात् । आत्मव्यवहारे तु तदभिन्नप्रकाशो हेतुः, न तु तद्विषयः । तदसम्भवस्योक्तत्वात् । न च ज्ञानजन्यव्यवहारविषयश्चेदात्मा तर्हि ज्ञानविषय एव, तस्यैव तत्त्वादिति वाच्यम् । औपचारिकज्ञानविषयत्वसत्त्वेऽपि व्यवहारविषयत्वाऽतिरिक्तज्ञानविषयत्वस्य घटादिवदाऽमन्यसत्त्वात् । एतेन वस्तुत्वादिति वेद्यत्वाऽनुमानं निरस्तम् ।

अथ वा अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वम् । तत्र चाऽवेद्यत्वमिन्द्रियजन्यवृत्त्यभिव्यक्तचैतन्याऽविषयत्वम् । साक्षिमात्रभास्याऽन्तःकरणतद्धर्मशुक्तिरजतादौ न तद्योग्यत्वम् । तद्योग्याऽधिष्ठानाऽभेदादेव तेष्वपरोक्षव्यहारस्याऽन्यथासिद्धत्वेन तद्योग्यतायां मानाऽभावात् । घटादिकं चाऽपरोक्षप्रमाणगम्यत्वात्तद्योग्यम् । न

चात्र साध्याऽप्रसिद्धिः । वेद्यत्वं किं चिन्निष्ठाऽत्यन्ताभावप्रतियोगि धर्मत्वाद्रूपादिवत् । प्रमेयत्वादेरपि स्ववृत्त्यत्यन्ताभावप्रतियोगित्वान्न व्यभिचारः । ततश्चाऽपरोक्षव्यवहारविषयो ऽनुभूतिः अवेद्या अनुभूतित्वाद्व्यतिरेकेण घटादिवदिति विशिष्टसाध्यसिद्धौ वर्णितव्यतिरेकिणा तदाकारप्रतीतिसिद्धेः । उपायान्तरेणात्माऽऽपरोक्ष्याऽसम्भवाच्च । अनुव्यवसायस्तु न सम्भवति । मनसो बहिर्विषयाऽसम्बन्धेनोपायाऽभावात् । ज्ञानस्यापि पूर्वमननुभूतज्ञानवैशिष्ट्ये तस्मिन्नप्रत्यासत्तित्वात् । एकस्मात्संयोगादनेकज्ञानाऽभ्युपगमे ऽनुव्यवसायधाराया अविरामप्रसङ्गात् । संयोगभेदे च विनष्टज्ञानस्य तदनुपपत्तेः । धाराकालीनात्मनि तदसम्भवाच्च । तस्मात्स्वप्रकाशचैतन्यानन्दात्मकः कर्त्रादिविलक्षण आत्मेति सिद्धम् ।

स चात्मा परस्मान्न भिद्यतइति वक्ष्यते । भेदस्तूपाधित एव । नियमेनोपाधिप्रतिसन्धाने एव तत्प्रतीतेः । तादृशस्य च भेदस्य घटाकाशादिभेदस्येवौपाधिकत्वात् ।

एवं जीवानामपि परस्परभेद औपाधिक एव । एकस्येवेतरेषामपि प्रविष्टब्रह्मस्वभावत्वात् । ननु नास्त्येव जीवभेदः । विवादास्पदानि शरीराणि ममैव भोगायतनानि शरीरत्वान्मच्छरीरवत् । न चैवमस्मिन् शरीरे इवान्यस्मिन्नप्यहं सुखीत्यनुभवप्रसङ्गः । पादाद्यवच्छिन्नस्येव शिरआदिगते उपाधिभेदादभिमानाऽभावोपपत्तेः । अज्ञानभेदाभावेन तदुपाधिकस्याऽनेकत्वाऽयोगाच्च । न चान्तःकरणमेव जीवोपाधिः, सुषुप्तादौ तदभावप्रसङ्गादिति चेत्, न । चैत्रशरीरवर्त्यात्मा मैत्रात्मप्रतियोगिकभेदवान् तद्गतदुःखाऽननुसन्धातृत्वाद् घटादिवत् । न चैवं तद्वदेव

स्वाभाविकभेदप्रसङ्गः । अप्रयोजकत्वात् । न चैवं शिरःपाण्याद्यवच्छिन्ने व्यभिचारः । साध्यस्यापि तत्र सत्त्वात् । 'तद्यो यो देवाना'मित्यादिश्रुतेश्च जीवभेदः । अन्यथा एकमुक्तौ सर्वमुक्तिप्रसङ्गः । न चेष्टापत्तिः । विवेकिनां बहूनां श्रवणादावप्रवृत्तिप्रसङ्गात् । फलस्यैकप्रवृत्त्यापि सिद्धेः । शुकादेर्मुक्तत्वेनेदानीं संसाराऽनुपलम्भप्रसङ्गात् । महत्तमानामप्यमुक्तावर्वाचीनानां तत्र को विस्रम्भः । गुरुशिष्यादिव्यवस्थाऽनुपपत्तेश्च । न ह्यविद्वान्गुरुर्भवति, 'श्रोत्रियं ब्रह्मनिष्ठ'मिति गुरुविशेषणश्रवणात् । न चैवं शिष्यादिभेदाऽप्रतीतेर्न तस्योपदेशादिप्रवृत्तिः स्यादिति वाच्यम् । प्रारब्धकर्मप्रयोजकलेशवशात्तदुपपत्तेः । न चोपाध्यैक्याज्जीवभेदा-नुपपत्तिः । स्वस्वाऽनुभवसिद्धाऽज्ञानस्य दुःखादिवद्भेदात् । एकस्याऽज्ञाननिवृत्तावप्यन्यस्य तत्र तद्दर्शनात् । 'इन्द्रो मायाभि'रित्यादिश्रुत्या च तद्बहुत्वम् । न चात्राऽवस्थाज्ञानमादाय तद्बहुत्वमुपपादनीयम् । 'रूपं रूपं प्रतिरूपो बभूवे'ति प्रतिपन्नजीवभावहेत्वज्ञानस्यैव बहुत्वधर्मित्वात् । न चाऽवस्थाज्ञानं तथा । न चान्तःकरणस्यापि स्पष्टजीवविभागनिमित्तत्वाद्बहुत्वमत्र प्रतिपाद्यते । शब्दान्तरार्थे तस्मिन्मायाशब्दाऽयोगात् । तस्य 'युक्ता ह्यस्य हरय' इति वाक्यशेषावगतेन्द्रियाद्यहेतुत्वाच्च । न च 'अजामेका'मित्यादिना मायैकत्वनिश्चयः । तस्या 'ऽजो ह्येको जुषमाणो ऽनुशेते जहात्येनां भुक्तभोगामजो ऽन्य' इति वाक्यशेषाऽवगतविद्वद्विद्वज्जीवसम्बन्धानुसारेण प्रतिपुरुषं संसारमूलाऽज्ञानपरत्वात् । न ह्येकैवाऽविद्या ऽविदुषा भुज्यते ऽन्येन त्यज्यते । एवं 'तरत्यविद्या'मित्येकवचनमपि द्रष्टव्यम् । तस्मादवि-

थाकल्पितजीवभेदे बाधकाऽभावात्तदभेदे च तत्सत्त्वाज्जीवा भिद्यन्ते इति नानाजीववादिनः ।

अपरं मतम् । अविद्याप्रतिबिम्बात्मा तत्प्रतिबिम्बप्रतियोगिकभेदवान् भवति । एकबिम्बैकोपाधिकत्वाद् यदेवं तदेवं यथैकस्मिन्दर्पणे एकस्य मुखप्रतिबिम्बम् । देवदत्तशरीराभिमानी जीवो न यज्ञदत्तशरीराभिमानिभेदवान् सर्वज्ञत्वाऽनधिकरणत्वे सति चेतनत्वात् तद्वत् किञ्चिज्ज्ञत्वादिति वा । न चैवं मनआदेरप्यभेदानुमानं, बाधाऽनवतारदशायामिष्टत्वात् । न चाद्याऽनुमाने एकोपाधिकत्वमसिद्धमिति वाच्यम् । अज्ञानस्य जीवोपाधेर्भेदे प्रमाणाभावात् । अनुभवस्यैकाऽज्ञानविषयत्वेनोपपत्तेः । न च देवदत्तेन न जानामीति स्वज्ञाननिवर्त्यत्वेनाऽनुभूयमानमज्ञानं कथमन्यज्ञाननिवर्त्यं स्यादिति वाच्यम् । मूलाऽज्ञाने स्वमात्रवृत्तिज्ञानमात्रनिवर्त्यत्वस्याऽननुभवात् । स्ववृत्तिज्ञाननिवर्त्यत्वस्य तस्मिन्नन्यज्ञाननिवर्त्यत्वे ऽपि अविरोधात् । न च चैत्रस्याऽज्ञाननिवृत्तिदशायामपि मैत्रस्य तस्मिन्नज्ञानदर्शनेन तद्भेदः । तस्य जीवभेदसिद्ध्युत्तरकालीनत्वात् । घटाद्यज्ञानबहुत्वे ऽपि न काचित्क्षतिः । जीवैक्ये ऽप्यहङ्कारभेदेन व्यवहर्तृभेदस्य वक्ष्यमाणत्वात् । 'मायया ह्यन्यदिवे'ति श्रुत्या चाऽविद्यैक्यं सिध्यति । न च मायाभिरिति तद्बहुत्वं, लाघवानुगृहीततदेकत्वश्रुतिविरोधे ऽन्यपरवाक्यात्तदसिद्धेः । अत एवा'ऽजामेका'मित्येकत्वश्रुतिरपि न प्रतिपुरुषमजैकेति व्याख्येया । वाक्यशेषश्च 'यो विद्वान् परिपूर्णः स तां त्यजति अन्यस्तु संघाताभिमानदशायां तां भुङ्क्त'इति नास्मिन्मते प्रतिकूलः । श्रीभगवानपि । 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्येक-

स्यैवाऽज्ञानस्य बहुलत्तत्र्यत्वं दर्शयन्नविद्यैक्यमाह । तस्मान्नाऽविद्योपाध्यैक्याऽसिद्धिः । नन्वन्तःकरणमेव भेदकम् । अहमिति तस्यैवोपाधित्वानुभवात् । न च सुषुप्तौ जीवाऽभावप्रसङ्गः । तदाप्यन्तःकरणस्याऽनिर्वचनीयसूक्ष्मतासत्त्वात् । अन्यथाग्रे ऽस्मन उत्पत्त्यनुपपत्तेः । अन्तःकरणाश्रितकर्मज्ञानादिवासनाविरहप्रसङ्गाच्च । 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति श्रुतेश्चेति । न । प्रमात्रुपाधिभेदाभिप्रायत्वादस्य वाक्यस्य । अहमित्यनुभवेनापि स एवाऽनुभूयते । एकस्मिन्नपि जीवे लौकिकवैदिकव्यवस्थितव्यवहाराय प्रमातृकर्तृभोक्तृभेदस्यावश्यकत्वात् । तत्र चा न्तःकरणाऽतिरिक्तोपाध्यसम्भवात् ।

तद्भावभावनायत्तस्ततो ऽसौ परमात्मना ।
भवत्यभेदो, भेदश्च तस्याऽज्ञानकृतो भवेत् ॥

इति स्मृतेश्च । अत एवोपाध्यन्तरमपि नाशङ्कनीयमिति न जीवो भिद्यते । न च चैत्रो न भवति मैत्र इति प्रतीतिर्भेदसाधिका । एवं शङ्कमानस्य तव देहात्मवादप्रसङ्गात् । न च चैत्रात्मा न भवति मैत्रात्मेति प्रत्यक्षा प्रतीतिः सम्भति । नन्वानुमानिकीयं प्रतीतिः । एकस्मिन्नेव समये चैत्रश्चेष्टते न मैत्र इति तावत्सकलसिद्धम् । एवं तयोर्विरुद्धा चेष्टा दृश्यते । तत्तदुभयात्मनि तन्निमित्तप्रयत्नतदभावौ विरुद्धप्रयत्नौ च विना न सङ्गच्छत इति सिद्धो विरुद्धधर्मवत्त्वादात्मनो भेद इति । मैवम् । सिध्यत्त्वेवं निखिलशरीरसम्बन्धः, तद्भेदश्च नैवं सिध्यति । एकस्मिन्नपि प्रयत्नतदभावविरुद्धप्रयत्नादीनामनेकावच्छेदेनोपपत्तेः । प्रयत्नादेरन्तःकरणतद्विशिष्टधर्मत्वाच्च ।

अत एव कर्मकाण्डबलाज्जीवभेद इति प्रत्युक्तम् ।

तस्याऽन्तःकरणविशिष्टकर्त्तृभोक्त्रादिभेदसाधकत्वे ऽप्यविद्याप्रयुक्तजीवभेदे उदासीनत्वात् । न च 'तयो य' इति वाक्यं जीवभेदे प्रमाणम् । तस्याऽन्यसिद्धभेदाऽनुवादेनाऽनियतोपाधिविदुषो ब्रह्मभावमात्रे तात्पर्यात् । न चैवं चैत्रस्य मैत्रदृष्टसुखाद्यनुसन्धानप्रसङ्गः । शरीरभेदेन जन्मान्तरीयवत्तदुपपत्तेः । न च बालादिशरीरभेदे ऽप्यनुसन्धानं दृश्यतइति तन्न तत्प्रयोजकमिति वाच्यम् । तत्रापि शरीरे प्रत्यभिज्ञादर्शनात् । तदारम्भकाऽदृष्टे सति तद्विनाशाऽयोगात् । प्रथमशरीरे क्लृप्तकारणाऽभावेन तदारम्भाऽनुपपत्तेश्च । जातिस्मृतिमतः शरीरभेदे ऽपि स्मरणं दृश्यतइति चेन्न । अदृष्टविशेषशून्यस्याऽननुसन्धानेन शरीरभेदस्य प्रयोजकत्वात् । अन्यथा तद्वदेव त्वन्मते ऽप्यन्यः किमिति न स्मरेत् । यदन्तःकरणोपहितसाक्षिणा यदनुभूयते तस्यैव तत्स्मरणमिति नाऽतिप्रसङ्गः । न चैवं बहूनां युगपच्छ्रवणादौ प्रवृत्त्यनुपपत्तिः । किं बहव एव न सन्तीति तदनुपपत्तिः, सन्तो ऽपि वा युगपन्मुमुक्षवो न भवन्ति । परस्य मुमुक्षयैव मोक्षसिद्धेः, फलाऽभावनिश्चयाद्वा । नाद्यः । बहुजीवप्रवृत्तेरभावात् । ननु दृश्यते इति । ननूक्तं किं देहात्मवाद्यसीति । एकस्यैव जीवस्याऽनेकाऽन्तःकरणावच्छेदेन भिन्नस्य युगपदेकत्र प्रवृत्तौ किं बाधकम् । नापि द्वितीयः । स्वसंबन्धिदुःखस्याऽसह्यस्वभावतया परस्येव स्वस्यापि तन्निवृत्तिकामनासम्भवात् । लोके ह्यन्यायत्ततया निश्चिते ऽपि विलम्बमसहमानाः प्रवर्तमाना दृश्यन्ते । अत्र तु नाऽन्यायत्तत्वनिश्चयः । न हि वाङ्ग्रचेष्टामात्रं तत्त्वज्ञानसामग्री, किं त्वीश्वराऽनुग्रहतदेकलभ्यशुद्धिवैराग्यशमदमाचार्यप्रसादादि । तच्च परस्मिन्दृष्ट-

जातिवेषादिना न निरवेतुं शक्यं, किं तु कार्यैकगम्य-मिति ततः प्राक् सर्वएव मुमुक्षवः प्रवर्त्तेरन्। यदि कथं चित्कश्चित्पुरुषान्तरेपि विद्यासामग्रीं निश्चिनुयान्मा भूत्तस्य प्रवृत्तिः, का नो हानिः। सोपि प्रवर्त्तते इति चेत्तर्ह्यसौ जीवतत्त्वे भ्रान्तः। न हीदं सम्भवति। देवदत्तस्य एतज्जन्मावच्छेदेनैव ज्ञानं भविष्यति तच्च मम संसारं निवर्त्तयिष्यतीति निश्चिनोति। स्वयं च दृष्टसुखविमुखः श्रवणादौ प्रवर्त्तते इति।

एतेनेदमपास्तं मुनिर्मनुते मूर्खो मुच्यतइत्येत'च्छास्त्रफलं प्रयोक्तरी'ति न्यायविरुद्धम्। तथा चाऽऽभाणकः। 'का चिन्निषादी तनयं प्रसूते कश्चिन्निषादस्तु कषायपायी'ति। मुनिकर्त्तृकश्रवणादिविधिफलस्य साक्षात्कारस्य मूर्खे ऽनभ्युपगमात्। तत्फलस्याप्यविद्यानिवृत्तेर्मुनिप्रत्यग्ज्ञात्रगततया तावन्मात्रतया मूर्खनिष्ठत्वाऽभावात्। दृष्टफलानां यथादर्शनमुपपत्तेश्च।

एतेनेदमप्यपास्तम्। यो यस्याऽनर्थमिच्छति स कथं तस्यानर्थनिवृत्त्यर्थं यतेतेति। निःशेषं विगलितविषयतृष्णैरेव श्रवणादावधिकारात्। अपिच परस्य हितमपि स्वयं तदेकहितोपायः करोत्येव। न हि दहनसन्दीप्तवेश्माऽन्तर्गतः शत्रोर्हितं भवतीति न निर्गमोपायमाचरति।

अत एवेदमपि परास्तं ज्ञानस्य स्वसमानाधिकरणाऽज्ञाननिवर्तकत्वात्कथं प्रमात्रन्तरसमवेतं ज्ञानमन्यप्रमात्रज्ञानं निवर्तयेदिति। अज्ञानैकत्वस्योक्तत्वात्।

नन्वेवं शुकादेर्मुक्तत्वादिदानीं संसारानुपलम्भप्रसङ्ग इति। अत्र केचित्। न हि शुकस्य परममुक्तिरासीत् तस्य पुराणे आदित्यादिमार्गश्रवणात्। न हि परममुक्ते-

मार्गो ऽस्ति। 'अत्र ब्रह्म समश्नुते' इति श्रुतेः, किं तु ब्रह्मलोक एव । तत्रापि दुःखाभावेनोपचारान्मुक्तिशब्दोपपत्तेरिति । तन्न । तस्यात्मसाक्षात्काराऽभ्युपगमे मार्गभोगयोरयोगात् । तत्र गमनान्तरोत्पन्नसाक्षात्कारेण जीवन्मुक्तस्य भोग इति चेत् । तर्हि अज्ञानावरणस्य नष्टत्वेन तस्यैवान्यस्यापि ब्रह्मतत्त्वाऽऽवरणाऽयोगात् । अत एव वामदेवादयो ऽपीहैव जीवन्मुक्ता एव तिष्ठन्तीति प्रत्युक्तम् ।

अपरे तु विदुषो भोगमसहमाना इत्थं कल्पयन्ति । शुकादिः किलोत्पन्नसाक्षात्कारत्वादत्यन्तं निवृत्तकामकर्माशयः केवलाऽविद्याप्रतिबिम्बात्मना तिष्ठति । कारणे सत्यपि कार्यनिवृत्तेर्दृष्टत्वात् । दर्शनानुसारेण चरमजीवज्ञानस्यैवाऽविद्यानिवर्तकत्वात् । तस्यां चाऽवस्थायां दुःखाऽभावात् । 'तरति शोकमात्मवि' दिति श्रुतिप्रतिपन्ना मुक्तिः अविद्याव्यवधानसत्त्वान्न ब्रह्मभावरूपा । कामकर्मशरीरादेरात्यन्तिकविनाशात्सुषुप्तेर्विशेष इति क शिचितेयमन्तराऽभावावस्था ।

निवृत्तकामकर्मापि द्वैतोपासनतः पुमान् ।
अद्वैतोपास्तिविरहादज्ञो नैति परं पदम् ॥

इति भर्तृप्रपञ्चैरुत्प्रेक्षिता । अविद्यासमानविषयज्ञानाभ्युपगमे तन्निवृत्तेरावश्यकत्वात् । चरमज्ञानत्वेनाऽहेतुत्वात् । न चेदानीं प्रतिबन्धादनिवृत्तिः । ज्ञानसमानाधिकरणस्य तस्याऽभावात् । व्यधिकरणस्य चाऽप्रतिबन्धकत्वात् । 'ब्रह्म वेदेति' ब्रह्मप्राप्तिलक्षणमुक्तेरपि ज्ञानसमानकालिकत्वश्रवणात् । कारणे सति कार्यस्याऽऽत्यन्तिकनिवृत्त्यनुपपत्तेः । एवंविधाऽविद्यायां प्रमाणाऽभावात् ।

अन्ये तु तत्त्वसाक्षात्कारादविद्यानिवृत्तिर्नैत्यसङ्ग-

तमिति मन्वाना इत्थं कल्पयन्ति । यदन्तःकरणे साक्षात्कार उत्पद्यते तदन्तःकरणोपहितसाक्षिणं प्रति ब्रह्मस्वरूपाऽऽवरणान्तःकरणादिविक्षेपशक्तिमदज्ञानांशो निवर्त्तते । अनिर्वचनीये ऽज्ञानांशकल्पनोपपत्तेः । ततश्च तदन्तःकरणोपहितसंसारिणो ब्रह्माऽभेदः संसारनिवृत्तिश्चोपपद्यते पुरुषान्तरे ऽविद्यादिदर्शनं चेति । वार्त्तमेव तत् । अज्ञानाऽनुभवस्य सर्वपुरुषनिष्ठस्यैकाऽज्ञानतदावरणविषयतया आवरणशक्तिभेदे प्रमाणाऽभावात् । तस्याश्चैकज्ञाननिवृत्तावन्येषामावरणतदनुभवाऽयोगात् । अनिवृत्तौ च पूर्वस्य ब्रह्माऽभेदाऽयोगात् । अखण्डाऽज्ञानप्रतिबिम्बात्तदवयवप्रतिबिम्बस्याऽरभ्धत्वेनाऽनेकजीवप्रसङ्गाच्च ।

अस्मदीयास्तु के चिन्मुक्तद्रष्टा को ऽपि भेदो न विषयीक्रियतइति एकजीव एकमुक्तया सर्वमुक्तिरित्यस्याऽभिप्रायमाहुः । तत्त्वाविद्यकनानाजीववादान्न विशिष्यते । कथं तर्हि शुकादिमुक्त्यनन्तरमपि संसारोपलब्धिरिति चेत् । न । शुकादिमुक्तिसद्भावे प्रमाणाऽभावात् । प्रपञ्चोपलम्भविरोधेनाऽर्थवादसिद्धेः । न चान्यत्त सत्त्वे प्रमाणमस्ति । अस्तु वा शुकादिरपि व्यासशङ्करभगवत्पादादिवद्विष्णोरेवांशावतारः । शुकवामदेवादेर्गर्भएव ज्ञानैश्वर्यादिश्रवणात् । तेषां श्रवणादिव्यापारः श्रीकृष्णस्येव गुरुकुलावासो ऽन्यथाप्युपपद्यतइति । नैतावता तेषु बन्धः कल्पयितुं शक्यते । हिरण्यगर्भस्तु कर्मफलत्वाज्जीवः सर्वज्ञो ऽपि सृष्टौ स सर्वज्ञः । न तु तत्त्ववित्तत्र प्रमाणाऽभावात् । अशनायादिश्रवणात् । 'सहायमीक्षां चक्रे' इत्येतत्तु विवेकमात्रतया ऽप्युपपद्यते । अतो नेदानीं प्रपञ्चाऽनुभवविरोधः ।

यत्तु हिरण्यगर्भस्यापि दुर्लभं ज्ञानमर्वाचीनानां भविष्यतीति का प्रत्याशेति । तन्न। निरतिशयकर्मफलभोगाशावशीकृतनानाविधसृष्टिव्यापारविक्षिप्तचित्तस्य ज्ञानाभावे ऽपि विरक्तस्य शान्तिदान्तिसम्पन्नस्य ज्ञाने बाधकाऽभावात् । न ह्यन्धः स्वरूपं न पश्यतीति चक्षुष्मतः सुन्दरदिदृक्षा न भवेत् । तव चाऽनादिभवपरम्परायाममुक्तस्येदानीं कथं मुमुक्षा । न ह्यनादिपूर्वजन्मसु त्वमतिप्राकृत एव । इदानीमेधमानजातिशीलैश्वर्यस्याऽऽकस्मिकत्वप्रसङ्गात् । अज्ञस्य विवेकादिवैराग्यादिसम्पन्नस्य तत्त्वज्ञानान्मोक्ष इति शास्त्रप्रामाण्यविश्वासात् । तवेदानीं मुमुक्षाऽन्यत्रापि समाना । नन्वेवमपि गुरोर्विद्यया निखिलमुक्तौ न शिष्यो विद्यार्थं यतेत न वा ऽज्ञातगुरोः कश्चिद्धियां प्रार्थयतइति । मैवम् । परोक्षादपि ज्ञानादुपदेशसम्भवात् । तत्त्वनिर्णयः खलूपदेशे ऽपेक्ष्यते न तु साक्षात्कारः । धर्माऽनुपदेशप्रसङ्गात् । ब्रह्मनिष्ठता तु परोक्षज्ञानिनो ऽपि कृतसंन्यासस्य तदेकव्यापारतारूपा सम्भवति। 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन' इत्यत्रापि ज्ञानं युक्त्याद्युपकरणविषयं, तत्त्वदर्शनं तु ब्रह्मनिर्णय इति न ततोऽप्युपदेष्टुरपरोक्षज्ञानाऽपेक्षा । एतच्च शिष्यो जानन्नपि अप्रतिबद्धाऽपरोक्षज्ञानं स्वयं सम्पादयिष्यामीत्याचार्यमुपसर्पति, गुरुरप्येकजीव वं जानन्नपि स्वस्मिन्नपरोक्षाऽभावदर्शनात्तदर्थं मुख्यमधिकारिणं प्राप्योपदिशतीति न कोपि दोषः । एतेन फलाऽभावनिश्चयादिति पक्षोपि निरस्तः ।

केचित्तु अनुत्पन्नज्ञान एव गुरुः शिष्येण विद्वत्त्वेन कल्पित इति शिष्याऽविद्याकल्पितो गुरुः शिष्यमुपदिश-

तीति वर्णयन्ति । तदन्यथाप्युपदेशोपपत्तेरयुक्तम् । एकजीवत्वं जानतः शिष्यस्य स्वस्मिन्नज्ञानाऽनुभवविरोधेन तस्मिन्विद्याकल्पनाऽयोगात् । कल्पनेपि च वैयर्थ्यनिश्चयेन प्रवृत्त्ययोगात् । विद्वत्तया कल्पितस्यापि गुरोः पुरुषवदुपदेशाऽयोगात् । ननु स्वप्ने ऽपि कल्पितो गुरुर्मन्त्रमुपदिशति, तेन च फलमित्येवमादिकं दृश्यतइति चेत् । न । तत्रापि प्राक्तनजन्माऽनुभूयमानस्य मन्त्रविशेषस्य स्मरणम्, उपदेशस्तु भ्रममात्रम् । न चेह तथा भवति । अथ वा तस्य पुण्यविशेषात्परमेश्वर एव तथा विग्रहं परिगृह्योपदिशतीति कल्प्यताम् । जाग्रत्यप्यपरोक्षज्ञानिन एवोपदेश इति नियमे 'आचार्यवा'नित्यादिशास्त्राऽनुरोधेन परमेश्वर एव स्त्रीशरीरेण कबन्ध आथर्वणवच्छिष्यविश्वासास्पदं शरीरविशेषं परिगृह्य तच्छरीरेणोपदिशतीत्यनवद्यम् । तस्मादेक एव जीव इति ।

स चाऽविद्योपाधिक इत्युक्तम् । औपाधिकभेदश्च बिम्बप्रतिबिम्बरूपेण न त्ववच्छिन्नाऽनवच्छिन्नरूपेण । 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैको ऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोयमात्मा'' 'एकधा बहुधा चैव दृश्यते जलचन्द्रव' दित्यादिप्रतिबिम्बादित्यचन्द्रदृष्टान्तश्रुत्या दर्शितजीवभेदस्य घटाकाशकल्पत्वाऽयोगात् । अवच्छेदकस्याऽवच्छिन्नत्वस्य वा ऽभावविशिष्टानवच्छिन्नत्वस्याऽव्याप्यवृत्तितया तद्विशिष्टस्य सर्वगतत्वाऽयोगात् । तथा च सर्वज्ञत्वादिगुणकस्य ब्रह्मणः सर्वसम्बन्धाऽभावात् सर्वनियन्तृत्वसर्वोपादानत्वाऽसम्भवः । बिम्बत्वं तु लोके स्वरूपं व्याप्यैव दृष्टमिति न बिम्बब्रह्मणः सर्वगतत्वाद्यनुपपत्ति' । ननु जीवस्य प्रतिबि-

म्बत्वेन ब्रह्मणो भेदप्रसङ्गः । लोके प्रतिबिम्बस्येमौ चैत्रतत्प्रतिबिम्बाविति भेदस्य प्रत्यक्षसिद्धत्वात् । स्वाभिमुखत्वादिविरुद्धधर्मैस्तदनुमानाच्च । न चाऽभेदे मानमस्ति । न च ममेदं मुखमिति ग्रीवास्थत्वं भिन्नत्वं स्वाभिमुखमुखाऽभेदाऽनुभव इति वाच्यम् । दर्पणे मुखच्छायां पश्यामीत्यनुभवेन प्रत्यङ्मुखदर्पणस्थत्वभेदानामनेकेषामनुभवसम्भवेन च मुखत्वसंसर्गाऽभेदानुभवस्याऽप्रामाण्यकल्पनात् । अस्तु वा मुखान्तरं न तदेव तदिति । मैवम् । दर्पणे मुखं पश्यामीत्यनुभवेन तस्मिन्मुखत्वसंसर्गस्य ग्रीवास्थमेवेदमिति तस्मिन् ग्रीवास्थत्वतदाश्रयाऽभेदयोर्नास्ति दर्पणे मुखमिति तदभाववैशिष्ट्यस्य चाऽनुभवेन त्वत्पक्षेऽप्यनेकप्रत्ययाऽप्रामाण्यात् । एवं विजातीयाऽनेकाऽऽकारकेशदन्तादिप्रत्ययानामप्रामाण्यप्रसङ्गः । धर्मिकल्पनागौरवं च । अनेकदूरदेशस्थतया प्रतीयमाननक्षत्रादिप्रतिबिम्बोत्पत्तिज्ञानकारणाऽभावाच्च । तस्मात्स्पष्टदन्तादिना प्रसिद्धच्छायाविलक्षणे तस्मिन् छायारहितादित्यादेरपि प्रतिबिम्बदर्शनाच्च बिम्बचेष्टाऽधीनचेष्टतया छायाशब्दो गौणः । उक्तयुक्त्यैव न मुखान्तरमपीति बिम्बमुखएव दर्पणस्थत्वं भिन्नत्वं स्वाभिमुख्यं चारोप्य दर्पणे मुखमित्याद्यनुभवति । न च प्रतीत्यनुरोधेन दर्पणे शुक्तौ रजतवन्मुखान्तरमस्त्विति वाच्यम् । प्रतीतेरन्यथाप्युपपत्तेः । दर्पणे ग्रीवास्थमेव मुखं पश्यामि नात्र मुखमिति संसर्गं प्रतिषिध्य प्रसिद्धमुखाऽभेदानुभवात् । अन्यथा नेदं रजतमितिवन्नेदं मुखमित्यनुभूयेत । न चैवं पार्श्वस्थमुखादिप्रतिबिम्बे ऽधिष्ठानेन्द्रियसन्निकर्षाऽभावात्कथमपरोक्षभ्रम इति वाच्यम् । परावृत्तनयनरश्मिभिस्तदुपपत्तेः । दर्पण-

सन्निकर्षमात्रमेव तत्र कारणम्। यन्निष्ठत्वेन भ्रमस्तत्सन्निकर्षस्य हेतुत्वादिति केचित्। तस्माल्लौकिकप्रतिबिम्बमिवाऽज्ञानेपि जीवप्रतिबिम्बमपि बिम्बाद् ब्रह्मणो न भिद्यते इति।

ननु किमिदमज्ञानं नाम। न तावज्ज्ञानाऽभावो भ्रान्त्यादिकं वा। तस्य प्रतिबिम्बाद्युपाधित्वाऽयोगात्। भ्रान्त्यादेरज्ञानजस्याऽतत्त्वाच्च। नापि ज्ञाननिवर्त्यं तत्। भ्रान्तिज्ञानस्यापि तथात्वात्। न चाऽनादित्वे सति ज्ञाननिवर्त्यत्वं तत् स्यादिति वाच्यम्। प्रागभावेपि तत्सत्त्वात्। भावत्वेन विशेषणे चाऽसम्भवः। अनादिभावस्यात्मवदनिवर्त्यत्वात्। अविद्यासम्बन्धादावतिव्याप्तेश्च। नापि तत्र प्रमाणं पश्यामः। न जानामीत्यनुभवस्य मतद्वयसम्प्रतिपन्नाऽज्ञानविषयत्वेनोपपत्तेः। भ्रमाऽविषयविषयकघटादिज्ञानं निवर्तकं प्रमाणज्ञानत्वाद् भ्रमगोचरविषयकज्ञानवदिति सिद्धान्त्यभिमताऽज्ञानसिद्धिरिति चेत्। न। प्रागभावनिवृत्त्या ऽर्थान्तरत्वाद् ननु तदन्याऽज्ञाननिवर्त्तकमिति साध्यं, दृष्टान्ते साध्याऽभावात्। भ्रान्तिज्ञानस्य जानामीत्यनुभवगोचरस्याऽज्ञानत्वाऽयोगात्।

उच्यते। अनाद्युपादानत्वे सति ज्ञाननिवर्त्यमज्ञानं, निखिलप्रपञ्चोपादानब्रह्मगोचरमेवाऽज्ञानमिति नाऽव्याप्तिः। नाप्यसम्भवः। अनादित्वेप्यभाववद्भावस्यापि निवृत्तौ बाधकाऽभावात्। न चैवमात्मनोपि निवृत्तिप्रसङ्गः। त्वत्पक्षे ऽप्यत्यन्ताभावस्य तत्प्रसङ्गात्। निवर्त्तकाऽभावादनिवृत्तिस्त्वात्मन्यपि समाना। अज्ञाने त्वन्वयव्यतिरेकसिद्धस्य श्रुतिसिद्धस्य च ज्ञानस्य तत्त्वात्। न चाऽज्ञानस्याऽनादित्वे तव मते मिथ्यात्वाऽनुपपत्तिः, मिथ्या-

वस्तुनो दोषजन्यत्वादिति वाच्यम् । कार्यमिथ्यावस्तुन एव तन्नियमात् ।

ज्ञानत्वेन स्वजन्याऽनपेक्षज्ञाननिवर्त्यं वा ऽज्ञानम् । न चैवं परोक्षज्ञानादप्यविद्यानिवृत्तिप्रसङ्गः । अविद्याप्रयुक्ताऽऽवरणलक्षणप्रतिबन्धस्याऽन्वयव्यतिरेकाभ्यामपरोक्षवृत्तिनिवर्त्यतया तदभावदशायां तदयोगात् । न चैतावता तत्त्वेन तस्य निवर्त्यत्वं हीयते । प्रतिबन्धदशायां तृणाद्यदाहकस्यापि वन्हेस्तद्दाहकत्वाऽनपायात् । न च संशयसाधारणज्ञानत्वं कथमविद्यानिवृत्तिप्रयोजकमिति वाच्यम् । निखिलवृत्त्यधिष्ठानतया ज्ञानत्वात्मकचैतन्यस्यैकत्वात् । तस्य प्रतिबन्धकाऽभावदशायामज्ञाननिवर्त्तकत्वाद् भ्रमादेर्ज्ञानाऽनिवर्त्यत्वाच्च न तत्राऽतिव्याप्तिः। उत्पन्नभ्रमादिनिवृत्तेर्ज्ञानं विना ऽपि भावात् । नापि तत्र प्रमाणाऽभावः । न जानामीत्यनुभवस्य सत्त्वात् । न तावन्मिथ्याज्ञानादिकं तस्य विषयः । तस्याऽज्ञानाऽन्वयव्यतिरेकाऽनुविधायितया ततो भेदेनाऽनुभवात् । यावद्विशेषज्ञानमनुभूयमानस्य मिथ्याज्ञानाद्यनुपपत्तेश्च । ज्ञानं विना ऽपि तस्य नाशात् । मिथ्याज्ञानस्य ज्ञानत्वाऽधिकरणत्वाच्च न तद्गोचरत्वम् । नापि ज्ञानाऽभावो विषयः । तत्र न तावदत्यन्ताभावस्तद्विषयः । परमते ज्ञानाऽधिकरणे तदभावात् । अस्मन्मते चाऽसङ्गस्यात्मनो ज्ञानं विना तत्सम्बन्धाभावात् । नापि ध्वंसः । अतीन्द्रियसंस्काराऽतिरिक्तध्वंसाऽभावात् । पूर्वं तत्र ज्ञानाभावाच्च नापि प्रागभावः । तस्य कुत्राप्यभावात् । भविष्यतीत्यादिबुद्धेरन्यथाप्युपपन्नत्वेन प्रमाणाऽभावात् । एतच्चान्यत्र प्रतिपादितम् । न चैतस्मादेवाऽनुभवात्तत्कल्पनं, लाघवे-

नैतस्याऽनुभवस्य भावविषयस्यैवोचितत्वात्। यद्विषये कदापि ज्ञानं न भविष्यति तत्रापि न जानामीत्यनुभवात्। तत्र च प्रागभावाऽसम्भवात्। किं च न जानामीति ज्ञानसामान्यविरोध्यनुभूयते, तद्विरुद्धं च यद्यभावात्मकं किं चिद्वक्तव्यं तर्हि तव सामान्याऽभाव एव वक्तव्यः। विशेषाऽभावानां प्रतियोगिजातीयसामानाधिकरण्यात्। न चाऽज्ञानाऽनुभवकाले आत्मनि विज्ञानसामान्याऽभावोस्ति। धर्मिप्रतियोगिज्ञानेन तस्य ततोपि व्यावर्त्तितत्वात्। स्वप्रकाशधर्मिप्रतियोगिज्ञानाऽनुभवविरोधेन तदनुभवाऽसंभवाच्च। अस्मन्मतसिद्धाऽज्ञानं च ज्ञानसामान्यविरोधीति तदेव न जानामीत्यनुभवविषयः। अनुमानमपि घटध्वंसाऽजनकघटाऽपरोक्षप्रमाणज्ञानं घटं न जानामीत्यनुभवविषयनिवर्त्तकं घटाऽपरोक्षप्रमाणज्ञानत्वाद् घटध्वंसजनकप्रत्यक्षवत्। अन्वयव्यतिरेकाभ्यां च प्रतियोगिप्रत्यक्षं ध्वंसे कारणमिति न साध्यवैकल्यम्। न च प्रागभावनिवर्त्तकतया ऽर्थान्तरता, तस्य सत्त्वेऽपि ज्ञानस्य तन्निवृत्तितया तदनिवर्तकत्वात्। अत्र निवर्तकयोग्यता साध्येति न धारावाहिकद्वितीयादिप्रत्यक्षे बाधो व्यभिचारो वा। अथ वा स्वसामग्रीकाले स्वसमानाधिकरणज्ञानाऽविषयविषयत्वं पक्षस्य, जन्यसविकल्पकाऽजन्यत्वं च हेतोर्विशेषणम्।

वस्तुतस्तु धारावाहिकबुद्धिरेव नास्ति, प्रमाणाभावात्। एकस्यापि ज्ञानस्य यावद्विनाशकसमवधानं घटादिवत्स्थित्युपपत्तेः। न च द्वितीयादिज्ञानसामग्र्यां सत्यां तत्केन निवारणीयमिति वाच्यम्। प्रथमज्ञानसामग्रीव्यतिरिक्तसामग्र्या अभावात्। तस्याश्च कार्यद्वयाऽजनकत्वात्। प्रागभावाऽभावेन तद्घटितसामग्रीभेदाऽभावात्। भावे वा प्र-

थमज्ञानसमयएव द्वितीयादेरप्युत्पत्तिः केन वारणीया । न च द्वितीयादिज्ञाने प्रथमादिज्ञानमपि कारणम् । विशेषणज्ञानविधया कारणं चेत्प्रागपि तदस्त्येवेति किं तेन । प्रथमज्ञानत्वेन च कारणत्वे न किं चित्प्रमाणं, ज्ञानक्रमसिद्धेः पूर्वं प्राथम्याद्यसिद्धेश्च । ततः सामग्रीभेदाऽभावात् एकैवेति न पत्तहेत्वोर्विशेषणम् । न चाऽप्रयोजकत्वं, घटज्ञानेनाऽज्ञानं निवृत्तमिति अनुभवस्य विना बाधमप्रामाण्याऽयोगात् । मूलाऽज्ञाने तु प्रयुज्यते, सर्गाद्यकालीनं कार्यं जडोपादानं कार्यत्वाद् घटवत् । तच्च लाघवादेकमित्यनाद्येकं भावरूपं जडोपादानं सिध्यति । तदेवाऽज्ञानम् । तदन्यस्मिन् प्रमाणाऽभावात् । अनादिभावत्वं ज्ञाननिवर्त्यवृत्ति जडवृत्तित्वाद् घटत्वादिवदिति वा पराऽभ्युपेतजडोपादाननिवृत्तिः ।

अध्यासाऽनुपपत्तिरपि तत्प्रमाणम् । तथा हि । शुक्तिकाद्यज्ञानं रजताद्युपादानं, तस्मिन्सत्येव तद्दर्शनात् । न चाऽज्ञानमध्यासप्रतिबन्धकज्ञानाऽभावतया निमित्तमन्यथासिद्धं वेति वाच्यम् । सामग्रीकार्याभावप्रयोजकं हि प्रतिबन्धकं, तादृशे एव तद्व्यवहारात् । व्यवहाराऽनुसारेण व्यवहर्त्तव्यलक्षणस्य वक्तव्यत्वात् । न चाऽध्याससामग्र्यन्तर्भूतदोषदशायां शुक्तित्वज्ञानं भवति । तदन्यस्योपादानत्वाऽसम्भवाच्च । न हि सत्यस्य मिथ्यापरिणामः सम्भवति, परिणामस्य परिणामिसमानसत्ताकत्वाद् नियमेनाऽज्ञानदशायामेवाऽनुभूयमानस्य तदुपादानस्यैव वक्तव्यत्वाच्च । ततश्चेदमाकारवृत्त्येदमंशावच्छिन्नचैतन्यस्यान्तःकरणावच्छिन्नसाक्ष्यभेदेनाऽभिव्यक्तौ सत्यामधिष्ठानसामान्यज्ञानदोषसंस्कारसहितेदमंशाऽभिव्यक्तसाक्षिनिष्ठाविशेषांश-

गोचरा ऽविद्या तस्मिन् साक्षाद्रजताद्याकारेण विवर्त्तते । तच्च रजतं जायमानदशायामपि साक्षिसंबद्धमिति स्वाकारवृत्तिं विनैव साक्षिणा ऽनुभूयतइति तत्प्रातीतिकमेव । एतच्चान्यत्रोपपादितम् ।

केचित्तु तत्राप्यविद्यावृत्तिमिच्छन्ति । एवमहंकाराऽध्यासाऽनुपपत्त्या मूलाऽज्ञानसिद्धिः ।

तच्चाऽज्ञानं चैतन्यमात्राश्रयविषयम् । दृश्यस्य सर्वस्य तत्कार्यतया तदाश्रयत्वाऽयोगात् । स्वतो जडतया आवृतस्वरूपस्याऽज्ञानप्रयुक्तावरणे प्रमाणप्रयोजनाऽभावात् । घटं न जानामीत्यनुभवस्य तदवच्छिन्नचैतन्याऽऽवरणविषयतया ऽन्यथासिद्धत्वात् । एवमहंकारस्याऽहमज्ञ इति प्रतीयमानाऽज्ञानाश्रयत्वमप्यज्ञानाश्रयस्य तेनाप्यवच्छिन्नत्वादन्यथासिद्धम् । चैतन्यस्य स्वप्रकाशस्य कथमज्ञानाश्रयत्वमिति चेत् । किं स्वप्रकाशस्याऽज्ञानाश्रयत्वमेव विरुद्धं, किं वा स्वविषयाऽप्रकाशाश्रयत्वम् । नाद्यः । घटादिज्ञानस्याऽन्याऽज्ञानसामानाधिकरण्यवद् ज्ञानात्मवादेऽन्याऽज्ञानाश्रयत्वविरोधात् । द्वितीये च विषयत्वमेव विरुद्धमिति वक्तव्यं नाश्रयत्वं न वा तदपि, स्वप्रकाशचैतन्यस्याऽनाद्यनभिव्यक्तिलक्षणाऽविद्याप्रयुक्ताऽऽवरणप्रतिबन्धस्य स्वसत्तानिश्चयत्वाऽभावेनाऽविद्याविरोधितया तद्विषयत्वोपपत्तेः । न चैवं ब्रह्मप्रकाशस्याऽभावप्रसङ्गः । स्वरूपस्य तदयोगात् । किं तर्ह्यज्ञानकृत्यम् । अनभिव्यक्तिः । सा च स्वप्रकाशप्रत्यग्रूपतया ऽस्ति प्रकाशतइति व्यवहारयोग्ये नास्ति न प्रकाशतइति ब्रह्मणि व्यवहारदर्शनोन्नेया, तद्योग्यता ऽस्तीति व्यवहारयोग्यता वा । तदन्यस्य नित्य-

प्रकाशे ब्रह्मणि असम्भवात्। सा चाऽनादिसिद्धाऽपि कल्पितेति न वास्तवस्वरूपयोग्यतया विरोधः ।

नन्वेवं कल्पितयोग्यतया पूर्णानन्दप्रकाशाऽभिभव इव चैतन्यप्रकाशोपि अभिभूयतइति चेत्। चैतन्ये नास्तीति व्यवहारादर्शनेन तद्योग्यतालक्षणाऽऽवरणाऽभावात् । तस्माद्ब्रह्मविषयमेवाऽज्ञानं तदावरणत्वादेव तदाश्रयं, तमोवत् । न चैवं ब्रह्मणो ऽप्यज्ञत्वापत्तिः। अनादिज्ञाननिवर्त्त्याऽज्ञानाश्रयत्वे पि तस्याऽऽवृतस्वरूपत्वाऽभावेनाऽज्ञत्वाऽभावात्। घटं न जानामीत्यनुभूयमानमज्ञानं तदेव नान्यत्। योग्यतालक्षणमावरणं चाऽज्ञानकार्यं घटाद्यवच्छिन्नचैतन्यनिष्ठमिति तन्निवृत्तिर्घटादिज्ञानेनाऽनुभूयतइति नाऽनुभवविरोधः, न वा वृत्तिवैफल्यं, न वा घटाऽज्ञानं निवृत्तमिति व्यवहाराऽनुपपत्तिः। अथ वा मूलाऽज्ञानस्यैव धर्मरूपाणि घटाद्यवच्छिन्नचैतन्यगोचरावस्थाशब्दवाच्यान्यन्यान्येव तदज्ञानानि। ज्ञानेनाऽज्ञानं निवृत्तमिति तदनुभवात्। तानि चाऽज्ञानानि रजताद्युपादानानि शुक्तिज्ञानैः सह कार्येण निवर्त्तन्ते। शुक्त्यवच्छिन्नचैतन्यनिष्ठानि वा, ऽविद्यायाः स्वविषयाश्रयत्वनियमात्। न चैवं तस्य साक्षिसबन्धाऽभावादहमिदं न जानामीत्यपरोक्षत्वाऽनुपपत्तिः, तस्य कार्यैककल्प्यत्वात्। अनुभवस्य मूलाऽज्ञानगोचरत्वात्। अथ वा मूलाऽज्ञानस्याऽऽश्रयविषयभेदाऽनुभवात् तदसम्भवाच्च भवतु चिन्मात्रं विषय एवाऽऽश्रयः। अन्यत्र त्वहमिदं न जानामीति भेदाऽनुभवात्तत्संभवाच्चाऽहङ्कारावच्छिन्नचैतन्याश्रयमज्ञानं बाह्यचैतन्यविषयं, प्रतीयमानस्य भेदस्य बाधकाऽभावात् । एवं च सति तदापरोक्ष्यमप्युपपद्यते ।

श्री

# न्यायसारः ।

नत्वा विश्वेश्वरं देवं गुरुं श्रीलक्ष्मणाभिधम् ।
द्रव्यादीनां पदार्थानां विवेकः क्रियते ऽधुना ॥१॥

यद्यप्यभिमतकर्मारम्भपूर्वसमये सर्वेऽपि शिष्टा मङ्गलमाचरन्ति तस्य च न समाप्तिः फलम् । कृतेऽपि मङ्गलेऽसमाप्तेरकृतेऽपि मङ्गले समाप्तेश्च । नापि विघ्नध्वंसः प्रमाणाभावाद्, विनायकस्तवपाठादिना विघ्नध्वंसस्य जायमानत्वेन व्यभिचाराच्च । तथापीष्टसाधनत्वांशेऽभ्रान्तरूपशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे समाप्तेरुपस्थितत्वाद्दृष्टत्वाच्च तस्या एव फलत्वं कल्प्यते न त्वन्यस्य, तदुपस्थित्यादिकल्पने गौरवात् न च कृतेऽपि मङ्गले कादम्बर्यादिग्रन्थासमाप्तेरन्वयव्यभिचारो दोषः । तत्र प्रचुरविघ्नस्य सत्त्वेन बलवत्तरविघ्नस्य वा सत्त्वेन प्रतिबन्धकाभावस्यासत्त्वात् । नापि नास्तिकादिग्रन्थसमाप्तौ व्यतिरेकव्यभिचारो दोषः । तत्रापि जन्मान्तरीयमङ्गलकल्पनात् । न च जन्मान्तरीयमङ्गलकल्पने व्यभिचाराभावे सिद्धे समाप्तेर्मङ्गलकार्यत्वनिश्चयस्तस्मिंश्च सति कार्येण कारणानुमानमित्यन्योन्याश्रय इति वाच्यम् । उक्तानुमानेन मङ्गलस्य सफलत्वे सिद्धे, मङ्गलं न समाप्तीतरफलकं तदुपस्थित्यादिकं विनापि क्रियमाणत्वादित्यनुमानेन समाप्तीतराफलकत्वे सिद्धे, मङ्गलं समाप्तिफलकं समाप्तीत-

राफलकत्वे सति सफलत्वादित्यनुमानेन समाप्तेर्मङ्गलकार्य वनिश्चयात्। व्यभिचारसंशयस्य च प्रत्यक्षे प्रतिबन्धकत्वेनानुमितावप्रतिबन्धकत्वाद्व्यभिचारनिश्चयस्य च तत्रासत्त्वादिति प्राञ्चः ।

नव्यास्तु मङ्गलस्य समाप्त्यव्यवहितपूर्वसमयवृत्तित्वाभावेन न साक्षाद्धेतुत्वम्। नाप्यदृष्टद्वारा तद्धेतुत्वम्। अदृष्टकल्पनागौरवात्। किञ्च तददृष्टं विघ्नं विनाश्य समाप्तिहेतुरविनाश्य वा। नाद्यः। अदृष्टं विनैव मङ्गलाद्विघ्नध्वंसोपपत्तेः न च कालान्तरभाविविघ्नध्वंसार्थमदृष्टद्वारता, तस्यातीन्द्रियत्वेन तदुत्पत्तौ मानाभावात्। नान्त्यः। प्रतिबन्धके सति कार्यानुत्पत्तेः। अदृष्टस्योत्तेजकत्वे ऽति गौरवम्। नापि विघ्नध्वंसद्वारा। आवश्यकविघ्नध्वंसफलकत्वेनैव शिष्टाचारविषयत्वोपपत्तेर्न समाप्तिफलकत्वं, गौरवात्। अत एव स्वतःसिद्ध विघ्नाभावजन्यसमाप्त्या न मङ्गलानुमानं समाप्तिफलकत्वे च मङ्गलकल्पना गौरवात्। अतोविघ्नध्वंस एव फलम्। समाप्तिस्तु प्रतिबन्धाभावे सति दृष्टबुद्ध्यादिकारणादेव। न च विघ्नध्वंसफलकत्वेऽपि व्यभिचारो, विनायकस्तवपाठादिनापि तस्य जायमानत्वादिति वाच्यम्। विजातीयविघ्नध्वंसे मङ्गलस्य हेतुत्वात्। विघ्नध्वंसविशेषे च विनायकस्तवपाठादेः।

यद्यपि समाप्तिविशेषे मङ्गलस्य हेतुत्वे न कल्पनागौरवं, तथापि कालान्तरभाविसमाप्तौ विघ्नध्वंसद्वाराहेतुत्वं वाच्यम्। तथा चावश्यकविघ्नध्वंसं प्रत्येव मङ्गलस्य हेतुत्वं, न समाप्तौ। न च स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वे तद्बोधकमानाप्रामाण्यमिति वाच्यम्। विघ्नध्वंसे प्रतियोगिनो विघ्नस्यापि हेतुत्वेन का-

रणान्तराभावादेव तत्र फलाभावात् । अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यं समाप्तिफलकत्वेऽप्येवमेव समाधेयम् । तस्मात्समाप्तेर्विघ्न-ध्वंसस्य वा मङ्गलजन्यत्वं क्षित्यादेः कर्तृजन्यत्ववद्द्व्यणुक-स्य परमाणुजन्यत्ववन्निर्दुष्टस्वतन्त्रप्रमाणीभूतानुमानादेव सिध्यतीति न श्रुतिकल्पनम् । एवं वेदाविरुद्धस्मृतीनामपि स्वत एव प्रामाण्ये सति न तत्रापि श्रुतिकल्पनम्[१] । विस्तरस्त्वस्मत्कृतशब्दप्रामाण्यवादे द्रष्टव्य इति दिक् ।

पदार्थाः सप्तैव, ते च द्विविधाः । भावा अभावाश्च । तत्र भावाः षट् । द्रव्यगुणकर्मसामान्यविशेषसमवायभे-दात् । अभावो द्विविधः संसर्गाभावान्योन्याभावभेदात्[२] ।

ननु न सप्तैव पदार्थाः शक्तेरतिरिक्तपदार्थस्य स-त्त्वात् । कथमन्यथा मणिसत्त्वे वह्निना दाहो न जन्यते,

---

१ वेदविरुद्धस्मृतीनाम "औदुम्बरी सर्वावेष्टयितव्ये"त्यादीनाम "औदुम्बरीं-स्पृष्ट्वोद्गायेदि"त्यादिप्रत्यक्षश्रुतिविरोधादप्रामाण्यम । अष्टकादिकर्मावबो -कस्मृ-तीना तु प्रत्यक्षाया विरुद्धश्रुतेरभावाच्छ्रुतिमकल्पयित्वैव प्रामाण्यसम्भवान्न तत्कल्पन मिति भाव ।

२ निखिलसामान्यवृत्तिसामान्यत्वमेकमखण्डोपाधिरूपमसमवेतं नित्य च तदेव निखिलसामान्याना पदार्थविभाजकतावच्छेदक नतु सामान्यत्व स्वरूपसम्बन्ध रूपं पदार्थविभाजकतावच्छेदकम । घटत्वपटत्वद्रव्यत्वादीना स्वरूपाणा परस्परम-ननुगतत्वात । एव निखिलविशेषेषु विशेषत्वमेकमखण्ड । तदेव विशेषाणा पदा र्थविभाजकोपाधिः नतु स्वरूपसम्बन्धरूप तथा । प्रतिव्यक्तिभिन्नविशेषस्वरूपाणा परस्परमननुगतत्वात । अनुगतेनैव पदार्थविभागौचित्यात । एव, निखिलाऽभा वेषु अभावत्वमेक पदार्थविभाजकोपाधि. तेषामपि स्वरूपस्य परस्परमननुगत त्वात । तस्मात्सामान्यद्विविधम । जातिरुपाधिश्च । एतेषा विभाजकोपाधीनामुपा धिरूपसामान्येऽन्तर्भाव इति बोध्यम ।

उत्तेजकसत्त्वे च जन्यते ? तस्माद्दाहानुकूला शक्तिर्मण्यादिना नाश्यते, उत्तेजकेन जन्यते । सा च न द्रव्यं निर्गुणत्वात् । नापि गुणः । क्लृप्तगुणकारणं विनापि जायमानत्वात् । नाप्यतिरिक्तगुणान्तरं, तत्र गुणत्वकल्पने गौरवात् । नापि कर्म, योग्यवह्न्यादिकर्मणः प्रत्यक्षत्वनियमेन प्रत्यक्षत्वप्रसङ्गात्[१] । नापि सामान्यादिकम् । उत्पत्तिमत्त्वे सति विनाशित्वात् । तस्मादतिरिक्तैवेति चेत् ? न । उत्तेजकाभावविशिष्टमण्यभावविशिष्टवह्नित्वेन, उत्तेजक[२]काभावविशिष्टमण्यभावत्वेन वह्नित्वेन च वा कारणत्वकल्पनेनैवोपपत्तावनन्तशक्तितत्प्रागभावतद्ध्वंसतत्कारणादिकल्पने गौरवात् ।

एवं तद्भिन्नत्वे सति तद्गतजातीयभूयोधर्मवत्त्वरूपसादृश्यस्य द्रव्यगुणकर्मसामान्यादिष्वेवान्तर्भावेणैवोपपत्तौ नातिरिक्तपदार्थत्वम् । यथा गोत्वं नित्यं तथाऽश्वत्वमिति प्रतीतेः सामान्यवृत्तिभावत्वं नाशङ्कनीयम् । ध्वंसाप्रतियोगित्वरूपाभावस्वरूपतन्निष्ठधर्मेणैवोपपत्तेः । एवं सादृश्यस्य द्रव्याद्यन्तर्भावे उदाहरणानि द्रष्टव्यानि ।

---

१ तन्त्वादिगतगुणेषु रूपादिषु पटादिसमवेतरूपादिनिष्ठजन्यतानिरूपितजनकतारूपाया शक्ते सत्वात, शक्ति॰ द्रव्यगुणकर्मभिन्ना, गुणवृत्तित्वादित्येकेनैवानुमानेनशक्तेर्द्रव्यगुणकर्माऽन्यत्वे सिद्धे उपायत्रयप्रदर्शन शिष्यबुद्धिवैशद्यार्थमित्यवधेयम ।

२ विशेष्याभावविशेषणाभावविशेष्यविशेषणोभयाभावप्रयुक्तिभेदाद विशिष्टाभावस्त्रिविध॰ । एवञ्च यत्रोत्तेजकप्रतिबन्धकमण्योरसमवधानं तत्र विशेष्यस्य प्रतिबन्धकमणेरभावाद्विशेष्याऽभावप्रयुक्तविशिष्टाभावसत्त्वाद्दाहोपपत्ति । यत्र च उभयो समवधान तत्रोत्तेजाकाभावरूपस्य विशेषणस्याभाद्विशिष्टाभावसत्त्वेनेष्टसिद्धि॰ । एवं यत्र उत्तेजकमणिमात्रसमवधान तत्रोभयाभावप्रयुक्तविशिष्टाभावाद्दाह॰ । यत्र तु केवलप्रतिबन्धकमणे समवधानं तत्र विशेष्यविशेषणोभयसत्त्वाद्विशिष्टाभावरूपकारणाभावाचदाह इति विवेक॰ ।

ननु गुणादीनां द्रव्यादौ संबन्धतया समवायसिद्धिवद्भावाधिकरणयोः सम्बन्धत्वेन वैशिष्ट्यं पदार्थान्तरं सिद्ध्येत् । न च स्वरूपसम्बन्ध एव तयोः सम्बन्धः । तस्य स्वरूपात्मकत्वेनाननुगतत्वात् । अन्यथा गुणादीनामपि स एव सम्बन्धोऽस्तु, कृतं समवायेनेति चेत् ? न । वैशिष्ट्यस्यानित्यत्वे तत्र कारणादिकल्पने गौरवात् । नित्यत्वे घटकालेऽपि भूतले घटाभावबुद्धिः स्यात् । घटाभावस्य पूर्वं सत्त्वेन वैशिष्ट्यस्य तत्र सत्त्वात् । रक्तकाले श्यामरूपसमवायसत्त्वेऽपि श्यामरूपाभावादेव न तल्लौकिकप्रत्यक्षम् । वायौ रूपसमवायसत्वेऽपि घटे घटसंयोगवत् तस्य तत्र रूपसंबन्धत्वानङ्गीकाराद्वायोरप्रत्यक्षत्वम् । वायुघटितसन्निकर्षेण रूपाप्रत्यक्षत्वं त्वस्मत्कृतसमवायवादे द्रष्टव्यम् । न च त्वन्मतेऽपि घट आनीते घटाभावबुद्धिः स्याद्घटाभावस्य पूर्वं सत्त्वेन भूतलघटाभावात्मकस्वरूपानपायादिति वाच्यम् । तत्तत्कालावच्छिन्नभूतलस्याभावस्य च स्वरूपसम्बन्धत्वाङ्गीकारात् । अत्र विशेष्यांशस्य सार्थकत्वं विशेषणांशस्यानुगतत्वं मृग्यमित्येके ।

तत्र द्रव्यत्वजातिमद्द्रव्यम् । तत्पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभेदान्नवविधम् ।

यद्यपि जलादौ द्रव्यत्वस्य प्रत्यक्षेणाग्रहान्न तत्प्रत्यक्षसिद्धं तथापि समवायेन भावकार्यत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन द्रव्यस्य कारणतया, तदवच्छेदकतया द्रव्यत्वसिद्धिः । न च तादृशहेतुतायां मानाभावः । रूपादेः स्वाश्रयसमवेतत्वसम्बन्धेन रूपादौ हेतुत्वात्तेन सम्बन्धेन द्रव्य इव स्वस्मिन्नपि सत्त्वेन तत्रापि रूपाद्युत्पत्त्यापत्तेस्तथा कार्यकारणभावाङ्गीकारात् ।

भावकार्यत्वं तु प्रागभावप्रतियोगित्वविशिष्टं ध्वंसप्रतियोगित्वविशिष्टं वा सत्त्वमिति केचित्। कालिकसमवायोभयसंबन्धेन सत्तैव भावकार्यत्वम्। नच महाकाले सत्तायास्तेन सम्बन्धेन सत्त्वात् तस्यापि भावकार्यत्वापत्तिरिति वाच्यम् । इदानीं घट इत्यादिप्रतीतावुपाधिरूपकालस्यैव विषयत्वेन महाकाले कालिकसम्बन्धे प्रमाणाभावात्। घटत्वमेव कालिकसम्बन्धेन भावकार्यत्वमिति तु न वाच्यम् । तेन सम्बन्धेन पटत्वादिना विनिगमनाविरहादतिप्रसक्तत्वाच्च ।

वस्तुतस्तु समवायसंबन्धेन कार्यत्वावच्छिन्नं प्रत्येवोक्तरूपेण हेतुत्वम् । कार्यत्वं तु कालिकसम्बन्धेन सत्तैव द्रव्यत्वतवत्सतायाः सिद्धिरप्येतस्माद्द्रष्टव्येति नव्याः ।

दीधितिकृतस्तु संयोगविभागयोः, समवायिकारणतावच्छेदकत्वेन द्रव्यत्वसिद्धिमाहुः ।

ननु नीलं तमश्चलतीति रूपक्रियाप्रतीत्या प्रत्यक्षसिद्धं तमोद्रव्यं, तच्च न पृथिव्यादिष्वन्तर्भवति, गन्धशून्यत्वे सति नीलरूपवत्त्वादित्यतोऽतिरिक्तद्रव्यसिद्धिः। न च भावचाक्षुषत्वावच्छिन्ने द्रव्यचाक्षुषत्वावच्छिन्ने वा आलोकस्य हेतुत्वान्न तस्य भावत्वं द्रव्यत्वं चेति वाच्यम् । आलोकचाक्षुषे व्यभिचारेणालोकातिरिक्तत्वस्यैव तमोव्यतिरिक्तत्वस्यापि भावद्रव्ययोर्विशेषणात्। न च नीलरूपादिप्रतीतिस्तमसि भ्रान्तैवेति वाच्यम्। आलोकेऽपि रूपादिप्रतीतेर्भ्रान्तित्वापत्त्या तस्यापि द्रव्यत्त्वासिद्धिप्रसङ्गात्। न चालोकेऽप्यालोकसंयोगसत्त्वाद् द्रव्यचाक्षुषत्वावच्छिन्ने आलोकसंयोगस्य हेतुत्वं, तमसो द्रव्यत्वे तु तमोव्यतिरिक्तद्रव्यचाक्षुषे आलोकसंयोगस्य हेतुत्वं,वाच्यं, तथा च

गौरवेण न तस्य द्रव्यत्वमिति वाच्यम्। अभावचाक्षुषत्वावच्छिन्ने आलोकस्य हेतुत्वात्, तमसोऽभावत्वे तत्र व्यभिचारेण तमोव्यतिरिक्तत्वस्य विशेषणीयत्वे गौरवापत्त्या न तस्याभावत्वमपि सुवचमिति चेन्न। तमसो द्रव्यत्ववादिनापि आलोकाभावस्य चाक्षुषत्वाङ्गीकारेणालोकाभावातिरिक्ताभावचाक्षुषे आलोकस्यावश्यं हेतुता वाच्या। तथा च तमसो द्रव्यत्वतदवयवादिकल्पना वाच्या, आलोकस्य तमोव्यतिरिक्ताभावचाक्षुषे तद्व्यतिरिक्तद्रव्यचाक्षुषे वा कारणत्वकल्पना चेति गौरवम्। अतो लाघवादालोकाभावत्वमेव तस्य कल्प्यते। नीलरूपादिप्रतीतिरप्यत एव भ्रान्तेति न तया द्रव्यत्वप्रत्याशेति युक्तमुत्पश्यामः।

गुणत्वजातिमान् गुणः। स च रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारशब्दसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मबुद्धिभेदाच्चतुर्विंशतिविधः।

यद्यपि गुणत्वजातौ न प्रत्यक्षं प्रमाणं, रूपादिषु कस्यापि गुणत्वप्रत्यक्षाभावात्। नापि द्रव्यकर्मभिन्नसामान्यवद्वृत्तिकारणतावच्छेदकतया तत्सिद्धिः। एवं विधकारणतावच्छेदकतया जात्यसिद्धेः। अन्यथा द्रव्यभिन्नसामान्यवद् वृत्तिकारणतावच्छेदकतया गुणकर्मणोरेकजातिसिद्ध्यापत्तिः। इष्टापत्तिरिति चेन्न। गुणभिन्नसामान्यवद्वृत्तिकारणतावच्छेदकतया द्रव्यकर्मणोरेकजातिसिद्ध्यापत्तेः। तथा च द्रव्यत्वगुणत्वयोः परस्परात्यन्ताभावसमानाधिकरणयोर्जात्योः कर्मणि समावेशात्सङ्करापत्तेः। सङ्करभयान्न तयोः सिद्धिः। गुणत्वे तु सङ्कराभावाद्गुणत्वजातिसिद्धिरप्रत्यूहेति न शङ्क्यम्। रूपभिन्नसामान्यवद्वृ-

त्तिकारणतावच्छेदकतया सिद्धजात्या गुणत्वस्यापि सङ्कराप्तेः । तथाप्यनुगतप्रत्ययत्ववदनुगतशब्दाभिलापोऽपि बाधकाभावे जातिसाधक इति तत्सिद्धेरिति केचित् ।

नव्यास्तु द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुण इति गुणलक्षणमाहुः ।

कर्मत्वजातिमत्कर्म । तच्चोत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात् पञ्चविधम् । भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यग्गमनानां गमनेऽन्तर्भावान्नाधिक्यम् । यद्यप्युत्क्षेपणादीनां गमनेऽन्तर्भावसम्भवान्न पञ्चविधत्वं, तथाप्युत्क्षेपणादौ गमनत्वजातेरप्रत्ययाद् भ्रमणादिषु च तत्प्रत्ययात्पञ्चविधत्वमिति प्राञ्चः ।

सामान्यं परापरभेदाद्द्विविधम् । परं स्वभिन्नसामान्यव्यापकम्, अपरं स्वभिन्नसामान्यव्याप्यम् । तत्र सत्ता परमेव घटत्वाद्यपरमेव । द्रव्यत्वादिकं तु स्वभिन्नपृथिवीत्वादेर्व्यापकत्वात्स्वभिन्नसत्तायाश्च व्याप्यत्वात्परापरतया व्यवह्रियते ।

केचित्तु परापरपरापरभेदात्त्रिविधमाहुः । तल्लक्षणं तु नित्यत्वे सत्यनेकसमवेतत्वम् । नित्यत्वानेकसमवेतत्वपदानि संयोगनित्यपरिमाणात्यन्ताभावेष्वतिव्याप्तिवारकाणि । समवेतं विशेषभिन्नं समवेतशून्यं वा । समवेतपदमभावेऽतिव्याप्तिवारकम् । विशेषेऽतिव्याप्तिवारणाय विशेषभिन्नपदम् । गुणादिष्वतिव्याप्तिवारणाय समवेतशून्यपदं, तत्र गुणत्वादेः सत्त्वान्न दोषः ।

विशेषास्तु नित्यद्रव्यवृत्तयोऽनन्ता एव । तल्लक्षणं त्वनेकासमवेतसमवेतत्वे सति समवेतशून्यत्वम् । अनेकासमवेतपदं सामान्येऽतिव्याप्तिवारकं, समवेतपदं सा-

मान्यत्वादावतिव्याप्तिवारकं, रूपादावतिव्याप्तिवारणाय समवेतशून्यत्वम् ।

केचित्तु नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः । अन्तेऽवसाने वर्त्तन्तेऽन्त्या यदपेक्षया विशेषा न सन्तीत्यर्थः । घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः, सजातीयपरमाणूनां परस्परभेदका विशेषा एव । ते तु स्वत एव व्यावृत्तास्तेन तत्र विशेषान्तरापेक्षा नास्तीत्याहुस्तन्न । नित्यद्रव्यवृत्तित्वस्य वैयर्थ्यात् । किञ्च स्वतोव्यावृत्तत्वं स्वव्यावृत्तिबुद्धौ स्वभिन्नधर्मानपेक्षत्वं तदिति चेन्न । असिद्धेः । स्वभिन्नधर्मस्य व्याप्त्यादिज्ञानस्यापेक्षणात् । स्वभिन्नलिङ्गानपेक्षत्वं तदिति चेन्न । घटादिष्वतिव्याप्तेः । तादात्म्येनापि स्वव्यावृत्तिसम्भवात् । स्वव्यावृत्तिबुद्धित्वावच्छेदेन स्वभिन्नलिङ्गानपेक्षत्वमिति चेन्न । द्रव्यत्वादिरहितत्वादिनापि स्वव्यावृत्तिबुद्धिसम्भवादिति दिक् ।

नित्यसम्बन्धः समवायः । स च एक एव । स चावयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्विशेषनित्यद्रव्ययोश्च सम्बन्धः ।

तत्र प्रमाणं तु गुणक्रियाजातिविशिष्टबुद्धयः विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वाद्दण्डी पुरुष इति विशिष्टबुद्धिवदित्यनुमानमिति लाघवादेकसमवायसिद्धिः । न च गुणक्रियाजात्यभावविशिष्टबुद्धयो विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वादित्यनुमानेन लाघवाद्भावसाधारणसमवायसिद्धिः स्यादिति वाच्यम् । घटकालेऽपि भूतले घटाभावबुद्धिः स्यान्निष्क्रिययोरभावसमवाययोर्नित्यत्वेन पूर्ववत्तत्र सत्त्वादिति प्राञ्चः । तन्न । एवमपि पृथिवीत्वाद्यभावसाधारणसमवायसिद्धौ बाधकाभावात् ।

केचित्तु तत्तद्‌द्रव्यावृत्तितत्तद्‌द्रव्यसमवेतनाशे तत्त द्द्रव्यनाशस्य हेतुत्वात्। अभावस्य समवेतत्वे तन्तुनाशात्त-न्तुसमवेतपटनाशस्य नाशापत्तिरतो नाभावसाधारणस-मवायसिद्धिः। न चैवं द्रव्यत्वाद्यभावस्य समवेतत्वे बाध-काभाव इति वाच्यम्। द्रव्यत्वाद्यभावरूपस्वरूपसम्बन्धस्य तत्र स्वीकारेण समवायसाधकाभावादित्याहुस्तन्न। मूर्त्त-त्वाद्यभावगुणादिवृत्तिं पक्षयित्वोक्तानुमानाल्लाघवान्मू-र्त्तत्वाद्यभावसाधारणसमवायसिद्ध्यापत्तेः। किञ्चात्यन्ता-भावान्योऽन्याभावयोः समवाये बाधकाभावः। न च घट-नाशात् तत्समवेतयोस्तयोरपि नाशः स्यादिति वाच्यम्। तयोर्नित्यत्वेन घटवद्‌नाशाभावादिति दिक्।

द्रव्यादिषट्‌कभेदवान् अभावो द्विविधः, संसर्गा-भावान्योऽन्याभावभेदात्। न च द्रव्यादिषट्‌कभेदेऽव्या-प्तिः। तत्रापि द्रव्यादिषट्‌कभेदाङ्गीकारात्। न चैवमन-वस्था। प्रामाणिकत्वादिति कश्चित्। समवायैकार्थसम-वायान्यतरसम्बन्धेन सत्ताभाववत्त्वं वा। समवायस्य समवायेन सत्ताधिकरणे समवायात्मकस्वरूपसंबन्धेन वि-द्यमानत्वान्न तेन संबन्धेन सत्ताभाववत्त्वमिति न सम-वायेऽतिव्याप्तिः। न चैवं तेन सम्बन्धेन सत्तात्यन्ताभावे ऽव्याप्तिः। तत्रापि तादात्म्यसम्बन्धेन विशेषणतया वा तस्य स्वीकारात्। अभावत्वमखण्डोपाधिरित्यप्याहुः।

संसर्गाभावस्त्रिविधः, प्रागभावप्रध्वंसात्यन्ताभाव-भेदात्। तल्लक्षणं त्वन्योऽन्याभावभिन्नाभावत्वम्। अन्यो-ऽन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताका-भावत्वमिति केचित्। संसर्गाभावत्वमखण्डोपाधिरित्य-न्ये। एवमन्योऽन्याभावत्वमपि। विनाश्यभावत्वं प्रागभा-

वत्वं जन्याभावत्वं ध्वंसत्वमिति कश्चित् । तन्न । विनाशित्वस्य ध्वंसप्रतियोगित्वरूपस्य ज्ञाने ध्वंसत्वज्ञानं प्रागभावप्रतियोगित्वरूपजन्यत्वज्ञाने च प्रागभावत्वज्ञानं कारणमित्यन्योऽन्याश्रयापत्तेः । अतः प्रागभावत्वं ध्वंसत्वं चाखण्डोपाधिरित्यन्ये ।

नित्यः संसर्गाभावोऽत्यन्ताभावः । घटानयनकालेऽत्यन्ताभावस्य तत्र सम्बन्धाभावान्न तत्प्रतीतिः । तत्रोत्पादविनाशशाली तुरीयोऽभाव इति कश्चित् । नित्यत्वं प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् । तेन ध्वंसप्रागभावयोर्नातिव्याप्तिः । अ[1]त्यन्ताभावत्वमखण्डोपाधिरित्यन्ये । घटात्यन्ताभावस्य घटादिप्रागभावध्वंसात्यन्ताभावात्मकत्वस्वीकारात् प्रागभावध्वंसाधिकरणे नात्यन्ताभावसत्त्वमिति प्राचाम्मतम् ॥

नव्यास्तु पूर्वरक्तध्वंसवत्युत्तररक्तप्रागभाववति श्यामे रक्तं नास्तीति रक्तत्वावच्छिन्नाभावस्य विषयीकरणात्प्रागभावध्वंसयोश्च रक्तत्वावच्छिन्नप्रतियोगिताकत्वाभावान्नात्यन्ताभावस्य प्रागभावादिविरोधः । किञ्च रूपवति रूपानुत्पत्तेः रूपं प्रति रूपस्य प्रतिबन्धकत्वाद्रूपत्वावच्छिन्नाभावस्य कारणस्य घटादौ रूपोत्पत्तेः पूर्वं सत्त्वेन नात्यन्ताभावेन तद्विरोधः । अत एव न पूर्वोक्तं लाघवम् । अन्यथा संयोगादीनामत्यन्ताभावस्यापि लाघवेन द्रव्यत्वात्यन्ताभावाभेदे तस्यापि द्रव्येऽसिद्धिप्रसङ्ग इत्याहुः । अत्यन्ताभावान्योऽन्याभावयोरव्यासज्यवृत्तिव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वम् । भूतले घटो

१ अन्यत्रैकाप्रतियोगित्वमात्रेण नित्यत्वनिर्वाहेऽपि प्रकृते उभयातिव्याप्तिवारणायउभयाप्रतियोगित्वे निवेशिते गौरवादाह ।

नास्ति घटवति न घटपटौ इति प्रतीतेः । भूतलं न घटः, घटो न घटपटाविति प्रतीतेश्च ।

नन्वभावस्याधिकरणात्मकत्वमेवास्तु । न चाभेदे आधाराधेयभावानुपपत्तिः । घटाभावे घटो नास्तीति प्रतीत्याऽभेदेऽपि आधाराधेयभावाङ्गीकारादिति चेन्न । अनन्ताधिकरणानां प्रतीतिविषयत्वकल्पनापेक्षयातिरिक्तस्यैकस्य तादृशप्रतीतिविषयत्वकल्पनाया एव लघीयस्त्वात् । किञ्च भूतले भूतलमिति प्रतीत्यभावेन भूतलस्याभेदेनाधाराधेयभावानङ्गीकाराद्भूतले घटाभाव इत्याधाराधेयभावावगाहिप्रतीत्यनुपपत्तिः । अत एव घटाभावे घटो नास्तीति प्रतीतिरप्युपपद्यते, तत्राभेदेऽपि तादृशप्रतीत्याधाराधेयभावाङ्गीकारात् । अपि च रूपाद्यभावानामधिकरणात्मकत्वे चक्षुरादिग्राह्यत्वं न स्यात् । वाय्वादीनां चक्षुराद्यग्राह्यत्वात् । किञ्च प्रागभावध्वंसयोरधिकरणात्मकत्वे घटकालेऽपि कपाले घटो भविष्यति घटो ध्वस्त इति प्रतीतिः स्यात् कपालस्याधिकरणस्य सत्त्वात् । एवं मोक्षस्याप्यसाध्यतापत्तिः, संसारकालेऽपि सत्त्वापत्तिश्च । नित्यात्मरूपत्वात्तस्य । एवं प्रतिबन्धके सत्यपि कार्यापत्तिः, प्रतिबन्धकाभावस्याधिकरणात्मकस्य सत्त्वादिति दिक् ।

द्रव्यादीनां सप्तानामभिधेयत्वं प्रमेयत्वं ज्ञेयत्वादिकं च साधर्म्यम् । अभिधेयत्वं शब्दशक्तिविषयत्वं सर्वस्यापि वस्तुनस्तदादिशब्दशक्तिविषयत्वात् । प्रमाविषयत्वरूपप्रमेयत्वस्य ज्ञानविषयत्वरूपज्ञेयत्वस्य च सर्वत्र वृत्तित्वम् । सर्वस्यापीश्वरज्ञानविषयत्वात् । द्रव्यादिषट्पदार्थानामभावावृत्तिधर्मवत्त्वं, समवायैकार्थसमवायान्यतरप्रत्यासत्त्या सत्तावत्त्वं च साधर्म्यम् द्रव्यगुणकर्म-

सामान्यविशेषाणां समवायानुयोगित्वप्रतियोगित्वान्यतरवत्त्वम् ।

तथाहि । द्रव्यादौ गुणादीनां समवायः सम्बन्धः । तस्यानुयोगिद्रव्यादिप्रतियोगिगुणादीत्यन्यतरवत्त्वं, तेषामेव समवेत[1]वृत्तिपदार्थविभाजकोधिमत्त्वं, समवेतत्त्वं तु सम्बन्धिभिन्नसमवायसम्बन्धेन विद्यमानत्वमनेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वं च ज्ञेयम् । द्रव्यादिचतुर्णां समवेतसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वम् । द्रव्यादित्रयाणां सामान्यवत्त्वं सत्तावत्त्वं समवेतवत्त्वं च । द्रव्यगुणयोस्तु कर्मावृत्तिसमवेतवद्वृत्तिपदार्थविभाजकोपाधिमत्वं कर्मासमवेतवत्त्वं समवायेन कर्मासमवेतवत्वं च । गुणकर्मणोरसमवायिकारणवृत्तिपदार्थविभाजकोपाधिमत्त्वं द्रव्यासमवेतसमवेतवत्त्वं समवायेन द्रव्यासमवेतवत्त्वं च । कर्मसामान्ययोस्तु कर्मत्वसमवायप्रतियोगित्वानुयोगित्वान्यतरवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वम् । सामान्यविशेषयोः समवेतशून्यत्वे सति समवेतत्त्वम् । विशेषसमवाययोः समवेतसमवेतावृत्त्यभावावृत्तिपदार्थविभाजकोपाधिमत्त्वम् । गुणादीनां गुणवदवृत्तिधर्मवत्त्वं गन्धवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं द्रव्यत्वशून्यत्वं समवायिकारणतारहितत्वं च । कर्मादीनां द्रव्यगुणावृत्तिधर्मवत्त्वम् । सामान्यादीनां सामान्यरहितत्वं समवेतशून्यत्वं च ।

१ घटाभावान्यतरत्वमादायाभावेऽतिव्याप्तिवारणाय पदार्थेत्यादि तद्वत्त्वमपि पदार्थविभाजकतावच्छेदकसम्बन्धेन अन्यथोक्तसम्बन्धेन घटवृत्तिद्रव्यत्वस्य कालिकसम्बन्धेन ध्वंसेऽपि सत्त्वात्तत्रातिप्रसङ्ग । एवं सम्बन्धनिवेशे पदार्थेत्यादि प्रपञ्चार्थम । अन्यतरत्वस्य भेदरूपस्य तेन सम्बन्धेन घटादाववृत्तित्वात । एवमग्रेऽपि सर्वत्रसम्बन्ध निवेशे पदार्थेत्यादि प्रपञ्चार्येतिज्ञेयम ।

कारणत्वं त्वणुपरिमाणातीन्द्रियसामान्यात्मभिन्नवृत्तिपरममहत्त्वविशेषभिन्नानां साधर्म्यम् । इदमपि योगिप्रत्यक्षसामान्यलक्षणाजन्यप्रत्यक्षयोर्विषयसामान्ययोर्न कारणत्वं लिङ्गं च नानुमितिहेतुरिति मतेन । नन्वणुपरिमाणस्य द्व्यणुकपरिमाणजनकत्वे कथमेतत्साधर्म्यमिति चेन्न । परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वाद् द्व्यणुकपरिमाणस्याणुपरिमाणजन्यत्वे तस्य ततोऽणुतरत्वप्रसङ्गादिति केचित् ।

कारणत्वं त्वन्यथासिद्धत्वशून्यत्वविशिष्टनियतपूर्ववृत्तित्वम् । नियतपदं रासभादेर्घटकारणत्ववारणार्थं तन्तुरूपादेः पटादिकारणत्ववारणार्थं शून्यत्वान्तम् ।

ननु रासभादेरन्यथासिद्धत्वान्नियतपदवैयर्थ्यमिति चेत् ? न । घटमात्रे रासभस्य कारणत्वेऽन्यथासिद्ध्यभावात् । तथा हि । यत्कार्यं प्रति पूर्ववर्त्तिता कारणस्य येन रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धम् । यथा घटं प्रति दण्डत्वम् । यस्य कारणमादायैवान्वयव्यतिरेकौ तदन्यथासिद्धं, यथा दण्डरूपम् । यस्यान्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यं प्रति पूर्ववृत्तित्वं गृह्यते तत्र तस्यान्यथासिद्धत्वं, यथाकाशस्य घटे आकाशत्वेन कारणत्वेऽन्यथासिद्धत्वम् । आकाशत्वस्य शब्दसमवायिकारणत्वरूपत्वाच्छब्दपूर्ववृत्तित्वं ज्ञात्वैव घटपूर्ववृत्तित्वं ज्ञातव्यमित्यन्यथासिद्धत्वम् । यत्कार्यजनकं प्रति पूर्ववृत्तित्व ज्ञात्वैव यत्पूर्ववृत्तित्वं ज्ञायते तदन्यथासिद्धम् । यथा कुलालपितृत्वेन घटजनकत्वेऽन्यथासिद्धत्वम् । अवश्यक्लृप्तनियतपूर्ववर्त्तिन एव कार्यसम्भवे तद्भिन्नमन्यथासिद्धं, यथा रासभस्यैतद्घटकारणत्वे घटान्तरे ऽवश्यक्लृप्तनि-

यतपूर्ववर्त्तिकपालादित एवैतदघटसंभवे तद्भिन्नरासभ स्यान्यथासिद्धत्वम् ।

न चैतदन्यथासिद्धिपञ्चकं घटमात्रं प्रति रासभस्य कारणत्वे सम्भवतीति नियतपदेन वारणमिति केचित् । तन्न । दण्डत्वस्य घटपूर्ववृत्तित्वंदण्डेतरावृत्तित्वे सति सकलदण्डवृत्तित्वेन ग्राह्यमिति कारणमादायैवान्वयव्यतिरेकग्रहाद्द्वितीययैव गतार्थत्वात् प्रथमवैयर्थ्यम् । एवं कुलालपितृत्वेन करणत्वेऽन्यं कुलालं प्रति पूर्ववृत्तित्वं गृहीत्वैव घटं प्रति पूर्ववृत्तित्वग्रहात् तृतीयया गतार्थत्वात्तुरीयवैयर्थ्यम् । न चान्यं प्रतीत्यस्य स्वकारणान्यं प्रतीति वाच्यम् । कार्यान्यमित्यनेनैव सामञ्जस्यात् । किञ्चकारणत्वस्य कारणत्वघटितत्वेनात्माश्रयापत्तेः । अपिचाकाशस्य शब्दाश्रयत्वेन घटकारणत्वस्य बहिर्द्रव्यप्रत्यक्षे महत्त्वकारणके समवेतसमवेतद्रव्यत्वरूपानेकद्रव्यत्वस्य च कारणत्ववारणार्थमन्वयव्यतिरेकाभ्यां कारणतावच्छेदकस्य च लाघवेन तत्सम्बन्धस्य च लाघवेनावश्यक्लृप्तनियतपूर्ववर्तिनः कार्योत्पत्तौ तद्भिन्नं तत्रान्यथासिद्धमित्यर्थो वाच्यः । तथा चान्यथासिद्धिचतुष्टयस्य वैयर्थ्यम् । एवं घटमात्रे रासभस्य कारणत्ववारणाय नियतपदस्यापि वैयर्थ्यम् । एतादृशकारणत्वं व्यवहितपूर्ववर्त्तिनोऽप्युपपन्नमिति कारणत्वसंरक्षणैकप्रयोजनकव्यापारकल्पनमपि मृग्यमिति दिक् ।

तच्च कारणं समवाय्यसमवायिनिमित्तभेदात्त्रिविधम् । यद्यत्कार्यसमवायितत्तत्कार्यसमवायिकारणम् । यथा तन्तवः पटस्य । यत्कार्यकारणं यत्कार्यसमवायिसमवेतं तत्तत्कार्यासमवायिकारणम् । यथा तन्तुसंयोगादि पटादेः ।

वच्छिन्नत्वात् ज्ञानादिसाधारण्यम् । नित्यद्रव्यसमवायभिन्नभावानां समवेतत्वम् ।

वस्तुनस्तु समवायस्य समवायात्मकस्वरूपसम्बन्धेन विद्यमानत्वान्नित्यद्रव्यभिन्नभावानामेतत्साधर्म्यम् । द्रव्यस्य तु द्रव्यत्वं गुणवत्त्वं क्रियावद्वृत्तिसत्ताभिन्नजातिमत्त्वं गन्धवद्वृत्तिसत्ताभिन्नजातिमत्त्वं गन्धवद्वृत्तिसत्ताभिन्नसमवेतवत्त्वादि बोध्यम्१ । पृथिव्यप्तेजोवायुमनसां परत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्२ । क्रियासमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् । वेगसमानाधिकरणद्रव्यत्वव्याप्यजतिमत्त्वं, न तु वेगवत्त्वादिकम् । वेगादिरहितेष्वव्याप्तेः । मूर्त्तत्वजातिमत्त्वं च ।

ननु मूर्त्तत्वजातौ मानाभावः । अपकृष्टपरिमाणवत्त्वेनैव मूर्त्तव्यवहारोपपत्तेरिति चेन्न । क्रियात्वावच्छिन्नजनकतावच्छेदकतया तत्सिद्धेः । न च मूर्त्तभूतलादौ घटादिसंयोगात् क्रियानुत्पत्तेर्विजातीयसंयोगस्यापि तद्धेतुत्वं वाच्यं तथा च मूर्तत्वेन तत्र हेतुत्वे किं मानमिति वाच्यम् । तत्र क्रियाजन्यतावच्छेदकवैजात्याङ्गीकारेण वायुक्रियाजन्यसंयोगस्य तृणवदाकाशेऽपि सत्त्वात् तत्रापि क्रियोत्पत्त्यापत्तिवारणाय३ मूर्त्तत्वेन क्रियात्वावच्छिन्नं प्रति हेतुत्वाङ्गीकारात् । न च पर्वतपाषाणसंयोगात्पा-

१ जातिघटितलक्षणापेक्षया समवेतवत्त्वस्वीकारे लाघवम । तस्या नित्यत्वे सति अनेकसमवेतत्वरूपत्वेन तन्निवेशे गौरवादिति भाव ।

२ परत्वसमानाधिकरणद्रव्यत्वव्याप्यविशेषगुणवत्त्वरूपधर्मस्य आकाशेऽपि सत्त्वेन तत्रातिव्याप्तिवारणाय जातिपदम ।

३ एकवायुनिष्ठक्रियया युगपत्सहस्रादिमूर्त्तेषु क्रियोत्पत्तिस्थले तत्तत्संयोगव्यक्तिं प्रति तस्या क्रियाया हेतुत्वेऽनन्तकार्यकारणभावापत्त्या तेषु तत्क्रियाजन्यतावच्छेदकतया सिद्धमेकं वैजात्य कल्प्यते । तद्वैजात्यावच्छिन्न प्रति सा क्रिया हेतु । इत्यमेकवैजात्यसिद्धौ ततस्तद्वैजात्यावच्छिन्नेनैव सर्वमूर्त्तेषु क्रियादर्शनात्तद्वैजात्यावच्छिन्नस्याकाशेऽपि सत्त्वात्तत्रापि क्रियोत्पत्त्यापत्तिरिति भाव ।

षाणवत् पर्वतेऽपि क्रियोत्पत्त्यापत्तिरिति वाच्यम् । तत्र पाषाणवायुसंयोगादेव क्रियाङ्गीकारात् ।

वस्तुतस्तु क्रियानाशकोत्तरदेशसंयोगस्य वैजात्येनैव वाच्या । वैजात्यं च न पर्वतपाषाणसंयोगे; किन्तु तदुत्तरभाविनि संयोग इति पाषाणे तावत्पर्यन्तमेकैव क्रिया । एवं मूर्तत्वेनापि न क्रियाहेतुत्वम् । तत्तत्क्रियाजन्यसंयोगस्याकाशे मानाभावेनैव तत्र क्रियानुत्पत्तेः । क्रियाजनकसंयोगस्यैव वा पर्वतवदाकाशेऽप्यभावेन तत्र क्रियानुत्पत्तेः । न च विलक्षणसंयोगस्य लाघवेन समवायेनैव शब्दजनकत्वात् तत्तत्क्रियाजन्यसंयोगस्तत्रावश्यक इति वाच्यम् । तत्तत्क्रियाजन्यतावच्छेदकवैजात्यद्वयस्यैव स्वीकारात्क्रियाजनकसंयोगाभावोपपत्तेः । अत एव न सङ्करोऽपि । न च तत्तत्क्रियाजन्यतावच्छेदकवैजात्यद्वयाङ्गीकारे गौरवापत्त्या लाघवेन मूर्त्तत्वेनैव तद्धेतुत्वमिति वाच्यम् । वैजात्यद्वयस्य तवाप्यावश्यकत्वात् । यदि च पाषाणादिक्रियाजन्यसंयोगवत्सु सर्वत्र क्रिया, तत्र लाघवेनैकमेव वैजात्यं कल्प्यते । तथा चाकाशे क्रियोत्पत्तिर्मूर्त्तत्वेन कारणत्वादेव वार्यते इति सूक्ष्ममीक्ष्यते तदा शब्दजनकवैजात्यस्य प्रत्यक्षसिद्धभेर्यादिसंयोगेष्वेव स्वीकारादाकाशे संयोगकल्पने गौरवात् । तत्क्रियाजन्यसंयोगस्याकाशवृत्तित्वे न मानमिति दिक् ।

जन्यद्रव्यत्वावच्छिन्नसमवायिकारणत्वावच्छेदकतया मूर्त्तत्वसिद्धिरित्यपि केचित् ।

आकाशकालदिगात्मनां परममहत्त्वं सर्वमूर्तसंयोगित्वम् ।

१ अन्यथा स्वनिष्ठक्रियाद्वितीयक्षणे प्राक्चलितद्रव्यान्तरचतुर्थे स्वस्मिन् संयोगे स्वकर्मणो द्विक्षणस्थत्वापत्तेरिति तत्त्वम् ।

केचित्तु सर्वगतत्वमपि तत्साधर्म्यमाहुस्तन्न। येन केनचित् सम्बन्धेन सर्वगतत्वस्य प्रमेयत्वादावपि सत्त्वात्। सर्वसंयोगित्वस्य सर्वद्रव्यसंयोगित्वस्य वाकाशादावभावात्। नाकाशादौ कालादेः संयोगोऽस्ति द्रव्यत्वविशेषितसर्वगतत्वस्य तत्साधर्म्यत्वे तु न दोष इति कश्चित्।

क्षित्यादिपञ्चानां महदिन्द्रियजन्यलौकिकप्रत्यक्षविषयविशेषगुणवृत्तिगुणत्वव्याप्यजातिमत्त्वम्[1]। आत्मावृत्तिविशेषगुणवत्त्वं[2] वा साधर्म्यम्। अनुद्भूतरूपानङ्गीकारे तु महदिन्द्रियग्राह्यगुणवद्वृत्तिद्रव्यत्वव्याप्यजातिशब्दान्यतरवत्त्वम्[3]। महदिन्द्रियग्राह्यद्रव्यत्वव्याप्यजातिशब्दान्यतरवत्त्वं तु न युक्तं वायोरतीन्द्रियत्वेन तत्राव्याप्तेः।

पृथिव्यादिचतुर्णां स्पर्शवत्त्वम्। अनुद्भूतस्पर्शानङ्गीकारे तु स्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम्। द्रव्यसमवायिवृत्तिनादृशजातिमत्त्वं[4] च बोध्यम्। जातिपदं समवायसम्बन्धेन नित्यस्य द्रव्यत्वव्याप्यतालाभाय।

---

१ अत्र ज्ञातो घट इतिप्रत्यक्षे ज्ञानस्यापि लौकिकालौकिकोभयविषयताशालिज्ञानविषयत्वात्तद्वृति आत्मनि अतिव्याप्तिवारणाय लौकिकेति। घटकालसंयोगमादाय कालेऽतिव्याप्तिवारणाय विशेषगुणेति। प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिवारणाय गुणवृत्तिगुणत्वव्याप्यजातिमत्त्वमिति। अत्र मत्त्वं समवायेन अन्यथा ध्वंसेऽतिव्याप्तेः। स्पर्शज्ञानान्यतरत्वमादायात्मनि अतिव्याप्तिवारणाय जातिपदम्। महदिन्द्रियजन्यलौकिकविषयताशालिज्ञानत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मवद्विशेषगुणवत्त्वरूप क्षित्यादिपञ्चाना साधर्म्यं स्वीकृत्य परमाण्वादावव्याप्तिं वारयन्ति भट्टाचार्याः।

२ ननूक्तलक्षणे गौरवम्। भट्टाचार्योक्तकल्पे तु जलादिपरमाणुगतरूपस्य नित्यत्वेन नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भावनियमात्तत्प्रत्यक्षापत्तिश्चेत्यभिप्रेत्याह आत्मावृत्तीत्यादि।

३ अनुद्भूतरूपाद्यनङ्गीकारे आत्मावृत्तिविशेषगुणवत्त्वस्य घ्राणादावव्याप्तेराह महदिन्द्रियेति। महदिन्द्रियग्राह्यरूपादिगुणवन्तो ये क्षित्यप्तेजोवाय्वाकाशास्तेषु द्रव्यत्वव्याप्यजातिमत्त्व क्षित्यादिचतुर्षु, शब्दाश्रयत्वञ्चाकाशे इति लक्षणसमन्वयः।

४ तेन द्रव्यान्तरानारम्भके घटादौ नाव्याप्तिः।

आकाशात्मनामसमवेतेन्द्रियग्राह्यविशेषगुणवृत्तिगुणत्वव्याप्यजातिमत्सम्बन्धित्वम्। मनोग्राह्यपरिमाणत्ववत्परिमाणमादाय द्रव्यमात्रेऽतिप्रसङ्गवारणाय विशेषेति। आकाशजीवात्मनां तु असमवेतेन्द्रियग्राह्यगुणवत्त्वम्[1]। ग्राह्यत्वं संयुक्तसमवायसमवायान्यतरसम्बन्धेन, तेन रूपादेर्मनोग्राह्यत्वेऽपि न क्षतिः।

कश्चित्तु अव्याप्यवृत्तिविशेषगुणवत्त्वमकाशात्मनां साधर्म्यमाह। तन्न। पाकेन घटादौ रूपादिपरावृत्तिदर्शनेन रूपादिकमादाय पृथिव्यादावतिप्रसङ्गात्। पिठरपाकानङ्गीकारेऽपि न निस्तारः। पार्थिवपरमाणुरूपादेरव्याप्यवृत्तित्वात्। न च दैशिकमव्याप्यवृत्तित्वं वाच्यम्। चित्ररूपानङ्गीकारे रूपादेरपि तादृशाव्याप्यवृत्तित्वात्। किञ्चेश्वरज्ञानादेरव्याप्यवृत्तित्वे मानाभावादीश्वरेऽव्याप्तेः। न च व्याप्यवृत्तित्वे मानाभावादव्यप्यवृत्तित्वम्। अव्याप्यवृतित्वे ज्ञानादेरभावस्य तत्र कल्पने गौरवापत्तेः। एतेनाकाशशरीरिणामपीदं साधर्म्यमिति निरस्तम्। चित्रगन्धचित्ररूपानङ्गीकारेण पृथिव्यामतिव्याप्त्यापत्तेः। न चावयविनस्तत्र निर्गन्धत्वमेवेति वाच्यम्। एवं सति गन्धमात्रस्य त्रसरेणुमात्रवृत्तित्वापत्तेः। किंच विशेषगुणत्वं संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिकद्रवत्वस्थितिस्थापकवेगैतत्सामान्यगुणभिन्नत्वं वा रूपरसगन्धस्पर्शशब्दसुखदुःखबुद्धीच्छाद्वेषप्रयत्नधर्माधर्मभावनास्नेहस्वाभाविकद्रवत्वान्यतमत्वं वा। नाद्यः संयोगविभाग-

१ घ्राणरसनाचक्षुस्त्वगिन्द्रियाणां तत्तत्पार्थिवादिपरमाणुषु समवेतत्वेन तद्ग्राह्यगुणवति पृथिव्यादौ अतिव्याप्तिवारणाय असमवेतेन्द्रियेति। आत्मगतपरिमाणस्य मनःसंयुक्तात्मसमवेतत्वेऽपि तस्याप्रत्यक्षत्वेन घटादिपरिमाणस्य मनःसंयुक्तात्मसमवेतत्वाभावेन च तदादायातिप्रसङ्गाभावाद्विशेषपदनोपात्तमिति भावः।

भिन्नत्वमेवास्तु कृतमधिकेन, अन्येषामव्याप्यवृत्तित्वेनैव वारणात् । नान्त्यः ज्ञानशब्दान्यतरत्वेनैव सिद्धेरितरप्रवेशस्यानुचितत्वात् । आकाशशरीरिणां लक्ष्यत्वेऽव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वं लक्षणम् । रूपादिवारणायाव्याप्येति अव्याप्यवृत्तिजातीयपरम् । ईश्वरज्ञानादिवारणाय क्षणिकेति ध्वंसप्रतियोगित्वार्थकम् । संयोगादिवारणाय विशेषेति संयोगविभागभिन्नत्वार्थकम् एतावतैव सामञ्जस्येऽन्ये वृथैव व्याकुलीबभूवुः ।

केचित्तु आकाशात्मनां क्षणिकविशेषगुणवत्त्वम् । तस्यार्थः । चतुर्थक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वम्[१] । न च तृतीयक्षणमादायैवोक्तसाधर्म्यमस्त्विति वाच्यम् । अपेक्षाबुद्धेर्जन्यायास्त्रिक्षणस्थायित्वाङ्गीकारात् । ज्ञानासंग्रहापत्तेश्च । ईश्वरज्ञानादेश्चतुर्थक्षणस्थायित्वाज्जन्येत्युक्तम् । द्वित्वादेस्त्रिक्षणस्थायित्वेन द्वित्वत्वजातेस्तादृशत्वाद्विशेषेति । तन्न । ज्ञानासंग्रहेऽपीच्छादिकमादाय लक्षणसमन्वये चतुर्थक्षणधावनवैयर्थ्यात् । आकाशजीवात्मनां तु जन्यपदानन्तर्भावेणोक्तमेव साधर्म्यम् । शब्दत्वसुखत्वजातिमादाय लक्षणानुगमात् । द्वित्वादीनां चतुर्थक्षणे नाशाङ्गीकारात् तेषां तथात्वाद्विशेषेति । तृतीयक्षणवृत्त्यवृत्तिजातिमद्गुणवत्त्वं वा बोध्यम् । गुणपदं तु कुलालविशेषजन्यतावच्छेदकजातिमद्घटमादायातिव्याप्तेर्वारणाय । पृथिव्यप्तेजसां तु रूपवत्त्वम् । अनुद्भूतरूपानङ्गीकारे तु रूपवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम्[२] न च पृथिवीत्वादिना घ्राणादौ रूपाद्यनुमानादुद्भूतरूपवत्त्वे तद्रूपादिप्रत्य-

१ पृथिवीपरमाणुरूपवृत्तितद्वृत्तित्वमादाय पृथिव्यामतिव्याप्तिवारणाय जातिपदम् ।

२ उत्पन्नं द्रव्यं क्षणं निर्गुणं तिष्ठतीति न्यायेन प्रथमक्षणोत्पन्नघटादावव्याप्तिवारणायेत्यपि बोध्यम् ।

क्षभयादनुद्भूतरूपादिसिद्धिरिति वाच्यम् । पृथिवीत्वादे रूपादिव्याप्यत्वे मानाभावात्। यद्यपि घ्राणादेर्गन्धादिशून्यत्वे गन्धादिसमवायिकारणतावच्छेदकतया सिद्धपृथिवीत्वादिमत्त्वेऽपि प्रमाणाभावादतिरिक्तत्वमेव तेषामिति पृथिवीत्वादे रूपादिव्याप्यत्वमव्याहतं, तथापि तेषामतिरिक्तत्वे तदवयवानां भिन्नरूपेण तत्रानन्तकार्यकारणभावस्वीकारभयेन तत्र पृथिवीत्वादिकल्पनात् । पाकेन नष्टगन्धादिमद्भिरेव परमाणुभिस्तेषामारम्भान्न तत्र गन्धादिकम् । न च पाकाद्रूपादीनां नाशमात्रमेव जायत इत्यत्र मानाभाव इति वाच्यम् । लाघवस्यैव मानत्वादिति दिक् ।

पृथिवीजलयोर्गुरुत्ववत्त्वं रसवत्त्वं च । रसवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम् । पृथ्वीतेजसोर्नैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम् । पृथिव्यादिपञ्चकस्यात्मनश्च विशेषगुणवत्त्वम् । वैधर्म्यस्यापि स्वाश्रयसाधर्म्यरूपत्वान्न पृथगुपन्यास इति दिक् ।

तत्र गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमती पृथिवी, पृथिवीत्वजातिमती च ।

ननु पृथिवीत्वजातौ मानाभाव इति चेन्न । गन्धत्वावच्छिन्नकारणतावच्छेदकतया तत्सिद्धेः । न च गन्धत्वावच्छिन्ने गन्धत्वेन पाकत्वेन वा कारणता सम्भवति । पाकजगन्धे गन्धजगन्धे व्यभिचारात् । ननु भावकार्यत्वावच्छिन्नं प्रति द्रव्यत्वेन कारणत्वादेव द्रव्यभिन्ने गन्धोत्पत्तिवारणसम्भवे गन्धत्वावच्छिन्ने पृथिवीत्वेन कारणत्वे किं मानम् ? कार्यमात्रवृत्तिजात्यवच्छिन्नेऽनुगतधर्मावच्छिन्नकारणजन्यत्वमित्येतादृशनियमाङ्गीकारेऽपि क्लृप्तद्रव्यत्वे-

नैव तत्र हेतुत्वसम्भवादिति चेत्? अत्र केचित्। नित्यस्य स्वरूपयोग्यस्य फलावश्यंभावनियमेन द्रव्यत्वेन तत्र हेतुत्वे आकाशादावपि गन्धोत्पत्त्यापत्तेः पृथिवीत्वेनैव तत्र हेतुत्वम्।

अन्यास्तु विलक्षणाग्निसंयोगस्य रूपादिनाशकत्वोत्पादकत्वात्तेजस्यपि रूपादिनाशापत्तेः, संयोगस्योभयनिष्ठत्वात्तेजस्यपि विलक्षणसंयोगसत्त्वात्पृथिवीत्वविशिष्टविलक्षणसंयोगस्य रूपनाशकत्वात्पृथिवीत्वसिद्धिमाहुः।

केचित्तु गन्धवती पृथिवी। न च पाषाणादावव्याप्तिः। तत्रापि पृथिवीत्वेन गन्धानुमानात्। अनुत्कटत्वाच्च न तद्गन्धप्रत्यक्षमित्याहुस्तन्न। अनुत्कटत्वानिरुक्तेः। अनुद्भूतत्वं तदिति चेत्? न। अनुद्भूतगन्धादौ प्रमाणाभावस्यावेदितत्वात्। न च गन्धसमवायिकारणतावच्छेदकतया सिद्धस्य पृथिवीत्वस्यापि तत्र सत्त्वे मानाभाव इति वाच्यम्। तत्र पृथिवीत्वसत्त्वे मानान्तरस्योक्तप्रायत्वात्। अन्यथा गन्धकारणतावच्छेदकतया सिद्धपृथिवीत्वस्य तत्र सत्त्वे मानाभावेन त्वन्मतेऽपि कथं गन्धानुमानमिति विभावय। न च सगन्धपाषाणभस्मनः पाषाणध्वंसजन्यत्वेन पाषाणारम्भकपरमाणुजन्यत्वात् पाषाणस्यापि गन्धवद्भस्मारम्भकपरमाण्वारब्धत्वाद्गन्धवत्त्वं, यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदारम्भकपरमाण्वारब्धमिति व्याप्तेरिति वाच्यम्। पाषाणध्वंसोत्तरपाकजगन्धवद्भिः पाषाणारम्भकैर्भस्मारम्भेऽप्यक्षतेः। शालग्रामध्वंसजन्यनारकीयशरीरे व्यभिचारेणाप्रयोजकत्वेन च तादृशव्याप्त्यसिद्धेः। अत एवादृष्टाद्वारकत्वविशेषणेनापि न निस्तारः। घ्राणादावव्याप्तेश्चेति दिक्।

सा च रूपादिचतुर्दशगुणवती नानारूपवती च। यथापीदं न साधर्म्यम्। नव्यनये ऽनुद्भूतगुणानङ्गीकारेण घ्राणादावव्याप्तेः। नापि प्राचां मते। गन्धवत्वस्यैव सम्यक्त्वे-नेतरवैयर्थ्यात्। द्वितीयमपि यत्र पाकेन रूपं नोत्पन्नं तत्राव्याप्तम्। तथापीदं पृथिव्यामेवेति दर्शयितुमुक्तम्। केचित्तु रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमाहुः। षड्विधरूपवत्त्वं पाकजानुष्णाशीतस्पर्शवत्त्वं पृथिव्यामेव।

सा द्विधा नित्याऽनित्या च। नित्या परमाणुरूपा। अनित्या द्व्यणुकाद्यन्त्यावयविपर्यन्ता। ननु मिलितपरमाणुभिरेव घटादिव्यवहारोपपत्तेर्न समवेतपृथिव्यां मानमस्ति। न चैकः स्थूल इति प्रत्यक्षानुपपत्तिः। एकस्य केशादेर्दूरेऽप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वम्। एकः स्थूल इति बुद्धिविषयत्वं च तद्वत्परमाणुपुञ्जे प्रत्यक्षत्वमेकः स्थूल इति बुद्धिविषयत्वं च सम्भवति। न च कपालादौ घट इति बुद्ध्यापत्तिः। परमाणुसंयोगविशेषेष्वेव घटत्वादिजातेरुपाधेर्वाङ्गीकारादिति चेन्न। परमाणोरप्रत्यक्षत्वेन तत्समूहस्याप्यप्रत्यक्षतापत्तेः, सूक्ष्मकेशादेर्दूरेऽप्रत्यक्षत्वं तु दूरत्वदोषेण प्रतिबन्धात्, सजातीयसंयोगस्य तत्प्रत्यक्षविशेषे हेतुत्वाद्वा, चक्षुःसन्निकर्षाभावाद्वा, न तत्प्रत्यक्षम्।

अत्र केचित् यद्यपि घटत्वादिधर्मवत्प्रत्यक्षप्रयोजकधर्मस्य संयोगविशेषेऽङ्गीकारादेव परमाणोरपि कदाचित्प्रत्यक्षत्वम्। एवं तद्गतरसादेरपि प्रत्यक्षत्वम्। द्रव्यरसादिप्रत्यक्षप्रयोजकधर्मस्य भिन्नस्यैवाङ्गीकाराद्द्रव्याद्यप्रत्यक्षेऽपि रसादिप्रत्यक्षसम्भवान्नावयवितद्गन्धादिकल्पनं गौरवापत्तेः। तथापि घटत्वादेः संयोगनिष्ठत्वेऽप्रत्यक्षत्वा-

पत्तिः । परमाणुसंयोगस्यायोग्यत्वेन तद्भिन्नजातेरप्ययोग्यत्वापत्तेः । एवं घटपटादिसंयोगस्य प्रत्यक्षस्यापलापापत्तेः । यद्यपि संयोगप्रत्यक्षप्रयोजकधर्मस्यापि संयोगविशेषेऽङ्गीकारात्प्रत्यक्षत्वं संयोगविशेषाणां सम्भवत्येव तथाप्यस्मत्कृतलीलावतीभावपरिच्छेदोक्तयुक्त्या समवेतपृथिव्यादिसिद्धिर्द्रष्टव्या ।

सा चेत्थम् । यद्यपि पमाणुपुञ्जस्यैव त्र्यणुकादिरूपत्वे लाघवम् । षट्परमाणूनां पञ्चसंयोगानां स्वीकारात् । न्यायमते[1] तु त्रीणि द्व्यणुकानि तज्जनकसंयोगत्रयं त्र्यणुकं च तज्जनकसंयोगद्वयमिति नवपदार्थाः । एवं त्र्यणुकान्तरेऽपीत्यष्टादशपदार्थाः । परमते दश । न च त्र्यणुकाभ्यां चतुरणुकोत्पत्तौ चतुरणुकस्य तज्जनकसंयोगस्य चेति द्वयोः स्वीकारो न्यायमते । द्वादशपरमाणूनामेकादशसंयोगानां स्वीकारः परमते । एवं पञ्चाणुकोत्पत्तौ पञ्चाणुकस्य तज्जनकसंयोगस्य च स्वीकारो न्यायमते । चतुर्विंशतिपरमाणूनां त्रयोविंशतिसंयोगानां स्वीकारात्परमत एव गौरवम् । ब्राह्मणो न हन्तव्यः पूजनीय इत्यादिविधिनिषेधाभ्यां ब्राह्मणत्वादेः संयोगविशेषनिष्ठत्वेन संयोगविशेषस्य नाशात्संयोगविशेषाश्रयस्य स्पर्शादेव पापपुण्ययोर्जननोपपत्तेर्न ताभ्यामतिरिक्तावयवी सिध्यति, किन्तु प्रागुक्तगौरवादेवेति वाच्यम् । अतिरिक्तावयविन्यनेकगुणादिकल्पने तेषामुत्पत्त्यर्थं रूपादिकं प्रति रूपादेः कारणत्वकल्पनं, प्रत्यक्षं प्रति महत्त्वादेश्च कारणत्वं कल्पनीयं, चाक्षुषादिकं प्रति रूपादीनां कारणत्वकल्पनं चेति न्यायमत एव गौरवापत्तेः ।

---

१ मन्मते इति पाठान्तरम् ।

तथापि' लोहितो यस्तु वर्णेने'त्यादिवचनैः प्रत्यक्षेण चातिरिक्तावयविसिद्धिस्तेन तयोर्भिन्नत्वेनैव ज्ञानात्। किञ्च गङ्गासंयोगस्यैकस्य धर्मजनकत्वम्। भवन्मते चानेकगङ्गारम्भकपरमाणूनां शरीरारम्भकपरमाणूनां संयोगानां तज्जनकत्वे गौरवम्। एवं शरीराद्युत्पत्त्यर्थं शरीरावयवे एकैव क्रिया कल्प्यते त्वया तु तावत्परमाणुषु क्रियाः संयोगाश्चेति गौरवमित्यादिग्रन्थपृष्ठ्या विस्तरभयान्नेह प्रदर्शिता इति केचित्।

नन्वस्तु उक्तरीत्या समवेतपृथिव्यादिसिद्धिः। तदवयवपरम्पराकल्पनागौरवादनवस्थानाच्चासमवेतपृथिव्यादिसिद्धिरस्तु परं तु परमाणुद्व्यणुकयोर्मानाभावः। लाघवेन त्र्यणुकस्यैवासमवेतत्वाङ्गीकारादिति चेत्? न। त्रुटिः समवेतश्चाक्षुषद्रव्यत्वान्महद्द्रव्यसमवायित्वाद्वा। त्रुटिसमवायिनः समवेताश्चाक्षुषद्रव्यसमवायित्वान्महद्द्रव्यसमवायित्वाद्वा कपालवदित्यनुमानाभ्यां परमाणुद्व्यणुकयोः सिद्धिरिति प्राञ्चः।

नव्यास्तु उक्तहेत्वोः साध्यव्याप्यत्वेऽनुकूलतर्काभावादवयवकल्पनागौरवरूपप्रतिकूलतर्काच्च न साध्यव्याप्यत्वम्। न च महत्परिमाणतारतम्यस्याकाशादिपरिमाणादौ विश्रान्तिवदणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तौ तस्य परमाणुत्वसिद्धिः। तस्याश्रय एव परमाणुरिति वाच्यम्। तादृशव्याप्तौ मानाभावादणुपरिमाणशब्दस्य च महत्त्वभिन्नपरिमाणपरत्वेऽसिद्धेश्च।

न च चक्षुःसंयुक्तसमवायस्य लाघवेन द्रव्यसमवेतचाक्षुषे हेतुत्वम्, न तु द्रव्यान्यद्रव्यसमवेतचाक्षुषे चक्षुःसंयुक्तसमवायस्य द्रव्यचाक्षुषे चक्षुःसंयोगस्य च

गौरवात्तथा च त्रसरेणोः समवेतत्त्वसिद्धिरिति वाच्यम् । रूपसमानाधिकरणसत्तादौ चक्षुःसंयुक्तवायुसमवायसन्निकर्षेण चाक्षुषापत्तिवारणाय चक्षुःसंयुक्तपरमाणुघ्राणसमवायसन्निकर्षेण च पृथिवीत्वादौ चाक्षुषत्वापत्तिवारणाय चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवायस्यैव सन्निकर्षत्वं वाच्यम्, तथा च त्रसरेणुचाक्षुषे व्यभिचारवारणाय द्रव्यान्यद्रव्यसमवेतचाक्षुषे तस्य हेतुत्वं, द्रव्यचाक्षुषे संयोगस्य हेतुत्वमावश्यकं त्वन्मते । मन्मते तु द्रव्यसमवेतचाक्षुष एव चक्षुःसंयुक्तरूपवत्समवायस्यैव हेतुत्वम्, द्रव्यचाक्षुषे चक्षुःसंयोगस्य । न चैवं द्रव्यान्यत्वाप्रवेशे कपालनाशोत्तरघटनाशकाले घटप्रत्यक्षानुपपत्तिरिति वाच्यम् । इष्टत्वात् । द्रव्यान्यत्वेन समवेतविशेषणाद्वा । अत एव भावचाक्षुषे चक्षुः संयुक्तसमवेतसमवायो हेतुर्लाघवादिति परमाणुद्व्यणुकसिद्धिरपि निरस्तेति दिक् ।

अपरे तु भावचाक्षुषे समवेतचाक्षुषे वा चक्षुःसंयुक्तरूपवत्समवेतसमवायो हेतुः । न चैतावता परमाणुद्व्यणुकयोः सिद्धिः । त्र्यणुके त्र्यणुकसमवायाभ्युपगमेनैव सामञ्जस्यात् । न चैवं त्र्यणुके चतुरणुकोत्पत्तिर्न स्यात्समवायेन द्रव्यस्य स्वात्मकस्य प्रतिबन्धकत्वादिति वाच्यम् । जन्यद्रव्यस्यैव प्रतिबन्धकत्वादित्याहुः ।

शरीरेन्द्रियविषयभेदादनित्या पृथिवी त्रिविधा । तत्र शरीरं द्विविधं, योनिजमयोनिजं च । तत्र योनिजं द्विविधम् । जरायुजमण्डजं च । जरायुजं मनुष्यादीनाम् । अण्डजं पक्ष्यादीनाम् । अयोनिजं च स्वेदजोद्भिज्जभेदेन द्विविधम् । स्वेदजं कृम्यादीनाम् । उद्भिज्जं वृक्षादीनाम् ।

यद्यपि कृम्यादिशरीरे न स्वेदः कारणं, तस्मिन् सत्यनुत्पत्तेस्तदभावे चोत्पत्तेरन्वयतो व्यतिरेकतश्च व्यभिचारात्तथापि स्वेदस्य प्रयोजकत्वमाश्रित्योक्तं प्राचां मतेन। मानुषादिशरीराणां क्लेदोष्मादिनाशेऽपि गन्धोपलब्ध्या पार्थिवत्वसिद्धिः ।

वृक्षादौ शरीरत्वे पुराणाद्येव मानम् । ये तु भग्नक्षतसंरोहणेनाध्यात्मिकवायुसंबन्धानुमानात्तेषां शरीरत्वसिद्धिमाहुः । तन्न । कस्तूरिकादौ यथा सजातीयावयवसंबन्धकल्पनान्न सच्छिद्रता । तद्यथा । कस्तूरिकागन्धग्राहिणां[१] कस्तूरिकासंबन्धो ऽवश्यं वाच्यः । अन्यथा सन्निकर्षाभावेन गन्धग्रहानुपपत्तेस्तेषां कस्तूरिकावयवसंबन्धश्च तेषां निर्गमनं विना न सम्भवतीति कस्तूरिकादेः सच्छिद्रत्वप्रसक्तौ तत्र सजातीयावयवसम्बन्धकल्पनान्न सच्छिद्रत्वं तथा सजातीयावयवसंबन्धकल्पनेन भग्नक्षतसंरोहणसिद्धेर्नाध्यात्मिकवायुसंबन्धे मानमिति । न वा तावतापि शरीरत्वसिद्धिः । तत्संबन्धस्याकाशादिसाधारण्यात् । यद्यपि चक्षुरादेर्गमनेन घटादिग्रहणवद्घ्राणगमनेनैव गन्धग्रहसम्भवान्नेयं कल्पना तथाप्यनुकूलवातादिवैफल्यापत्त्या तथाकल्पनमिति प्राञ्चः ।

शरीरत्वं त्ववच्छेदकतासंबन्धेन सुखादेस्तादात्म्यसंबन्धेन जनकत्वम् । न च हस्तादौ शरीरत्वापत्तिः । इष्टत्वात् । अन्त्यावयवित्वेन विशेषणाद्वेति केचिदाहुः । यद्यप्यवच्छेदकतासंबन्धेन सुखाद्युत्पत्तौ न तादात्म्यसंबन्धेन शरीरत्वेन कारणता । पृथिवीत्वादिना साङ्कर्यप्रसङ्गेन शरीरत्वजात्यसिद्धेः । तथाप्यवयवसंयोगनिष्ठजातिविशेषस्यैव

१ घ्राणानामित्यर्थः ।

परंपरया जनकतावच्छेदकत्वं तस्या जातेः शरीरावयव-तदवयवादिसंयोगे कल्पनान्न शरीरतदवयवादावयवच्छेदक-तासंबन्धेन सुखाद्यनुत्पत्तिः ।

यद्यपि सा जातिः स्वाश्रयसमवायिसमवेतत्वसम्ब-न्धेन शरीरादाविव हस्तादिगतगुणादिष्वप्यस्तीति तत्रा-प्यवच्छेदकतासम्बन्धेन सुखानुत्पत्तिः, शरीरव्यवहाराप-त्तिश्च स्यात्तथापि द्रव्यत्वविशेषिनायास्तस्याः सुखजनक-तावच्छेदकत्वाच्छरीरव्यवहारादौ च प्रयोजकत्वान्न दोषः ।

केचित्तु स्वाश्रयजन्यत्वसम्बन्धेन तस्याः शरीरव्य-वहारप्रयोजकत्वात्, सुखकारणतावच्छेदकत्वाच्च नातिप्र-सङ्ग इत्याहुः ।

अन्ये तु चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यजा-तिमत्त्वम् । तादृशजातिश्च चैत्रत्वादिः । नृसिंहशरीरेऽपि कल्पभेदेन नरसिंहवृत्तिर्नृसिंहत्वस्य सत्वान्नोक्तदोष इत्याहुस्तन्न । पृथिवीत्वादिना सङ्कराडस्तत्वजात्यभावे-नान्त्यवयविपदवैयर्थ्यात् । न च हस्तत्वं पृथिवीत्वादि-व्याप्यं नानैवेति वाच्यम् । शरीरत्वस्यापि पृथिवीत्वादि-व्याप्यनानात्वस्वीकारादेव नृसिंहशरीरे लक्षणसंभवेन नृसिंहत्वजात्युपपादनायासवैयर्थ्यात् ।

इन्द्रियरूपा पृथिवी गन्धग्राहकमिन्द्रियम् तच्च घ्रा-णम् । गन्धग्राहकेन्द्रियस्य पृथिवीत्वं त्वनुद्भूतगन्धान-ङ्गीकारेऽपि साधितं प्राक् । केचित्तु घ्राणं पार्थिवं रूपरस-गन्धस्पर्शशब्देषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात् । कुङ्कु-मगन्धाभिव्यञ्जकघृतवत् । न च घृतस्य स्वीयरूपादिव्य-ञ्जकत्वाद्दृष्टान्तासिद्धिः । परकीयरूपाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकत्वादिति हेतुकरणात् । न च नवशरावगन्धव्य-

ञ्जकजले व्यभिचारः । तस्य सक्तुरसाभिव्यञ्जकत्वात् । घ्राणसन्निकर्षवारणाय द्रव्यत्वेनापि हेतुर्विशेषणीयः । यद्वा रूपाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकत्वमेव हेतुः । न च दृष्टान्तासिद्धिः । वायूपनीतसुरभिभागानामेव दृष्टान्तत्वसम्भवादिति प्राहुः तन्न । आद्ये परकीयरूपरसस्पर्शशब्दव्यञ्जकत्वे सति गन्धव्यञ्जकद्रव्यत्वादिति हेतुः । तत्र परकीयरसाव्यञ्जकत्वेनैव मनोवारणसम्भवे सत्यन्ते शेषवैयर्थ्यात् । शब्दे परकीयपदस्याव्यावर्तकत्वाच्च । न च हेतुचतुष्टयमेवोक्तं तेन तथा च हेतुत्रयाभिप्रायेणैव परकीयत्वं विशेषणम् । नतु तुरीयाभिप्रायेणेति वाच्यम् । घृतस्य दृष्टान्तत्वसम्भवेऽपि नवशरावगन्धव्यञ्जकजले व्यभिचारात् । किञ्च हेतुत्रयेऽपि व्यभिचारावारकस्य परकीयपदस्य कथं सार्थकतेति विभावय । यद्येको हेतुस्तदा पूर्ववद्वैयर्थ्यम् । यदि हेतुचतुष्टयं तदाऽप्रयोजकत्वम् । तुरीये व्यभिचारश्च दुर्निवारः । तस्मात्पूर्वोक्तरीत्या घ्राणस्य पार्थिवत्वमवसेयम् । परमाणुमारभ्यावयविरूपा पृथिवी साक्षात्परंपरया च भोगसाधनत्वाद्विषयरूपा । यद्यपि शरीरेन्द्रिययोर्विषयरूपायामन्तर्भावः सम्भवत्येव तथाप्युपाधिभेदात्त्रिविधो व्यवहारः । तादृशव्यवहारे त्विच्छैव नियामिकेत्यपरे ।

कश्चित्तु द्व्यणुकादिपृथिव्येव विषयरूपेत्याह । तन्न । परमाणुरूपायास्त्रितयबहिर्भावापत्तेः । विषयलक्षणसत्त्वाद्बहिर्भावानौचित्याच्च ।

केचित्तु अनित्याया एव त्रैविध्यदर्शनाद्भोगसाधनतायाः शरीरेन्द्रियपरमाणुव्यावृत्ताया विवक्षणान्न दोष इत्याहुः ।

शीतस्पर्शवज्जलं, स्नेहवद्वा । अनुद्भूतस्पर्शाद्यनङ्गीकारे शीतस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं स्नेहवद्वृत्तिद्रव्यत्वव्याप्यजातिमद्वा ।

केचित्तु जलत्वजातिमज्जलम् । जलत्वं तु जन्यस्नेहसमवायिकारणतावच्छेदकतया सिद्धा जन्यजले जातिः। तादृशजात्यवच्छिन्नसमवायिकारणतावच्छेदकतया सिद्धा सर्वजलवृत्तिजातिरित्याहुस्तन्न। सकलजलवृत्तिजलत्वस्यैव जन्यजलसमवायिकारणतावच्छेदकत्वसम्भवेनजलत्वद्वैविध्ये प्रमाणाभावात् । न च परमाणौ जन्यस्नेहापत्तिः, समवायेन जन्यस्नेहं प्रति समवायेन स्नेहस्य प्रतिबन्धकत्वस्वीकारेण परमाणौ प्रतिबन्धकस्नेहसत्त्वात्स्नेहानुत्पत्तेः । न च जलत्वद्वयानङ्गीकारे जन्यजलत्वं जलकार्यतावच्छेदकं वाच्यं तथाच गौरवमिति लाघवाज्जलत्वमेव जलजन्यतावच्छेदकमिति जलत्वद्वैविध्यमिति वाच्यम् । स्नेहकार्यतावच्छेदकतया स्नेहत्वजात्यन्तरसिद्ध्यापत्तेः । एवं पृथिवीकार्यतावच्छेदकतया पृथिवीत्वस्य सिद्धौ पृथिवीत्वद्वैविध्यापत्तेश्च । न च गन्धसमवायिकारणतावच्छेदकतया सिद्धपृथिवीत्वेनैव पृथिवीव्यवहारोपपत्तौ पृथिवीत्वेन कार्यकारणभावे मानाभावान्न पृथिवीत्वद्वयसिद्धिरिति वाच्यम् । एवं स्नेहसमवायिकारणतावच्छेदकतया सिद्धजलत्वेनैव जलव्यवहाराद्युत्पत्तौ जलत्वेन जलत्वेन कार्यकारणभावे प्रमाणाभावात् । न च स्नेहसमवायिकारणतावच्छेदकतयैवसिद्धस्यनित्यजलवृत्तित्वेप्रमाणाभावइतिवाच्यम् । तस्यकार्यजलमात्रवृत्तित्वेनतदवच्छिन्नंप्रति जलत्वेन कारणत्वकल्पने जलत्वद्वयकल्पनं च गौरवापत्त्यास्नेहसमवायिकारणतावच्छेदकस्यैव

लाघवेन परमाणुवृत्तित्वकल्पनात्। एवं द्रव्यारम्भकासमवायिकारणसंयोगेषु वैजात्यं कल्पयित्वा विजातीयसंयोगेन तन्त्वादीनां पटादिकारणत्वेनैवोपपत्तौ जन्यद्रव्यत्वावच्छिन्नं प्रति द्रव्यत्वेन भूतचतुष्टयसाधारणजात्या वा हेतुत्वे प्रमाणाभावः न च तादृशकार्यकारणभावाङ्गीकर्तृमतेऽपि जन्यद्रव्ये कार्यतावच्छेदकतया जातिसिद्धिः स्यान्न तु जन्यद्रव्यत्वं कार्यतावच्छेदकं गौरवादिति वाच्यम्। पृथिवीत्वादिना संकरापत्तेः। किञ्च जलत्वेन जन्यस्नेहकारणत्वे प्रमाणाभावः। जन्यस्नेहं प्रति स्नेहविशेषं प्रति वा स्नेहत्वेन कारणत्वेनैवातिप्रसङ्गविरहात्।

केचित्तु अपाकजरसवत्त्वं शीतस्पर्शवत्त्वं च तल्लक्षणम्। अनुद्भूतरसाद्यनङ्गीकारे गन्धवदवृत्तिरसवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्। अनुद्भूतगन्धानङ्गीकारेण निर्गन्धरसवत्पार्थिवेऽतिव्याप्तिवारणाय साक्षादिति। गन्धवदवृत्तिशीतस्पर्शवद्वृत्तिजातिमत्त्वं च बोध्यम्। एवं शुक्लेतररूपासमानाधिकरणरससमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं, नीलासमानाधिकरणतादृशजातिमत्त्वं च बोध्यम्। यद्यपि कालिन्दीजलेषु नीलरूपोपलम्भाज्जलत्वस्य न शुक्लेतररूपासमानाधिकरणत्वं तथापि वियति विक्षिप्तेषु तेषु शुक्लरूपोपलम्भान्नीलजनकतावच्छेदकपृथिवीत्वजातेस्तत्राभावेन नीलरूपासंभवाच्च। नीलरूपप्रतीतेस्तु परंपरया[१] पृथिवीरूपविषयत्वं कल्प्यते। समवायेन प्रतीतेस्तु भ्रमत्वमेवेति जलत्वस्य तथात्वमिति लीलावतीकृतः।

यद्यपि पाकादपि नीलोत्पत्तेर्विजातीयनीलरूपे विजातीयपाकः कारणं, विजातीयनीले स्वाश्रयसमवेतत्वसम्बन्धेन नीलं कारणमिति नीलत्वावच्छिन्ने पृथिवीत्वेन

१ स्वाश्रयसंयोगसम्बन्धेन जले नीलरूपप्रतीतिरित्यर्थः।

कारणत्वे न मानम् । न च कार्यमात्रवृत्तिनीलत्वजात्यवच्छिन्ने पृथिवीत्वेन कारणत्वमिति वाच्यम् । निश्चिताव्यभिचारकेण द्रव्यत्वेनैव तथात्वौचित्यात् । जले नीलरूपसंभावनया पृथिवीत्वस्य संदिग्धव्यभिचारकत्वात्[1] । किञ्च जले नीलरूपाङ्गीकारे नीलत्वजातेः कार्यमात्रवृत्तित्वासिद्धिश्च । तथापि पाकस्य समवायेन नीलरूपोत्पत्तौ कारणत्वे तेजसि नीलरूपोत्पत्तिभयेन नीलरूपत्वावच्छिन्ने पृथिवीत्वेन हेतुत्वं कल्प्यते,लाघवादित्याहुः । यदि च पृथिवीत्वविशिष्टसमवायेन तेजःसंयोगस्य, विजातीयसंयोगेन तेजसो, वा विजातीयनीले हेतुत्वम् । यद्वा रूपं प्रति रूपस्य प्रतिबन्धकत्वेनैव तेजसि रूपानुत्पादः । न च तेजसि रूपनाशापत्तिश्च स्यादिति वाच्यम् । पृथिवीत्वविशिष्टतेजःसंयोगस्यैव रूपनाशकत्वस्वीकारात् । तदा पृथिवीत्वेन तद्धेतुत्वे मानाभाव इति दिक् ।

कश्चित्तु नैमित्तिकद्रवत्ववदवृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तल्लक्षणम् । पृथिवीत्ववायुत्वघटत्वादिकमादायातिप्रसङ्गवारणाय जातेर्विशेषणत्रयमित्याह । तन्न । द्रव्यत्वसाक्षाद्व्याप्यजातित्वं हि द्रव्य वत्व्याप्यजात्यव्याप्यत्वे सति द्रव्यत्वव्याप्यजातित्वं वाच्यम् । प्रथमजातिपदं द्रव्यत्वव्याप्याभावविशेषस्यै[2]कत्वादेश्च व्याप्यत्वेन जलत्वस्यासम्भववारणायेति तु न वाच्यं, द्रव्यत्वव्याप्यायाः करकात्वादिजातेर्द्रव्यमात्रसमवेतत्वेन जल-

१ जलस्यापि समवायेन नीलरूपोत्पत्तौ कारणत्वस्य सम्भावितत्वेन पृथिवीत्वस्य न्यूनत्वाच्च कारणतावच्छेदकत्वमपि तु अन्यूनत्वाद्द्रव्यत्वमेव तदवच्छेदकमिति तद्रूपेणैव कारणताङ्गीकार्येति भाव ।

२ द्रव्यभिन्नभेदविशेषस्येत्यर्थ ।

त्वव्यापकत्वेनासम्भवात्[१] । किन्तु समवायेन द्रव्यत्वव्याप्या या एका व्यक्तिस्तद्व्याप्यत्वं सत्यन्तार्थः[२] । जातिपदं समवायेन व्याप्यतालाभार्थमिति वाच्यम् । तदपि न । तथा सति विशेष्यवैयर्थ्यापत्तेः । घटत्वादेः सत्यन्तेनैव वारणात् । रूपत्वादिकमादायातिप्रसङ्गसम्भावनापि न । तस्य रूपवद्वृत्तित्वाभावात् । किं चावश्योपस्थितिकस्य द्रवत्वस्यैव रूपस्थाने प्रवेशेन वायुत्वादेर्वारणसम्भवे द्रव्यत्वसाक्षाद्व्याप्यपदं विनैव लघुलक्षणसम्भवेन रूपप्रवेशानौचित्यम् । अत एव द्रव्यत्वव्याप्यपदादानेऽपि न क्षतिरिति परास्तम् । जलत्वस्य क्रियासमवायिकारणतावच्छेदकतया सिद्धमूर्त्तत्वजातेर्जन्यद्रव्यसमवायिकारणतावच्छेदकतया सिद्धभूतत्वजातेर्व्याप्यत्वेनासम्भवापत्तिस्तु न । अतिप्रसङ्गभङ्गाय विलक्षणसंयोगस्य कर्मणि हेतुत्वं वाच्यमेवेति, मूर्त्तत्वेन तत्र हेतुत्वे मानाभावात् । जन्यद्रव्यत्वावच्छिन्नं प्रति भूतत्वेन द्रव्यत्वेन वा हेतुत्वे मानाभावात् । घटपटादिद्रव्येषु विलक्षणविलक्षणसंयोगानां, विलक्षणविलक्षणसंयोगेन कपालतन्त्वादीनां, विलक्षणसंयोगेनैववा कपालतन्त्वादीनां, जन्यद्रव्यत्वावच्छिन्नं प्रति वि-

---

१ पदार्थमात्र ज्ञेयत्वादिना रूपान्तरेण पदार्थमात्रस्य व्यापकम । एवं पदार्थमात्रस्य व्याप्य च । तथा च प्रकृते द्रव्यमात्रसमवेतत्वेन रूपेण करकात्त्वादिजातीना द्रव्यत्वव्याप्यत्वेन व्यापकत्वेन च द्रव्यत्वव्याप्यकरकात्वजातिव्याप्यत्वमेव जलत्वजातेरिति जलत्वस्याव्याप्यत्वाभावेन असम्भवस्य तादवस्थ्यादिति भाव ।

२ समवायप्रतियोगितावच्छेदको यो ऽन्यूनानतिप्रसक्तो धर्मस्तेनात्र व्याप्यत्वाभावो विवक्षित' । एव च तत्तद्विशिष्य स्वस्ववाचकपदप्रतीयमानरूपावच्छिन्ना या व्यक्ति सा च करकात्वत्वेन रूपेणैव करकात्व न तु समवेतत्वेन तदिति न करकात्वव्याप्यत्व जलत्वस्येति आशय. ।

लक्षणसंयोगस्य, वा हेतुत्वेनैवातिप्रसङ्गविरहादिति दिक्[1]।

तच्च संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्ववेगस्नेहस्वाभाविकद्रवत्वशुक्लरूपमधुररसशीतस्पर्शगुणवत् ।

यद्यपि कालिन्दीजलेऽबाधितनीलप्रतीतेर्नीलरूपमपि तत्र युक्तं तथापि वियति विक्षिप्तकालिन्दीजले धवलरूपस्यैव प्रतीतेस्तत्र भूमिसंयोगदोषान्नीलप्रतीतेर्भ्रमत्वम् । अत एवानुमानिकनीलाभावनिश्चयेऽपि तत्र नीलरूपभ्रमसंभवः, शङ्खे पीतरूपज्ञानवदिति केचित् ।

अपरे तु जले गन्धभानवन्नीलरूपभानमपि जलसंयुक्तनीलपृथिवीरूपविषयम् । न च वियति विक्षिप्तेषु तेषु शुक्लभानं तत्संसृष्टशुक्लद्रव्यरूपविषयकमिति वाच्यम् । जलान्तरस्य शुक्लरूपसमवायिकारणत्वमावश्यकमित्येतस्यापि शुक्लसमवायिकारणत्वमेव कल्प्यते न तु नीलसमवायिकारणत्वं गौरवाल्लाघवेन नीलत्वावच्छिन्नं प्रति पृथिवीत्वेनैव कारणत्वात् ।

यद्यपि नीलरूपविशेषे नीलस्य नीलरूपविशेषान्तरेऽग्निसंयोगविशेषस्य कारणत्वेनैवानतिप्रसङ्गेन नीलरूपत्वावच्छिन्ने पृथिवीत्वेन कारणत्वे न मानमस्ति तथापि कार्यमात्रवृत्तिजात्यवच्छिन्नमनुगतकारणजन्यमिति व्याप्तेस्तथा कारणत्वं स्वीकार्यम् । वस्तुतो विजातीयतेजःसंयोगस्योष्मरूपतेजस्यपि सत्त्वेन तत्र नीलोत्पादवारणाय तथा कारणत्वं वाच्यमित्याहुः ।

---

१ पूर्वकल्पे संयोगस्यानि नानावैजात्यानि । कपालत्वादिना न कारणत्वम् । द्वितीये वैजात्यान्यपि नाना कपालत्वादिनापि च हेतुत्वम । तृतीये जन्यद्रव्यजनकतावच्छेदकमेव संयोगस्य वैजात्यं घटपटादिजनकसंयोगेषु, कपालत्वादिना च कारणता । तुर्ये घटत्वपटत्वाद्यवच्छिन्ने विशेषत कार्यकारणभावो नास्ति, किन्त्वसमवायिकारणस्य कारणतयैव निर्वाह । संयोगनिष्ठमेकमेव वैजात्यम् । कपालत्वादिना न कारणतेति तात्पर्यम् ।

वस्तुतस्तु पृथिवीत्वविशिष्टविलक्षणतेजःसंयोगस्य पृथिवीत्वविशिष्टसमवायेन तादृशसंयोगस्य, विजातीयसंयोगेन तेजसो, वा नीलविशेषे हेतुत्वेनाऽतिप्रसङ्गवारणान्न तादृशकारणत्वे मानं तथापि कार्यमात्रवृत्तिजात्यवच्छिन्नमनुगतकारणजन्यमिति प्राचां नियम एव तत्र मानम्। यदि च विशेषणविशेष्यभावभेदेन कारणतावच्छेदके विनिगमनाविरहवत्कारणतावच्छेदकसंबन्धेऽपि विनिगमनाविरहान्न पृथिवीत्वविशिष्टसमवायसंबन्धेन तेजःसंयोगस्य हेतुत्वम्। नापि विलक्षणसंयोगसंबन्धेन तेजसः। वृत्त्यनियामकसंयोगसाधारणविलक्षणतेजःसंयोगत्वेन संबन्धत्वे तेन संबन्धेन तेजसोऽपि तेजःसंबन्धित्वात्तत्रापि नीलोत्पत्तिर्दुर्वारा। यदि च वृत्तिनियामकविलक्षणसंयोगत्वेन तेजसो हेतुत्वं तदा स्वभेदविशिष्टसंयोगस्यैव वृत्तिनियामकत्वम्। अन्यस्य वृत्तिनियामकसंयोगस्य दुर्वचत्वात्। तथा च विशेषणविशेष्यभावभेदेन गुरुतरकार्यकारणभावद्वयापत्तिरिति सूक्ष्ममीक्ष्यते तदा नीलत्वावच्छिन्ने पृथिवीत्वेन हेतुत्वं युक्तमुत्पश्याम इति पूर्वोक्तमप्यत्र विस्तरेण प्रदर्शितमिति दिक्।

नन्विक्षुक्षीरादिमाधुर्यवज्जलमाधुर्यस्य प्रत्यक्षेणाग्रहात्तत्र माधुर्ये न मानं, नारिकेलजलादौ माधुर्यस्य जम्बीरादिजले अम्लादिवत्पृथिवीनिष्ठस्यैवोपलब्धेरिति।

अत्र केचित्। हरीतक्यादिभक्षणोत्तरं जलमाधुर्योपलम्भाद्धरीतक्यादिना संयोगविशेषेण जलमाधुर्यं व्यज्यत इति तत्र माधुर्यसिद्धिरिति तन्न। हरीतक्यामलकादिसंयोगविशेषाणां, संयोगविशेषेण तेषां वा, संयोगविशेषस्यैव वा, जलमाधुर्यादिव्यक्तिविशेषं प्रति हेतुत्वेऽन-

न्तकार्यकारणभावगौरवापत्त्या[1] लाघवेन हरीतक्याद्यवयवेषु जलसंयोगविशेषेण, अग्निसंयोगविशेषेण, संयोगविशेषेण वा, माधुर्योत्पादस्यैवौचित्यात्।

अपरे तु यद्यपि हरीतक्यादिभिर्जलसंयोगविशेषस्य माधुर्यविशेषप्रतीतित्वापेक्षया माधुर्यविशेषत्वमेव कार्यतावच्छेदकं युक्तं तथापि हरीतक्याद्यवयवेषु पूर्वरसनाशरसान्तरोत्पादकल्पने गौरवान्माधुर्यविशेषप्रतीतित्वमेव कार्यतावच्छेदकमिति जले मधुरत्वसिद्धिरित्याहुः।

पूर्वं जलमाधुर्याभाववदेव संयोगविशेषात्तत्र माधुर्योत्पत्तिः, स च विशेषो हरीतक्यादिसंयोगे अतो माधुर्यरसविशेषत्वमेव तत्कार्यतावच्छेदकम्। यदि च रसत्वस्य प्रत्यक्षतया रसत्वेन जले रसोऽनुभूयत एव हरीतकीभक्षणोत्तरं मधुरत्वादिप्रत्यक्षमेव जन्यते तदा मधुरत्वादिप्रत्यक्षत्वमेव कार्यतावच्छेदकमिति केचित्।

जलं परमाणुस्वरूपं नित्यं, कार्यस्वरूपमनित्यं, शरीरेन्द्रियविषयरूपं च। शरीरं वरुणलोके विद्यमानानां, तेषां शरीरस्याऽऽप्यत्वसाधकः शब्द एव द्रष्टव्यः।

इन्द्रियं रसग्राहकम्। विषयरूपं करकाहिमसरित्समुद्रादि। ननु चक्षुरादिना रसाग्रहाद्रसग्राहकं चक्षुराद्यतिरिक्तं सिद्ध्यतु रसनात्वावच्छिन्नं, परं तु तस्य जलत्वे किं मानम्।

---

१ हरीतकीसंयोगत्वेनेति कारणताकोटिगौरवात्, संयोगस्य गुणत्वेन समवायस्य कारणतावच्छेदकसम्बन्धत्वस्वीकारेण गौरवाच्चाह। विजातीयसंयोगेन हरितकीत्वेन कारणता। अत्र कल्पे संयोगाप्रवेशेन कारणताकोटिलाघवम्। समवायाप्रवेशेनातिलाघवम्। एवमामलकीत्वेनेत्यादि। एतद्धि द्वितीयकल्पे हरीतक्यामलकादिसंयोगेषु वैजात्यमेकमेव। ननु हरीतक्यादीनां कारणत्वेऽनन्तकार्यकारणभावापत्तिरत आह। विजातीयसंयोगत्वेनेति। समाधाने कार्यकारणभावापत्तिस्तु आद्यकल्पद्वयापेक्षया। तृतीयकल्पे तु हरीतक्यादौ विजातीयमाधुर्यत्वस्य स्वाभिमतकार्यतावच्छेदकतया विजातीयमाधुर्यप्रत्यक्षत्वं कार्यतावच्छेदकमिति कार्यतावच्छेदक एव गौरवमिति ज्ञेयम्।

रूपादिषु पञ्चसु मध्ये यद्बहिरिन्द्रियं यं गुणं गृह्णाति तत्त-द्गुणवद्यथा श्रोत्रमिति रसग्राहकबहिरिन्द्रियत्वेनास्त्वा-पाततो रसवत्त्वसिद्धिस्तथापि न जलत्वसिद्धिरिति चेत्।

अत्र केचित्। पार्थिवेन्द्रियत्वेन गन्धग्राहकत्वा-त्तस्य पार्थिवेन्द्रियत्वे गन्धग्रहापत्त्यार्थाज्जलत्वसिद्धि-रिति तन्न। घ्राणत्वेनैव गन्धग्राहकत्वं न तु पार्थिवेन्द्रिय-त्वेन गौरवात्।

अन्ये तु रसनेन्द्रियं जलं गन्धाव्यञ्जकत्वे सति रस-व्यञ्जकद्रव्यत्वात् सक्तुरसव्यञ्जकजलवत्। मनश्चक्षूरसन-सन्निकर्षेषु व्यभिचारवारणाय गन्धाव्यञ्जकरसव्यञ्जक-द्रव्यत्वानामुपादानमित्याहुः। तन्न। रसनासंयुक्तपि-त्तभागे सन्निकर्षविधया स्वीयरसव्यञ्जके व्यभिचारात्। न च परकीयत्वस्य रसे विशेषणत्वात्, नोक्तदोष इति वाच्यम्। अनुकूलतर्काभावेनोक्तहेतोरप्रयोजकत्वेन सा-ध्यासाधकत्वान्न रसनेन्द्रियस्य जलत्वसिद्धिः।

परे तु रसनेन्द्रियस्य परममहत्परिमाणवत्त्वे निष्क्रि-यत्वापत्त्या युगपत्सर्वरसग्रहापत्त्या अणुपरिमाणवत्त्वे युग-पन्नानाद्रव्यरसाग्रहापत्त्या जन्यमहत्परिमाणवत्त्वं वाच्यम्। जन्यमहत्त्वस्य संख्यापरिमाणप्रचयजन्यत्वेन तदाश्रयस्य रसनेन्द्रियस्यानित्यत्वं वाच्यं तथा च तस्यातिरिक्तत्वे तद-वयवानां तत्र कारणत्वादतिरिक्तकार्यकारणभावापत्तिः। अस्मन्मते तु जलत्वेन जन्यजलत्वेन कार्यकारणभावेन क्लृप्ते-नैव निर्वाहान्नातिरिक्तत्वं तेषामिति तत्र जलत्वसिद्धि-माहुः।

तन्न। अस्तु रसनात्वावच्छिन्नं प्रति विलक्षणसंयो-गस्य हेतुत्वं परं तु विलक्षणसंयोगस्यानिरिक्तावयवेषु

कल्पने तेषां कारणत्वकल्पने तत्कल्पने च गौरवापत्त्या जलावयवेष्वेव रसनेन्द्रियारम्भकविलक्षणसंयोगकल्पनाज्जलत्वं तस्येति न युक्तम्। तादृशसंयोगकल्पनाया जले पृथिव्यादौ वेत्यत्र विनिगमनाविरहात्। घ्राणत्वरसनात्वाद्यवच्छिन्नं प्रति विलक्षणविलक्षणसंयोगस्य जनकत्वेन द्वयोः पार्थिवत्वेऽप्यक्षतेः। न च घ्राणादिचतुर्णां जनकतावच्छेदकवैजात्यचतुष्टयं नोपेयते गौरवात् किं तु चतुर्णामप्यारम्भकसंयोगे एकमेव वैजात्यं द्रव्यजनकतावच्छेदकवैजात्यव्याप्यं कल्प्यते। तादृशसंयोगेन पृथिव्या घ्राणत्वावच्छिन्नं प्रति हेतुत्वाद्रसनात्वावच्छिन्नं प्रति तादृशविजातीयसंयोगेन जलत्वेनैव हेतुत्वमिति न रसनेन्द्रियस्य पृथिवीत्वं किं तु जलत्वमेवेति वाच्यम्। विजातीयसंयोगेन पृथिवीजन्यतावच्छेदकजातेर्गन्धग्रहजनकतावच्छेदकत्वं रसग्रहजनकतावच्छेदकत्वं वेत्यत्र मानाभावात्[1]। किं च द्रव्यत्वस्य परिमाणव्याप्यत्वे मानाभावेन[2] तेषां[3] परिमाणशून्यत्वे क्षत्यभावेन नित्यत्वमेव[4] युक्तम्। न च घ्राणादीनां चतुर्णामाधिक्यान्नवैव द्रव्याणीति विभागव्याघात इति वाच्यम्। सुखसमवायिकारणतावच्छेदकतया सिद्धात्मत्वजातेरीश्वरावृत्तित्वमते ज्ञानवत्त्वोपाधिना विभागवद्गन्धवद्गन्धग्राहकान्यतरवृत्तिद्रव्यत्वव्याप्यजात्या पृथिवीविभागसंभवात्। न च रसग्राहकं गन्धवदेतदन्यतरवृत्तितादृशजात्या कुतो न पृथिवीविभाग इति वाच्यम्। स्वतन्त्रस्य मुनेर्नियन्तुमशक्यत्वात्। एवं शीतस्पर्श-

१ विनिगमनाभावादित्यर्थः।

२ अनुकूलतर्काभावेनेत्यर्थ।

३ चतुर्विधेन्द्रियाणाम।

४ चतुर्विधेन्द्रियाणां नित्यत्वं युक्तमित्ति भाव।

वद्रसग्राहकान्यतरवृत्तिद्रव्यत्वव्याप्यजात्या जलविभाग इति युक्तमुत्पश्यामः ।

ननु हिमकरकयोर्जलत्वे न मानं कठिनस्पर्शवत्त्वेन पार्थिवत्वमेव युक्तम् । अत्र केचित्, ऊष्मणा विलीनयोस्तयोर्जलत्वोपलम्भात् यद् द्रव्यं यद्द्रव्यध्वंसजन्यं तद् द्रव्यं तद्द्रव्यारम्भकपरमाण्वारब्धम् यथा दुग्धध्वंसजन्यदध्नो दुग्धारम्भकपरमाण्वारब्धत्वमिति व्याप्तेर्हिमकरकारम्भकपरमाण्वारब्धत्वं तयोर्नाशानन्तरमुत्पन्नस्य सिध्यत्तयोर्जलत्वं साधयति । प्रथमद्रव्यपदं मणिरूपद्रव्यध्वंसजन्यदाहे व्यभिचारवारणाय द्वितीयद्रव्यपदं प्रागभावध्वंसरूपतन्तुजन्ये पटे व्यभिचारवारणायास्तु । शालग्रामध्वंसजन्ये नारकीयशरीरे शालग्रामारम्भकपरमाण्वनारब्धे व्यभिचारस्तु केन निरसनीय इति अदृष्टाद्वारकत्वेन विशेषणीयमिति केचिदाहुस्तन्न । मणिध्वंसजन्यवह्नौ व्यभिचारात् । वह्नौ मणिसमवधाने तृणादौ दाहवद् वह्निना वह्नेरप्यजननाद्वह्नावपि मणेः प्रतिबन्धकत्वात् ।

यत्तु स्वजन्यवह्नेरेव दाहजनकत्वाद्दाहं प्रति मणेर्न प्रतिबन्धकत्वं किं तु वह्निं प्रत्येवेति । तत्तुच्छम् । स्वजन्यवह्नित्वेन दाहकारणत्वे गौरवापत्तेः । भर्जिततण्डुलादौ दाहेनानुद्भूतवन्ह्यादिकल्पने गौरवापत्तेश्च ।

उष्णस्पर्शवत्तेजः । अनुद्भूतस्पर्शानङ्गीकारे उष्णस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं तल्लक्षणं, तादृशजातिस्तु तेजस्त्वम् ।

ननु तेजस्त्वजातिसिद्धौ किं मानम् । न च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकतया तत्सिद्धिरिति वाच्यम् । जन्योष्णस्पर्शं प्रति उष्णस्पर्शस्य हेतुताया आव-

श्यकत्वात्तेजस्त्वेन तत्र हेतुत्वे मानाभावात् । न च जन्योष्णस्पर्शत्वावच्छिन्नं प्रति तेजस्त्वेनैव हेतुत्वमस्तु लाघवान्न तूष्णस्पर्शत्वेनेति वाच्यम् । चक्षुरादावपि उष्णस्पर्शापत्तेः । न चेष्टापत्तिरत एवानुद्भूतस्पर्शोऽपि स्वीक्रियत इति वाच्यम् । अनन्तानुद्भूतस्पर्शाङ्गीकारे गौरवापत्त्या जन्योष्णस्पर्शत्वावच्छिन्नं प्रति विलक्षणस्पर्शत्वावच्छिन्नं प्रति वोष्णस्पर्शत्वेनैव कारणत्वकल्पनेन कारणतावच्छेदकसंबन्धे स्वाश्रयसमवेतत्वरूपगौरवस्यापि प्रामाणिकत्वादिति ।

अत्र केचित् । यदि च रसनेन्द्रिये जलत्ववत् चक्षुष्यपि तेजस्त्वे न मानं विभाजकोपाधेस्तेजश्चक्षुःसाधारणस्यैवोष्णस्पर्शवद्रूपग्राहकान्यतरवृत्तिद्रव्यत्वव्याप्यजातिरूपस्यैव निर्वचनं तदा जन्योष्णस्पर्शत्वावच्छिन्नं प्रति तेजस्त्वेनैव हेतुत्वं युक्तम् । एतेन चन्द्रकिरणादे रत्नप्रभादेश्च संग्रहः । तत्राप्युष्णस्पर्शसत्त्वात् । जलीयपार्थिवावयवस्पर्शेनाभिभवात्तत्रोष्णत्वाग्रह इति ।

वस्तुतस्तु तस्य रूपग्राहकत्वात्संग्रहः । तत्साधारणोपाध्यन्तरेण वा विभागः ।

अन्ये तु विलक्षणरूपं प्रति विलक्षणनीलादिकं प्रति वा विलक्षणतेजःसंयोगस्य हेतुत्वात्तेजस्त्वसिद्धिः[3] । न च

---

१ समवायेन जलोष्णस्पर्शं प्रति तादात्म्येन तेजस कारणत्वे कारणतावच्छेदकसबन्धे लाघवम । उक्तकार्यकारणभावे तेजस समवायेन असमवायिनस्तु स्वाश्रयसमवेतत्वेनेति गौरव स्पष्टमेव ।

२ ननु विलक्षणरूपत्वावच्छिन्न प्रति पाकत्वेन कारणतेति पञ्चिधरूपे पाकजन्यतावच्छेदकमेव वैजात्य ततश्च वैजात्यस्य नीलत्वसमानाधिकरणय पाकजनीले, नीलत्वाभावावत्यांतवृत्तित्व नीलत्वसमानाधिकरण नीलजनीलवृत्तिर्योऽभावो वैजात्याभावस्तत्प्रतियोगित्वमपि इति त्रितयसम्बन्धेन नीलत्वधर्मवैशिष्ट्यस्य वैजात्ये सत्त्वात्साकर्यमत आह विलक्षणनीलादिकमिति ।

३ विलक्षणनीलादिक प्रति विलक्षणतेज सयोगस्य हेतुत्वेन कारणतावच्छेदककोटिप्रविष्टतया तेजस्त्वजाति सिध्यति इति भाव ।

विलक्षणसंयोगस्यैव हेतुत्वमस्तु किं तेजस्त्वप्रवेशेनेति वाच्यम् । विलक्षणसंयोगसंबन्धेन तेजस्त्वेनैव हेतुत्वात् । पाकं प्रति तेजसोऽन्वयव्यतिरेकदर्शनेन तस्यैव कारणतावच्छेदकसंबन्धतया विलक्षणसंयोगकल्पनात् । अत एव तेन सम्बन्धेन पृथिव्यादिकमेव कारणमित्यपि परास्तमित्यपि वदन्ति ।

केचित्तु शुक्लभास्वररूपवत्वं तल्लक्षणं, शुक्लरूपं स्वरूपकीर्त्तनं, भास्वरत्वं रूपे शुक्लत्वव्याप्यो जातिविशेषः। न च वह्नौ सुवर्णादौ चाव्याप्तिः । तद्रूपस्यापि शुक्लत्वात् । पार्थिवरूपेणाभिभवात्तद्रूपाग्रहेप्यन्यरूपवत्तयैव तद्रूपग्रहात्पीतः शङ्ख इतिवत् । अत एव रूपाग्रहे कथं द्रव्यचाक्षुषमित्यपि निरस्तम् । यद्वा रूपं गृह्यत एव तद्गतशुक्लत्वमेवाभिभवान्न गृह्यते ।

अपरे तु अनुद्भूतरूपे प्रमाणाभावेन चक्षुरादावव्याप्त्या नैतल्लक्षणं, किं तु तादृशरूपवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं, नैमित्तिकद्रवत्ववद्वृत्तिगन्धवदवृत्तिजातिमत्त्वं च तल्लक्षणमाहुः । यदि निर्गन्धनैमित्तिकद्रवत्ववद्विजातीयं पार्थिवं सम्भाव्यते तदा तद्वारणार्थं तद्द्रव्यत्वसाक्षाद्व्याप्यजातिपदं देयम् ।

तच्च परमाणुरूपं नित्यमनित्यमन्यत् । तच्च शरीरेन्द्रियविषयरूपं शरीरं सूर्यलोकवासिनां तत्र प्रमाणमागमादिकमेव ।

इन्द्रियं चक्षुः । ननु चक्षुषस्तेजस्त्वे किं मानम् ।

अत्र प्राञ्चः । चक्षुस्तैजसं परकीयस्पर्शाव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वाद्दीपवत् । स्पर्शाव्यञ्जकत्वे सति परकीयरूपव्यञ्जकद्रव्यत्वाद्वा प्रभावत्। आद्यं परकीयपदं दीप-

स्यापि स्वीयस्पर्शाव्यञ्जकत्वाद् दृष्टान्तासिद्धिवारणाय। अत एव दीपान्यप्रभाया एव दृष्टान्तत्वसम्भवाद्द्वितीय हेतौ न परकीयपदं प्राथमिकम्। मनसि व्यभिचारवारणाय स्पर्शाव्यञ्जकत्वम्। आकाशादौ व्यभिचारवाणाय रूपव्य ञ्जकत्वम्। सन्निकर्षे व्यभिचारवारणाय द्रव्यपदमस्तु।

परं तु रूपे परकीयत्वं द्वितीयहेतौ कुतः? घटादेः स्पर्शव्यञ्जकत्वेन स्पर्शाव्यञ्जकत्वेनैव वारणसंभवादिति न शङ्क्यम्। पार्थिवत्रसरेणौ चक्षुर्निष्ठपित्ते च व्यभिचारवारणाय तत्सार्थकत्वादित्याहुः। तन्न। अप्रयोजकत्वात्।

विषयो वह्निसुवर्णादिरूपः। तच्च रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वनैमित्तिकद्रवत्ववेगवत्।

ननु सुवर्णस्य कठिनस्पर्शवत्त्वात् पीतरूपवत्त्वाद्गुरुत्ववत्त्वात्पार्थिवत्वमेव युक्तं, न तु तेजस्त्वं भास्वररूपाभावादुष्णस्पर्शाभावाच्चेति चेत्।

अत्र केचित्। पृथिवीजलद्रवत्वयोरत्यन्तानलसंयोगेनोच्छेददर्शनात्तादृशसंयोगेनापि सुवर्णद्रवत्वस्यानाशात्तद्द्रवत्वस्य पृथिवीजलद्रवत्वभेदसिद्धौ तदाश्रयस्य तेजस्त्वमिति। तन्न। आत्यन्तिकत्वस्याननुगतस्यानतिप्रसक्तस्यानिर्वचनीयत्वेन विजातीयसंयोगस्यैव द्रवत्वनाशकत्वं वाच्यम्। वैजात्यस्य फलैकोन्नेयत्वेन तत्र फलाभावेन सुवर्णसंयोगे वैजात्याभावेनैव सुवर्णस्य पार्थिवत्वेऽपि तद्द्रवत्वस्य नाशानापत्तेः। अत एव पीतभागानां सत्यप्यत्यन्ताग्निसंयोगे रूपापरावृत्तेस्तत्प्रतिबन्धकं द्रवत्ववद्द्रव्यं विजातीयं कल्प्यते तस्य पृथिवीत्वे जलत्वे वा तद्द्रवत्वस्य नाशापत्तिरिति प्रत्युक्तम्। वैजात्याभावेनोभयो-

पपत्तेः। अत्यन्ताग्निसंयोगेन पीतं पीततरमिति प्रतीतेस्तद्रूपस्यापि नाशाच्च।

ननु पीतरूपनाशाङ्गीकारे तत्र विलक्षणसंयोगसत्त्वेन तद्द्रवत्वस्यापि नाशापत्तिरिति चेत्? न। पीतरूपाश्रये विजातीयसंयोगेऽपि द्रवत्वाश्रये विजातीयसंयोगाभावात्, पीतरूपाश्रयद्रवत्वाश्रययोर्भेदाङ्गीकारात्। तयोरभेदाभ्युपगमेऽपि पीतरूपवद्द्रवत्वनाशकयोर्भिन्नभिन्नवैजात्याक्रान्तयोरभ्युपगमाद्द्रवत्वनाशकाभावेन द्रवत्वस्यानाशात्। परमार्थतस्तु द्रुतं द्रुततरमिति प्रतीतेर्द्रवत्वस्यापि नाशोस्त्येवेति दिक्।

अत्यन्ताग्निसंयोगेन मलिनभागनाशादेव पीततरप्रतीति संभवात् एवंबहुतरावयवेषु द्रवत्वोत्पादादेव द्रुतं द्रुततरमिति प्रतीतिसम्भवाच्च न पीतरूपद्रवत्वयोर्नाशः। वैजात्यस्य फलैकोन्नेयत्वादित्यपरे।

वायुत्वजातिमान् वायुः। स चातीन्द्रियः। विलक्षणस्पर्शेन वायोरनुमाना[1] त्तत्र वैजात्यमानुभविकं तदवच्छिन्नस्पर्शजनकतया वायुत्वसिद्धिः।

परे तु अपाकजानुष्णाशीतस्पर्शवत्वं तल्लक्षणम्। पृथिवीतेजोजलेष्वतिव्याप्तिवारकाण्यपाकजानुष्णाशीतेति स्पर्शविशेषणानि इति प्राहुस्तन्न। पृथिव्यामपाकजस्यापि अनुष्णाशीतस्पर्शस्य सत्त्वेनातिव्याप्तिः। न च पाकाप्रयोज्यत्वमपाकजत्वं, पृथिवीपरमाणौ पाकजस्पर्शस्यैव सत्त्वेन तद्द्वारासमवेतपृथिवीस्पर्शमात्रस्य पाकप्रयोज्यत्वान्नातिव्याप्तिरिति वाच्यम्। अनुद्भूतस्पर्शे मानाभावेन

१ रूपवदद्रव्यासमवेतस्पर्शं क्वचिदाश्रित स्पर्शत्वात् पृथिव्यादिस्पर्शवत्। पृथिव्यादिस्पर्शे सिद्धसाधनवारणाय रूपवद्द्रव्यासमवेतेति पक्षविशेषणमित्यनुमानेनेतिभाव।

त्वगिन्द्रियादावव्याप्तेः । परमाणुद्व्यणुकादिस्पर्शसाधारणपाकप्रयोज्यत्वस्यैकस्याभावाच्च ।

ननु विलक्षणस्पर्शं प्रति विलक्षणस्पर्शस्य हेतुत्वेनैवानतिप्रसङ्गाद्विलक्षणस्पर्शं प्रति वायुत्वेन कारणत्वे मानाभावः । न च विलक्षणस्पर्शं प्रति वायुत्वेनैव हेतुत्वं न तु विलक्षणस्पर्शत्वेनापि, न च त्वगिन्द्रियादौ विलक्षणस्पर्शापत्तिस्तत्र वायुत्वे प्रमाणाभावादिति वाच्यम् । विलक्षणस्पर्शं प्रति वायुत्वेन कारणत्वे विलक्षणस्पर्शजनकतावच्छेदकं वायुत्वं जन्यवायुमात्रवृत्ति तस्याः कार्यमात्रवृत्तिजातेरनुगतकरणजन्यतावच्छेदकत्वनियमेन तादृशवायुत्वावच्छिन्नं प्रति वायुत्वेन हेतुत्वं वाच्यम् । तथा च विलक्षणस्पर्शत्वं सकलवायुस्पर्शवृत्त्येकं तद्व्याप्यविलक्षणस्पर्शजन्यतावच्छेदकमपरम् । तज्जनकतावच्छेदकं वायुत्वं जन्यवायुमात्रवृत्त्येकं, तज्जनकतावच्छेदकं वायुत्वं सकलवायुवृत्त्येकमिति जातिचतुष्टयं स्वीकार्यम् । नित्यवायुस्पर्शे प्रमाणाभावपक्षे वायुस्पर्शे विलक्षणस्पर्शत्वमेकैव जातिः कार्यमात्रवृत्तिस्तदवच्छिन्नं प्रति वायुत्वव्याप्यजन्यवायुमात्रवृत्तिवायुत्वेन हेतुत्वमिति तथापि जातित्रयम् । मम तु वायुत्वाभिमतस्पर्शे जातिद्वयम् । तत्रैका कार्यतावच्छेदिका अपरा कारणतावच्छेदिका न तु वायुत्वस्वीकार इति विलक्षणस्पर्शं प्रति विलक्षणस्पर्शत्वेनैव हेतुत्वम् । न च विलक्षणस्पर्शजनकतावच्छेदकं वायुत्वं न जन्यवायुमात्रवृत्ति किं तु सर्ववायुवृत्ति । अन्यथा तदवच्छिन्नं प्रत्यपि हेतुत्वेन कारणतावच्छेदकतया वायुत्वान्तरस्वीकारे गौरवापत्तिरिति वाच्यम् । वायुपरमाणावस्मिन् पक्षे स्पर्शोत्पादवारणाय नित्यस्पर्शाङ्गीकार आवश्यकः । तथा च

स्पर्शं प्रति स्पर्शस्य प्रतिबन्धकत्वान्न तत्र स्पर्शोत्पत्तिः तथा च स्पर्शे जातिद्वयं वायुत्वमेकमिति जातित्रयस्वीकारे गौरवादिति चेत् ।

अत्र केचिदाहुः । विलक्षणस्पर्शवद्वायोरपि स्पर्शनानुभवसिद्धत्वाद्वायुत्वमप्यनुभवसिद्धम् । तथा च तेनैव विलक्षणस्पर्शं प्रति कारणताऽवच्छिद्यते लाघवात् । न च त्वगिन्द्रियादावव्याप्तिः । तस्य वायुत्वाभावेऽपि वायुत्वसाधारणधर्मस्यैव द्रव्यविभाजकोपाधित्वस्वीकारात् । न चैवमपाकजानुष्णाशीतस्पर्शपदैर्विलक्षणस्पर्शोपलक्षणाद्विलक्षणस्पर्शवत्त्वलक्षणं निर्दोषमिति वाच्यम् । इष्टत्वात् । तस्य यथाश्रुतार्थे दूषणदानादिति दिक् ।

अन्ये तु जन्यवायुस्पर्शे वैलक्षण्यमेकमेव, तदवच्छिन्नजनकतावच्छेदकं वायुत्वमपि सकलवायुसाधारणमेकमेव । वायुपरमाणौ स्पर्शत्वव्याप्यजातिशून्यस्पर्शसत्त्वान्न तत्र स्पर्शोत्पत्तिरिति ।

परे तु वायुपरमाणुष्वनेकस्पर्शकल्पनागौरवेण विलक्षणस्पर्शजनकतावच्छेदकं जन्यवायौ वायुत्वमेकं तदवच्छिन्नजनकतावच्छेदकत्वेन सकलवायुसाधारणमपरं वायुत्वजन्यवायुस्पर्शे वैलक्षण्यं चैकमेवेति जातित्रयमिति वदन्ति ।

अपरे तु वायुत्वविशिष्टो वायुः स्पर्शनानुभवसिद्धः । तथा च वायुस्पर्शमात्रवृत्तिवैजात्ये न मानं किं त्वनुष्णाशीतस्पर्शजन्यतावच्छेदकं स्पर्शजन्यपृथिवीस्पर्शसाधारणमेकं वैजात्यं तद्व्यापकमनुष्णाशीतस्पर्शत्वमपरमित्याहुः ।

अन्ये तु अनुष्णाशीतस्पर्शत्वजातौ मानाभावः । किं तूष्णत्वशीतत्वजात्यभावस्तथा च वायुजन्यतावच्छेदकं

वायुस्पर्शे वैजात्यं तदवच्छिन्नजनकतावच्छेदकं वायुत्वजन्यवायुवृत्ति तज्जनकतावच्छेदकं सर्ववायुवृत्ति वायुत्वमित्याहुः । तन्न । पृथिवीस्पर्शे पृथिवीजन्यतावच्छेदकतया जात्यन्तरकल्पनेन जातिद्वयकल्पनाद्गौरवापत्तेः । न च स्पर्शजन्यतावच्छेदिका ऽपाकजजन्यस्पर्शे एकैव जातिरिति वाच्यम् । शीतत्वादिना सङ्करप्रसङ्गात् । स परिमाणुरूपो नित्यस्तदन्योऽनित्यः । स धृतिशब्दकम्पैरनुमेय[1] इति प्राञ्चः ।

अनित्यस्त्रिविधः । शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् । तद्वायवीयं रूपाव्यञ्जकत्वे सति स्पर्शव्यञ्जकद्रव्यत्वाद् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवदिति प्राञ्चः ।

विषयस्तु महावायुः प्राणादिरूपश्च स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगवान् ।

शब्दवदाकाशम् । ननु शब्दत्वजातेः कार्यमात्रवृत्तित्वेन तदवच्छिन्नजनकतावच्छेदकमाकाशत्वं न जातिः, एकव्यक्तिमात्रवृत्तित्वात्, तथा च किं तज्जनकतावच्छेदकमिति चेत् ।

अत्र केचिदाहुः । शब्दस्यैव तज्जनकतावच्छेदकत्वम् । न च कार्यस्य कार्यात्पूर्वमभावात्कारणतावच्छेद-

१ अनुमानप्रकारश्च इत्थम । नभसि तृणतूलस्तनयित्नुविमानादीनां धृति स्पर्शवद्द्रव्यसंयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात नौकावत । जलादिगततृणादौ सिद्धसाधनवारणाय नभसीति । प्रयत्नवदात्मसंयोगहेतुकधृत्यादौ व्यभिचारवारणाय अस्मदादीति । एवमस्ति रूपवद्द्रव्याभिघाते योऽय दूष्यादिशब्दसन्तान स्पर्शवद्वेगवद्द्रव्यसंयोगजन्य अविभज्यमानावयवकद्रव्यसम्बन्धिशब्दसतानत्वात । दूराभिहतभेरीशब्दसतानवत । पृथिव्याद्यभिघातजन्ये शब्दे सिद्धसाधनवारणाय असतीति पक्षविशेषणम । विभागजन्ये शब्दे व्यभिचारवारणाय हेतौ अविभज्यमानेति । एव रूपवद्द्रव्याभिघातमन्तरेण शाखादिकम्पन स्पर्शवद्वेगवद्द्रव्याभिघातजन्य विशिष्टकर्मत्वात् नदीपूराभिहतकाशादिकम्पनवत । इति ।

कावच्छिन्नस्य कार्यात् पूर्वमभावान्न कार्योत्पाद इति वाच्यम् । प्रकृते कारणतावच्छेदकावलीढस्यैव कार्योत्पादकत्वात् । यद्वा । आकाशस्य व्यापकत्वेन सर्वदैव शब्दस्य क्वचिज्जायमानत्वा कारणतावच्छेदकावच्छिन्नसत्त्वस्य कार्योत्पादकत्वपक्षेऽपि क्षत्यभावात् । न च गकारादेः कारणतावच्छेदकत्वं शब्दस्य वेत्यत्र विनिगमनाविरहः, शब्दस्य निश्चिताव्यभिचारकत्वात् । न च सर्गाद्यशब्दात् पूर्वं न तत्सम्भवः । एतद्ब्रह्माण्डान्तरवर्त्तिकार्यद्रव्यनाशस्यैवावान्तरप्रलयत्वेन स्वीकारात् । ब्रह्माण्डान्तरे तादृशशब्दात्पूर्वमाकाशे शब्दसम्भवात् । अत एव पृथिव्यादौ शब्दः कल्प्यतामित्यपि निरस्तं, तेषामनन्तत्वादव्यापकत्वाच्च ।

दिक्कालयोर्विशेषगुणानाश्रयत्वान्न शब्दाश्रयत्वं तच्च संख्यापरिमाणपृथक्त्वसंयोगविभागशब्दगुणवदिति प्राञ्चः

नव्यास्तु दिक्कालयोः प्रमाणाभावेन जीवानामनन्तत्वाज्जीवगुणत्वे शब्दस्य मनःसंयुक्तसमवायेन मानसत्वापत्त्या मानसं प्रत्ययोग्यत्वे च तद्भेदस्य मानससाक्षात्कारकारणत्वापत्त्या च न जीवगुणत्वं किं त्वीश्वरगुणत्वमिति नातिरिक्तमाकाशमित्याहुः

परे तु गुणत्वविशिष्टलौकिकविषयतासंबन्धेन मानसत्वावच्छिन्नं प्रति योग्यात्मगुणत्वेन कारणत्वं, योग्यात्मगुणत्वं जातिविशेषः। स च निर्विकल्पकसत्त्वे तु तस्यापि घटज्ञानवानिति प्रत्यक्षविषयत्वाद् ज्ञानत्वव्यापकः। जीवनयोनियत्नेमानाभावात् कृतित्वस्यापि व्यापक इति न ज्ञानत्वकृतित्वाभ्यां संकरः । न चात्मैकत्वपरिमाणयोरप्रत्यक्षापत्तिः इष्टत्वात् । तस्यैकत्वपरिमाणत्वयोर्व्य-

तच्चाऽनादि । अज्ञानत्वात्कार्यस्याऽज्ञानत्वाऽयोगात् । अनादित्वे बाधकाऽभावाच्च । न चैकघटज्ञानान्निखिलाऽज्ञाननिवृत्तिप्रसङ्गः । आवरकस्यैव ज्ञानान्निवृत्तेः । आवरकं त्वेकमेव, स्वभावात् । न च विनिगमकाऽभावः । विनिगमकाऽभावेपि पराऽभिमतविशेषाऽदर्शनवदावरकं निवर्त्तत इत्यभ्युपगमे बाधकाऽभावात् ।

अन्ये तु मूलाऽज्ञानमपि जीवनिष्ठमज्ञानत्वात् शुक्त्यज्ञानवत् । न चैवमन्योन्याश्रयः । जीवत्वादिविभागस्याऽनादित्वात् । न चाऽऽश्रयविषययोरभेदे सम्भवति भेदो गौरवान्न कल्पनीय इति वाच्यम् । अन्यत्र तद्भेदस्यं दृष्टत्वादित्याहुः ।

सर्वथाप्युपपन्नमेवात्माश्रयमात्माऽविषयमज्ञानमिति सिद्धमज्ञानम् । तत्प्रयुक्तो जीवपरविभागश्च । एवं दृग्रूपात्मनि कर्त्तृत्वाद्यध्यासो ऽप्यन्तःकरणोपाधिकः । अहं करोमीत्यनुभवात् । 'सधीः स्वप्नो भूत्वेमं लोकमनुसंचरती'ति श्रुतेश्च । तस्मान्निरस्तकर्त्तृत्वाऽनर्थं निरतिशयाऽऽनन्दात्मकं चैतन्यं त्वंपदलक्ष्यं जीवस्वरूपमविद्यया भिन्नमिव कर्त्तृत्वादियुक्तमिति प्रतीयतइति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्जगन्नाथाश्रमपूज्यपादशिष्यश्रीमन्नृसिंहाश्रमविरचिते वेदान्ततत्त्वविवेके प्रथमः परिच्छेदः ।

---

# अथ वेदान्ततत्त्वविवेके द्वितीयः परिच्छेदः ।

श्रीगणेशाय नमः ।

अथ तत्पदार्थो ब्रह्म निरूप्यते । पदार्थाऽवगमस्य वाक्यार्थप्रतिपत्तिहेतुत्वात् । तच्चाऽलौकिकमिति लक्षणप्रमाणाभ्यां निरूप्यते । तल्लक्षणं च भगवान् सूत्रकार आह । 'जन्माद्यस्य' यत इति । अस्य प्रत्यक्षाऽनुमानाद्युपस्थितस्य जगतो जन्मस्थितिभङ्गा यतो भवन्ति तद् ब्रह्मेति 'यतो वा इमानि जायन्ते' इत्यादिवाक्ये जगत्कारणे ब्रह्मशब्दप्रयोगादिदं ब्रह्मलक्षणम् । तद् ब्रह्माऽद्वितीयमिति जन्मादिकारणत्वं प्रत्येकं लक्षणमपि स्थित्यादिकारणत्वादिसमानाधिकरणमेव लक्षणमिति सूत्रे जन्मादिति समाहारः । अन्यथा ऽद्वयब्रह्मधर्मत्वाऽसम्भवात् । लक्षणस्य चाऽद्वयत्वं ब्रह्मशब्दादवगम्यते । तत्रैव ब्रह्मशब्दाऽभिधेये वृद्धिक्षयबृहत्त्वस्य पर्यवसानात् । न च नदीपूरस्येव वृद्धिरवयवोपचयः । आकशस्येव बृहत्त्वं परिमाणविशेषो वा ऽस्त्विति वाच्यम् । 'निष्कलमस्थूल'मित्यादिश्रुतिभिर्ब्रह्मणि तदभावस्य सिद्धत्वात् । आकाशादौ परिमाणविशेषाश्रयत्वयोग्यतालक्षणघटपर्वतादिव्यावृत्तस्वरूपोपचयाऽभावे तस्याऽसम्भवेन स्वरूपोपचयस्यैव तदर्थत्वात् । नन्वेवमप्याकाशविलक्षणस्वरूपोपचयस्य निर्वक्तुमशक्यत्वादाकाशसदृशमेव ब्रह्मेति चेत् । न । स्वरूपोपचयो हि युगपदनेकदेशनिरूपितसम्बन्धाश्रययोग्यत्वम् । इदं

चाऽऽकाशादावनेकदेशनिरूपितयत्किञ्चित्सम्बन्धाश्रयत्वेन न तु यावत्सम्बन्धाश्रयत्वेन । तद्देशीयघटादिवृत्तिसम्बन्धस्याकाशे ऽभावात् । सर्वात्मकत्वे तु सोऽप्यस्त्येवेति भवति सर्वात्मकं वस्तु आकाशव्याप्त्योपचितस्वरूपम् । ततः सर्वात्मकं वस्तु निरवधिकं महत् आकाशादिकं तु सावधिकम् । शब्दश्चोपपदादिबाधकाऽभावे निरपेक्षमेवार्थं प्रतिपादयन्ति न सापेक्षमिति ब्रह्मशब्दात्त्रिविधपरिच्छेदशून्यवस्तुसिद्धिः । ननु भेदग्राहिप्रत्यक्षविरोधात्सङ्कोचित एव स न्याय इति चेत् । न । रजतादेरिव प्रत्यक्षादिदृष्टस्यापि प्रपञ्चस्य स्वाधिष्ठानाऽपरिच्छेदकत्वात् ।

किं च 'अथाऽतो ब्रह्मजिज्ञासे'ति यस्य ब्रह्मणो जिज्ञासा प्रतिज्ञाता तस्यैवेदं लक्षणम् । विचार्यत्वेनाऽप्रतिज्ञातस्य लक्षणाऽयोगात् । प्रतिज्ञा चाऽद्वयस्यैव । अनात्मविचारेणाऽधिकारिणां प्रयोजनाऽभावेन तत्प्रतिज्ञाऽयोगात् । न चोपासनासिद्ध्यर्थं तद्विचार इति वाच्यम् । ब्रह्मण उपासनाशेषत्वे प्रमाणाऽभावेन स्वरूपाऽसिद्धेः । वेदान्तानां विधिपरत्वात् । न चान्यद् ब्रह्मणि प्रमाणमस्तीति वक्ष्यते । न च भिन्नस्य ब्रह्मणो मानान्तराऽविरोधाद्देवताविग्रहवत्तत्सिद्धिरिति वाच्यम् । जीवाऽतिरिक्तस्य ज्ञानाऽधिकरणत्वव्याप्त्यनुगृहीतया 'नान्तःप्रज्ञं न बहिःप्रज्ञं केवलो निर्गुण' इति श्रुत्या विरोधेन सर्वज्ञासिद्धेः । मोक्षस्योपासनासाध्यत्वे स्वर्गादिवत्सातिशयत्वाद्यापत्तेः निरतिशयपुरुषार्थकामनागोचरो न स्यात् । अक्षय्यफलचातुर्मास्यान्मुमुक्षोरवैराग्यप्रसङ्गाच्च । न च जीवगतकर्तृत्वादिभ्रमनिवृत्त्यर्थं तटस्थब्रजिज्ञासेति वाच्यम् । अ-

न्यविषयज्ञानादन्यविषयभ्रमाऽनिवृत्तेः परोक्षज्ञानादपरोक्षभ्रमाऽनिवृत्तेश्च । न चाऽन्यात्मनि प्रत्यक्षं भवति । न च जीवस्यैव जिज्ञासा, तत्र ब्रह्मशब्दविरोधात् । जीवस्य प्रत्यक्षादिना निर्णीतत्वाच्च । तत्र लक्षणसूत्राऽयोगाच्च । तस्माज्जीवगताऽनर्थभ्रमनिवृत्त्यर्थं तदभिन्नमज्ञातं ब्रह्मैव जिज्ञासितव्यमिति तस्यैवेदं लक्षणम् ।

ननु किमिदं जगत्कारणत्वं, न तावत्तत्कर्तृत्वं, मिथ्यावस्तुनो ऽभावविलक्षणस्य ध्वंसवत्सकर्तृकत्वाऽयोगात् । तत्कर्तृत्वमपि न तावदुपादानाऽपरोक्षज्ञानचिकीर्षाकृतिमत्त्वम् । पूर्णानन्दे ब्रह्मणि स्वेष्टसाधनताज्ञानाऽभावेन चिकीर्षाप्रयत्नयोरसम्भवात् । सर्गाद्यचिकीर्षादिकं प्रति कर्तृत्वाऽसम्भवाच्च । न च तयोरनादित्वं, चिकीर्षामात्रे स्वेष्टसाधनताज्ञानस्य कृतिमात्रे चिकीर्षायाश्च कारणत्वेन तदयोगात् । कार्यसातत्यप्रसङ्गाच्च । ईश्वरचिकीर्षाया अप्रतिघातात् । नापि ज्ञानवत्त्वमात्रं तत् । उदासीनानामपि घटादिकर्तृत्वप्रसङ्गात् । न च स्वतन्त्रः कर्तेति वाच्यम् । ईशतन्त्राणां जीवानां तदभावापातात् । न च कारकान्तरप्रयोक्तृत्वमेव स्वातन्त्र्यं, चिकीर्षाप्रयत्नरूपप्रयोगस्य ब्रह्मण्यसम्भवात् । अन्यादृशस्य जीवे ऽप्यनिरूपणात् । नापि तत्र प्रमाणं, प्रत्यक्षसिद्धघटादिकर्तृत्वस्याऽब्रह्मलक्षणत्वात् । न च भूतकर्तरि किंचित्प्रमाणमस्ति । न च सर्गाद्यकालीनं कार्यमुपादानाऽपरोक्षज्ञानचिकीर्षादिमज्जन्यं कार्यत्वाद् घटवदिति तत्सिद्धिरिति वाच्यम् । चिकीर्षादिबाधस्य भूतकर्तर्युक्तत्वात् । घटादेश्चिकीर्षाद्यजन्यत्वाच्च । न चाऽन्वयव्यतिरेकाभ्यां तत्सिद्धिः । चेष्टादौ सति चिकीर्षादिव्यतिरेकेण घटादिव्यतिरेकाऽदर्शनात् । न च

चेष्टादिकं व्यापार इति वाच्यम् । तत्कारणत्वोपस्थितिं विनैव कारणतया ऽकारणतया वा गृहीतस्य तद्व्यापारत्वाऽयोगात् । अन्यथा घटे मनःसंयोगस्य कपालावयवादेरपि कारणत्वं किं न स्यात् । न चैवं दण्डादेरपि कारणकारणतैव स्यादिति वाच्यम् । कारणकारणेपि प्रवृत्तिसम्भवेन तदविरोधात् । तन्त्वादिसंयोगवत्तन्त्वादिरपि कारणमिति नैककारणतापत्तिः । दण्डादौ कारणत्वप्रसिद्धिरन्यथा ऽप्युपपद्यते । न च श्रुतिरेव जगत्कर्त्तरि प्रमाणं, तस्या मिथ्यारूपकर्त्तृत्वाद्यंशे ऽप्रमाणत्वात् । नाऽप्युपादानत्वं लक्षणम् । भावविलक्षणप्रपञ्चस्य ध्वंसवदुपादानाऽजन्यत्वात् । उपादानत्वमपि न कार्यसमवायित्वं, कालादावतिव्याप्तेः । सिद्धान्ते समवायाऽभावाच्च । नापि कार्यतादात्म्यवत् कारणमुपादानम् । अभेदे कार्यकारणताऽयोगाद् भेदे च तादात्म्याऽसम्भवात् । समानसत्ताकभेदाऽभेदस्य चाऽसम्भवात् । चैतन्यस्य द्रव्योपादानत्वे प्रमाणाऽभावाच्च । उभयसंमतदृष्टान्ताऽभावेनाऽनुमानादपि तदसिद्धेः ।

किं च उपादानत्वमात्रं लक्षणं चेद् मायादवातिव्याप्तेः । कर्तृत्वमात्रं चेत् अब्रह्मोपादानप्रपञ्चस्य ब्रह्मव्यतिरेकप्रसङ्गात् । ब्रह्मणि निषेधे ऽपि तस्याऽन्यत्र स्थित्युपपत्तेः । नाप्युभयकारणत्वं लक्षणं, तस्य लोकतो ऽप्रसिद्धत्वेन तदनुवादेन ब्रह्मप्रतिपादनाऽसम्भवादिति । मैवम् । उभयकारणत्वस्यैव लक्षणत्वात् । न तावत्कर्तृत्वाऽनिर्वचनम् । अदृष्टाऽद्वारककार्यानुकूलज्ञानवत्त्वं कर्त्तृत्वम् । कुलालादेरपि तादृशमेव कर्त्तृत्वम् । चिकीर्षादिकं तु शरीरमिव कार्यविशेषे कारणं न तु कर्त्तृत्वप्रयोजकम् । तस्य च

मृदादिज्ञानं परम्पराकारणतया कार्याऽनुकूलम् । अनुकूलत्वं च कारणतत्कारणसाधारणमिति कुलालादौ ब्रह्मणि चैकरूपमेव कर्त्तृत्वम् । उदासीनज्ञानं च नैवम् । न च तत्र प्रमाणाऽभावः । कार्यलिङ्गेनैव तत्सिद्धेः । उपादानत्वमपि न दुर्निरूपं, कार्यतादात्म्यवत्कारणस्य तत्त्वात् । तादात्म्यं च सत्तानवच्छेदकभेदवत्त्वमिति नोक्तदोषः । न च तत्र प्रमाणाऽभावः । मृद् घट इति सामानाधिकरण्येन तत्सिद्धेः । सन् घट इत्यनुभवात् सदप्युपादानम् । सच्च ब्रह्म । अनुमानमपि घटाऽतिरिक्तं कार्यं स्वोपादानजडातिरिक्तोपादानकं कार्यत्वाद् घटवदिति मृज्जन्यत्वबाधाच्चेतनोपादात्वसिद्धिः । अन्यथा सन् घटः स्फुरतीत्यनुभवाऽयोगात् । उपादानातिरिक्तसत्स्फुरणयोरसम्भवात् । अत एव नैतस्याऽऽभाससमत्वम् । 'तदैक्षत बहु स्यां प्रजायेये'त्यादिश्रुतिरपि जगदुपादानकर्त्रात्मकं ब्रह्म दर्शयतीति नाऽसम्भवः । न चोपादानस्य स्पर्शवत्त्वनियमाद् न ब्रह्मोपादानम् । अन्यथा कार्ये स्पर्शवत्त्वनियमो न स्यादिति वाच्यम् । कारणे अविद्यमानस्यापि अग्निसंयोगादिवाऽदृष्टविशेषात्कार्ये तस्योत्पत्तेरप्रयोजकत्वात् । आकाशादौ मनसि च कार्ये तदभावाच्च । आशादिकं च कार्यं द्रव्यत्वाद् विभक्तत्वाद् वा घटवदित्यनुमानाऽनुगृहीतश्रुत्यादिना कार्यमिति निश्चितम् । न च निरवयवस्य कार्यत्वाऽनुपपत्तिः । घटादिवत्तदुपपत्तेः । घटादेरपि कारणाऽतिरिक्ताऽवयवाऽभावात् । कारणस्य चाऽऽकाशादेरपि सत्त्वात् । न च तन्न्यूनपरिमाणवानेव तदवयव इति न ब्रह्माऽवयव इति वाच्यम् । दीर्घतन्त्वारब्धत्रितन्तुकपटादेरनवयवत्वापत्तेः । न च चेतनोपादानत्वे द्रव्यस्य चेतनत्वनियमः । कारणगुणानां कार्ये स्वसमानजातीयगुणा-

रम्भनियमादिति वाच्यम् । वैशेषिकाणां चित्रपटाऽवयवेषु परिणामवादिनां चाल्पदध्यारम्भकक्षीरे तदभावात्। सचैतन्याऽनुगमस्य प्रपञ्चे सत्त्वाच्च । चेतनाऽचेतनविभागस्तु अहङ्कारतदभावप्रयुक्तः। किं च विवर्तवादे न कोपि नियमः । न चैवं भावविलक्षणस्य सकर्तृकत्वाद्यनुपपत्तिः । सद्रूपभावविलक्षणस्यापि नञर्थाऽनुल्लिखितधीयोग्यतारूपभावत्वस्य सत्त्वात् । तस्यैव सोपादानताप्रयोजकत्वात्। सत्त्वरूपभावस्य ध्वंसेपि सत्त्वात्। सत्ताजातेः सत्त्वे तस्या अनिर्वचनीयप्रपञ्चे ऽप्यविरोधात्।

प्रपञ्चस्योपादानान्तराऽसम्भवादपि ब्रह्मैवोपादानम्। न तावत् परमाणव उपादानम्। असंयुक्तानां तेषामहेतुत्वात् । निरवयवे एकस्मिन्नसङ्कीर्णावच्छेदद्वयरहिते व्याप्यवृत्तिसंयोगासम्भवात्। संयोगश्च न व्याप्य वर्त्तते, तथा ऽननुभवात् । गगने कर्णशष्कुलीसंयोगस्य व्याप्यवृत्तावतिप्रङ्गात् । परमाणुसंयोगस्य व्याप्यवृत्तौ तत्कार्ये तदधिकपरिमाणाऽभावप्रसङ्गः । एकस्यापरेण बाह्याभ्यन्तरेण व्याप्तौ तावन्मात्रत्वप्रसङ्गात्। एवं त्र्यणुकत्रयमप्येकपरमाणुमात्रपरिमाणमिति सर्वमदृश्यं स्यात्। नापि परमाणुसद्भावे प्रमाणमस्ति । सर्गाद्यकालीनजडोपादानाऽनुमानस्य लाघवेनैकविषयतया ऽस्मदभिमताऽज्ञानविषयत्वात्। न च कार्याणामवयवसंयोगारब्धत्वनियमान्नैकस्मादुत्पत्तिरिति नित्याऽनेकाऽवयवसिद्धिरिति वाच्यम् । अनेकाऽवयवारभ्यस्याऽवयवसंयोगारब्धत्वेपि रूपादिवदेकारभ्यस्यान्यथापि सम्भवेन कारणबहुत्वमहत्त्ववत्कार्यप्रसङ्गः। अदृष्टादिनिमित्ताऽनुरोधेन कदा चित्त-

दुपपत्तेः। नित्याऽणुवादेऽपि तथैव वक्तव्यत्वात्। नाशोऽप्यदृष्टनाशादाद्यकार्यस्योपपद्यते । अन्यथाऽतीन्द्रियकार्यं न सिध्येत्। परमाणुभिरेव स्थूलोत्पत्तिसम्भवात्। न च महत्कार्यं कार्यद्रव्यारभ्यमिति नियमात्तत्सिद्धिः। कार्यमात्रइव तत्राप्यनियमेनैतस्य प्रक्रियामात्रत्वात् । तच्चाऽतीन्द्रियं पृथिव्यादिसूक्ष्मभूतमेकैकमनेकं वाऽस्तु, एकस्यापि पटस्य मध्ये पाटनेन विभागवद्भूतस्यापि तत्सम्भवेन पञ्चीकरणाद्युपपत्तेः। भूतेष्वाकाशः सम्भूत इत्येकत्वनिर्देशाल्लाघवादेकमेव न्याय्यम्।

नापि प्रकृतिरुपादानम्। स्वतन्त्रजडप्रकृतौ प्रमाणाऽभावात्। जडकार्यस्य श्रुत्यवगतमाययाऽप्युपपत्तेः। चेतनोपादानश्रुतिविरोधेन सांख्यागममात्रात्तदसिद्धेः। अत एवाऽस्मदभिमताऽज्ञानविलक्षणमायोपादानमिति निरस्तम्। मायाशब्दस्य विक्षेपशक्तिमतः साधारणभ्रमाऽनुकूलशक्तिमतो वाऽज्ञानस्य वाचकत्वात्। उपादानब्रह्मपरवेदान्तेषु 'मायां तु प्रकृति'मिति जडप्रकृतौ श्रूयमाणमायाशब्दस्याऽन्यार्थत्वाऽसम्भवात् । 'भूयश्चान्ते विश्वमायानिवृत्ति'रिति तस्या ज्ञाननिवर्त्यत्वश्रवणात् । न ह्यज्ञानाऽन्यस्य तत्सम्भवति । ऐन्द्रजालिकनिर्मितमिथ्यावस्तुगोचरमायाशब्दार्थत्वात् । अन्यत्रापि क्वचित्प्रयोगोऽस्ति चेद् गौण एव। सर्वस्मिन्नेतस्मिन्पक्षे घटादौ स्फुरति सन्निति प्रतीत्यनुपपत्तिः । चैतन्याऽतिरिक्तसत्स्फुरणपदार्थाऽभावात्। तस्य चाऽनुपादानत्वे घटादितादात्म्याऽयोगात्। अत एव सिद्धान्त्यभिमतमज्ञानमेवोपादानमस्तु, न चैतन्यमिति निरस्तम्। श्रुतिविरोधात् अनुभवविरोधाच्च । तस्मात्सिद्धं ब्रह्मण उभयविधकारणत्वमिति ।

तथा च भूतोपादानत्वे सति कर्तृत्वं ब्रह्मलक्षणम्। कुलालादावतिव्याप्तिपरिहाराय भूतेति। कर्तृत्वमात्रं च लक्षणे विवक्षितमिति भवति तेन विना ऽतिव्याप्तिः। मायायामतिव्याप्तिनिवृत्तये कर्त्रिति। न च माया कारणमेव न भवतीति वाच्यम्। अन्वयव्यतिरेकाभ्यां लोके ज्ञानस्योपादानत्वेन प्रपञ्चेऽपि तथात्वात्। न च लोके ऽप्यज्ञानं निमित्तमेवेति वाच्यम्। रजताद्युत्पत्तिस्थितिप्रयोजकस्य तस्योपादानत्वात्। कार्याऽनुगतजाड्यस्याऽज्ञानाऽन्यस्याऽभावेन कार्याऽनुगतकारणत्वलक्षणोपादानत्वस्य तस्मिन् सत्त्वात्। अज्ञानस्योपादानत्वे बाधकाभावादिति। 'मायां तु प्रकृतिं विद्या'दित्यादिश्रुतिसिद्धं मायोपादानत्वमित्येकं मतम्।

अपरं मतम्। ब्रह्मैवाऽद्वितीयमुपादानम्। अज्ञानं तु तच्छक्तितया तत्कारणतानिर्वाहकम्। 'देवात्मशक्ति'मित्यज्ञाने शक्तिशब्दप्रयोगात् शक्तेश्चाऽकारणत्वादिति। अस्मिन्मते तूपादानत्वमेव लक्षणम्। न च लोके कर्त्रुपादानयोर्भेदान्नैकस्य तत्सम्भव इति वाच्यम्। लोके ऽपि शरीराद्यवच्छिन्नचैतन्यस्य कर्तृत्वं मृदवच्छिन्नस्य तदुपादानत्वमिति तदभेदात्। न चैवमन्यथासिद्धत्वान्मृदादेरनुपादानत्वप्रसङ्गः। इष्टापत्तेरिति केचित्।

अपरे तदपि कार्ये ऽनुगमादन्वयव्यतिरेकाभ्याम् उपादानमित्याहुः।

नन्वेवं ब्रह्मणः सविकारत्वापत्तिरिति चेत्। न। कल्पितविकाराश्रयत्वस्येष्टत्वात्। न चैवं ब्रह्मणो निर्विकारत्वश्रुतिविरोधः। वास्तवविकाराऽभावेन तन्निषेधस्याऽनुपपत्तेः। न च प्रपञ्चे वास्तवत्वनिषेध इति वाच्यम्।

अस्थूलादिवाक्ये स्थूलादिप्रपञ्चस्यैव निषेधश्रवणात् । निर्धर्मकब्रह्मवादे वास्तवधर्मस्याऽत्यन्तमसत्त्वादिति वाच्यम् । निषेधवाक्यं हि ब्रह्मणि प्रपञ्चात्यन्ताभावं कालत्रये ऽपि प्रमापयति । तच्च कल्पितप्रपञ्चस्योपपन्नमेव । तस्य शुक्तिरजतादेरिव स्वात्यन्ताभावे तद्वति वा वृत्तिविरोधात् । प्रपञ्चस्य कल्पितत्वं च स्तृषितन्निषेधकश्रुतिसामर्थ्यात्सिद्धम् । अनुमानमपि अविद्याऽतिरिक्तदोषाऽजन्यं जडं मिथ्या दृश्यत्वात् शुक्तिरजतवत् । दृष्टान्तश्च साधितः । दृश्यत्वं च चैतन्यविषयत्वमिति न ब्रह्मणि व्यभिचारः । साध्यमपि प्रागेव दर्शितम् । न च बाध्यत्वमुपाधिः ।

तद्यदि स्वसमानाधिकरणात्यन्ताऽभावप्रतियोगित्वं तर्हि तदेव साध्यमिति क्व तस्य साध्यव्यापकता । लाघवतर्केण दृश्यमात्रे तन्निर्णयात् । साधनव्यापकश्च । परस्यैतादृशाऽप्रसिद्धेश्च । नापि स्वविशेष्यनिष्ठात्यन्ताभावप्रतियोगित्वं बाध्यत्वम् । परपक्षे सत्यस्यापि सम्भवेन तस्य मिथ्यात्वाऽप्रयोजकत्वात् । अत्यन्ताभावप्रतियोगित्वमात्रस्य तत्प्रयोजकत्वे सम्भवति तस्य गौरवेण तदप्रयोजकत्वाच्च ।

नापि ज्ञाननिवर्त्यत्वं बाध्यत्वम् । प्रपञ्चेपि तत्सत्त्वात् । अत एव न दोषजन्यत्वादिकमुपाधिः । दोषजन्यज्ञानविषयत्वम् उभयत्रास्ति न चोभयत्रेति नोपाधिः । नाप्यप्रयोजको हेतुः । लाघवेन दृश्यत्वमात्रे तद्व्याप्तिग्रहात् । अन्यथा दृश्यत्वाऽनुपपत्तेः । न हि ज्ञाने ज्ञेयस्य संबन्धं विना तद्विषयत्वं भवति । स्वरूपसंबन्धश्चाऽन्यत्र विस्तरेण निरस्तः ।

नापि धर्मिग्राहकप्रमाणं बाधः । प्रत्यक्षादिसिद्धस्य प्रपञ्चे ऽर्थक्रियायोग्यत्वरूपस्याऽनुमानेनाऽनिराकरणात् । अनुमानगोचरमिथ्यात्वाऽभावस्य प्रत्यक्षाद्यविषयत्वात् । तस्मादधिष्ठानचैतन्येनान्तःकरणतद्वृत्त्युपहितचैतन्यस्याऽभेददशायामेवाऽऽविद्यकतादात्म्येनाऽपरोक्षो विषयो भवतीति भवति दृश्यत्वं तत्र प्रयोजकम् । परोक्षे तु फलव्याप्त्यभावान्न ज्ञानज्ञेययोस्तादात्म्यमध्यस्तमपेक्षते किं त्वविद्यासंबन्धं विनैवातीतत्वादेरिव तत्र व्यवहारं घटयति । अचिन्त्यशक्तित्वात्तस्याः । परपक्षे ऽपि तत्र सम्बन्धाऽसम्भवात् । न हि विनष्टघटादीनां ज्ञानेन ध्वंसेन वा कश्चित्संबन्धो ऽस्ति । एवं मिथ्यात्वं विना कार्यत्वाऽनुपपत्तिः ।

न हि प्रागसत उत्पत्तिः सम्भवति । शशशृङ्गादेरपि तत्प्रसङ्गात् । उच्यते । प्राक् परपक्षे घटादिव्यवहारस्य शशशृङ्गादिव्यवहारादविशेषात् । नापि सत उत्पत्तिः । विरोधात् । प्रागुपलम्भप्रसङ्गाच्च । न च सूक्ष्मरूपेणाऽस्तीति वाच्यम् । परिमाणसूक्ष्मतायास्तदाश्रयद्रव्यस्य पूर्वस्मादपकर्षं विना ऽयोगात् । अस्ति स्वरूपापकर्षो ऽपीति चेत्, तर्हि द्रव्यान्तरमेव जायते इति स्थूलमसदेवेति किं सूक्ष्मरूपपरिकल्पनया । न चैकस्यैवावस्थाभेदमात्रं न धर्म्यन्तरमिति वाच्यम् । स्थूलाऽवस्थायाः प्रागसत्त्वे सा ऽसत्येव जायते इति किं धर्मिस्थितिकल्पनया । असत्या अवस्थाया उत्पत्त्यनुपपत्तेश्च । सत्त्वे च तत्स्थित्यवस्थातो न विशेषः । तस्मादुभयदोषपरिहारायोभयविलक्षणमेव प्राक्कार्यमिति कार्यत्वानुपपत्तिरपि मिथ्यात्वे प्रमाणम् । तस्मात्स्वाविद्यया ब्रह्म नामरूपप्रपञ्चाकारेण विवर्त्ततइति ।

केचित्तु ब्रह्मपरिणमते न विवर्त्ततइत्याहुः । तैरिदं वक्तव्यम् । अजडस्य ब्रह्मणो जडप्रपञ्चतादात्म्यं स्वसमानसत्ताकं न वेति । आद्ये प्रपञ्चकाले ऽजडं ब्रह्म न स्यात् । न हि ब्रह्म स्वसमानसत्ताकजडाऽभेदे सति तदभाववद्भवति । समानसत्ताकभावाऽभावयोरेकदा एकत्राऽसम्भवात् । ननु कार्यकारणभावनिर्वाहार्थं तयोस्तादात्म्यं स्वीकर्त्तव्यं, तच्च भेदाऽभेदात्मकमिति अन्यत्र विरोधेपि नाऽत्र विरोध इति चेत् । न । घटतदभावयोर्दृष्टस्वभावाऽनुरोधेन कार्यकारणभावोपपत्तौ दृष्टविपरीतस्वभावस्याऽनङ्गीकार्यत्वात् । पक्षादन्यत्रैवाऽयं नियम इति सर्वत्र वक्तुं शक्यतया ऽतिप्रसङ्गाच्च । न च सृष्टिश्रुतिप्रामाण्यायाऽत्र तथात्वं स्वीक्रियतइति वाच्यम् । तस्याः प्रमाणान्तरदृष्टसृष्ट्यनुवादेनाऽद्वैतब्रह्ममात्रपरत्वात् । निष्प्रयोजनत्वाच्च सृष्टेस्तत्र न श्रुतेस्तात्पर्यम् । अन्यार्थसृष्ट्यापि कर्मकाण्डादिप्रामाण्यसम्भवात् । द्वितीये च नाममात्रे विवादः । कल्पितेनापि दोषविशेषाऽजन्यतया स्वरूपविशेषाच्चाऽर्थक्रियोपपत्तेः । न च पूर्वक्षणे सत्त्वाभावे कारणमेव न भवतीति वाच्यम् । तदा विद्यमानत्वमात्रेण स्वरूपविशेषवतो हेतुत्वोपपत्तेः । तस्माद् ब्रह्मविषयसत्ताकत्वात् प्रपञ्चो विवर्त्त एव । कारणत्वं च ब्रह्मण उपलक्षणं काक इव गृहस्य । मिथ्याभूतमप्युपलक्षणं सम्बन्धाद्भवति ।

स्वरूपलक्षणं तु यत इति सूत्रपदप्रकृत्यंशसूचितः श्रुतिसिद्धः स यज्ज्ञानानन्दः । तथा हि । शास्त्रयोनित्वाऽधिकरणन्यायेन शास्त्रैकगम्यं तावद् ब्रह्म सिद्धम् । शास्त्रं च जगत्कारणब्रह्माऽनुवादेन 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादि सच्चिदानन्दाद्वयं ब्रह्म प्रतिपादयतीति भवति तत्स्वरूपं ब्रह्म ।

ननु कथं ब्रह्मणः शास्त्रयोनित्वं, चैतन्यस्य तस्याऽहमनुभवे प्रकाशमानत्वात् । न च ब्रह्मस्वरूपं न प्रकाशत इति वाच्यम् । चैतन्याऽतिरिक्तब्रह्मस्वरूपाऽभावात् । ननु सर्वज्ञत्वादिविशिष्टं ब्रह्म तद्विषय इति चेत् । न । श्रुतेस्तत्तात्पर्याऽभावात् । तस्य कार्यत्वादिना सिद्धत्वाच्चेति । उच्यते । यद्यप्यन्तःकरणसाद्यद्वैतं ब्रह्माऽहमनुभवे प्रकाशते तथापि यथावत्स्वरूपाऽवगमे तस्य शास्त्रं प्रमाणम् । न हि शास्त्रादृते सत्यज्ञानानन्दाऽद्वितीयस्य ब्रह्मणः सत्तानिश्चयरूपं ज्ञानं सम्भवति, मानाऽभावप्रयुक्ता ऽसत्त्वशङ्का यस्य येन व्यावर्त्यते तदेव हि तन्मानम् । सार्वज्ञ्यत्वादिविशिष्टब्रह्मसिद्धिरपि शास्त्रादेव न कार्यलिङ्गात् । तथा हि । न तावदुपादानाऽपरोक्षज्ञानचिकीर्षाकृतिमज्जन्यं कार्यमिति प्रतिज्ञया तत्सिध्यति । अनित्यज्ञानादीनां सर्गाद्यकाले बाधितत्वात् । नित्यत्वे च नित्यकृत्यैवोपपत्तेरप्रयोजकतया न ज्ञानादिसिद्धिः । न च युगपत्तेषां सिद्धेर्न नित्यकृत्या ज्ञानाद्यपह्नव इति वाच्यम् । कृतिमात्रस्याप्यनुमातुं शक्यत्वात् । युगपदुपस्थितावपि तर्काभावे न वस्तुनिर्णयः । अन्यथा व्यभिचारिलिङ्गादुपस्थितस्याप्यपरित्यागप्रसङ्गः । न च लाघवतर्केण कार्यस्य ज्ञानजन्यत्वं निश्चितमिति वाच्यम् । ज्ञानादीनां साक्षात्कारणत्वस्य प्राग् निरस्तत्वात् । अनुकूलत्वमपि कृतिनित्यत्वे नास्त्येव । न च दृष्टान्ते परम्परया ऽनुकूलत्व,मत्र तु तद्बाधात्करणत्वेनैव तदिति वाच्यम् । तदपुरुषार्थसाधने तदिच्छाजन्यत्वस्यापि बाधितत्वात् । अवाप्तकामस्येच्छासम्भवेन तन्निमित्तज्ञानस्याप्यसम्भवात् । वर्णितलाघवेन मनःसंयोगशरीरादेरपि कारणत्वप्रसङ्गेन तयोरपि नित्ययोः सिद्धिः स्यात् । देवशरीरवदस्मदाद्ययोग्यस्यापि अङ्कुरादिजनक-

शरीरस्य सम्भवात् । एवमादिदूषणे सत्युपस्थितिमात्रेण न धर्मिनिर्णयः । शरीरादिकं श्रुत्यादिबाधितमिति चेत् । तर्हि सैव तत्र प्रमाणम् । अनुमानस्य तया विना ऽशक्तेः । निर्गुणत्वश्रुतेश्च । एवमपि न सर्वज्ञत्वसिद्धिः । न च लाघवात्कर्त्रैकत्वसिद्धौ तत्सिद्धिरिति वाच्यम् । क्षित्यादिकर्तुरुपस्थितिपूर्वं तद्भेदाऽभावरूपैकत्वाऽसिद्धेः । कर्तृभेदः प्रसिद्ध इति चेत् । तस्य परमते तत्राऽनिषेध्यत्वात् । एकत्वसंख्यायाश्च नानात्वाऽविरोधात् । न चाऽनेन क्षितिकर्तृसिद्धौ क्षितिकर्त्ता चेतनः किञ्चिज्ज्ञो न भवति अशरीरत्वाद् घटवदिति सर्वज्ञत्वसिद्धिरिति वाच्यम् । कर्तृनानात्वे ऽप्यशरीरत्वोपपत्तेरप्यप्रयोजकत्वात् । न च कर्त्रैकत्वे किं चिन्मानमस्ति । नापि वेदवाक्यानि स्वार्थज्ञानपूर्वकाणि वाक्यत्वादिति सर्ववेदार्थज्ञानवत्सर्वज्ञत्वसिद्धिरिति वाच्यम् । शब्दज्ञानमात्रेण माणवकादिवद्वाक्यरचनोपपत्तेरप्रयोजकत्वात् । न चोद्दिश्य रचनायां वाक्यार्थज्ञानं कारणमिति वाच्यम् । परमात्मन उद्दिश्य रचनायां प्रमाणाऽभावात् । 'अस्य महतो भूतस्य निःश्वसित'मिति श्रुतिविरोधात् । अतो 'धाता यथापूर्वमकल्पय'दिति श्रुत्या सर्गाद्यकालीनाऽध्ययनमनुभूतक्रमसजातीयविषयं वेदाध्ययनत्वादिदानीन्तनवेदाऽध्ययनवदित्यनुमानाच्च वेदे क्रमादिरनादिरिति न तदीश्वरेच्छायत्तमिति अपौरुषेयो वेदः । भारताध्ययने च स्पष्टकर्त्रागमबाधान्नाऽनादित्वानुमानम् । वेदे तु पुरुषस्मरणस्यगतिः शास्त्रेषु प्रसिद्धा । तस्मान्नाऽनुमानात्सर्वज्ञत्वसिद्धिः ।

सिद्धान्ते शास्त्रयोनितया सर्वज्ञत्वमिच्छन्ति । शास्त्रं हि ऋग्वेदादिलक्षणं कार्यं सर्वज्ञानजननात्तच्छक्ति-

मत् । कार्यज्ञानाऽनुकूलशक्तिश्च तदुपादाने तादृशशक्तिपूर्विका तद्गता वा दीपादौ तु तथा दर्शनात् घटादावपि सा तथैव । घटादिविरहात्तदभावदशायां न तज्ज्ञानम् । अत एव शक्तिमात्रं तथेति केचित् ।

ब्रह्म च शास्त्रोपादानमिति सर्वज्ञानाऽनुकूलशक्तिमत् । तच्च सृज्यमानप्राणिकर्मणा स्वस्मिन् सर्वज्ञानवृत्तिमुत्पादयतीति सर्वज्ञमिति केचित् ।

अन्ये त्वनन्तशाखाप्रभेदभिन्नशास्त्रकर्तृत्वेन तद्विषयज्ञानं तावत्सिद्धम् । एतच्च ब्रह्मणो ऽनावृतज्ञान वेन भवतीत्यन्यदपि स्वसम्बन्धि तत् किमिति न जानीयादिति सर्वज्ञं ब्रह्मेति सम्भवतीति । अत एव 'तं त्वौपनिषद'मिति श्रुतिरुपनिषद्गम्यत्वमाह । न ह्यनुमानगम्यमुपनिषद्गम्यं, मानान्तराधिगते श्रुतेरतात्पर्यात् । तत्र श्रुतितात्पर्याभावे ऽप्यन्यतो ऽर्थस्य सिद्धत्वात् ।

नन्वेवं सिद्धस्य वस्तुनो लोके मानान्तरगम्यत्वदर्शनान्न वेदान्तानां ब्रह्मणि तात्पर्यं स्यात्, मानान्तरसंवादयोस्तदयोगात् । एवं सिद्धवस्तुज्ञानात्प्रयोजनाभावादपि न वेदान्ता ब्रह्मपराः । न ह्यध्ययनविध्युपात्तानां तेषां निष्प्रयोजनपर्यवसानं सम्भवति । न वा प्रवृत्तिनिवृत्ती विना प्रयोजनं, न च सिद्धवस्तुज्ञानात्प्रवृत्तिनिवृत्ती स्तः । तस्माद्वेदान्तास्तद्गतोपासनविधिपरा इति । न । किमेवमहंप्रत्ययविषये वेदान्तानां तात्पर्यं निषिध्यते किं वा ऽशनायाद्यतीते निरतिशयानन्दाद्यात्मनि । तत्राद्यो ऽस्मदिष्ट एव । द्वितीये तु किं तन्मानं येन वेदान्तानामनुवादकता । यदनुदये च मिथ्यार्थता । न हि प्रत्यक्षादिना तादृशं वस्तु सिध्यतीत्युक्तं, स्वरूपबोधस्तु विद्यमानो ऽप्यनाद्यविद्यावृतो न साधक इति न संवादकः । तस्मा-

त्सिद्धवस्तुविषयचक्षुरादिवत्सिद्धे वेदान्तप्रामाण्यमविरुद्धम् । ननु वयमङ्गीकृत्याऽलौकिकमात्मानं तत्र वेदान्तानाम् अप्रामाण्यं न ब्रूमः, किं तु वेदान्ता यदि सिद्धबोधकाः स्युस्तर्हि मानान्तरसापेक्षाः स्युः । घटो ऽस्तीति लौकिकवाक्यवदिति । न । लौकिकवाक्यस्य मानान्तरयोग्यार्थत्वात् पौरुषेयत्वाच्च । अन्यथा घटमानयेति वाक्ये मानान्तराऽपेक्षा न स्यात् । यत्तु प्रयोजनाऽभावात्तत्र न तात्पर्यमिति । तदपि न । रज्ज्वादिज्ञानादिवत्सर्पादिभ्रमनिवृत्त्या कल्पितसंसारनिवृत्त्या प्रयोजनस्य भाष्यादौ दर्शितत्वात् । एवं सिद्धे तात्पर्यमुपक्रमोपसंहारादिलिङ्गैः शास्त्रे दर्शितमिति नाऽत्रोच्यते ।

तात्पर्यं च शब्दस्य फलवत्प्रतीत्यनुकूलत्वं शब्दधर्मः । तच्चोपक्रमादिना यद्विषयं ज्ञानं फलवदिति निरूप्यते तन्निरूपितमिति शब्दशक्त्यादिना प्रतीयमानो ऽप्यर्थो न शब्दार्थः । तात्पर्यज्ञानं च न वाक्यार्थज्ञानहेतुः । एकस्मिन्वाक्ये यावदुपस्थिताकाङ्क्षितयोग्यपदार्थानां तेन विनापि अन्वयबोधसंभवेन तस्य हेतुत्वे प्रमाणाऽभावात् । क्वचिद्वाक्यार्थसंशयस्तु शब्दादावापातप्रतिपन्ने ऽर्थे तात्पर्यविपर्ययादिदोषादुपपद्यते । अनेकार्थेपि युगपत्तावत्पदार्थस्मृतौ प्रमाणाऽभावात् । यो ऽर्थः स्मर्यते तस्यैवाऽन्वयबोधः । क्वचित्सर्वपदार्थस्मृतौ योग्यतादिज्ञाने च सति भवत्येवाऽन्वयबोधः । अन्यतो ऽनवगतवाक्यार्थविशेषनिरूपिततात्पर्यस्य प्राग् ज्ञातुमशक्यत्वाच्च । वाक्यमात्रश्रवणे तात्पर्यलिङ्गोपस्थितिनियमाऽभावात् समभिव्याहारस्यान्यथापि दृष्टत्वादिति सिद्धं ब्रह्मणि वेदान्तानां प्रामाण्यम् ।

नन्वेवमपि कार्यपरा एव वेदान्ता ब्रह्म प्रमापयिष्यन्ति, न तु ब्रह्मपरा एव, लोके पदानां कार्यएव सङ्गतिग्रहणात् । प्रवर्तकवाक्यप्रयोगाधीना हि व्युत्पत्तिः । सिद्धप्रयोगात्तल्लिङ्गप्रवृत्त्यभावात् । प्रवृत्त्या च प्रवर्त्तकमेवाऽनुमीयते । तच्च कार्यमिति ज्ञानादेव प्रथमप्रवृत्तिदर्शनादिति तत्रैव शब्दसामर्थ्यवगम्यते । न च कार्योपस्थितिं विनैव प्रसिद्धपदसमभिव्याहाराद् भ्रमरादिपदसङ्गतिग्रहान्न कार्यं सर्वपदार्थ इति वाच्यम् । प्राथमिकव्युत्पत्त्यनुरोधेन तत्रापि कार्यस्य कल्पनात् । ननु पुत्रस्ते जात इति वाक्यार्थादपि सुखविकाशलिङ्गेन पुत्रजन्मज्ञानमनुमाय कार्यबोधं विनैव प्रथमव्युत्पत्तिर्भवतीति चेत् । न । तत्र हर्षहेतूनामन्येषामपि सम्भवेन पुत्रजन्मपरिशेषाऽसम्भवात् । न चैवमपि कार्यं न लिङर्थः, इष्टसाधनत्वज्ञानस्यैव प्रवर्तकत्वादिति वाच्यम् । अतीतवर्त्तमानेष्टसाधनत्वज्ञानेप्यप्रवृत्तेः कृतिसाध्येष्टसाधनज्ञानस्य प्रवर्तकत्वे लाघवात्कार्यज्ञानमेव प्रवर्त्तकम् । कार्यं च कृतीप्सितमिति नाऽतिप्रसङ्गः ।

नन्वेवमप्यन्वितमात्रे शक्तिरस्तु पदार्थमात्रे वा लाघवाद् न तु कार्यान्वितइति चेत् । न । श्रोतुः प्रयोजनसाधनप्रवृत्तिमुद्दिश्य प्रयुक्तवाक्यस्य प्रवर्त्तकपरत्वं विना ऽनुपपत्तेः । एवं श्रवणान्तरमपि मननादिविधानात्प्रवृत्त्यधीनमेव फलं न ज्ञानमात्राऽधीनमिति विधिपरं वेदान्तशास्त्रमिति । उच्यते । भवतु प्रवर्त्तकवाक्यात्प्रथमव्युत्पत्तिः, तथापि कार्यं न शब्दार्थः । तन्न तावत्कृतियोग्यत्वमात्रम्, अतिप्रसङ्गात् ।

यत्तु कृतीप्सितं कार्यमिति । तन्न । कृतीप्सितत्वं हि कृत्या साधयितुमिच्छाविषयत्वं, न च प्रवर्तकशाब्द-

प्रवृत्तौ तद् ज्ञातुं शक्यते, न च तदन्तरभाविनो ज्ञानात्पूर्वम् प्रवर्तकत्वं सम्भवति । कृत्या साधयितुमिच्छाविषयत्वयोग्यत्वमिति चेत् तर्हि योग्यताज्ञानात्प्रवृत्तिर्वक्तव्या, सा च न क्रियास्वरूपं, तज्ज्ञानेप्यप्रवृत्तेः । किं तु हितसाधनत्वमेवेति कृतिसाध्यत्वे सति श्रेयःसाधनत्वमेव प्रवर्त्तकमिति सिद्धमस्मन्मतम् ।

यत्तु कृतियोग्यताज्ञानमेव प्रवर्त्तकम् । न चाऽतिप्रसङ्गः । इष्टसाधनताज्ञानजन्यस्य प्रवर्तकत्वादिति । तर्हि अधिकं प्रविष्टं न तु तद्धानिः । न च वस्तुत इष्टसाधनज्ञानजन्यं प्रवर्त्तकज्ञानविषय इति वाच्यम् । अनतिप्रसक्तावच्छेदकज्ञानं विना प्रवृत्तिहेतुत्वाऽवधारणाऽयोगात् । किं चेदं कृतीप्सितम् इष्टसाधनत्वादित्यनुमानाऽसम्भवात्कृतिसाध्येष्टसाधनत्वादिति वक्तव्यमित्यावश्यकत्वात्तदेव प्रवर्त्तकमस्तु, नाऽन्यत् । अशाब्दप्रवृत्तिपूर्वं तदुपस्थितेरावश्यकत्वेन प्रवृत्तिकारणताग्रहस्य तद्विहाय कल्प्यज्ञानान्तरविषयत्वाऽयोगात् । इति कार्यं न लिङर्थः ।

अत एव भावना न लिङर्थः । अशाब्दप्रवृत्तौ तद्हेतुत्वेन प्रवृत्त्या तदनुपस्थितेः । किं तु प्रवर्त्तकाभिधायिलिङादिकृतिसाध्यत्वे सति श्रेयःसाधनत्वमेवाऽभिधत्ते । साध्यत्वसाधनत्वे कथमेकस्य शब्दः प्रतिपादयेत्, विरोधादिति चेत् । न तावद्वस्तुविरोधः । कृतिफलनिरूपितयोरेकत्राऽविरोधात् । अत एव न प्रतीतिविरोधोऽपि । ननु तत्साध्यत्वं तत्काले ऽसिद्धसत्ताकस्यैव धर्मः, प्रतीयते च तथा । न च तदा तस्मिन्साधनत्वमस्ति, असिद्धे तदयोगात् । न वा तथा प्रतीयते । अतः कथं न विरोधः । न च कृतिसाध्यफलसाधनत्वयोरेककालावच्छेदेनाऽप्रता-

तेन विरोध इति वाच्यम् । विशिष्टबोधकयोः कृतिसाध्यश्रेयःसाधनपदयोः समभिव्याहारेण तदभेदबोधकेनैककालावच्छेदप्रतीतेरिति चेत् । न । अत्र शब्दद्वयाभावात् । एक एव हि लिङ्गादिशब्दः । स च कृतिसाध्यत्वसमानाधिकरणं श्रेयःसानत्वमाह । तच्चैकत्राऽबाधितम् । अयमेव हि वाजपेयाद्विशेषः । तत्र हि गुणविधिपक्षे शब्दद्वयमस्तीति वैरूप्यात्तत्परित्यज्यते ।

अथ वा सर्वत्र प्रवर्त्तकमेतदेवास्तां, लिङर्थस्तु हितसाधनत्वमेव, न तु कृतिसाध्यत्वांशोऽपि । तस्याऽन्यलभ्यत्वेनाऽशब्दार्थत्वात् आख्यातान्तधातुसामर्थ्यात्तत्सिद्धेः । अथ वा श्रेयःसाधनतया ऽवगते हि आनयनादौ विद्यमानप्रागभावप्रतियोगिनि स्वसामर्थ्यानुसारेण भवति कृतिसाध्यत्वज्ञानम् । न च कृतिसाध्यत्वज्ञानं प्रागभावज्ञानं वा शाब्दप्रवृत्ताविवाऽन्यतो न भवति । न च कृतिसाध्यताज्ञानात् हितसाधनत्वज्ञानं भवतीति वैपरीत्यम् । अहितसाधनानामपि क्रियाणां सत्त्वात् । आप्तस्यापि स्वार्थमात्रोद्देशेन प्रवृत्त्युपदेशोपपत्तेः । धात्वर्थस्य धात्ववगतस्वरूपमात्रेणैव साध्यत्वज्ञानसम्भवाच्च । निषेधे नञर्थाऽसिद्धिप्रसङ्गाच्च । तस्माद्धितसाधनत्वमेव लिङर्थः । न च यागादेः क्षणिकत्वान्न समयान्तरभाविश्रेयःसाधनत्वमिति वैदिकवाक्यमप्रमाणं स्यादिति वाच्यम् । कार्याऽनुकूलशक्तिमत्त्वलक्षणसाधनत्वस्य वेदबोध्यस्य मानान्तरेणाऽबाधितत्वात् । नारास्थिशुचित्वाऽनुमानवत्तदभावानुमानस्याऽऽगमेनैव बाधितत्वात् । न चैवं विनष्टादपि दण्डात्तदितरकारणसमवधाने घटोत्पत्तिप्रसङ्गः । तद्ग्राहकाऽन्वयव्यतिरेकाद्यभावेन तदसम्भवात् । अत्र च श्रुतिर्मानम् ।

अथ वा प्रवर्त्तकज्ञानविषयसाधनत्वं श्रुत्यर्थः। तच्चाऽनुकूलत्वमात्रं, नाऽव्यवहितपूर्ववर्त्तिस्वरूपम् । तस्य प्रवृत्तावनुपयोगात् । समयान्तरभाविस्मृत्याद्यर्थमपि पुण्यवस्त्वनुभवादौ प्रवृत्तिदृष्टेः । तच्च यागे न केनापि बाध्यत इति न किं चिदनुपपन्नम् । कार्यमपि तदेवोपदिश्यतां, न त्वकृतिसाध्यमपूर्वम् । यस्मिन् सत्यग्रिमक्षणे पुरुषव्यापारमन्तरेण काम्यं सिध्यत्येव तस्यैव कामिकार्यत्वात् । एवं च सति प्राथमिकव्युत्पत्तिरनुगृहीता भवतीति न किं चित् त्वदभिमतकार्ये प्रमाणम् ।

अस्तु वा यत् किञ्चित्प्रवर्त्तकं, तथापि न प्रवर्तकाऽन्विते शक्तिः । गौरवात् । किं तु लाघवादन्वितमात्रे । प्रवर्त्तकज्ञानोद्देशस्तु लिङादिपदसमभिव्याहारे निमित्तं, न तु पदमात्रप्रयोगे निमित्तम् । संसर्गमात्रोद्देशेनापि लोके बहुप्रयोगदर्शनात् । अपि च लोके भवत्येव पुत्रस्ते जात इत्यादिवाक्यादपि प्रथमव्युत्पत्तिः । तत्पदाङ्कितपटोपायनप्रदर्शनादिना पुत्रजन्मपरिशेषसम्भवात् । तस्मादन्विते एव शक्तिः। यद्यपि पदार्थमात्रे शक्त्यभ्युपगमेपि नाऽखण्डार्थवादिनामस्माकं का चित् क्षतिः, तथाप्येकपदप्रयोगेऽप्यन्वयविशेषस्य नियमेन जिज्ञासादर्शनात्तस्याश्चाऽन्वयसामान्यज्ञानपूर्वकत्वात् । तज्ज्ञानस्य च तदा शब्दादन्यतोऽसम्भवाच्छब्द एवाऽन्वितमभिधत्तइति अन्विताभिधानम् । चक्षुषा परिदृष्टफलविशेषे लिङ्गेन सामान्यतो रसोपस्थितौ तद्विशेषजिज्ञासेवाऽत्रापि सामान्यतो भवतीति चेत् । न । तत्र नियमेन तदभावात् । अन्यथा वैशेषिकमते इव व्याप्तिप्रतिसन्धानदशायामेव शब्दार्थसंसर्गः प्रतीयते इति शब्दोऽप्यप्रमाणं स्यात् ।

केचित्तु पदानि शक्त्या स्वस्वपदार्थानभिधाय संभूय शक्त्या लक्षणया वा ऽन्वितमपि बोधयन्ति न तु पदाभिहिताः पदार्थाः संसर्गबोधका इति अन्विताभिधानमाहुः ।

उभयथापि कार्यं न सर्वशब्दार्थः । किं चैवं विधिपरात् शब्दात् कीदृशं ब्रह्म सिद्ध्यति । न तावदद्वैतं, तत्र माना ऽभावात् । शब्दस्य कार्यपरत्वात् एकस्य वाक्यस्योभयपरत्वा ऽयोगात् । न च देवता ऽधिकरणन्यायात्तत्सिद्धिः । भेदप्रमाणविरोधेन तदसम्भवात् । न च जीवा ऽतिरिक्तब्रह्मसिद्धिः । 'तत्त्वमसि नान्योतोऽस्ति द्रष्टा सएष इह प्रविष्ट आ नखाग्रेभ्य' इत्याद्यभेदनिर्णीततात्पर्यकश्रुतिविरोधात् । न वा तत्प्रतिपादने प्रयोजनं पश्यामः । न वा तदुपासनतः फलं, तस्या अविद्यानिवृत्तौ ब्रह्मभावे वा अनुपयोगात् । एतच्च भाष्यादौ स्पष्टम् ।

यत्तु विधीयमानज्ञानाद् मोक्षो भविष्यति, ज्ञानस्या ऽविद्यानिवृत्त्यादौ समर्थत्वादिति । तन्न । प्रमाणा ऽभावेना ऽभेदज्ञानस्यैवा ऽसम्भवात् । ज्ञानस्या ऽविधेयत्वाच्च । न तावच्छाब्दज्ञानं विधेयं, तस्या ऽग्निहोत्रादिवाक्यार्थज्ञानवदविधेयत्वात् । नापि वाक्यार्थज्ञाना ऽवृत्तितया ऽभ्यासो विधेयः । मोक्षस्य नित्यसिद्धस्य तदसाध्यत्वात् । नापि साक्षात्कारस्तत्फलम् । अभ्यासस्या ऽप्रमाणत्वेना ऽतत्फलत्वात् । नाप्यभ्याससहितान्मनसः साक्षात्कारः । मनसोऽप्यप्रमाणत्वत् । दृष्टफलत्वादपि न तद्विधेयम् । न च नियमविधिः । नियमा ऽपूर्वस्यापि साक्षात्कारः फलं वक्तव्यम्, अन्यस्या ऽसम्भवात् । ततश्च विधेरपि प्रमीयमाणब्रह्मशेषतया ऽस्मदिष्टमेव चेष्टितम् । नापि साक्षात्कारो विधेयः ।

तस्य श्रवणादिविधिफलतया स्वर्गादिवदविधेयत्वात् । न च साक्षात्कारएव विधिरस्तु, न श्रवणादिविधिरिति वाच्यम् । साक्षात्कारो हि श्रवणादिद्वारैवाऽनुष्ठेयो न स्वतः । प्रमाणव्यापारादृते तस्य पुरुषेण कर्त्तुमशक्यत्वात् । ततश्च श्रवणादिप्रवृत्त्यैवाऽत्र साक्षात्कारसम्भवेन तद्विधेयम् । किं च प्रमाणज्ञानमात्रं न विधेयं, तस्येच्छासाध्यत्वाभावात् । इच्छां विना ऽप्यनिष्टज्ञानदर्शनात् । विध्यधीनपुरुषेच्छाजन्यप्रयत्नसाध्यस्यैव विधेयत्वात् । किं च यद्विषयं ज्ञानं विधेयमिष्यते तदप्यनिच्छतोऽपि शब्दादिना जायतइति न विधेयम् । कथं तर्हि आज्यावेक्षणादिविधिरिति । न । ज्ञानाऽनुकूलाऽवेक्षणक्रियाया एव तत्रापि विधेयत्वात् । तत्रेच्छाजन्यत्वस्याऽवश्यं वक्तव्यत्वात् । आज्यज्ञानस्याऽन्यत्र क्लृप्तकारणादेवोत्पत्तेरिच्छाजन्यत्वाभावात् । न चैवं यागादावपि सामग्र्येव विधेया, न क्रियेति वाच्यम् । क्रियामात्रस्याऽविधेयत्वे विधितः सामग्रीसम्पादनस्यैवाऽयोगात् । ततश्च यागपदे लक्षणा न न्याय्येति । श्रूयमाणक्रियां परित्यज्याऽश्रुतक्रियाविषयत्वे प्रमाणाऽभावात् श्रुत्यनुरोधेन याग एव विधेयः । तस्मादाज्य ज्ञानं न तद्विधेयम् । या विधेया योषिदग्न्यादिदृष्टिर्न तद् ज्ञानं, तस्यामग्निदृष्टेः क्लृप्तकारणाजन्यतया विध्यधीनेच्छायास्तद्धेतुत्वात् । मननादिविधानमपि परमपुरुषार्थसाक्षात्कारात्प्रागेवेति न तद्बलादपि विधेः प्राधान्यम् । एवं ज्ञानविध्यसम्भवात् अन्यविधिपरत्वाऽनुपपत्तेश्च न विधिनिष्ठं वेदान्तप्रामाण्यं, किं तु स्वप्रधानाखण्डसच्चिदानन्दब्रह्मनिष्ठमिति । तदुक्तं सूत्रकृता 'तत्तु समन्वया'दिति ।

अन्वयस्य सम्यक्त्वं च एकप्रातिपदिकार्थे वेदान्तानां

पर्यवसानमेव । तस्यैवोपक्रमादिना ऽबाधितत्वनिश्चयात् । ननु कथमेकप्रातिपदिकार्थत्वं, तथात्वे सत्यज्ञानादिपदानां पर्यायतापत्तेः । ब्रह्मण एकप्रातिपदिकार्थत्वे पदान्तरवैयर्थ्यप्रसङ्गश्च । सत्यादिवाक्यं मुख्यया वृत्त्या अखण्डार्थं प्रतिपादयति लक्षणा वा । नाद्यः । वाक्यस्य नीलमुत्पलमित्यस्येव तदयोगात् । न द्वितीयः । लक्षणाबीजाऽनुपपत्त्यभावात् । न हि तया विना लक्षणा भवति । तस्मात्सत्यादिवाक्यं विशिष्टार्थं वाक्यत्वाद् ज्योतिष्टोमादिवाक्यवदिति । न च प्रकृष्टप्रकाशश्चन्द्र इत्यादिवाक्ये व्यभिचारः । तत्रापि प्रतीयमानवैशिष्ट्यस्यैव वाक्यार्थत्वादिति ।

उच्यते । अस्ति तावल्लोकेऽस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति प्रश्नः । स च चन्द्रप्रातिपदिकार्थनिष्ठ एव । तदन्यस्य तत्र प्रतीत्ययोगात् । ननु चन्द्राऽसाधारणधर्मविषय एवायं प्रश्न इति चेत् । यदि प्रकाशविशेष एवाऽसाधारणधर्मः । स तर्हि प्रत्यक्ष एव ज्ञायते इति तद्विषयः प्रश्नो नोपपद्यते । अन्यस्तु न समाधानेपि प्रतीयते । न च प्रकृष्टप्रकाशस्य चन्द्रधर्मत्वं न जानातीति वाच्यम् । तर्हि चन्द्राऽज्ञानादेव तदिति तत्प्रश्न एव । ननु चन्द्रोऽपि प्रत्यक्ष इति चेत् । न । प्रकृष्टप्रकाशश्चन्द्रो न वेति संशयदर्शनेन तस्मिन्सत्तानिश्चयरूपाऽनुभवाऽभावात् । अन्यथा ऽधिकरणे तद्वृत्तितया धर्मद्वयमेव, अनुभूयमाने सामानाधिकरण्यसंशयाऽयोगात् । अत एवाऽचन्द्रव्यावृत्तिवैशिष्ट्यं बुभुत्सितमिति निरस्तम् । चन्द्रो ऽचन्द्राद् व्यावृत्त इति निश्चितत्वात् । व्यक्तिविशेषे तदज्ञानं तु तदज्ञानादेव । अत एव चन्द्रपदावाच्यत्वविषयः प्रश्न इति न चन्द्रपद-

वाच्यश्चन्द्र इति चन्द्रत्वे तद्विशिष्टे च तस्य निश्चितत्वात् । तच्चन्द्रत्वं कुत्रास्ति इति न वेत्तीति चेत् तर्हि चन्द्रप्रातिपदिकार्थमेव न जानातीति स एव प्रश्नविषयः । चन्द्रश्चन्द्रपदवाच्य इति जानामि तत्स्वरूपमेव न जानामि तत्किमिति प्रश्नदर्शनाच्च । तस्मात्प्रातिपदिकार्थमात्रविषय एव प्रश्नः ।

उत्तरमपि प्रकृष्टप्रकाशश्चन्द्र इति तत्समानविषयमित्यखण्डार्थं, वाच्यत्वादेरप्रतीतेरपृष्टविषयत्वकल्पनाऽयोगाच्च । ननूत्तरस्य प्रश्नसमानार्थत्वमप्रयोजकं, यः कश्चिच्चन्द्र इत्यस्याप्युत्तरत्वप्रसङ्गात् । किं तु प्रश्नबीजसंशयविरोधित्वं, तच्चाऽसाधारणधर्मवैशिष्ट्यज्ञानं विना न सम्भवतीति धर्मवैशिष्ट्यमुत्तरार्थ इति चेत् । किमसाधारणधर्मज्ञानं साक्षात्संशयनिवर्तकमुत चन्द्रपदार्थज्ञानस्याऽर्थसत्तानिश्चयत्वप्रयोजकं सत्परम्परया । नाद्यः । भिन्नविषयस्य तदयोगात् । द्वितीये तु यद्विषयकं सद्वाक्यजन्यं ज्ञानं संशयनिवर्त्तकं स वाक्यार्थः । प्रकृष्टप्रकाशवैशिष्ट्यं तु बहिर्भूतमपि तस्य सत्तानिश्चयत्वं तर्कविधया संपादयति । तथा हि । प्रकृष्टप्रकाशपदाभ्यां लक्षणया व्यक्तिविशेष उपस्थाप्यते । लक्षणा च तत्संबन्धितया ज्ञातएवेति नियतव्यक्त्युपस्थितिः । ततश्च गुणवैशिष्ट्यस्य तात्पर्याऽगोचरत्वे ऽपि प्रातिपदिकार्थमात्रज्ञानस्य संशयनिवृत्तिप्रयोजकं सत्तानिश्चयत्वं लभ्यते एवेति तद्वाक्यमखण्डाथपरम् । नन्वेवमपि चन्द्रत्ववैशिष्ट्यं वाक्यार्थो न व्यक्तिमात्रमिति चेत् । सत्यम् । एवमप्येकप्रातिपदिकार्थमात्रस्य वाक्यत्वाऽनपायात् । सत्यादिवाक्ये तु ब्रह्माऽनन्तपदसमभिव्याहारबलादेकव्यक्तिमात्रं वाक्यार्थः सिद्ध्यतीति न

कोऽपि दोषः । न च सर्वत्रवैशिष्ट्यस्यैव बुभुत्सितत्वेन न व्यक्तिमात्रं वाक्यार्थ इति वाच्यम् । अज्ञातमात्रस्यैव बुभुत्सितत्वात् । अज्ञानं च वैशिष्ट्यादन्यत्रापि, संबन्धिद्वये ऽप्यज्ञानाऽभावे वैशिष्ट्ये तदयोगात् । तथा च वैशिष्ट्याऽज्ञानसंशयवादिना तत्सम्बन्धिन्यपि तदभ्युपेयमिति धर्मवद् धर्मिण्यपि तदुपपद्यते । प्रकाशमाने चाऽप्रकाशमानत्वं नानुपपन्नं, चैतन्यं नास्तीति व्यवहाराऽदर्शनेन तद्योग्यतारूपावरणाऽभावात् । प्रकाशमाने तस्मिन्नानन्दादिनिरूपितस्य नास्तीति व्यवहारस्य दर्शनेन तद्योग्यतारूपावरणनिरूपकतया ऽऽनन्दाद्यात्मनस्तस्यैवाऽज्ञानेनोपपत्तेः । लोकेऽपि जातेरिव व्यक्तेरपि स्वरूपविशेषस्तदधिकरणतायोग्योऽस्तीति तदज्ञानात्तद्गोचर एव प्रश्नः । उत्तरं च अविद्यात्मकजातेःस्वतो विशेषाऽभावेन व्यक्तेरेव विशिष्टस्वरूपत्वाच्च। तस्मात्सत्यादिवाक्यमखण्डार्थं लक्षणवाक्यत्वात् प्रकृष्टप्रकाशादिवाक्यवत् । वाक्यत्वाऽनुमानं च व्यभिचार्यप्रयोजकम् । न चैवं पर्यायतापत्तिः । वाच्यभेदसत्त्वात् ।

तथाहि । ज्ञानादिपदं वृत्तिविशेषविशिष्टं तदुपहितं वा स्वरूपमवधभित्ते । लौकिकव्युत्पत्तेर्विशिष्याऽज्ञानेऽपि तद्विषयत्वात् । सत्यशब्दो बाधाऽयोग्यत्वविशिष्टं स्वरूपमाह । एकशब्दोऽपि सजातीयाऽभाववाचकः । ब्रह्मात्मशब्दावपि सर्वात्मत्वविशिष्टं तदुपहितं स्वरूपं वा आहतुः । त्वमहंशब्दावपि अहङ्कारविशिष्टं, तच्छब्दोऽप्युपस्थितिविशिष्टम्, इति न पदानां पर्यायत्वम् । नन्वेवं संसृष्टार्थत्वप्रसङ्गः । न च विशिष्टोपस्थितावपि योग्यतादिमहिम्ना ब्रह्माभेदमात्रं शब्दः प्रतिपादयतीति वाच्यम् । विशिष्टयोः स्वसमानसत्ताकभेदवत्त्वेनाऽभेदा-

ऽयोगात् । शब्दोपस्थितस्य वाक्यार्थान्वयित्वनियमात् । न हि पदार्थैकदेशस्य लोके ऽन्वयः प्रसिद्धः । ततश्च तत्त्वावेदकश्रुतिजन्यज्ञानविषयतया तस्यापि परमार्थत्वान्नाऽद्वैतं वस्तु न वा ऽखण्डार्थतेति चेत् । न । ज्ञानादिपदेन पूर्णस्वरूपलक्षणया ब्रह्मप्रातिपदिकार्थमात्रस्यैव प्रतिपादनात् । न चैवं गङ्गापदलक्ष्यस्याऽगङ्गात्ववद् ज्ञानादिपदलक्षणस्य ब्रह्मणो ज्ञानाद्यन्यत्वापत्तिः । ज्ञानादिपदवाच्यस्याऽज्ञानात्मकवृत्तिविशेषादेः परित्यागेपि पूर्णज्ञानादेरेव लक्ष्यत्वात् । न चैवं स्वरूपमात्रमेव ज्ञानादिपदवाच्यं भवतीति वाच्यम् । सर्वेषां पदानां पर्यायतापत्तेः । एकैकस्मात्सत्यज्ञानानन्दाऽद्वितीयब्रह्मसत्तानिश्चयरूपज्ञानप्रसङ्गात् । तस्य पदस्य पदान्तरेणाऽननुभावकत्वप्रसङ्गाच्च । न च सर्वपदलक्षणापक्षेपि पदान्तरं व्यर्थं पदान्तरं विना तदर्थात्माऽभेदसत्तानिश्चयाऽसम्भवात् । लक्षणाऽनवताराच्च । ननु तत्तदुपहितं स्वरूपं वाच्यं चेत्किमिति लक्षणा, स्वरूपमात्रस्य वाच्यत्वात्, लक्षणायां च तत्त्यागात् कथं ब्रह्म तदात्मकमिति चेत् । यद्यप्युपहितं स्वरूपमेव वाच्यं तथापि तत्तदुपहितत्वविशिष्टमेवेति उपहितद्वयं स्वसमानसत्ताकभेदवत् । ततश्च तयोर्नाऽभेदयोग्यता । ज्ञानानन्दशब्दाभ्यामनुभूयमानयोः समानसत्ताकभेदाऽनुभवात् । ततो ज्ञानानन्दादिपदैः पूर्णचैतन्यानन्दात्मकं वस्तु लक्षणीयमिति सर्वपदलक्षणा, ब्रह्मणो ज्ञानादिस्वरूपत्वं च । नन्वेवमपि शक्यसंबन्धितया ज्ञाते लक्षणा स्यात्, तज्ज्ञानं च ब्रह्मणः शब्दादेव वक्तव्यं, सोपि लाक्षणिकश्चेत् लाक्षणिकाऽनवस्थेति गुरोर्मूकतापत्तिरिति चेत् । न । ब्रह्मसत्याद्यात्मकमपि सत्यादिपदस-

मुदायवाक्यार्थत्वान्न कस्यापि पदस्य वाच्यम् । अतोऽसत्यादिस्वभावयत्किञ्चिद्विशिष्टमेव ब्रह्म तत्तत्पदवाच्यं, विशिष्टं च परोपाधिना भिन्नमेव । वाक्यस्यैकप्रातिपदिकार्थे तात्पर्यमित्येवमादिज्ञानतः सत्यादिपदलक्ष्यस्य ज्ञानादिपदेनाऽभिधानेपि विचारेण तत्तत्पदवाच्यसंबन्धितया ऽवगतज्ञानादिव्यक्तेरेव लक्षणयोपस्थितिरिति नातः परमाशङ्केत्यनवस्थाऽभावादिति सिद्धं सत्यादिवाक्यानां लक्षणया ऽखण्डब्रह्मप्रतिपादकत्वम् ।

एवं तत्त्वमादिवाक्यार्थोप्येकप्रातिपदिकार्थः । तद्भेदस्य मिथ्यात्वात् । जीवो ब्रह्मणि स्वसत्ताविरोध्यत्यन्ताभावप्रतियोगिभेदप्रतियोगी ब्रह्मनिष्ठात्यन्ताभावप्रतियोगिभेदप्रतियोगी वा पदार्थत्वाद् ब्रह्मवत् । ब्रह्मनिष्ठाऽनौपाधिकभेदप्रतियोगी न भवति जडाऽन्यत्वाद् ब्रह्मवत् । जीवो ब्रह्मैव तदविलक्षणत्वात् तद्वत् । अत्र च तत्पदं प्रकरणोपस्थितं विशिष्टं ब्रह्मैवाऽभिधत्ते इति तत्रापि लक्षणा । यद्यपि तात्पर्यं शुद्धे एव गृह्यते तथापि कृत्स्नप्रकरणाऽवगमाऽधीनमिति प्रस्तोष्यमाणमेव न तु प्रस्तुतम् । तत्त्वमसिवाक्यस्यापि पदान्तर्गतत्वात् । सोऽयमिति वाक्यं चाऽस्याऽखण्डार्थत्वे उदाहरणं, तच्च मूलग्रन्थेषूपपादितम् ।

केचित्तु सर्वपदानामर्थवत्त्वार्थं लक्षणापरिहारार्थं च भिन्ना भिन्नब्रह्म वाक्यार्थ इत्याहुः । तन्न । कल्पितभेदस्य तत्त्वावेदकश्रुतिप्रतिपाद्यत्वाऽयोगात् । स्वात्यन्ताभावरूपाऽभेदसमानाधिकरणभेदस्य मुक्तावविद्यमानस्य शुक्तिरजताद्यविशेषाद् ब्रह्मविलक्षणसत्ताविशिष्टत्वात् । ब्रह्म च स्वसमानाधिकरणाऽत्यन्ताभावप्रतियोग्यन्यदेव ।

शुक्तिरजतादेरर्थक्रिया नास्तीति चेत् । न । ज्ञानावच्छेदकत्वेन प्रयोजकसत्तया ऽर्थक्रियायास्तत्रापि सत्त्वात् । अर्थक्रियाविशेषसत्त्वेपि सत्त्वांशे शुक्तिरजता विशेषात् । न चार्थक्रियायोग्यत्वमेव सत्त्वं, देहात्मतादात्म्यवद् बाधयोग्यस्यापि तत्सम्भवेन तस्य परिभाषामात्रत्वात् । परमते परमाण्वादेरसत्त्वप्रसङ्गाच्च । नाप्यर्थक्रियायां सत्त्वं व्यापकं, पूर्वक्षणे विद्यमानत्वरूपस्य तद्व्यापकत्वेपि तदा बाधितत्वरूपस्य तस्याऽप्रयोजकत्वात् । भेदो मिथ्या दृश्यत्वाद् भेदत्वादित्यादिलिङ्गैश्च तस्य मिथ्यात्वं सिद्धमिति न तस्य तत्त्वावेदकप्रमाणगम्यत्वम् । किं चैवं मुक्तावपि भिन्नं ब्रह्म स्यात् । तद्रूपस्य प्रमाणसिद्धत्वात् । रूपान्तरे ब्रह्मणि प्रमाणाऽभावात् । न च संसारदशायामेव भिन्नाऽभिन्नमिति वाच्यम् । कालभेदस्याऽश्रुतत्वात् । न च 'ब्रह्म वेद ब्रह्मैव भवती'ति शास्त्रान्तरान्मुक्तिसमये ऽत्यन्ताऽभिन्नमेव तदिति वाच्यम् । तस्य वाक्यस्य त्वन्मते प्रतीयमानार्थाऽयोगात् । तथा हि । तत्र ब्रह्मवेदेति न शाब्दं ज्ञान तदभ्यासो वा वक्तुं शक्यते । इदानीं तयोः सत्त्वेपि फलाऽदर्शनात् । नापि ब्रह्मसाक्षात्कारात्तत्सिद्धिः । भेदाऽभेदगोचरसाक्षात्कारा स्वगोचरभेदनिवृत्त्ययोगेन तेनात्यन्ताभेदाऽसम्भवात् । न च साक्षात्कारस्याऽत्यन्ताभेदो विषय इति वाच्यम् । भेदाऽभेदनिवृत्तेः पूर्वमसतस्तस्याऽपरोक्षत्वाऽयोगात् । सत्त्वे वा ऽस्मन्मते प्रवेशापत्तिः । न च भेदाऽभेदकाले यो भेदस्तावन्मात्रगोचरसाक्षात्काराद्भेदांशनिवृत्तिरित्यत्यन्ताऽभेदसिद्धिरिति वाच्यम् । तस्य भेदाविरुद्धत्वेनाऽनिवर्त्तकत्वात् । न हि जातिज्ञानाद् व्यक्तयो निवर्त्तन्ते । विद्यमानभेदस्य यथाश्रुत्यभ्यस्तस्याऽप्र-

तीतिकल्पनाऽयोगाच्च । न च फलवाक्याऽवगताऽत्यन्ताऽभेदस्यैवाऽभ्यासात्स एव साक्षात्क्रियतइति वाच्यम् । तत्त्वमसीति शास्त्रस्याऽत्यन्तमनपेक्षाप्रसङ्गात् । कर्मकाण्डव्यवहारस्याऽत्यन्तभेदे ऽप्युपपत्तेः । फलवाक्यादेव मोक्षोपयोगिज्ञानस्य सिद्धत्वात् । अभ्यासे हेतुभूतस्य मोक्षोपयोगाऽसम्भवाच्च । तत्त्वमस्यादिवाक्यविरोधेन फलवाक्यस्य स्वार्थपरत्वाऽयोगाच्च । किं चाऽत्यन्ताभेदो नाम भेदांशविनाशः, न च तत्सम्भवति, जीवस्वरूपस्य विनाशप्रसङ्गात् । न हि धर्मिणि सति तत्स्वरूपं तत्समानसत्ताको धर्मो वा भेदो विनश्यति । न च भेदांशविनाशेऽपि अभेदांशस्य सत्त्वान्न का चित्क्षतिरिति वाच्यम् । विद्यमानस्याप्यभेदांशस्याऽसंसारिब्रह्मस्वरूपतया संसारिनाशे मोक्षार्थप्रवृत्त्यनुपपत्तेः । अभेदांशाज्जीवः किम् अत्यन्तम् अभिन्नो भिन्ना भिन्नो वा । आद्ये न ब्रह्मणो भिन्ना भिन्नो जीवः । अभेदांशस्य ब्रह्मत्वात् । द्वितीये ऽत्यन्तभिन्न एव स्यात् । तृतीये ऽनन्ताऽप्रामाणिकाऽभेदप्रसङ्गः । नन्वभेदः स्वरूपमेव, भेदस्तु तत्रोपाधिनो भवतीति निरंशस्य जीवस्य कश्चिद्धर्म इति न भेदविनाशे स्वरूपविनाशो न वा भेदानन्त्यादिदोष इति । न । भेदधर्मिणो जीवस्याऽसंसारिब्रह्मा भेदोऽस्ति । न वा न चेत्को यं भेदाऽभेदः । तत्त्वमसीति श्रुतिर्वा कथं प्रमाणं स्यात् । अस्ति चेद् ब्रह्मैव संसारि स्यात् । तदभेदाऽविरोधे भेदस्याऽकल्पिततया वास्तवसंसारित्वाऽव्यवस्थापकत्वात् । तत्र च भेदाऽभेदे वा कथं नोक्ताऽनन्त्यं, कथं वा ब्रह्माऽतिरिक्तभागस्य विनाशो नाऽभ्युपगन्तव्यः । ननु मुक्तावपि भिन्नाऽभिन्नमेव वास्त्विति चेत् तर्हि भेदकोपाधेरपि सत्त्वात्संसाराद्-

विशेषः । न च भेदः स्वाभाविक उपाधिना क्रियते । 'भेदरूपो देवः क्षेत्रे'ष्वित्यादिश्रुतिविरोधात् । जीवस्य ब्रह्मांशत्वविरोधाच्च । प्रत्युतेदानीं ब्रह्मैव भिन्नाऽभिन्नात्मकजीवैकांशः स्यात् । एवं ज्ञानानन्दादेरपि ब्रह्मणोऽत्यन्ताभेदेऽनेकशब्दविरोधः । तत्रापि भेदाभेदश्चेद् भिन्नांशस्यानन्दाद्यस्वरूपत्वेन ब्रह्माऽनानन्दाद्यात्मकमुपेक्ष्यं दृश्यमित्यादिदोषः स्याद् । निर्गुणश्रुतिविरुद्धं च । ततो मतिदौर्बल्यकृत एवाऽयं पक्षः । तस्मादद्वैतवाद एव सर्वदोषरहित इति स एव श्रेयोर्थिभिरादरणीय इति ।

इदं च ब्रह्मशब्दादेव साक्षात्क्रियते, ब्रह्मणि प्रमाणान्तराऽभावात् । शब्दजन्यज्ञानस्याप्यपरोक्षविषयतयाऽपरोक्षत्वात् । इन्द्रियजन्यज्ञानानामपि तथैवाऽपरोक्षत्वात् । अर्थस्य चाऽपरोक्षत्वमनावृतसंविदभिन्नत्वम् । घटादेरपि वृत्तिनिर्गमनदशायां तदस्त्येव । अन्यथा सुखादेरपरोक्षत्वाऽनुपपत्तेः तत्रेन्द्रियजन्यज्ञानादेरसंभवात् । साक्षिण्यध्यस्तत्वेनाऽनावृतसंविदभेदस्य सत्त्वात् । न चैवं धर्मादेरपरोक्षतापत्तिः । स्वरूपविशेषस्य परमते इव तत्राप्यपेक्षितत्वात् । वेदान्तप्रतिपाद्यं शुद्धं ब्रह्म, तच्च सदा संविद्रूपमिति भवति तद्विषयं ज्ञानं शब्दजन्यमप्यपरोक्षम् । ततश्च वेदान्तजन्यतत्त्वसाक्षात्कारादेव कर्तृत्वाद्यनर्थहेत्वविद्यावृत्तिभेदभ्रमनिवृत्त्या ब्रह्मात्माऽभेदसिद्धिश्च । सा चाऽविद्यानिवृत्तिर्ब्रह्मणोऽतिरिक्ता, प्रपञ्चात्यन्ताभावस्याऽखण्डार्थशास्त्रप्रतिपाद्यस्य ब्रह्मस्वरूपत्वेपि निवृत्तेः प्रतियोग्यसमानकालत्वेन ब्रह्मस्वरूपत्वाऽयोगात् । तस्यास्तत्त्वावेदकशास्त्राप्रतिपाद्यतया सत्त्वाभावेपि नाऽनुपपत्तिः । न चासौ पुरुषार्थः । प्रतिबन्धकाऽभावतया तत्का-

मनायां पूर्णानन्दावाप्तेरेव पुरुषार्थत्वादिति केचित् ।

अन्ये तु कल्पिताभावस्यात्यन्ताभाववदन्यत्वाऽयोगान्निवृत्तिरप्यात्मैव । प्रतियोगिसमानसत्ताकनिवृत्तेरेव प्रतियोग्यसमानकालत्वात् कल्पितस्य स्वाऽत्यन्ताभाववृत्तित्ववद् निवृत्तिनिष्ठत्वस्याप्यविरोधात् । न चैवं ज्ञानवैफल्यापत्तिः । ज्ञानाऽभावकाले कल्पिताविद्यादेः सत्त्वेन प्राक्सिद्धनिवृत्तेरपि प्रवृत्त्यङ्गसाध्यत्वसंभवात् । तेन विना तस्याऽभावमात्रावस्थानाऽभावात् । अत एव तस्या उद्देश्यत्वं, नित्यसिद्धाऽविद्यानिवृत्तेरप्यभावप्रमादशायां लोके इव तदुपपत्तेः । तस्मात् सिद्धं जीवस्याद्वैतब्रह्मसाक्षात्काराद् भेदभ्रमनिवृत्त्या सच्चिदानन्दब्रह्माऽवाप्तिरिति ॥

जिज्ञासितव्यमनवद्यपुमर्थवित्तैः
प्रज्ञासुखं स्वमहिमाऽनवशेषयोनिः ।
शास्त्रैकहृद्गतमशेषविधेयशेषि
श्रेयोऽस्तु नो नरमृगाकृति मङ्गलाङ्घ्रिः ॥ १ ॥

तुष्यन्त्यव्यक्तवचसा मुग्धस्य पितरो ननु ।
मम त्वत्प्रीतये भूयाद्वाणीयं नरकेसरिन् ॥ २ ॥
क्वाऽहं महीयसाऽऽशास्यं वात्सल्यं क्व गुरोरिदम् ।
अपि चाण्डालकलशे काशते खलु भास्करः ॥ ३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्जगन्नाथाश्रमपूज्यपादशिष्यश्रीमन्नृसिंहाश्रमविरचिते वेदान्ततत्त्वविवेके द्वितीयः परिच्छेदः समाप्तः ॥

समाप्तश्चायं ग्रन्थः । शुभम् ।

श्रुतिः कारणतां बोधयति किन्तु तज्जातीयापे-क्षया । अत एव क्वचिन्नमस्काराद्दर्शनेऽप्यभीष्ट-सिद्धिरुदेति । न च श्रौतस्य साङ्गस्य कर्मणः फलोत्पादनियमः । फलमदत्त्वापि कीर्तनादिना तद्विनाशावधारणात् । नमस्कारत्वं तु यद्यपि का यिकादौ नानुगतमुपलभ्यते तथापि ज्ञानविशे-षपूर्वकत्वमप्रतिसन्धाय न कायिकादौ नमस्का-

न्यमुखी चेत्युभयथापि सम्भवति तथापि अप्रामाणिकश्रु-त्यानन्त्यकल्पनागौरवग्रस्तपूर्वकल्पनया चरमैवावशिष्यते तयैवापेक्षितलाभसम्भवाच्च । न हि शत्रुविशेषमरणकामन-या अनुष्ठीयमानाः श्येनादयः तदाकारामेव श्रुतिमपेक्षन्ते अन्याकारया वा नानुष्ठाप्यन्त इति । नन्वेवं जन्मान्तरी-यग्रन्थादिसमाप्तिमुद्दिश्यापि शिष्टैस्तत्करणप्रसङ्ग इति चेत् । कोऽर्थः किं सति जन्मान्तरीयसमाप्त्युद्देशे तत्साधनता-ज्ञानान्मङ्गले प्रवृत्तिप्रसङ्ग इति उत जन्मान्तरीयसमाप्तावै-हिकमङ्गलस्य साधनत्वे तदाचारकाले जन्मान्तरीयसमाप्ते-रुद्देशप्रसङ्ग इति । आद्ये इष्टापत्तिः मदारम्भेषु कदापि विघ्नो माभूदित्यपि कामनया शिष्टानां तदनुष्ठानदर्श-नात् । द्वितीये तु नियामकाभावः । किञ्चित्फलोद्देशेनाने-कफलकसाधनानुष्ठाने फलान्तरोद्देशानुपयोगात् । यथा-श्रुते व्यभिचारमप्याह । न च श्रौतस्येति । कीर्तनादिने-त्यादिपदेन कर्मनाशापारगमनवाक्योपात्तपरिग्रहः । पक्ष-तावच्छेदकानिरुक्तिं निराचष्टे । नमस्कारत्वं त्विति । अवतारयिष्यमाणन्यायावताराय विषयस्वरूपमुपदर्श-

रव्यपदेश इति नागृहीतविशेषणन्यायेन ज्ञान-विशेष एव नमस्कारत्वम्। स च विशेषो व्यव-हारसाक्षिको जातिविशेष[1] एव ॥

ननु साक्षात्कारत्वादिना परापरभावा-नुपपत्त्या कथमेतत् सङ्गच्छते। कथं वा न तथा-भूतप्रमारूपासाधारणफलकारणस्य प्रमाणान्त-

यति। ज्ञानविशेषेति। उन्मादादिनापि दण्डवत्पतनादि-सम्भवादिति भावः। नागृहीतेति। आवश्यकप्रथमोपस्थि-तिलाघवादित्यर्थः। ज्ञानविशेष इति। सप्तमीति योगवि-भागात् समासः। किमसौ विशेषस्वरूपः नेत्याह। स च जातिविशेष एवेति। तस्याप्रामाणिकतां निरस्यति। व्यव-हारसाक्षिक इति। नमस्यानमस्यविषयकसमूहालम्बने च नमस्कारव्यवहारो भाक्त एव लाक्षणिक इत्यर्थः। जाते र्व्याप्यवृत्तितानियमेन तत्र नमस्कारत्वजात्ययोगात्। निश्चयत्वमव्याप्यवृत्तिर्जातिरिति लीलावतीप्रकाशादि-दृष्ट्या मुख्य एव वेति भावः।

ननु तज्जात्यधिकरणं ज्ञानं शब्दादिसाधारणं मानसमेव वा मानसमपि किञ्चिदसाधारणसहकारिसमवहितमनोज-न्यं तदसमवहितमनोजन्यं वा नवा नाद्य इत्याह। ननु सा-क्षात्कारत्वादिनेति। समाविष्टेनेतिशेषः। एतज्ज्ञानवृत्ति[2] जातिविशेष एव नमस्कारत्वमिति कायिकादौ तदनङ्गीका-रहेतोरत्रापि तुल्यत्वादिति भावः। द्वितीये ऽपि न प्रथम

(१) जातिभेद–पा॰ १ पु॰।
(२) एव ज्ञानवृत्ति–प॰ ६ पु॰।

रतापत्तिः[1] । कुतो वा असाधारणप्रयोजकप्रमाणविरहे तथाविधा[2]साधारणानुभवरूपफलसिद्धिरिति चेत् । नैवम् । साक्षात्कारविशेषस्यैव मानसस्य[3] तथात्वात्[4] । तथापि किंविष-

इत्याह । कथं वेति । तथाभूतं जातिविशेषावच्छिन्नं प्रमारूपमनुभवरूपम् । इदं च स्मृतिकारणव्युदासाय । असाधारणं तु सामान्यकारणतानिरूपितकार्येतरकार्यताधारः इदं च कारणपदवाच्यासाधारणकारणकल्पने हेतुगर्भं विशेषणम् । मनो यदसाधारणं सहकार्यसाध्यबहिर्गोचरां प्रमां जनयति तस्य प्रमाणान्तरतया शास्त्रे व्यवस्थापनादिति भावः । न द्वितीय इत्याह । कुतो वेति । मनसो बहिरस्वातन्त्र्यादिति भावः । परिहरति । नैवमिति । परापरभावानुपपत्तौ तावदाह । साक्षात्कारविशेषस्येति । विशेषमेव विवृणोति । मानसस्येति । नन्वयमाराध्यविशेष्यक आराधकविशेष्यको वा-नाद्यः । अयोग्यपरात्मविशेष्यकत्वेन मानसत्वानुपपत्तेः । तस्य बहिरस्वातन्त्र्यात् । ज्ञानान्तरोपनयसाहाय्यात् तदुपपादने चोपनयस्यैव प्रमाणान्तरतापत्तेर्मानसत्वानुपपत्तेश्च । न हि मनोजन्यतामात्रेण मानसत्वम् । ज्ञानमात्रसाधारण्यात् । अपि तु करणान्तरासहकृतमनोजन्यत्वेनेति । अत एव न द्वितीयः । बहिर्विषयकत्वाविशेषात् । स्वस्यैव नमस्यतापत्तेश्च । न हि नमस्कारविषयतैव नमस्यता युक्ता

(१) प्रमाणान्तरत्वम्—पा १ पु ।

(२) तथाभूता—पा· १ पु· ।

(३) मानसस्य नमस्कारस्ये तिशेषः ।

(४) तथाभूतत्वात्—पा· १ पु· ।

## यकोऽसौ आराधकात्मविषयक एव आराधनी-यात्मविषयको वा । न च प्रमाणान्तरतापत्तिः मनस एव तत्कारणत्वात् । न च मनसो बहि-

उत्कर्षादेरपि तत्प्रसङ्गात् । किं तु तद्विशेष्यतैवेति गूढाभिसन्धिः पृच्छति । तथापि किंविषयक इति । किंविशेष्यक इत्यर्थः । आराधकविशेष्यकत्वे तावन्नानुपपत्तिर्बहिर्विशेषणके ऽनुव्यवसाये मनसः सामर्थ्यदर्शनादिति गूढाशय एवाह । आराधकेति । न च स्वस्यैव नमस्यतापत्तिः । नमस्कारप्रकारीभूतापकर्षावधित्वस्यैव नमस्यपदार्थत्वादिति भावः । ज्ञातः परमाणुरित्यादौ बहिर्विशेष्यके ऽपि मनसः सामर्थ्यदृष्टिमवष्टभ्य तथैवाह । आराधनीयेति । ननूभयथाप्यसाधारणसहकार्यनपेक्षणे स्वातन्त्र्यमेव तदपेक्षणे तु तस्यैव प्रमाणान्तरतापत्तिरित्याशङ्क्याह । न च प्रमाणेति । अनपेक्षणेनैव परिहरति । मनस एवेति । कारणत्वात् । व्यापारवदसाधारणकारणत्वात् । एवकारेण कारणान्तरगतव्यापारवत्त्वासाधारणत्वव्यवच्छेदः । अनुभवत्वसाक्षाद्व्याप्यजातिमदेकजातीयजन्यसकलज्ञानमात्रवृत्तिकार्यतानिरूपितकारणताश्रयं व्यापारवद्यत्सहकार्यसाध्यमनो बहिर्गोचरां प्रमां जनयति तस्यैव प्रमाणान्तरत्वादिह तदभावादित्यर्थः(१) । सहकार्यन्तरमेव एवकारेण व्यवच्छिन्नं तथा च कथं मनसो बहिः

(१) इति भावः—पा० ६ पु० १

रस्वातन्त्र्यम् । आत्मविशेषगुणोपग्रहेण बहिरपि तस्य साक्षात्कारिज्ञाने[1] प्रवृत्तिदर्शनादित्यन्यत्र विस्तरः ॥

स्वातन्त्र्यमिति भ्रान्तशङ्कां निरस्यति । न चेति । सहकारीष्यत एव न निरुक्तमसाधारण्यमित्याशयेन परिहरति । आत्मविशेषेति । ज्ञानस्य प्रत्यासत्तितया स्वीकारेणेत्यर्थः । बहिरपि विशेष्ये विशेषणे वेति शेषः । साक्षात्कारिज्ञाने स रामो गौरः श्यामो वेति बहिर्विशेष्यके रामं स्मरामीति बहिर्विशेषणके वेत्यर्थः । नन्वेवं ज्ञानान्तरोपनीते पक्षे स्मृत्युपनीतसाध्यसंसर्गबोधस्य मनसैवोपपत्तेः कृतमनुमानेनेत्याशङ्क्याह । इत्यन्यत्रेति । लिङ्गपरामर्शस्थल इत्यर्थः । विस्तरः अनुमिनोमीत्यनुव्यवसायसिद्धज्ञानवैजात्यप्रयोजकतयानुमानसिद्धिरित्यादिः । वयं तु ब्रूमः । मानसो न नमस्कारः । प्रयोजकप्रयोजनयोरभावेन ज्ञाने तज्जातेरप्रामाणिकत्वात् । तथाहि न तावदिन्द्रियत्वेन मनसः तत्प्रयोजकत्वम् इन्द्रियत्वेन तज्जन्ये सुखादिसाक्षात्कारे तदापत्तेः । प्रयोजकसद्भावे प्रयोज्यावश्यम्भावात् न मनस्त्वे ज्ञानमात्रे तदापत्तेः । जन्यात्मविशेषगुणत्वजन्यसाक्षात्कारत्वावच्छिन्नं प्रति मनस्त्वेन्द्रियत्वावच्छिन्नकारणताया नतित्ववन्मात्रवृत्तिकार्यतानिरूपितत्वरूपासाधारण्यायोगेन तत्पुरस्कारेण तस्य कारणत्वाभिधाने विरोधाच्च । प्रयोज्यभेदवृत्तिनियमयोः प्रयोजकभेदवृत्तिनियमाधीनतया मानसत्वजन्यसाक्षा-

(१) साक्षात्कारज्ञाने—पा॰ १ पु॰ ।

त्कारत्वप्रयोजकतदुभयभिन्नन्यूनवृत्तिप्रयोजकाभावेन नतित्वे तदुभयभेदन्यूनवृत्तितयोराकस्मिकत्वप्रसङ्गाच्च। भावे वा मनस एवैकरूपावच्छिन्नकारणताद्वैधाभिधानत्वस्य वैयर्थ्यात्। एतेन जन्यगुणकारणतावच्छेदकस्यापि द्रव्यत्वस्य संयोगकारणतावच्छेदकत्ववन्मनस्त्वमेव मानसत्वनतित्वावच्छिन्नकार्यताभेदनिरूपितकारणताभेदावच्छेदकमास्तामिति बलभद्राभिधानमभित्तिचित्रायितम्। द्रव्यत्वस्य जन्यगुणत्वावच्छिन्नसंयोगवृत्तिकार्यतेतरतद्वृत्तिकार्यतानिरूपितकारणतावच्छेदकत्व एव मानाभावात्। न चैवं संयोगत्वजातेराकस्मिकतापत्तिः। कर्माद्यसाधारणकारणनिरूपितकार्यतावच्छेदकतया तत्प्रयोज्यत्वसम्भवात्। किं चैवं जन्यसाक्षात्कारत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकेनैवेन्द्रियत्वेनैव चाक्षुषत्वावच्छिन्ने ऽप्यसाधारणत्वसम्भवे चक्षुष्ट्वादिना तत्कारणताङ्गीकारवैयर्थ्यप्रसङ्गाच्च। यदप्युक्तम् आराधकविशेष्यके नमस्कारे ऽवश्यमपेक्षितमाराध्यविशेष्यकं ज्ञानमेव नतित्वप्रयोजकं व्यत्ययो वेति तदतिस्थवीयः। अपेक्षितत्वे ऽपि तदवच्छिन्नं प्रत्यसाधारण्याभावेन प्रयोजकत्वानुपपत्तेः। उत्कर्षापकर्षयोरुत्कृष्टापकृष्टावधिसम्बन्धिकतया तज्ज्ञाने सम्बन्धितावच्छेदकप्रकारकज्ञानत्वेनैव तयोः साधारणकारणत्वात्। अन्यथा नमस्कारत्वप्रयोजकत्वाभिमते ऽप्याराध्यविशेष्यकज्ञाने तदितरापेक्षाविशेषणात् प्रयोज्यजात्यन्तरस्वीकारापातात्। सर्वेभ्यो हरिरुत्कृष्ट इति ज्ञानस्य हरेः सर्वे ऽपकृष्टा इति ज्ञाने नतित्वप्रयोजकतापाताच्च। अथानुभवसिद्धनतित्वानुरोधेन तत्रैव तस्यासाधारण्येन कारणतास्वीकारो नान्यत्रेति मतम्। त्यज तर्हि तदप्यन-

गुणगतजातौ परापरभावानुपपत्तिरेव ना-
स्तीत्यन्ये। यद्वा कायिकादिषु त्रिषु नमस्कारप्रा-

ल्पकल्पनाक्लेशमूलम् । न च प्रयोजनमपि तस्य न हि तदनन्तरं स्वस्यापि नमस्कारव्यवहारो नतरां परस्य परकीयस्य तादृशज्ञानस्य परायोग्यत्वात् । नमःपदप्रयोगादिना तदनुमानाज्ज्ञायत एवेति चेत् । कृतं तर्हि ज्ञानेन तज्जातिकल्पनयानुमानकल्पनया वा वाचिकादिवृत्तिनतित्वजात्यैव तत्प्रयोजनत्वाभिमतव्यवहारसिद्धेः । परकीयज्ञानविशेषस्य कायवाग्व्यापारानुमेयत्वेनावश्यकप्रथमोपस्थितिकयोः कायिकवाचिकयोरेव नतित्वकल्पनौचित्याच्च । एतेन स्वापकर्षबोधानुकूलतावच्छेदकतया तत्कल्पनं मान्यानामपास्तं द्रष्टव्यमिति। द्वयी हि प्रत्यक्षजातिः । सविकल्पिकाविकल्पिका(१) चेति आकारस्वरसाद् गुणगतजातौ सङ्करस्यादोषत्वात् कृतं मानस एव तत्कल्पनानिर्बन्धेन । व्यवहारस्य त्रितयानुगतस्य मुख्यामुख्ययोर्विनिगन्तुमशक्यत्वादिति ॥

ऋजुमतमाह । गुणगतजाताविति। अन्ये इति । आकरस्थजातिपदे लक्षणा सहिष्णव इत्यर्थः । सङ्करे बाधकताबीजसत्त्वे गुणगतजातावपि दोषत्वादसत्त्वे च गुणविशेषणवैयर्थ्यादस्वरसादाह । यद्वा कायिकादिषु त्रिष्विति। प्रत्येकजातिप्रकारकज्ञानजनकत्वादिति भावः। अत्र त्रित्वमुपलक्षणं जातीनां बहुतरत्वस्य यावज्जातिभेदनानार्थतायाश्चावश्यकत्वात् । अन्यथा कायिकवृत्तेर्नतित्वस्यान्यतरकर्मजन्यतावच्छेदकजात्या वाचिकवृत्तेश्च

(१) निर्विकल्पिका इति क्वचित् ।

ब्दो नानार्थ एव । एतदन्यतमत्वमेव वा नमस्कारत्वम् । एवं विघ्नोत्सारणासाधारणकारणत्वे

वन्दे नमामि नम इत्यादिनत्यर्थकानेकपदवर्णवृत्तिमन्दत्वतारत्वादिप्राच्यत्वादिवक्तृविशेषानुमापकप्रभृतिजातिभिः सङ्करप्रसङ्गात् । अत एवैतन्मते विधिकारणताग्रहानन्त्यानन्ततत्तज्जातिप्रकारकज्ञानकल्पनागौरवादपरितुष्यन् पक्षान्तरमाह । एतदन्यतमत्वमेव वेति । नमस्कारत्वं नमस्कारपदप्रवृत्तिनिमित्तमित्यर्थः । स तु कायिकादिषु नानाजातयो न तु तत्पुरस्कारेण कारणताग्रहो विधिकल्पनं वा नमस्कारपदप्रवृत्तिर्वा येन पूर्वोक्तगौरवं स्यात् किं त्वनेन । न चैवमक्षादिपदे ऽप्येकार्थताप्रसङ्गः । प्रत्येकप्रकारकज्ञानस्यैव तेन जननादिह च तद्विरहादिति भावः । ननु वर्णेषु नतित्वं न समस्तेषु क्रमिकाशुविनाशित्वात् । नापि व्यस्तेषु सर्वेष्वेकैकश्रवणे ऽपि तत्प्रतीत्यापत्तेः । अत एव नान्त्यमात्रे इति चेत् । न पूर्वपूर्ववर्णसंस्कारसहकृतश्रोत्रग्राह्यस्य चरमवर्ण एव तस्य स्वीकाराददोषात् । वय तु ब्रूमः । वाचिके ऽपि नतित्वं न शक्यं वक्तुम् । तद्धि नमःप्रभृतिषु पदेषु सापकर्षबोधानुकूलतावच्छेदकतया वा तच्छ्रवणेन नतित्वेन व्यवहाराद्वा । नाद्यः । तद्बोधस्य शाब्दत्वे नमःपदे स्वापकर्षशक्तेरावश्यकतया नोत्तरमत्वादिना तस्या इव बोधानुकूलताया अप्यवच्छेदसम्भवे जातिवैयर्थ्यात् तच्छक्तत्वेनैव पदेषु तदन्वयानुभावकतायाः स्वीकाराच्च । अन्यथा गुणवत्त्वबोधानुकूलतावच्छेदकतया स्तुतावपि जातिविशेषकल्पनापातात् । यत्तु मध्ये ऽपि स्तुतित्वप्रतीतेर्नान्त्यवर्णवृत्तिस्तुतित्वजातिरिति । तदसत् । दान्य इत्यश्रवणे त्वं वेत्यंता-

बति स्तुतित्वाप्रतीतेः । कियत्पदश्राविणश्चाभिप्रायिक-योग्यपदान्तरानुमानात् तदन्त्यवर्णवृत्तिस्तुतित्वप्रतीतेः अनुमितित्वेन व्यक्तिप्रत्यक्षनिरपेक्षतोपपत्तेरिति । प्रतिपुरुषं प्रतिदिशमनन्ताभिर्जातिभिर्व्यभिचारेण स्वापकर्षबोधकत्वावच्छिन्नं प्रत्यनुकूलताया अवच्छेत्तुमशक्यत्वाच्च । बोधवैजात्ये च प्रमाणाभावात् । बोधस्यानुमितित्वे तु धूमपदे वह्निबोधानुकूलताया इव नमःपदे स्वापकर्षबोधानुकूलतायास्तल्लिङ्गोपस्थापकपदत्वेनैवावच्छेदसम्भवे सुतरां तद्वैयर्थ्यात् । न द्वितीयः । व्यवहारस्य ज्ञानात्मनः शाब्दत्वे शब्दे जात्यसाधकत्वात् । न हि घटादिपदेभ्यो घटादिज्ञानबलात् पदेषु घटत्वादयोऽभ्युपगम्यन्ते प्रत्यक्षत्वस्य चासिद्धेस्तथात्वे वर्णवृत्तिमन्द्रत्वतारत्वादिग्रहवद्व्युत्पत्तिग्रहस्य तत्रानुपयोगप्रसङ्गात् । मयोच्चार्यते नम इति श्लिष्टोक्तौ मकारोच्चारणं निषेधतात्पर्यग्राहिणोऽपि तद्ग्राहिण इव नमस्कारत्वप्रतीतिप्रसङ्गाच्च वाच एव नमस्कारत्वे वाचिकत्वप्रसिद्धिविरोधाच्च । वैनयिकादिवदुपपादने च कायवाङ्मनोभिः कृतमित्याचार्यादिवचनेषु वाचस्तत्कारणतोपदर्शनविरोधात् । तस्मात् कायिकादिव्यापारविशेष एव नतित्वम् । कथं तर्हि नमःपदप्रयोक्तरि नमस्करोतीतिव्यवहारः परस्येति चेत् । गामुच्चारयतीतिवत्तद्वाचकपदे लक्षणयेति गृहाण । अन्यथा प्रयोगमात्राल्लक्ष्ये शक्यजातिप्रसक्तौ लक्षणोच्छेदप्रसङ्गात् । कथं तर्हि नमःपदप्रयोक्तुर्नमस्कारफलसिद्धिः तस्यानमस्कारत्वादिति चेत् । धर्म्याधर्म्यकर्मध्यानाभिधानयोः पृथक्धर्माधर्मसाधनतया न तु नमस्कारतया । वस्तुतः कर्मणामल्पमहाताामिति न्यायविरोधात् नमः पदे वह्वायाससाध्यकायिकन-

सति साध्यत्वमेव मङ्गलत्वम्। कारणताग्रहस्तु विनायकार्चनदधिदूर्वात्वादिनैवेति न किञ्चिद-

तितुल्यफलकत्वस्यैवासिद्धेः। न चैवं नतौ वाचिकत्वादिप्रसिद्धिविरोधः पापवदुपपत्तेरिति कृतमुपजीव्यकलहेन। प्रसङ्गान्मङ्गलस्याप्यशक्यनिर्वचनतां निरस्यति। विघ्नोत्सारणेति। दुरितवत्प्रारिप्सितप्रतिबन्धकदुरितनिवृत्तिमात्रवृत्तिकार्यतानिरूपितकारणतासामानाधिकरण्यं सत्यन्तार्थः। अत्र वृष्टिप्रतिबन्धकदुरितनिवृत्त्यसाधारणकारणकारीरीव्यावृत्त्यै प्रारिप्सितेति। वृष्टेरपि तत्कर्तृप्रारिप्सितत्वाद्दोषतादवस्थ्यनिवृत्त्यै दुरितवदिति। दुरितमात्रनिवर्तकगङ्गास्नानादिव्युदासाय मात्रेति। अत्र सन्ध्यावन्दनादिकर्मप्रतिबन्धकमहापातकदुरितनिवृत्त्यसाधारणकारणे प्रायश्चित्तविशेषेऽतिव्याप्तिमाशङ्कमानानामाशयं त एव प्रष्टव्याः। न हि महापातकं दुरितं सन्ध्यादिप्रतिबन्धकं मणौ दाहस्येव तस्मिन् सति सन्ध्यादेरशक्यत्वप्रसङ्गात्। किं तु तज्जन्यापूर्वस्य। न च तत्प्रारिप्सितमित्यतिव्याप्तेरसम्भवात् तत्साध्यत्वं चिकीर्षाविषयत्वं तेन प्रतियोगिदुरितनिवृत्तिः। न च ध्वंसे प्रतियोगिनः साधारणकारणत्वादसाधारणपदेनैव तद्व्युदास इति वाच्यम्। ध्वस्तध्वंसप्रसङ्गेन ध्वंसविशेषे प्रतियोगिविशेषत्वेनासाधारणकारणताया अप्यावश्यकत्वात्। ननूक्तमेवात्रानुगतरूपापरिचये इत्यादि तत्राह। कारणताग्रहस्त्विति। किञ्चित्पक्षहेतुसाध्यान्यतमत्। ननु कथं नानुपपन्नं यावन्निर्विघ्नं कृतमङ्गलस्य फलव्यभिचारो न निरस्त इति विस्मृत्य शङ्कमानं प्रति पूर्वोक्तं स्मारयति। वस्तुत

नुपपन्नम् । वस्तुतो निर्विघ्नेन पुंसा समारब्धे कर्मणि या गतिः सा दर्शितैव । सोऽयं नमस्कारो नाङ्गं विघ्नवतो विघ्नज्ञानवतो वा नमस्कारे ऽधिकारात् । परिसमाप्तौ विघ्नशून्यस्याधिकारात् । न चाधिकारभेदेनाङ्गप्रधानभावो भवति । अन्तरायविरहपूर्वकप्रारिप्सितसमाप्तिकामो वा त-

इति । यद्वा ननु निर्विघ्नेन विघ्नशङ्कया समारब्धे नत्यादिकर्मणि विघ्नाभावेन तदुत्सारणासम्भवात् तदसाधारणकारणत्वमव्यापकमित्यत आह । वस्तुत इति । कर्मणि नत्यादौ दर्शिने वेति । विघ्नविरहदशायामित्यादिनेत्यर्थः । तथा च बाधकाभावात् स्ववृत्तिविघ्नज्ञानवत्त्वेनैवाधिकारो न विघ्नवत्त्वेनेति नाधिकारानिश्चयात् प्रवृत्त्यनुपपत्तिरिति भावः । तदेवं नमस्कारादेरभीष्टोपायत्वे सिद्धे प्राधान्येन तद्व्यवस्थापयिष्यन्नङ्गत्वं तावन्निरस्यति । सोऽयं नमस्कार इति । नमस्कारादिरित्यर्थः । तदधिकारतावच्छेदकावच्छिन्नाधिकारत्वाद्दर्शवदिनि शेषः । हेतोः पक्षधर्मतामुपपादयति । विघ्नवत इत्यादिना । इदं चाधिकारज्ञानं प्रवर्तकमिति मत्वोक्तं स्वरूपसतोधिकारस्यैव प्रवर्तकत्वमित्याश्रित्याह । विघ्नज्ञानवतो वेति । स्ववृत्तिविघ्नज्ञानवत इत्यर्थः । परिसमाप्ताविति । तदुद्देश्यके प्रारिप्सिते इत्यर्थः । व्याप्तिमुपदर्शयति । न चाधिकारेति । प्रधानाधिकारिण एवाङ्गे ऽधिकारादन्यथारम्भणीयादेरपि दर्शाद्यङ्गतापत्तेरिति भावः । विघ्नज्ञानवतामपि शिष्टानां समाप्तिकामनयैव मङ्गलाचारात् तदनुमितश्रुत्या सैवाधिकारितया बोध्यत इति काधिकारभेद इत्यत आह

त्राधिकारी। तथैवाचारात्। कर्मसमारम्भे त-त्समाप्तिकाम एव। तथाप्यधिकारभेद एव। नापि नैमित्तिकः। अकरणे प्रत्यवायप्रसङ्गात्। न चात्रानुमतिरेव निस्ताराय प्रायश्चित्तानुपदेशात्। तस्मात् प्रधानमेवेदम्। न चैवमन्यदापि करणत्वप्रसङ्गः। नियतसमयकर्तव्यत्वात्। तथैवाचारात्। इष्टापत्तेर्वा। सोऽयं क्वचिदैहिकः

अन्तरायेति। तथाप्यधिकारभेद एवेति। यद्यप्येवमपि नाधिकारिपुरुषभेदो नाप्यधिकारभेदः विशिष्टाविशिष्टयोर्भेदानभ्युपगमात्। तथापि तदधिकारितानवच्छेदकावच्छिन्नाधिकारत्वमेव हेतुकृतमनेनोपपादितमिति ध्येयम्। नापीति। प्राधान्येऽपि न नैमित्तिक इत्यर्थः। प्रत्यवायेति। नैमित्तिकत्वे चोपरागादिस्नानवत् तदापत्तेरिति भावः। नन्वस्तु तथेत्यत आह। न चेति। नित्यत्वपक्षस्तु शिष्टाचारानुमितश्रुत्या कर्मारम्भात्मकानियतनिमित्तोपाधिकतयाऽवगते मङ्गले शङ्कानारोहात् तुल्यदोषत्वाद्वोपेक्षित इति ध्येयम्। परिशेषसिद्धं काम्यतया प्राधान्यमुपसंहरति। तस्मादिति। इदमिति। अयं नमस्कारश्चेयं स्तुतिश्चेदं विनायकार्चनं च तदिदमिति नपुंसकैकशेषवद्भावो। प्राधान्ये नियतकालान्वयानुपपत्तिमाशङ्क्य निराचष्टे। न चैवमन्यदेति। प्रयोगपरिगृहीतकालान्यकाल इत्यर्थः। काम्यप्रधानत्वे तदेव कुत इत्यत आह। तथैवेति। आरम्भणीयवदुपपत्तेरिति भावः। वस्तुतो जन्मान्तरीयमङ्गलस्यापि कारणताया उपपादितत्वान्नेदमनिष्टमित्याह।

क्वचिदामुष्मिकः । तथैवाचारात् । न पुनः कारीरीवदैहिक एवेत्यवधातव्यमिति[1] दिक् ॥

इति मङ्गलवादः समाप्तः ॥

---

अन्धकारे च विप्रतिपत्तिः । अन्धकारत्वं भाववृत्ति न वा । तत्रान्धकारत्वं भाववृत्तीति तौतातिताः । नेति वैशेषिकादयः । तत्र परेषामयमाशयः । यथा भावत्वं घटादीनां प्रत्यक्षसिद्धं

---

इष्टापत्तेर्वेति । पूर्वोक्तस्मारणेन तामेवोपपादयति । सोऽयमित्यादिना ॥

इति सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीपरागपञ्जरितचरणकमलप्रतापराजोद्द्योतितशेषानन्तविरचितायां न्यायसिद्धान्तदीपप्रभायां मङ्गलप्रकरणं सम्पूर्णम्[2] ।

---

आलोकाजन्यलौकिकचाक्षुषसाक्षात्कारविशेष्यत्वस्याभाववृत्तित्वं व्यवस्थापयितुं तदङ्गतया विप्रतिपत्तिमूलकं संशयमाह । अन्धकार इति । भावपरो निर्देशस्तेनान्धकारत्व इत्यर्थः । विप्रतिपत्तिर्विरुद्धविषया ज्ञप्तिः । संशय इति यावत् । तमेवाभिनयत्यन्धकारत्वमिति । आलोकाजन्यलौकिकचाक्षुषसाक्षात्कारविशेष्यत्वमित्यर्थः । तेनान्धकारत्वं यद्यालोकाभावत्वं तदा विधिनिषेधयोर्बाधसिद्धसाधने अथ द्रव्यान्तरवृत्तिजातिविशेषस्तदाश्रया-

---

(१) अवधातव्या दिक्—पा॰ १ पु॰ ।

(२) मङ्गलवादव्याख्या इति क्वचित् ।

तथा तमसोपि । न हि नीलं तम इति भ्रमः । तथात्वे प्रमाणाभावात् । अभावत्वे तु प्रतियो-

सिद्धिरिति निरस्तम् । संशयमूलं विरुद्धाभिलापमाह । तत्रेत्यादिना । प्रत्यक्षसिद्धमिति । प्रत्यक्षेण रूपादिना घटो भावः रूपादिति लिङ्गेन सिद्धमित्यर्थः । तथा तमस इति । तमो भावो रूपादिति प्रत्यक्षसिद्धेन रूपेण लिङ्गेन सिद्धमित्यर्थः । प्रत्यक्षत्वोत्कीर्तनं हेतोरज्ञानासिद्धिनिरासार्थम् एवं च नञर्थानुल्लेखिधीविषयत्वादिरूपं भावत्वं कथं लौकिकप्रत्यक्षविषय इति दूषणमलग्नकं द्रष्टव्यम् । रूपादिप्रत्यक्षस्य भ्रमत्वेनाप्युपपत्तेरसिद्धितादवस्थ्यमाशङ्क्य निराचष्टे । न हीत्यादिनाभावादित्यन्तेन । न च भ्रमत्व इव प्रमात्वेऽपि प्रमाणाभावेन ज्ञानप्रामाण्यसंशयाहितहेतुसन्देहात् सन्दिग्धासिद्ध्यनुद्धार इति वाच्यम् । मन्मते प्रामाण्यस्य स्वतस्त्वेन बाधानवतारे ज्ञानग्राहकस्यैव तत्प्रमापकत्वादिति भावः । नन्वसिद्धः प्रमाणाभावः नीलं तम इति ज्ञानं भ्रमः अभावविशेष्यकनीलविशिष्टज्ञानत्वान्नीलः पटाभाव इतिज्ञानवदित्यनुमानसद्भावादित्याशङ्क्य विशेषणासिद्ध्या दूषयति । अभावत्वे त्विति । अयं प्रत्ययो यद्यालोकेतराभावाविषयकत्वे सत्यभावत्वप्रकारकसाक्षात्कारः स्यादालोकविषयः स्यादिति प्रसङ्गार्थः । न ह्ययमभावत्वाप्रकारकः तत्प्रवृत्तिनिमित्तकतमः-पदोल्लेखप्रयोजकत्वानुपपत्तेः । नापि तत्प्रकारकः । अभावत्वप्रकारकप्रत्ययस्य प्रतियोगिप्रकारकत्वनियमेन तत्प्रसङ्गादिति सम्भावितप्रकारद्वयबाधेनाभावविशेष्यकत्वा-

गिविशेषोल्लेखप्रसङ्गात् । एवंभूतस्याप्यस्यालो-
काभावत्वे आलोकस्यैव तदभावत्वं किमिति
नाङ्गीक्रियते । भावत्वसाधकस्योभयत्रापि तुल्य-
त्वात् । ननु भावषट्कान्तर्भावे बाधकसद्भावादति-
रिक्तस्य भावस्याप्रामाणिकत्वात् यावद्विशेष-
बाधेन भावत्वमेवास्य बाधितम् । तथाहि । न
तावत्सामान्यमसदातनत्वात् । सामान्यं च सत्

सिद्धिरिति भावः । आलोकाभावत्वप्रवृत्तिनिमित्तक-
तमःपदोल्लेखादिष्टापत्तिमाशङ्क्याह । एवं भूतस्यापीति ।
कल्प्यप्रतियोग्युल्लेखस्यापीत्यर्थः । ननूष्णस्पर्शादिमतः कथ-
मालोकस्याभावत्वं तत्राह । भावत्वेति । उक्तसन्दिग्धासि-
द्धिप्रसङ्गपरिहारयोरुभयत्र सुवचत्वादिति भावः । एवं त-
मो भावो रूपादित्युपपादिते ऽनुमाने यावद्भावविशेषान्य-
त्वलिङ्गकानुमानबाधं शङ्कते । ननु भावषट्केत्यादिना । त-
स्माद्यावद्विशेषबाधाद् भावत्वमेवास्य बाधितमित्यन्तेन ।
नन्वेवं द्रव्यमपि यावद्भावविशेषान्यत्वाद्भावो न स्यात्
भावभूतस्वानन्यत्वादसिद्धो हेतुरिति चेत् इहापि तुल्यमि-
त्याशङ्क्याह । अतिरिक्तस्य भावस्येति ।। व्यधिकरणे षष्ठ्यौ ।
भावपदं च भावत्वपरम् । तेनातिरिक्तस्यान्धकारादेर्भाव-
त्वस्याप्रामाणिकत्वादित्यर्थपर्यवसानान्न सिद्धासिद्धिव्या-
घात इति द्रष्टव्यम् । हेत्वसिद्धिशङ्कां निरस्यति । तथा-
हीति । तत्र सूचीकटाहन्यायेनोत्तरत्रिकातिरेकं तावदाह ।
न तावदित्यादिना । सदातनस्यैवास्य व्यञ्जकालोकाभाव-
सदसत्त्वाभ्यां प्रतीत्यप्रतीत्योरुपपत्तेरसदातनत्वासिद्धिं

द्रव्यवृत्ति वा गुणवृत्ति वा कर्मवृत्ति वा स्यात्। नाद्यः। द्रव्याभानेपि गहनं तम इति प्रतीतेः। नेतरः। रूपाद्यवृत्तितया गृह्यमाणत्वात्। नान्त्यः। कर्माभानेपि भासमानत्वात्। नातिरिक्तवृत्ति। अन्यस्य सामान्यवतोऽभावात्। प्रत्य-

---

शङ्कमानं प्रत्याह। सामान्यं सदिति। नाद्य इति। द्रव्यवृत्तिसामान्यत्वपक्षो नेत्यर्थः। द्रव्येति। द्रव्याविषयलौकिकसाक्षात्कारविषयत्वादित्यर्थः। छायादितमसि द्रव्यस्यापि कस्यचिद्भानात् तत्र भागासिद्धिमाशङ्क्य पक्षसङ्कोचं सूचयन्नाह। गहनमिति। न चैवं तत्र साध्यासिद्धिदोषः। अस्मादन्धतमसे साध्यसिद्धावन्यत्रानुमानान्तरात् तत्सिद्ध्यविरोधादिति भावः। न चेहेदानीं तम इति कालदिशोरपि तद्विषयत्वादसिद्धिः। लौकिकसाक्षात्कारांशे द्रव्यविषयत्वाभावस्य विवक्षितत्वात्। न चासिद्धिवारकतया लौकिकपदवैयर्थ्यम्। अखण्डाभावे तदभावात्। गुणवृत्तिसामान्यत्वं निराचष्टे। नेतर इति। अत्र गृह्यमाणत्वविशेषणं हेत्वसिद्धिशङ्कानिरासायैव। नातिरिक्तवृत्ति अन्यस्य सामान्यवतो ऽभावादिति। नन्वत्रातिरिक्तवृत्तिसामान्यत्वस्य तमसि निषेधे प्रतियोग्यप्रसिद्धिः। तमःसामान्ये ऽतिरिक्तवृत्तित्वमात्रनिराकरणे तु पक्षासिद्धिः। तमोमात्रेऽतिरिक्तवृत्तित्वनिराकरणे त्वर्थान्तरम्। सामान्यत्वपक्षाप्रतिक्षेपात् हेतोर्व्यधिकरणता च। अतिरिक्तं न तमः सामान्यत्वादित्यपि साध्यासिद्धिपराहतम्। अन्यस्य सामान्यवतः सिद्ध्यसिद्ध्योर्व्याघातश्चेति कथमिति चेत्। न सामान्येतरासमवायिसामान्यं न तमोधिकरणं निःसा-

पकत्वाद्वा। न च मनःसंयुक्तसमवेतत्वेन चक्षुःपरिमाणादेर्मानसत्वापत्तिः। मनस्संयुक्तात्मसमवायस्य ग्राहकत्वस्वीकारात् प्रत्येकं जीवैः सह विनिगमनाविरहाच्च नेश्वरस्यैव[1] शब्दाश्रयत्वम्। न च शब्दनिमित्तकारणत्वेन क्लृप्तस्येश्वरस्यैव शब्दसमवायिकारणत्वमिति वाच्यम्। कार्यत्वावच्छिन्नकारणत्वस्य क्लृप्तत्वे पि शब्दत्वावच्छिन्नसमवायिकारणत्वस्य कल्पने विनिगमनाविरहादिति प्राहुः।

ननु शब्दस्याकाशसमवेतत्वे कर्णशष्कुल्यवच्छिन्नाकाशरूपेण श्रोत्रेण करणेन कथं तत्साक्षात्कारः सम्भवति शब्दसन्निकर्षस्य श्रोत्रसमवायरूपस्य नित्यत्वेन व्यापारत्वासम्भवात्।

अत्र केचिदाहुः। इन्द्रियरूपकरणस्य साक्षात्कारजनने व्यापारापेक्षा न तु विषयसन्निकर्षरूपव्यापारापेक्षा[2] तथा च शब्द एव व्यापारोऽस्तु। तस्य श्रोत्रजन्यत्वात् श्रोत्रजन्यसाक्षात्कारजनकत्वाच्च। न च शब्दस्य शब्दसाक्षात्कारजनकत्वे मानाभाव इति वाच्यम्। देवदत्तस्य देशान्तरशब्दसाक्षात्कारवारणाय देवदत्तकर्णावच्छिन्नशब्दस्य देवदत्तशब्दसाक्षात्कारे हेतुत्वस्वीकारात्।

अन्ये तु श्रोत्रमनोयोगस्यैव तद्व्यापारत्वमत एव शब्दाभावप्रत्यक्षेऽपि न व्यापारासम्भव इति।

---

१ जीवानामपीतिभाव। तथा हि नच्चास्त्वित्यादिना पूर्वं जीवभेदस्य कारणत्वस्वीकारगौरवेण शब्दस्य जीवगुणत्वं न्यषेधि। इदानीं तु मानसप्रत्यक्षप्रयोजकयोग्यात्मविशेषगुणत्वरूपजात्यभावेन मानसत्वापत्त्यभावाच्च जीवगुणत्वे बाधकमिति। आत्मत्वावच्छिन्नस्य विभोर्गुणः शब्दः। अन्यस्य विभोरभावात। तथा च विभुमात्रशब्दवद अस्मिन् कल्पे विभुत्वेन आत्मत्वेन शब्दवत्त्वेन वा कारणतेति बोध्यम्।

२ व्यापारसामान्यपेक्षेति।

कालस्तु दिग्विपरीतपरत्वापरत्वानुमेयः । तथा हि । रामे लक्ष्मणापेक्षया परत्वबुद्धिः । लक्ष्मणे रामापेक्षयाऽपरत्वबुद्धिः । तस्या रामे लक्ष्मणावधिकं परत्वं लक्ष्मणे रामावधिकमपरत्वं विषयः । अतस्तद्विषययोः परत्वापरत्वयोर्विलक्षणयोः सिद्धिस्तज्जनकसंयोगाश्रयस्य कालस्य सिद्धिः । तथा हि । परत्वापरत्वयोः पिण्डौ समवायिकारणं तत्पूर्वकालोत्पन्नत्वबुद्धिस्तदवधिकपरत्वे निमित्तकारणं, तदधिकरणकालोत्तरकालोत्पन्नबुद्धिस्तदवधिकापरत्वे निमित्तकारणं, पिण्डसंयोगोऽसमवायिकारणम् । असमवायिकारणपिण्डप्रतियोगिकसंयोगाश्रय एव कालः । न चासमवायिकारणसंयोगाश्रयत्वमव्यापकद्रव्याणां सम्भवति । सर्वत्र जन्यद्रव्येषु प्रायश एतादृशपरत्वापरत्वयोरुत्पत्तेः सम्भवात् तत्संयोगस्याव्यापकेष्वसम्भवात् । आत्मनामनन्तत्वेन तत्संयोगाश्रयत्वकल्पने गौरवात् । नाप्याकाशस्य तस्य शब्दकारणत्वेनैव सिद्धेः । प्रत्येकं जीवैः सह विनिगमनाविरहाच्च । दिशस्त्वेतद्विलक्षणपरत्वापरत्वासमवायिकारणसंयोगाश्रयत्वेनैव सिद्धेर्वक्ष्यमाणत्वात् काल एव तदाश्रय इत्येके ।

अपरे तु इदानीं घट इत्यादिप्रतीत्या कालसिद्धिः । यद्यपि इदानीं घट इत्यादिप्रतीतौ जन्यस्य सूर्यक्रियारूपकालस्यैव विषयत्वान्न महाकालसिद्धिस्तथापि सूर्यक्रियादिरूपकालस्य घटादिभिः सम्बन्धाभावे तत्सम्बन्धावगाहीदानीं घट इत्यादिप्रतीत्यभावप्रसङ्गात् सम्बन्धघटकतया कालसिद्धिः । तथा च सूर्यक्रियाश्रयसंयुक्तकालसंयुक्तत्वं घटादेरिति तेन सम्बन्धेन सूर्यक्रियादेर्घटादौ भानम् । यद्यपि येन केनापि व्यापकेन द्रव्येणैतादृशसंबन्धो

घटादौ सूर्यक्रियादीनां सम्भवत्येवेति न कालसिद्धिः। तथाऽपि तेषामनन्तत्वात् प्रत्येकं विनिगमनाविरहाच्च काल एव सम्बन्धघटकतया सिध्यतीत्याहुः।

स चैको नित्यो विभुश्च। भेदे प्रमाणाभावात्, सर्वत्र कार्योपलम्भाच्च। एकत्वेऽपि तस्य क्षणघटिकाप्रहरदिवसपक्षमासवर्षाद्युपाधिभेदादनेकत्वम्।

क्षणस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म घटकर्मान्तरजविभागप्रागभावविशिष्टस्य पूर्वघटकर्मणः क्षणचतुष्टयस्थायित्वान्न क्षणत्वमतः स्वजन्येत्युक्तम्। तत्तत्कर्मोत्पत्तिकालोत्पन्नघटादेस्तत्तत्कर्मजन्यविभागप्रागभावविशिष्टस्य तत्तत्कर्मवत् क्षणत्वमेव। तत्तत्कर्मोत्पत्तिकालोत्तरं कर्मसत्त्वे पि तज्जन्यविभागप्रागभावाभावात् कर्मोत्तरकाले एव विभागोत्पत्तेः, पूर्वकाले तत्कर्मजन्यविभागप्रागभावसत्त्वेऽपि कर्मसत्त्वमिति विशिष्टं क्षण एव।

उत्तरसंयोगावच्छिन्नं कर्म वा। यद्यपि घटादिक्रियाया द्वितीयक्षणादौ द्रव्यान्तरक्रियया घटादौ संयोगो जन्यत एव तादृशोत्तरसंयोगविशिष्टघटादिकर्मणः क्षणत्रयावस्थायित्वान्न क्षणत्वम्। न च स्वजन्यसंयोग एवोत्तरसंयोगत्वेनोक्त इति वाच्यम्। संयोगात् पूर्वकर्मणः सत्त्वेन तस्यापि जनकत्वात्। तथाऽपि स्वनाशकस्यैवोत्तरसंयोगपदेनोक्तत्वात्, स्वनाशकतावच्छेदकवैजात्यस्यैव स्वजन्यतावच्छेदकत्वान्न द्वितीयक्षणोत्पन्नसंयोगस्य स्वजन्यत्वमिति कश्चित्।

पूर्वसंयोगावच्छिन्नविभागो वा। उत्तरसंयोगप्रागभावविशिष्टपूर्वसंयोगनाशो वा।

कश्चित् तु पूर्वसंयोगनाशावच्छिन्नविभागोऽपि क्षण

इत्याहु। तत् तुच्छम्। विभागस्योत्तरसंयोगनाश्यतया पूर्वसंयोगनाशविशिष्टविभागस्य द्विक्षणस्थायित्वेन क्षणव्यवहाराविषयत्वात्। न च विभागस्य पूर्वसंयोगनाशनाश्यतया क्षणद्वयस्थायित्वान्नोक्तदोष इति वाच्यम्। पूर्वसंयोगनाशापेक्षयोत्तरसंयोगस्य च लाघवेन नाशकत्वात्। शब्दज्ञानादिवच्छास्त्रे विभागस्य द्विक्षणस्थायित्वेन कुत्राप्यगणनाच्च। अपि च आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियाया अनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वपक्षे कारणमात्रविभागस्य कारणाकारणविभागजनकत्वं, तस्य च द्रव्यनाशसापेक्षस्य विभागजनकत्वे एकादशक्षणा प्रक्रियाऽभिहिता। विभागस्य द्विक्षणस्थायित्वे च द्व्यणुकनाशसमय एव पूर्वदेशसंयोगनाशेन विभागनाशात् कथं द्रव्यनाशसापेक्षो विभागं जनयेदिति न किंचिदेतत्। यद्यपि विभागनाशकत्वं नोत्तरसंयोगत्वेन सर्वस्यापि संयोगस्योत्तरत्वेन विभागस्य क्षणिकत्वापत्तिस्तथाऽपि यथोत्तरसंयोगस्य विभागनाशकत्वं तथा विभागग्रन्थे वक्ष्यामः।

विलक्षणपरत्वासमवायिकारणसंयोगाश्रयविभुत्वं, विलक्षणापरत्वासमवायिकारणसंयोगाश्रयविभुत्वं,[1] विलक्षणपरत्वासमवायिकारणपिण्डप्रतियोगिकसंयोगाश्रयत्वं,[2] तादृशापरत्वासमवायिकारणतादृशसंयोगाश्रयत्वं वा दिशो लक्षणम्।

ननु कालिकपरत्वापरत्वातिरिक्तपरत्वापरत्वयोर्मानाभावेन तादृशपरत्वापरत्वासमवायिकारणसंयोगाश्र-

---

१ पिण्डेऽतिव्याप्तिवारणायाह विभ्विति।
२ कृतायचतुर्थलक्षणे तत्रैवातिव्याप्तिवारणाय पिण्डप्रतियोगिकेति पदम्।

यतया न दिक्सिद्धिरिति चेत् । न स्वसन्निकृष्टे स्थविरेऽपि स्वापरत्वबुद्धिः स्वस्य तदपेक्षया विप्रकृष्टे यून्यपि स्वस्य परत्वबुद्धिर्जायते। न चैषा कालिकपरत्वापरत्वाभ्यां सम्भवति इति विलक्षणपरत्वापरत्वानामेव तद्विषयत्वम् । अत्र यदपेक्षया परत्वं यत्र यस्योत्पद्यते तदपेक्षया तत्र तस्य सन्निकृष्टत्वबुद्धिस्तादृशापरत्वे निमित्तम् । पिण्डः समवायी दिक्पिण्डसंयोगोऽसमवायी। एवमपरत्वे विप्रकृष्टबुद्धिर्निमित्तकारणम् । समवायिकारणादिकं पूर्ववत् । एतादृशसंयोगाश्रयत्वं नान्यस्येति दिगेव तादृशसंयोगाश्रय इत्याहुः ।

अन्ये तु प्राच्यां दिशि घट इति प्रत्ययादुदयाचलसूर्यसंयोगरूपप्राच्या घटे सम्बन्धाभावे तादृशप्रत्ययासम्भवेन तादृशसूर्यसंयोगाश्रयसंयुक्तदिक्संयुक्ततया घटादौ तादृशप्रत्ययात् तादृशसम्बन्धस्य घटकतया दिक्सिद्धिः। न चैतादृशसम्बन्धघटकत्वं पृथिव्यादीनामनन्तत्वादव्यापकत्वादात्मनां चाप्यनन्तत्वात्। नापि कालाकाशयोः, प्रत्येकं जीवैः सह विनिगमनाविरहाद्दिगेव सिध्यतीत्याहुः ।

नव्यास्तु यदपेक्षया यत्र यत्सन्निकृष्टदेशवृत्तित्वं तेनैव तदपेक्षया तत्र तत्सन्निकृष्टत्वरूपापरत्वेनापर इति बुद्ध्युपपत्तेर्न विलक्षणापरत्वे मानम् । एवं यदपेक्षया यत्र यद्विप्रकृष्टदेशवृत्तित्वं तेनैव तदपेक्षया तत्र तद्विप्रकृष्टदेशवृत्तित्वरूपपरत्वेनैव परत्वबुद्ध्युपपत्तेर्न विलक्षणपरत्वेऽपि प्रमाणमस्तीति न विलक्षणपरत्वापरत्वासमवायिकारणसंयोगाश्रयतया दिक्सिद्धिः । नापि प्राच्यादेः सम्बन्धघटकतया तत्सिद्धिः । उदयाचलसूर्यसंयोगरूपप्राच्यादेः स्वाश्रयसूर्यसंयुक्तदिक्संयोगस्य स्वप्रतीचीवर्ति-

घटेऽपि सत्त्वेन तत्रापि स्वप्राचीस्थत्वबुद्ध्यापत्तेः। न च प्राच्यादेर्घटादिसम्बन्धाभावे कथं प्राच्यां दिशि घट इति व्यवहार इति वाच्यम्। स्वदेशापेक्षयोदयाचलसन्निहितदेशस्यैव स्वप्राचीत्वेन तद्वृत्तिघटादौ स्वप्राचीस्थोऽयं घट इति व्यवहारसम्भवात्। स्वप्राचीस्थघटादौ अन्यस्य प्रतीचीस्थव्यवहारात् पुरुषभेदेनैव प्राच्यादेर्वक्तव्यत्वात्। अत एव कालिकयोः सिद्धिरपि न। तत्प्रागभावकालोत्पन्नत्वेन तदुत्पत्तिक्षणवृत्तिध्वंसप्रतियोगिसमयवृत्तित्वेनैव वा कालिकतत्परत्वव्यवहारोपपत्तेर्न कालिकपरत्वे मानम्। लक्ष्मणस्यापि रामाधिकरणवृत्तिध्वंसप्रतियोगिक्षणवृत्तित्वेन रामात्पर इति व्यवहारापत्तिवारणायोत्पत्तीति। क्षणपदस्थाने समयपदप्रवेशे तु लक्ष्मणस्यापि रामोत्पत्तिसमयो वर्षादिरूपस्तद्वृत्तिध्वंसप्रतियोगिसमयवृत्तित्वेन रामात् पर इति व्यवहारापत्तिः स्यादतः क्षणपदम्। समयपदानुपादाने लक्ष्मणस्यापि रामोत्पत्तिक्षणे वर्त्तते यो रामोत्पत्तिप्राक्कालीनलक्ष्मणविषयकज्ञानादीनां ध्वंसस्तत्प्रतियोगिज्ञानादौ विषयितया वर्त्तमानत्वेन रामात् परत्वव्यवहारापत्तिरतः समयपदं कालिकसम्बन्धेन वृत्तितालाभाय तदधिकरणक्षणवृत्तिध्वंसप्रतियोगिक्षणवृत्तित्वेन तादृशक्षणोत्पन्नत्वेन वा न तत्परत्वव्यवहारो, लक्ष्मणेऽपि रामात् परत्वव्यवहारापत्तेः। एवं तदधिकरणक्षणवृत्तिप्रागभावप्रतियोगित्वेन तदधिकरणसमयध्वंसाधिकरणक्षणोत्पन्नत्वेन तदवधिकापरत्वव्यवहारोपपत्तेर्न कालिकापरत्वेऽपि मानम्। इदानीं घट इत्यादिप्रतीत्योपाधिरूपकालेऽपि घटादीनां कालिकसम्बन्धस्वीकारात् संबन्धघटकतयाऽपि कालसिद्धिरित्याहुः।

आत्मत्वजातिमानात्मा । आत्मत्वं तु सुखसमवायिकारणतावच्छेदकतया सिध्यति । न च सुखसमवायिकारणतावच्छेदकतया सिद्धस्यात्मत्वस्येश्वरावृत्तित्वे प्रमाणाभावेनेश्वरेऽव्याप्तिरिति वाच्यम् । अहं सुखी अहं दुःखी इत्यादिप्रत्यक्षसुखाद्याश्रये प्रकारतया भासमानाया आत्मत्वजातेः प्रत्यक्षसिद्धतया तस्या एवात्मशब्दशक्यतावच्छेदकतया श्रुतावात्मशब्दस्य मुख्यतयैवोपपत्त्या चेश्वरे तत्सिद्धौ तस्याः सुखादिसमवायिकारणतावच्छेदकत्वात् । न चेश्वरे सुखाद्यापत्तिः । अदृष्टादेरभावात् नित्यस्येत्यादेरप्रयोजकत्वात् ।

यद्यपि शक्यतावच्छेदकतया न जातिसिद्धिरन्यथा विभुपदशक्यतावच्छेदकतया विभुचतुष्टये जातिसिद्ध्यापत्तेस्तथाऽपि शक्यतावच्छेदकतया नात्र जातिकल्पनं किं तु प्रत्यक्षसिद्धाया आत्मत्वजातेरात्मशक्यतावच्छेदकतया ईश्वरे श्रौतात्मशब्दमुख्यत्वोपपत्त्यर्थमीश्वरे तस्याः सम्बन्धस्यैव कल्पनम् । यद्वा ज्ञानेच्छाकृतिमत्त्वादिकं तल्लक्षणम् । अत एव सुखादिसमवायिकारणतावच्छेदकतया सिद्धात्मत्वस्येश्वरावृत्तित्वेऽपि न क्षतिः । अत एवेश्वरे गङ्गादिविषयकज्ञानाद्धर्माद्यापादानमपि निरस्तम् । धर्मादिकं प्रत्यात्मत्वेनापि कारणत्वात् । नन्वात्मनि प्रमाणाभाव इति चेत् ? न । अहं सुखीत्यादिप्रत्यक्षेण तत्सिद्धेः । किं च सुखादिसमवायिकारणतया धर्मादेः समवायेन सुखादिजनकतया च तत्सिद्धिः । अत एवाहं सुखीत्यादिप्रत्ययानां शरीरविषयत्वान्नात्मसिद्धिरिति निरस्तम् । शरीरस्य ज्ञानादिमत्त्वे बाल्येऽनुभूतस्याग्रे यौवने स्मरणानुपपत्तिः । बाल्ययौवनशरीराणां भेदात् ।

बाल्ये कृतधर्मादीनामग्रे सुखादिजनकत्वानुपपत्तेश्च । अत एव जन्येन्द्रियाणामप्यात्मत्वव्यवहारो निरस्तः । नापि मनसः । तस्याणुत्वेनाहं सुखी दुःखीत्यादिप्रत्यक्षविषयत्वात् । नन्वहं सुखीत्यादिप्रत्यक्षे सुखादिसमवायिनो न विषयत्वं किं त्ववच्छेदकतया सुखाद्याश्रयशरीरस्यैवेति सुखाश्रयत्वं मनसोऽस्त्विति चेत् ? न । शरीरस्य मानसलौकिकसाक्षात्काराविषयत्वात् । किं च हस्तावच्छेदेनोत्पन्नसुखादेरपि अहं सुखीति प्रत्यक्षविषयत्वात् तत्र तत्र तदवच्छेदकहस्तस्यैव तादृशप्रत्यक्षविषयत्वं वाच्यम् । तथा च कथमनुगनोऽहमित्याकारकप्रत्ययो हस्तादिशरीरसाधारणानुगतानतिप्रसक्ततादृशप्रत्यक्षविषयधर्माभावात् । एतेन शरीरस्य मानसप्रत्यक्षविषयत्वमस्तु मनसोऽणुत्वेऽप्यवच्छेदकतासम्बन्धेन तत्तत्सुखस्य तादात्म्यसम्बन्धेन कारणस्यैवावच्छेदकत्वाच्छरीरस्यावच्छेदकत्वेन सुखाश्रयत्वम् । मनसा समवायेनैव सुखादिग्रह इत्यपि निरस्तम् । किं चादृष्टवदात्मसंयोगस्य भोगसाधनघटादौ हेतुत्वात् तादृशघटादेर्देशान्तरेऽप्युत्पत्तेर्नादृष्टाद्याश्रयत्वं मनसः । न चादृष्टस्य कालिकसम्बन्धेनैव तादृशघटादिकारणत्वम् । न च मनस एवासिद्धिरिति वाच्यम् । तस्य व्यासङ्गान्यथानुपपत्त्याऽणुत्वेन सिद्धेर्वक्ष्यमाणत्वादिति वाच्यम् । पूर्वोक्तयुक्त्याऽनुगतप्रत्यक्षासम्भवात् । यद्यपि शरीरजातेः शरीरावयवतदवयवादिसंयोगनिष्ठत्वेनाहं सुखीत्याद्यनुगतप्रत्ययः सम्भवत्येव तथाऽपि कायव्यूहान्यथानुपपत्त्या विभुरात्मा स्वीकर्त्तव्य इति दिक् ।

कश्चित् तु सुखादेर्मनःसमवेतत्वे तेषामप्रत्यक्षप्रसङ्ग इति । तन्न । सुखादेर्मनोयोग्यत्वेन मनोनिष्ठत्वेऽपि प्रत्य

त्त्वसम्भवात्¹ । किं च सुखादेरात्मनिष्ठत्वे मनःसंयुक्तसमवायेनात्मैकत्ववन्मनस एकत्वस्यापि प्रत्यक्षवारणाय गुणलौकिकमानसे सामानाधिकरण्येन महत्त्वस्य हेतुत्वं वाच्यं, सुखादेर्मनोनिष्ठत्वे च एकत्वादेर्मनसोऽयोग्यत्वादेवाग्रहणोपपत्तेर्न गुणमानसे सामानाधिकरण्येन महत्त्वस्य हेतुत्वमित्यपरमपि लाघवम् । न च गुणप्रत्यक्षे द्रव्यान्यद्रव्यसमवेतप्रत्यक्षे एव वा सामानाधिकरण्येन महत्त्वस्य हेतुत्वं न तु चाक्षुषादिभेदेन अनन्तकार्यकारणभावप्रसङ्गात् । अत एव द्रव्यप्रत्यक्षे महत्त्वस्य समवायेन हेतुत्वं न तु द्रव्यचाक्षुषादाविति वाच्यम् । चक्षुःसंयुक्तपरमाणौ पृथिवीत्वादिसमवायसत्त्वेन परमाणुघटितसन्निकर्षेण पृथिवीत्वादिचाक्षुषवारणाय द्रव्यान्यद्रव्यसमवेतचाक्षुषे चक्षुःसंयुक्तमहदुद्भूतरूपवन्निरूपितसमवायस्य हेतुत्वस्वीकारात् । एवं परमाणुघटितत्वक्सन्निकर्षेण पृथिवीत्वाद्यवारणाय द्रव्यान्यद्रव्यसमवेतस्पार्शने त्वक्संयुक्तमहदुद्भूतस्पर्शवन्निरूपितसमवायस्य हेतुत्वावश्यकत्वेन गुणप्रत्यक्षे द्रव्यान्यद्रव्यसमवेतप्रत्यक्षे वा न महत्त्वस्य सामानाधिकरण्येन हेतुत्वं मानाभावादित्याहुः । तन्न । मन्मतेऽपि एकत्वत्वेन मनोनिष्ठैकत्वत्वेन वा अयोग्यत्वादेवाग्रहणोपपत्तेरिति दिक् ।

स च जीवेश्वरभेदेन द्विविधः । जीवास्त्वनन्ताः ईश्वरस्त्वेक एव । द्विविधोऽपि नित्यो विभुश्च । जीवास्तु

१ मनसि महत्त्वाभावेन स्वनिष्ठसङ्ख्याद्यष्टगुणाप्रत्यक्षत्ववत् सुखादीनां मनःसमवेतत्वे तेषामप्यप्रत्यक्षत्वं स्यादिति शङ्ककस्याशय । महत्त्वसामानाधिकरण्यमात्रेण गुणलौकिकमानसं निर्वोढुं न शक्यते । अन्यथा सिद्धान्तेऽपि आत्मनिष्ठसुखादिधर्माधर्मयोरपि मानसं स्यात्तेन मानसत्वाभावान्यथानुपपत्त्या धर्मादिषु मनोयोग्यत्वमन्येषु मनोयोग्यत्वमवश्यं फलानुरोधेन कल्प्यं तद्वदेतत्कल्पेऽपि सुखादीनां मानसत्वसंभवात्तेषां मनोनिष्ठत्वेऽपि न क्षतिरिति समाधातुराशय ।

संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाश्रयाः । ईश्वरस्तु संख्यादिपञ्चकज्ञानेच्छाप्रयत्नवान् । ननु जीवोऽप्येक एवास्त्विति चेत् । न । एकमुक्तत्वे सर्वेषां मुक्तत्वापत्तेः[1] । वामदेवादीनां मुक्तत्वप्रतिपादकागमाप्रामाण्यापत्तेश्च । यत् तु जीवस्यैकत्वे परसमवेतसुखादेः परस्य प्रत्यक्षापत्तिरिति । तत् तुच्छम् । परशब्देनात्मनोऽभिधाने इष्टत्वात् । शरीराभिधाने चासम्भवात् शरीरे प्रत्यक्षाभावात् । अवच्छेदकतया शरीरान्तरे स्यादित्यपि न । हस्तेऽवच्छेदकतासम्बन्धेन विद्यमानसुखस्यावच्छेदकतासम्बन्धेन पादे कारणाभावादेवाभाववत्तच्छरीरे विद्यमानसुखस्य शरीरान्तरेऽवच्छेदकतयाऽभावेन तत्प्रत्यक्षस्याप्यवच्छेदकतया तत्राभावात् । अवच्छेदकतासम्बन्धेन तत्र सुखादिप्रत्यक्षेऽवच्छेदकतया तत्र सुखादेरपि हेतुत्वात् । एवं सर्वत्र सुखाद्यापादनं निरसनीयमिति दिक् । ईश्वरे प्रमाणमग्रे वक्ष्यामः ।

मनस्त्वजातिमन्मनः । तच्च नानाऽणु । संख्यापरिमाणपृथक्त्वसंयोगविभागदैशिकपरत्वापरत्ववेगवत् अविभुद्रव्यत्वाद्दैशिकपरत्वापरत्ववन्नित्यत्वान्न कालिकपरत्वापरत्ववत् । तच्चात्मग्राहकम् । आत्मवृत्तिजातियोग्यगुणतद्गतजातितदभावानां च ग्राहकम् । नन्वतीन्द्रियमनःसद्भावे किं मानं सुखादिसाक्षात्कारे सुखादेर्हेतुत्वेनैवानतिप्रसङ्गात् । न चात्मनः सुषुप्तिकाले प्रत्यक्षप्रसङ्गः । ज्ञानाद्यविषयकात्मप्रत्यक्षासम्भवेन तदानीं ज्ञानाद्यभावेन ज्ञानादिविषयकात्मप्रत्यक्षासम्भवादिति

१ ननु जीवात्मैकत्वपक्षे मुक्तिर्नास्त्येव किन्तु महाप्रलये चरमशरीरनाशादेव मुक्तिरिति न एकमुक्तत्वे सर्वेषां मुक्तत्वापत्तिरूपदोष इत्यरुचेराह वामदेवादीनामिति ।

चेन्न । मनसोऽनङ्गीकारे सुषुप्त्यव्यवहितपूर्वक्षणवृत्त्यात्मयोग्यविशेषगुणस्यैव प्रत्यक्षसम्भवेन ततस्तत्प्रत्यक्षजन्यप्रत्यक्षधारासंभवेन सुषुप्त्यनुपपत्तेः न च सुषुप्त्यव्यवहितपूर्वक्षणे निर्विकल्पकस्यैवाङ्गीकारस्तस्य चायोग्यत्वान्न प्रत्यक्षमिति सुषुप्त्युपपत्तिरिति वाच्यम् । सुषुप्त्यव्यवहितपूर्वक्षणे यस्यैव प्रत्यक्षं निर्विकल्पकं तस्यैवाग्रे सविकल्पकसम्भवेनाग्रे तत्प्रत्यक्षसम्भवेन सुषुप्त्यनुपपत्तेः । निर्विकल्पकस्य फलैकोन्नेयत्वेन तदा निर्विकल्पकसत्त्वे प्रमाणाभावाच्च[1] । न च मनसः स्वीकारेऽप्यात्मनो विभुत्वेन मनःसंयोगस्य सम्भवेन सुषुप्त्यनुपपत्तिरिति वाच्यम् । त्वङ्मनोयोगस्यापि ज्ञानमात्रे कारणत्वस्वीकारेण सुषुप्तिकाले मनसः पुरीततीसंयुक्ततया तत्र त्वगभावेन त्वङ्मनोयोगाभावात् सुषुप्त्युपपत्तेरिति केचित् ।

अन्ये तु चर्ममनोयोगस्य शरीरमनोयोगस्य वा ज्ञानसामान्ये हेतुत्वान्न सुषुप्त्यनुपपत्तिरित्याहुः ।

अपरे तु क्रियासंयोगयोर्विशिष्यैव कारणत्वं वाच्यम् । अन्यथा घटक्रियया भूतलसंयोगवत् तत्रत्यसर्वद्रव्येष्वपि संयोगजननापत्तेः । तथा च तदानीन्तनमनःक्रिययाऽन्यत्र संयोगजननेऽपि नात्मनि संयोगो जन्यते मानाभावात् । न चैतत्कालीनसर्वमूर्त्तसंयोगित्वं, तथा च तदानीन्तनमनःक्रियया कथमात्मनि संयोगो न जन्यत

१ भवद्भिः सुषुप्त्यनुरोधेनात्मपुरीततिमनःसंयोगः स्वीक्रियते तद्वदस्माभिरपि सुषुप्त्यनुरोधेन सुषुप्तिप्राक्काले नियमेन निर्विकल्पकमेव स्वीक्रियते । तन्निर्विकल्पकस्य पूर्वकाले चलद्द्रव्येण चक्षुरिन्द्रियसंयोगः स्वीक्रियते । पश्चात्सविकल्पककाले द्रव्यक्रियये-न्द्रियसंयोगनाशात्तस्य च कार्यसहभावेन हेतुत्वस्वीकारेण न सविकल्पकसम्भव इति न मनसः सिद्धिरिति । सर्वं चैतत्कल्पनं भवतामिवास्माकं फलानुरोधादित्युक्तं तर्कवादिभिः ।

इति वाच्यम् । एतत्कालोत्पन्नद्रव्यैस्तदात्मादौ संयोगाभावेनाविभुत्वापत्तेः । कदा चित् तादृशसंयोगित्वमिति चेत् तदस्मन्मतेऽपि । न वा तदपि, किंतु परममहत्त्वं तथा च सुषुप्तावात्ममनःसंयोगाभावादेव न ज्ञानम् ।

ननु त्वङ्मनोयोगस्य ज्ञानसामान्ये हेतोरभावेन तदानीं ज्ञानाभावः । तस्य ज्ञानसामान्ये हेतुत्वे प्रमाणाभावात् । अन्यथा चाक्षुषादिज्ञानकालेऽपि त्वाचज्ञानापत्तिः। चाक्षुषादिज्ञानान्यथानुपपत्त्यैव त्वन्मते त्वङ्मनोयोगस्य सत्त्वात् । न च चाक्षुशादिसामग्रयास्तत्र प्रतिबन्धकत्वं वाच्यम् । अनन्तप्रतिबध्यप्रतिबन्धकभावकल्पने गौरवादित्याहुः ।

अन्ये तु घ्राणरसनचक्षुस्त्वगिन्द्रियाणां स्वस्वस्थव्यापकगुणसन्निकर्षे सति गन्धादीनां चतुर्णामेकं ज्ञानमज्ञानं वा स्यात् न त्वेकस्यैव ज्ञानम् । तथा चैकस्यैव तदानीं ज्ञानोपपादनार्थमिन्द्रियमनःसंयोगस्य कारणत्वं वाच्यम् । तथा च येनेन्द्रियेण मनःसंयोगोऽस्ति तत्प्रत्यक्षं जनयति नान्यत् । तथा च मनसोऽणुत्वे सर्वैः सह तदा संयोगासम्भवान्न सर्वैस्तदानीं प्रत्यक्षं जन्यत इति मनसोऽणुत्वसिद्धिः । न च दशसु पठ्यमानगाथासु बुभुत्सावशादेव बुभुत्सितानां ग्रहणं नाबुभुत्सितानां तथा रूपादिषु बुभुत्सितस्यैव ग्रहणं नाबुभुत्सितस्येति वाच्यम् । बुभुत्साया नाबुभुत्सितग्रहणे प्रतिबन्धकत्वं न वा बुभुत्सितरूपादिप्रत्यक्षे हेतुत्वं रूपबुभुत्सायामपि अबुभुत्सितपरिमाणादिग्रहात् । न च रूपबुभुत्साया रूपाविषयकज्ञाने प्रतिबन्धकत्वमिति वाच्यम् । एवं रसादिबुभुत्साया रसाद्यविषयकज्ञाने प्रतिबन्धकत्वापत्त्या गौरवापत्तेः । रूपबुभु-

त्सां विनाऽपि रूपप्रत्यक्षसम्भवेन व्यभिचारात्। बुभुत्सावशाद्ग्राथाग्रहणं त्विथम् । बुभुत्सा हि बुभुत्सितशब्दावच्छिन्नश्रोत्रे मनःसंयोगसम्पादकतयोपयुज्यते । तत्तच्छब्दावच्छेदेन श्रोत्रमनःसंयोगसम्पादकतयोपयुज्यते । तत्तच्छब्दावच्छेदेन श्रोत्रमनःसंयोगस्य हेतुत्वात् । एवं रूपादिबुभुत्साऽपि रूपग्राहकेन्द्रिये मनःसंयोगसम्पादकत्वेनोपयुक्ता मनसोऽणुत्वस्यैव साधिका। अन्यथा रूपादिचतुर्णां बुभुत्सायां चतुर्णामेकज्ञानविषयत्वं ज्ञानाविषयत्वं वा स्यादित्याहुः ।

नव्यास्तु सुषुप्त्यन्यथानुपपत्त्या न मनसः सिद्धिः। मनस्त्वाश्रयतत्संयोगादिकल्पनापेक्षया लाघवेन जन्यज्ञानकारणतावच्छेदकजातेः सुषुप्तिकालीनात्मसंयोगेष्वेव कल्पनात् । विजातीयसंयोगस्य समवायेन ज्ञानादौ हेतुत्वात् । तच्च वैजात्यं जाग्रत्कालीनपृथिव्याद्यात्मसंयोगेष्वेव । अत एव पार्थिवपरमाणवो वा मनांसीति दीधितिविवृतिकारैरपि ज्ञानकारणात्मसंयोगाश्रयत्वेन तत्र मनस्त्वं स्वीकृतं न तु ज्ञानकारणपृथिवीपरमाण्वात्मसंयोगाश्रयत्वेन, तत्त्वेन कारणत्वे गौरवात् । जलपरमाण्वात्मसंयोगत्वेन विनिगमनाविरहाच्च । नापि युगपज्ज्ञानानुपपत्त्या तत्सिद्धिः। रूपादिभिः सन्निकर्षस्य फलैकाश्रयत्वेन यत्र यस्यैव प्रत्यक्षं तद्ग्राहकेन्द्रियसन्निकर्ष एव तत्रास्तीति कल्पनादेकज्ञानोपपत्तेः । एवं य एव शब्दो गृह्यते तस्यैव कदम्बगोलकन्यायेनोत्पादकल्पनया कर्णावच्छिन्नत्वात् तस्यैव प्रत्यक्षत्वोपपत्तेः । अत एव तस्य विभुत्वमपीति दिक् ।

गुणत्वजातिमान् गुणः । स च रूपरसगन्धस्पर्शसं-

द्रव्यपरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारशब्दसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मबुद्धिभेदाच्चतुर्विंशतिविधः ।

गुणत्वजातिस्तु रूपादौ गुण इत्याकारकप्रत्यक्षेणैव सिद्धा । अतीन्द्रियरूपादौ तत्सिद्धिस्तु सङ्करभयात् । गुरुत्वादौ धर्मिग्राहकमानादिति प्राञ्चः ।

अपरे तु रूपरसादौ गुणाकाराध्यक्षं नापामरसाधारणं येन तत्सिद्धिः स्यात् । नापि द्रव्यकर्मान्यस्मिन् सामान्यवति यः कारणतास्तदवच्छेदकतया तत्सिद्धिः । एवंविधप्रकारेण जातिसिद्धेरभावात् । अन्यथा रूपान्यस्मिन् सामान्यवति यः कारणतास्तदवच्छेदकत्वेनापि जातिसिद्धौ तया सङ्करापत्तेः । अत एव सामान्यवति कर्मान्यस्मिन् वर्तते यः संयोगसमवायिकारणत्वाभावस्तदवच्छेदकतयाऽपि न गुणत्वसिद्धिः । रूपान्यसामान्यवति संयोगसमवायिकारणत्वाभावात् तदवच्छेदकतया जातिसिद्धौ तया सङ्करप्रसङ्गात् । तस्माद् द्रव्यकर्मान्यत्वे सति सामान्यवत्त्वं गुणत्वं, रूपाद्यन्यतमत्वं तु न गुणत्वं गौरवात् । गुरुत्वादेर्निरस्यत्वेन तद्घटितान्यतमत्वस्यासम्भवित्वाच्चेति प्रागेवोक्तप्रायमित्याहुः ।

ते द्विविधाः । सामान्यगुणा विशेषगुणाश्च । तत्र विशेषगुणाः रूपरसगन्धस्पर्शसांसिद्धिकद्रवत्वस्नेहशब्दसुखदुःखेच्छाद्वेषयत्नधर्माधर्मबुद्धिभावनाख्याः । अन्ये सामान्यगुणाः । विशेषगुणलक्षणं तु एकद्रव्यविभाजकोपाध्यवच्छिन्नवृत्तिवृत्ति अपरद्रव्यविभाजकोपाध्यवच्छिन्नवृत्त्यवृत्तिजातिमद्गुणत्वम् । न चैवमनुष्णाशीतस्पर्शादावव्याप्तिः । तत्र पृथिवीवायुस्पर्शादौ जातिभेदाङ्गीका-

रात् । एवं पृथिवीजलरूपरसयोरपि जातिभेदाङ्गीकारान्नाव्याप्तिः ।

तत्र रूपत्वजातिमद्रूपम् । रूपत्वजातिस्तु नीलरूपादौ रूपाद्यनुगताध्यक्षेण सिद्धा । न चातीन्द्रियनीलादौ न रूपत्वसिद्धिः स्यादिति वाच्यम् । समवायेन विजातीयनीलादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलादेर्हेतुत्वेन नीलत्वादेःपरमाणुनीलादिवृत्तित्वेन साङ्कर्यवारणाय रूपत्वादेः परमाणुरूपादिवृत्तित्वस्वीकारात् । न च रूपत्वादिना रूपत्वाद्यवच्छिन्नं प्रति कारणत्वात् प्रत्यक्षसिद्धरूपत्वादेरेव कारणतावच्छेदकतया परमाणुरूपादौ रूपत्वादिसिद्धिरिति वाच्यम् । रूपत्वादेर्नित्यवृत्तितया कार्यतानवच्छेदकत्वात् । नापि जन्यरूपत्वादिकं रूपादिकार्यतावच्छेदकं पाकादपि रूपादेर्जायमानत्वेन व्यभिचारात् नापि विजातीयरूपत्वादिकं नीलत्वादेः पाकजनीलादिवृत्तित्वेन रूपादिजन्यतावच्छेदकवैजात्यस्य पीनादिवृत्तित्वेनोभयो रूपादिजन्यनीलादिवृत्तित्वेन नीलत्वादिना सङ्करप्रसङ्गात् । नापि पाकजन्यजन्यरूपत्वादिकम् पाकजन्यताऽपि रूपादौ रूपाद्यजन्यजन्यरूपत्वावच्छिन्नं प्रति ग्राह्येत्यन्योन्याश्रयप्रसङ्गात् । न च विजातीयनीलादिकं प्रति पाकजन्यता तथा च पाकजन्यजन्यरूपादिकं प्रति रूपादिजन्यत्वमिति वाच्यम् । विजातीयनीलादिकं प्रत्येव नीलादेर्हेतुत्वं रूपाद्यजन्यजन्यरूपादिकं प्रति पाकस्य हेतुत्वमित्यस्यापि सुवचत्वात् ।

वस्तुतस्तु विजातीयनीलादिकं प्रति पाकस्य, विजा

१ रूपजन्यतायां पाकजन्यता पाकजन्यतायां रूपजन्यतेत्यन्योऽन्याश्रयं इत्यभाव ।

तीयनीलादिकं प्रति नीलादेर्हेतुत्वाद्रूपत्वादिना रूपादिकं प्रति हेतुत्वे मानाभाव इत्याहुः ।

केचित् तु चक्षुर्मात्रग्राह्यविशेषगुणो रूपम् । स्नेहप्रभाभित्तिसंयोगरूपत्वादिवारणाय मात्रविशेषगुणादिपदानि । न चातीन्द्रियरूपेऽव्याप्तिः । तादृशगुणवृत्तिगुणत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वादिति प्राहुः । तन्न चक्षुर्मात्रगृहीतस्नेहविशेषवृत्तिस्नेहत्वस्य स्नेहे सत्त्वेन स्नेहेऽतिव्याप्तिः । न च चक्षुर्मात्रग्राह्येति जातेर्विशेषणान्नोक्तदोष इति वाच्यम् । विशेषगुणत्वव्याप्यपदयोर्वैयर्थ्यात् । प्रभात्वस्य गुणावृत्तित्वेनैव वारणादिति दिक् ।

तच्च रूपं पृथिव्यादित्रयवृत्ति । नीलपीतरक्तकपिशहरितश्वेतचित्रभेदात् सप्तविधम् । उद्भूतमनुद्भूतं च । पृथिव्यां सप्तविधमप्यनित्यमेव । जलतेजोवृत्ति शुक्लमेव । तच्च नित्यगतं नित्यम् । अनित्यगतमनित्यम् । नीलादिकं तु नीलत्वादिजातियोगि, नीलत्वादिजातौ प्रत्यक्षमेव मानम् ।

ननु समवायेन नानारूपज्ञानाद्विजातीयनानारूपज्ञानात् समानाधिकरणसमानकालीनविजातीयनानारूपज्ञानाद्वा[1] चित्रव्यवहारोपपत्तौ न चित्ररूपे मानम् । अत एव घटे क्रमिकविजातीयरूपग्रहवतोऽसमवायिकारणभेदाद्रूपभेद इति भ्राम्यतश्च घटे नानारूपाणां समवायेन ज्ञानेऽपि न चित्रव्यवहार इति चेत् ।

---

१ नानारूपेत्युक्तौ कालिकसम्बन्धेन नानारूपवान् घट इति ज्ञाने चित्रव्यवहारः स्यादिति समवायेनेति । तावत्युक्तौ श्यामश्यामकपालारब्धघटादावसमवायिकारणभेदाद्रूपभेद इति भ्रमाच्छ्यामश्यामरूपवानयं घट इति भासतश्चित्रव्यवहारः स्यादिति विजातीयेति । तावत्युक्ते समवायेन नीलो घटः पीतः पटो रक्तं कुड्यमिति ज्ञानाच्चित्रव्यवहारः स्यादिति समानाधिकरणेति । तावत्युक्ते पाकजक्रमिकनानारूपवान् घट इति ज्ञानाच्चित्रव्यवहारः स्यादिति समानकालीनेति विशिष्टमुपात्तम् । ज्ञानाद्वेति वाशब्द उत्तरोत्तराकाङ्क्षया पदकृत्यसूचनार्थः । न तु लक्षणभेदार्थं । एकलक्षण एव तात्पर्यग्राहकमिति यावत् । अन्यथोक्तदोषस्य दुरुद्धरत्वादिति दिक् ।

अत्र केचित् । नीलपीताद्यारब्धे घटादौ प्रत्यक्षान्यथानुपपत्त्या रूपमावश्यकम् । तत्र नीलपीतादिनानारूपस्वीकारे गौरवम् । न च नीलपीतादेः कारणसत्त्वेन तयोरावश्यकत्वेन तत एव चित्रव्यवहारोपपत्तेरतिरिक्तचित्रस्वीकारे गौरवमिति वाच्यम् । समवायेन नीलादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलेतररूपादेः प्रतिबन्धकत्वमावश्यकं वाच्यम् । अन्यथा तादृशघटादौ पीतकपालावच्छेदेन नीलोत्पादापत्तिः । तथा च नीलेतरपीतेतरयोः परस्परं प्रतिबन्धकयोः सत्त्वान्न नीलपीतयोस्तत्रोत्पत्तिः । अतश्चित्रमेव प्रत्यक्षान्यथानुपपत्त्या स्वीकार्यमित्याहुः ।

अपरे तु[1] समवायेन नीलादिकं प्रति न स्वाश्रयसमवेतत्वसम्बन्धेन नीलादेर्हेतुत्वं येनोक्तरूपेण प्रतिबन्धकता स्यात् किन्त्ववच्छेदकत्वसम्बन्धेन नीलादिकं प्रति समवायेन नीलादेः कारणत्वम् । तथा च तादृशघटादेर्नीलादिकमवच्छेदकतासम्बन्धेन नीलकपालादावेवोत्पद्यते न पीतकपालादावपि । न च समवायेन नीलादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेनापि नीलादेर्हेतुत्वं वाच्यम् । अन्यथा नीलकपालादाववच्छेदकतासम्बन्धेन जायमानं समवायेन नीलघटादाविवाकाशादौ पीतघटादावपि उत्पद्येतेति वाच्यम् । समवायेन घटादौ जायमानं प्रतीतिवशात् कपालादाववच्छेदकतया स्वीक्रियते यथा भवद्भिः, तथावच्छेदकतासंबन्धेन जायमानं प्रतीतिवशात् समवायेन घटादौ स्वीक्रियत इति । न हि सर्वेऽपि सम्बन्धाः कार्यतावच्छे-

१ पूर्वकल्पे तादृशकार्यकारणभावाधीन प्रतिबध्यबन्धकभाव । तदधीनोऽतिरिक्तचित्ररूपस्वीकार । अपरे तु वादिना तु सर्वानर्थमूलंभूत स कार्यकारणभाव एव न स्वीक्रियते इति तत्त्वम ।

दकाः। यद्वा[1]। समवायेन नीलादिकं प्रत्येव नीलादेः स्वाश्रयसमवेतत्वसम्बन्धेन हेतुत्वं न त्ववच्छेदकतासम्बन्धेनापि। न वा नीलेतररूपादेर्नीलादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन प्रतिबन्धकत्वम्। न चैवं तादृशघटादौ नीलपीतादेर्व्याप्यवृत्तित्वापत्तिः। केषां चित् कालिकाव्याप्यवृत्तित्ववद्दैशिकाव्याप्यवृत्तित्वस्वीकारात्। अत एवावच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायेन न द्रव्यस्य कारणत्वमन्यथा पटाभावदशायां नीलतन्ताववच्छेदकतया नीलोत्पत्त्यापत्तिः। न वाऽवच्छेदकतासम्बन्धेन रूपोत्पत्तिं प्रत्यवच्छेदकतया रूपस्य प्रतिबन्धकत्वान्तरं कल्पनीयम्। अन्यथाऽवच्छेदकतासम्बन्धेनोत्पन्ने नीले पुनरवच्छेदकतया नीलापत्तेः। पाकात् समवायेन नीलोत्पत्तेः पुनरुत्पादकारणार्थं समवायेन रूपं प्रति समवायेन रूपस्य प्रतिबन्धकत्वस्यावश्यकत्वात्। न च नीलावयवावच्छिन्नचक्षुःसंयुक्तसमवायस्य नीलग्राहकत्वम्। एवं पीताद्यवयवावच्छिन्नचक्षुःसंयुक्तसमवायस्य पीतादिग्राहकत्वं वाच्यम्। तथा च षट्कार्यकारणभावापत्त्याऽतिरिक्तचित्रस्वीकार एवोचित इति[2] वाच्यम्। नीलावयवावच्छिन्नेनैव चक्षुःसंयुक्तसमवायसत्त्वेऽपि चित्ररूपप्रत्यक्षवारणाय चित्रप्रत्यक्षेऽवयवविजातीयनानारूपप्रत्यक्षस्य चित्ररूपे चावयवविजातीयनानारूपस्य कारणत्वेऽतीवगौरवापत्तेः[3]।

१ ननु अवच्छेदकतया कार्यतास्वीकारे अत एवेत्यादिना वक्ष्यमाणातिरिक्तकार्यकारणभवद्वयस्वीकारे गौरवापत्तिरित्ययमेवास्वरस पूर्वकल्पे अत पक्षान्तरमाह यद्वेति।

२ अन्यथा रूपप्रत्यक्षे सयुक्तसमवायस्य हेतुत्वमिति सामान्यत. कार्यकारणभाव स्वीकारे नीलाद्यवच्छेदेन पीतादिप्रत्यक्षापत्तिर्दुर्वारेति भाव ।

३ विजातीयनानारूपप्रत्यक्षे नीलपीताद्याश्रयनानावयवघटितसन्निकर्षाणा हेतुत्वेन पूर्वतुल्यत्वात् । प्रत्युत न नारूपाणा चित्ररूपे हेतुत्वस्वीकारेऽतीवगौरव तवैवेति भाव ।

यद्वा तादृशनीलपीतादिकं व्याप्यवृत्त्येव । न च पीतकपालावच्छेदेन सन्निकर्षे नीलादेः प्रत्यक्षतापत्तिः । नीलादिकपालाद्यवच्छिन्नसंयुक्तसमवायस्य नीलादिग्राहकत्वात् । अव्याप्यवृत्तित्वाङ्गीकारेऽपि तादृशसन्निकर्षस्यैव ग्राहकत्वं वाच्यम् । अन्यथा पीतकपालावच्छेदेन सन्निकर्षेऽपि नीले संयुक्तसमवायसत्त्वेन नीलग्रहापत्तिरिति नातिरिक्तं चित्रं रूपम् । एवमेव चित्रस्पर्शेऽपि साधकं तन्निराकरणं च द्रष्टव्यमिति वदन्ति ।

परे तु समवायघटितस्वाश्रयाश्रयत्वविशिष्टावच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायसम्बन्धेन नीलादेर्हेतुत्वमित्याहुः[1] ।

रसत्वजातिमान् रसः । रसत्वजातौ प्रत्यक्षमेव मानम् । न चातीन्द्रियरसे रसत्वजातौ मानाभावः । समवायेन विलक्षणमधुरादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन मधुरादिरसादेर्हेतुत्वेन मधुरत्वादिजातेरतीन्द्रियपरमाण्वादिमधुररसादिवृत्तित्वेन मधुरत्वादिना साङ्कर्यवारणायातीन्द्रियरसेऽपि रसत्वस्वीकारात् ।

परे तु रसनेन्द्रियजलौकिकसाक्षात्कारविषया या गुणत्वव्याप्या जातिस्तद्वान् रासनलौकिकविषयतावती

१ परेत्विति । निष्कृष्टमतमेतदिति प्रतिभाति । पूर्वत्रास्वरसस्तु समवायेन कारणतास्वीकारे अव्याप्यवृत्तित्वस्वीकारपक्षे अव्याप्यवृत्तित्वबलात् किं चित्किं चिदवच्छेदेन नीलपीताद्युत्पत्तिनियमलाभेऽपि नीलाद्यवच्छेदेनैव नीलादेरुत्पत्तेर्नियामकाभावेन व्यत्ययापत्तेर्दुर्वारत्वात । व्याप्यवृत्तित्वपक्षे तु नीलकपालावच्छेदेनैव चक्षुःसंयोगेन सर्वत्र नीलमस्तीति भ्राम्यतः सर्वत्र नीलमस्तीति शब्दं प्रयुञ्जतो वाक्यश्रवणादन्यपुरुषोत्पन्नशाब्दबोधस्य प्रमात्वापत्ति । त्वन्मते तत्रार्थबाधाभावात् । सर्वावच्छेदेन सर्वरूपस्य स्वीकारात । न चैव द्रव्यत्वकारणत्वमवच्छेदकतया रूपस्य प्रतिबन्धकत्वमित्यनयोरधिकयोः स्वीकारे गौरवापत्ति । कार्यतावच्छेदकसम्बन्धे समवायघटितत्वादिविशेषणेन द्रव्यत्व कारणताया अप्रयोजकत्वात । अतिरिक्तप्रतिबध्यप्रतिबन्धकभावस्य तु स्वीकारः । तत्स्वीकारमात्रेण पूर्वकल्पीयदूषणनिरासेन तत्कल्पनस्य प्रामाणिकत्वात् ।

या गुणत्वव्याप्या जातिस्तद्वान् वा रसः । अत एव रसनेन्द्रियजन्यप्रत्यक्षे उपनीतरूपत्वादेर्भानेऽपि रूपत्वादौ रासनलौकिकविषयत्वाभावान्न रूपत्वादिकमादायातिव्याप्तिः । गुणत्वमादाय गुणादावतिव्याप्तिवारणाय गुणत्वव्याप्येति। यद्यपि गुणत्वस्यापि गुणत्वव्याप्यत्वमस्त्येव तथाऽपि गुणत्वसमानाधिकरणाभावप्रतियोगित्वं गुणत्वव्याप्यत्वेन विवक्षितं न तु गुणत्वसमानाधिकरणत्वं सत्तामादायातिप्रसङ्गात् । न वा गुणत्वाभाववदवृत्तित्वे सति गुणत्वभिन्नत्वं गौरवात्। रसनेन्द्रियग्राह्यगुणत्वं तु न रसलक्षणम् । अतीन्द्रियरसेऽव्याप्तेरिति वदन्ति ।

स च पृथिवीजलवृत्तिः । मधुरतिक्तकटुकषायाम्लक्षारभेदात् षड्विधः । उद्भूतो नुद्भूतश्च । पृथिव्यां पाकजोऽपाकजश्च । षड्विधोऽपि पृथिव्यामनित्य एव जले मधुरोऽपाकजश्च । स नित्यगतो नित्योऽनित्यगतोऽनित्यश्च ।

ननु मधुरतिक्तावयवारब्धे चित्ररूपोपपादकयुक्त्या चित्ररसो दुर्वार इति चेत् ? न। मधुरं प्रति मधुरेतररसस्य तिक्तं प्रति तिक्तेतररसस्य प्रतिबन्धकतया तत्र मधुरतिक्तयोरभावः । चित्रस्तु तत्र नाङ्गीक्रियते तत्कल्पने तत्प्रागभावध्वंसयोः कल्पने च चित्ररसं प्रत्यतिरिक्तकार्यकारणभावकल्पने च गौरवापत्तेः । रसनेन्द्रियेण द्रव्याग्रहणादृशद्रव्यस्य नीरसत्वे क्षतिविरहात् । मधुरादिप्रतीतेरवयवमधुररसादिनैव चित्रप्रत्ययस्य चावयवविजातीयनानारसेनैवोपपन्नत्वात् ।

नन्वेवं परमाणुमधुररसादेरयोग्यत्वेन तेनावयविनि मधुररसादिप्रत्यक्षोपपादनासम्भवादस्तु त्र्यणुके मधुरादिरसोत्पत्तिः । त्र्यणुकमधुरादिरसेनैव चतुरणुका-

दिषु मधुरादिप्रत्ययोपपत्तेश्चतुरणुकादिप्रभृत्यन्त्यावयवि-मधुररसादौ मानाभाव इति चेत् । न । त्र्यणुकमधुररसाद्यन्यथानुपपत्त्या मधुररसादिकं प्रति मधुररसादेर्हेतुत्वेनान्यत्रापि मधुररसादेर्वारयितुमशक्यत्वात् सामग्रीसत्त्वादिति प्राञ्चः ।

अन्ये तु परमाणुद्व्यणुकयोरङ्गीकारेऽपि महत्त्ववत्समवेतद्रव्यत्वेनैव रसे प्रतिबन्धकतास्वीकारान्न चतुरणुकादौ मधुराद्युत्पत्तिः सम्भवति । न चैवमतिरिक्तप्रतिबध्यप्रतिबन्धकतास्वीकारे गौरवमिति वाच्यम् । अनन्तमधुरादितत्प्रागभावध्वंसादिकल्पनापेक्षया एकस्य प्रतिबध्यप्रतिबन्धकभावस्यैव स्वीकारात् । कथमन्यथा रूपं प्रति रूपत्वेनापि प्रतिबन्धकतासिद्धिः । परमाणुद्व्यणुकयोरनङ्गीकारे तु पार्थिवत्रुटौ मधुररसादिकं पाकजमेव जलत्र्यणुके तु मधुररसादिकं नित्यम् । तथा च मधुरादिकं प्रति विलक्षणपाकस्यैव हेतुत्वं स च पार्थिवत्र्यणुके कल्प्यते नान्यत्र । तथा च त्र्यणुकमधुरादिनैवान्यत्र मधुरादिप्रत्ययोपपत्तेर्नान्यत्र मधुररसादिसिद्धिः । यदि चान्यत्र समवायेन तत्प्रतीतेः प्रामाण्यान्मधुरादिकल्पनं तदा मधुरतिक्तारब्धेऽपि समानम् । नन्वेवं चित्ररसप्रतीत्या चित्ररसस्यापि सिद्धिः स्यात् । न स्यात् । समानाधिकरणविजातीयनानारसेनैवोपपन्नत्वात् । एतेन चित्रगन्धो व्याख्यातः ।

गन्धत्वजातिमान् गन्धः । गन्धत्वजातिस्तु गन्धो गन्ध इत्यनुगतप्रत्यक्षसिद्धा । यद्वा विजातीयसौरभे विजातीयतेजःसंयोगस्य समवायेन हेतुत्वात् तादृशविजातीयसंयोगस्य तेजस्यपि सत्त्वेन तत्र सौरभाद्यापत्तिवा-

रणाय गन्धत्वावच्छिन्ने पृथिवीत्वेन हेतुत्वात् । कार्यता-वच्छेदकतयाऽपि तत्सिद्धिः ।

कश्चित् तु घ्राणग्राह्यगुणत्वं घ्राणजप्रत्यक्षकारणगुणत्वं वा तल्लक्षणम् । गन्धत्ववारणाय गुणेति प्राह । तन्न । घ्राणसंयुक्तसमवायस्य रूपादावपिसत्त्वेन तेषां घ्राणजप्रत्यक्षवारणाय गुणत्वविशिष्टलौकिकविषयतया घ्राणजप्रत्यक्षे गन्धस्य गन्धसमवेतत्वविशिष्टलौकिकसाक्षात्कारविषयतया घ्राणजप्रत्यक्षे गन्धसमवेतस्य तादात्म्येन हेतुत्वम् । न च रूपादेरयोग्यत्वेनैव न घ्राणजं तेषामिति वाच्यम् । तेषामयोग्यत्वेन भेदानां घ्राणजप्रत्यक्षे कारणत्वे गौरवापत्तेः । यद्वा लौकिकविषयतया घ्राणजभावप्रत्यक्षे गन्धानुयोगिकसमवायस्य प्रतियोगित्वानुयोगित्वान्यतरसम्बन्धेन गन्धस्य हेतुत्वमिति घ्राणजभावप्रत्यक्षेगन्धस्य हेतुत्वमस्तु । तथाऽप्याद्ये परमाण्वादिगन्धाव्याप्तेः । तस्यातीन्द्रियत्वात् । द्वितीये घ्राणसंयुक्तसमवेते रूपे सत्तासमवायसन्निकर्षेण सत्ताघ्राणजापत्तेः । घ्राणजलौकिकविषयतयैव गुणत्वव्याप्यजातिमत्परतया तद्वर्णने घ्राणसंयुक्तमहदुद्भूतगन्धवत्समवेतसमवायस्य हेतुत्वे तु तदपि सम्यगिति दिक् ।

स द्विविधः । सुरभिरसुरभिश्चोद्भूतोऽनुद्भूतश्च पाकजोऽपाकजश्च सर्वोऽप्यनित्यः । पृथिवीमात्रवृत्तिः । गन्धे सुरभित्वत्रयम् । एकं प्रत्यक्षसिद्धं तत्सर्वसुरभिनिष्ठं सुरभिकारणतावच्छेदकम् । अपरं सुरभिनिष्ठं सुरभिकार्यतावच्छेदकम् । पाककार्यतावच्छेदकमपरम् । एवमसुरभित्वत्रयमिति दिक् ।

स्पर्शत्वजातिमान् स्पर्शः । सा चानुगतप्रत्यक्षसि-

द्धा । स चतुर्विधः । शीतोष्णानुष्णाशीनचित्रभेदात् । उद्भूतोऽनुद्भूश्च नित्यो ऽनित्यः पाकजो ऽपाकजश्च । कठिनः कोमलश्च । शीतः पयसि । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः । पृथिव्यामनित्य एव पाकजोऽपाकजश्च । अन्यत्र नित्यगतो नित्योऽनित्यगतो ऽनित्योऽपाकजश्च । शीतस्पर्शादयश्च शीतस्पर्शत्वादिजातिमन्तः । ताश्च जातयः प्रत्यक्षसिद्धाः ।

ननु कठिनत्वकोमलत्वयोः संयोगगतत्वेन कठिनकोमलाभ्यामवयवाभ्यामारब्धे कथं चित्रस्पर्शोत्पत्तिरिति चेत् । न । तयोः संयोगगतत्वे चाक्षुषत्वापत्तिभयेन स्पर्शगनस्यैवाङ्गीकारेण कठिनकोमलाभ्यामारब्धे चित्रस्पर्शोत्पत्तेः । एतस्य सर्वोऽपि विचारश्चित्ररूपवदवसेयः ।

नन्वनुद्भूतस्पर्शादौ मानाभाव इति चेदत्र प्राञ्चः । घ्राणं रूपरसगन्धस्पर्शादिमत् पृथिवीत्वात्, इत्याद्यनुमानेन तेषां सिद्धिः । उद्भूतत्वे तेषां महत्त्वसमानाधिकरणानां प्रत्यक्षत्वापत्त्यानुद्भूतत्वे एव पर्यवसानमित्याहुः ।

वैशेषिकास्तु, अस्तु पृथिव्यां पाकजं रूपादिकं परन्तु परमाणावेव पाकाद्रूपनाशोत्पादौ रूपाजन्यजन्यनीलत्वापेक्षयाऽसमवेतनीलत्वस्यैव विलक्षणपाककार्यतावच्छेदकत्वादसमवेनरूपनाशत्वस्यैव पाकनाश्यतावच्छेदकत्वाच्च । घटादिनिष्ठरूपादिनाशे घटनाशादेर्हेतुत्वात् पाकेन घटादौ रूपनाशासम्भवाच्च। कथं तर्हि घटादौ पूर्वरूपादितो विलक्षणरूपादिकं दृश्यते पूर्वरूपाश्रये दृश्यते एव न, किन्तु पाकात् परमाणौ क्रिया तया विभागसंयोगनाशक्रमेण द्व्यणुकनाशः । ततः समवायिकारणनाशक्रमेण घटादिनाशः । ततः परमाणौ रूपनाशस्ततो रूपान्तरोत्पत्तिः ।

ततः परमाणुक्रियान्तरेण तथैव वा परमाणुसंयोगस्ततो द्व्यणुकोत्पादादिक्रमेण घटाद्युत्पत्तिः । द्व्यणुकरूपोत्पादादिक्रमेण घटान्तरं पूर्वघटसदृशो रूपोत्पत्तिः ।

अत्र प्रसङ्गाद्विचार्यते । द्व्यणुकनाशमारभ्य द्व्यणुकान्तरे एकादशक्षणे रूपोत्पत्तिर्दशमे नवमेऽष्टमे वेति । तत्र एकादशक्षणा वेवम् । परमाणौ वह्निसंयोगात् क्रिया ततः परमाणुद्वयविभागः, तस्मिन् क्षणे न परमाण्वाकाशविभागः, द्रव्यारम्भकसंयोगनाशकविभागजनककर्मणो द्रव्यानारम्भकसंयोगनाशकविभागजनकत्वनियमात् विकसत्कमलकुण्डलादौ तथादर्शनात् । कथं तर्हि परमाण्वाकाशविभाग इति चेत् । परमाणुद्वयविभागात् कारणमात्रविभागस्य कारणाकारणविभागहेतुत्वात् । परमाणुद्वयविभागेन परमाण्वाकाशादिविभागे जननीये द्रव्यनाशस्तज्जनकसंयोगनाशो वाऽपेक्षितः । अन्यथा परमाणुद्वयविभागस्य कर्मतापत्तिः संयोगविभागयोरनपेक्षं कारणं कर्मेति कर्मलक्षणात् । तत्र द्रव्यनाशापेक्षत्वपक्षे यत्परमाणुक्रियया द्व्यणुकनाशस्तत्परमाणुक्रियान्तरेण द्व्यणुकोत्पादे एकादशक्षणा । संयोगनाशापेक्षत्वपक्षे दशक्षणा । तथाहि । परमाणुक्रिया ततः परमाणुद्वयविभागस्ततः परमाणुसंयोगनाशस्ततो द्व्यणुकनाशस्ततो द्वितीयक्षणे परमाणुद्वयविभागेन द्रव्यनाशापेक्षेण परमाण्वाकाशविभागः परमाणुश्यामनाशश्च ततस्तृतीयक्षणे परमाण्वाकाशसंयोगनाशपरमाणुरक्तोत्पादौ । ततश्चतुर्थक्षणे परमाणूत्तरदेशसंयोगस्ततः पञ्चमे क्षणे क्रियानिवृत्तिक्रियान्तरजनकसंयोगौ ततः षष्ठे पूर्वक्षणकल्पितकारणेन क्रियान्तरोत्पत्तिः । ततः सप्तमे तथा विभागस्ततोऽष्टमेपूर्वसंयोगनाशस्ततो

नवमे द्व्यणुकारम्भकसंयोगस्ततो दशमे द्व्यणुकोत्पत्तिस्तत एकादशक्षणे द्व्यणुके रक्तोत्पत्तिः ।

ननु परमाणावग्निसंयोगसत्त्वेन क्रियोत्पत्तिक्षणतदुत्तरक्षणयोरेव श्यामनाशरक्तोत्पादौ युक्तौ न तु द्व्यणुकनाशोत्तरक्षणतदुत्तरक्षणयोः । न च सर्वावच्छेदेन पाकस्य कारणत्वेन परमाणुसंयुक्ते परमाणौ सर्वावच्छेदेनाग्निसंयोगाभावान्मूर्त्तयोः समानदेशताविरोधादिति वाच्यम् । निबिडयोरेव समानदेशताविरोधात् । कथमन्यथा आलोकसंयुक्ते घटादौ चक्षुःसंयोगोत्पत्तिः । न वा सर्वावच्छेदेन पाकस्य हेतुत्वं किंतु विजातीयत्वेन । न च वैजात्यं तादृशसंयोगत्वनियतं मानाभावादिति चेन् न ।

अविनश्यदवस्थावयविश्यामेऽवयवश्यामेन कालिकव्याप्तिसत्त्वात् । द्व्यणुकनाशोत्तरमेव श्यामनाशात् । न हि सुचिरमवयवी श्यामोऽवयवाश्च न श्यामा इति । न चैवमपि द्व्यणुकनाशोत्पत्तिक्षणे परमाणुरूपनाशापत्तिः । एतन्मते समवायेन द्रव्यस्यरूपनाशोत्पत्तौ प्रतिबन्धकत्वात् । अन्यथा पाकसत्त्वेन परमाणौ क्रियोत्पादसमये रूपनाशोत्पत्त्यापत्तेः । न च त्रिक्षणाप्रक्रियानुपपत्तिः । तादृशव्याप्त्यनङ्गीकारेण तदभिधानात् । यद्वा परमाणुपरमाणुसंयोगस्य विलक्षणसंयोगस्यैव वा प्रतिबन्धकत्वकल्पनात् । कारणमात्रविभागस्य संयोगनाशापेक्षस्य विभागजनकत्वपक्षे द्व्यणुकद्वितीयक्षणे परमाण्वाकाशविभागोत्पत्त्या एकक्षणह्रासे दशक्षणा कारणमात्रविभागस्यानपेक्षस्य स्वद्वितीयक्षणे विभागजनकत्वे द्व्यणुकनाशात् । पूर्वक्षणे परमाण्वाकाशविभागोत्पत्त्या क्षणद्वयह्रासे सति नवक्षणा । न च विभागस्य कर्मतापत्तिः संयोगविभागयो-

रनपेक्षं कारणं कर्मेति कर्मलक्षणात् । कर्मणः संयोगादिजनने द्रव्याद्यपेक्षणात् । उत्तरसंयोगजनने पूर्वसंयोगनाशापेक्षणाच्च । न च स्वोत्तरभाविभावानपेक्षत्वं तत् । विभागस्य सहकारिभावानपेक्षितत्वेन सहकारिकल्पनेऽपि विभागेऽतिव्याप्तेर्दुर्वारत्वात् । द्रव्यान्तरक्रियायाः स्वोत्तरोत्पत्तिकस्य घटस्य घटसंयोगजननेऽपेक्षितत्वादव्याप्तेः ।

किंतु कर्मत्वजातिमत्कर्म । तच्चाद्यमेव आरम्भकसंयोगेत्यादिनोक्तनियमानङ्गीकारे परमाणुद्वयविभागोत्पत्तिसमये परमाण्वाकाशविभागजनने द्व्यणुकनाशक्षणे परमाणावुत्तरदेशसंयोगोत्पादादष्टक्षणा क्रियाविभागयोर्विशिष्टकार्यकारणभावात् । अग्रावच्छेदेन क्रियाया वृन्तावच्छेदेन विभागाजनकत्वात् कमलनाशासम्भवेन तादृशनियमाभावात् । यत्परमाणुक्रियया द्व्यणुकनाशस्तत्परमाणुक्रियान्तरेण द्व्यणुकोत्पादाभ्युपगमेऽष्टिवता न्यूना न सम्भवत्येव । परमाण्वन्तरक्रियया द्व्यणुकोत्पादपक्षे ऽष्टिवतो न्यूनक्षणापि सम्भवत्येव । तथाहि । द्व्यणुकनाशोत्तरद्वितीयक्षणे परमाण्वन्तरे द्व्यणुकारम्भानुगुणकर्मचिन्तनात्सप्तक्षणा द्व्यणुकनाशस्ततः परमाण्वन्तरे कर्म ततस्तेन विभागः । ततः पूर्वसंयोगनाशः ततः परमाणोरेतत्परमाणुसंयोगस्ततो द्व्यणुकोत्पत्तिस्ततो रूपोत्पत्तिः । द्व्यणुकनाशसमये परण्वन्तरे कर्मोत्पत्तिस्वीकारे षट्क्षणा तत्पूर्वक्षणे कर्मचिन्तनात्पञ्चक्षणा । तत्पूर्वक्षणे कर्मचिन्तनाच्चतुःक्षणा तत्पूर्वक्षणे कर्मचिन्तनात्त्रिक्षणा द्व्यणुकनाशसमये परमाण्वोरारम्भकसंयोगस्य उभयकर्मजस्य अन्यतरकर्मजस्य वा स्वीकाराद्यत्परमाणुक्रियया द्व्यणुकनाशः, तत्परमाणुक्रिययैव द्व्यणुकारम्भकसंयोगोत्पादाभ्युपगमेऽपि त्रिक्षणा द्व्यणुकनाशस-

मये ततक्रियया परमाण्वन्तरेण सहारम्भकसंयोगाभ्युपगमात्। इतो न्यूना न सम्भवत्येव। द्व्यणुकस्य प्रतिबन्धकस्य सत्त्वेन द्व्यणुकान्तरानुत्पत्तेः। द्रव्यं प्रति द्रव्यस्य प्रतिबन्धकत्वादित्याहुस्तन्न। घटाद्यवृत्तिर्यो घटादिसमवेतनाशस्तत्र घटादिनाशस्य विजातीयनीलादौ पाकस्य हेतुत्वेन घटाद्यारभ्य परमाणुपर्यन्तेषु पाकादेव रूपादिनाशरूपाद्युत्पत्त्योः सम्भवेन घटादीनामनन्तनां नाशाद्युत्पादकल्पनं गौरवप्रसङ्गात्।

ननु पाकेन परमाणौ रूपादि जायते इत्यत्र मानाभाव इति चेत्। न। पाकेन रसालफलादौ पूर्वरूपादितो विलक्षणरूपादिकं दृश्यते। न च तत्परमाणौ पूर्वरूपादौ सति सम्भति कारणरूपादिना विलक्षणरूपादिकाले रसालफलादौ पूर्वरूपादौ सजातीयरूपाद्यापत्तेः। अतः पाकेन परमाण्वादौ रूपादिनाशोत्पादौ युक्ताविति केचित् तन्न। पाकस्य रूपादिजन्यरूपादौ प्रतिबन्धकत्वकल्पनेनापि तादृशरूपाद्यनुत्पादसम्भवेनानन्तपरमाणुरूपादिनाशरूपाद्युत्पादकल्पने गौरवात्।

अपरं तु हरिद्रादिभस्मनां हरिद्राद्यारम्भकपरमाण्वारब्धत्वम्। हरिद्रादिनाशानुरोधेन तेषु क्रियाविभागपूर्वदेशसंयोगनाशोत्तरदेशसंयोगानामावश्यकत्वमिति तदुत्तरसंयोगेष्वेव भस्मारम्भकवैजात्यं कल्प्यते लाघवान्न त्वन्यपरमाण्वारब्धत्वं भस्मनः तेषु क्रियादिकल्पने गौरवात्। यथाच हरिद्रादिपरमाणौ भस्मोत्पत्तिकाले पीतरूपसत्त्वेन भस्मन्यपि पीतरूपाद्यापत्तिः स्यादतः पाकेन परमाणौ पूर्वरूपनाशरूपान्तरोत्पत्ती युक्ते इत्याहुः। तन्न।

तत्राप्येकैकस्मिन् परमाणौ रूपादिचतुर्णां नाशस्ते-

षामुत्पादश्च कल्पनीयः । तदपेक्षया परमाण्वन्तरे क्रियादीनां कल्पनैव युक्ता लाघवात् ।

वस्तुतो हरिद्राञ्यणुकादिनाशे न मानम् । चतुरणुकादिप्रभृतीनां भस्मन्यनुपलम्भादस्तु तेषां नाशः । पाकाद्धरिद्रादित्र्यणुकेष्वेव पूर्वरूपनाशरूपान्तरोत्पादौ । न चैवं परमाणुद्व्यणुकयोः पूर्वरूपसत्त्वे त्रसरेणौ पाकाद्रूपोत्पत्तिकाले द्व्यणुकपीतात्पीतापत्तिः पाकस्य विलक्षण विलक्षणपीतादौ प्रतिबन्धकत्वस्योक्तत्वात् । यद्वा द्व्यणुकेऽपि पीतरूपनाशोऽस्तु त्र्यणुके पाकाद्रूपोत्पत्तिसमय एव द्व्यणुके परमाणुरूपाद्रूपोत्पत्तिः रूपजनकपाकस्य द्व्यणुकेऽस्वीकारान्न पाकजरूपोत्पत्तिः । उत्पादकनाशकयोर्भेदाङ्गीकारात्पार्थिव परमाणौ रूपादिनाशे न मानमिति पृथिव्यां रूपादिकमनित्यमेवेति नव्यमत एव युक्तिसिद्धं न च प्राचांमते । रूपादिचतुर्णामाश्रयनाशनाश्यत्वं क्वचित्पाकनाश्यत्वम् । न चैवं रूपादिनाशत्वावच्छिन्ने नानुगतो हेतुः । इष्टत्वात् । यथा द्रव्यनाशे समवायिकारणनाशोऽसमवायिकारणनाशश्चनानुगतोऽपि हेतुः । न चैवं द्व्यणुकनाशे क्लृप्तत्वाल्लाघवाच्च प्रतियोगितया द्रव्यनाशे विलक्षणसंयोगनाशस्य स्वप्रतियोगिजन्यत्वसम्बन्धेन स्वप्रतियोगिसमवायिसमवेतत्वसंबन्धेन वा हेतुत्वम् । न च कपालनाशजन्यघटनाशे व्यभिचारः कपालनाशानन्तरं कपालसंयोगनाशाभ्युपगमादिति वाच्यम् । कपालसंयोगनाशोत्पादकाले घटेऽनन्तसंयोगादिकल्पने गौरवोत्पादापत्तेः । अस्मन्मते समवायिकारणस्य कार्यसहभावेन हेतुत्वात्तदा घटस्य विनाशान्न संयोगादिकल्पनमिति दिक् ।

केचित्तु नीलादिकं सकलनीलादिद्रव्यगतमेकमेव नित्य-

मजन्यं च । यद्वा नीलमेकं नीलतरमेकं नीलतममेकम् । एवमरुणादिकमपि । अत एव नीलतरं नीलतममिति प्रयोगोऽप्युपपन्नः । नीलादेरुत्पादविनाशप्रत्ययस्तु तदुपलम्भापलम्भौ समवायोत्पादविनाशौ वा विषयीकरोतीति वदन्ति तन्न घटादेरपि नित्यत्वापत्तेः । तदुत्पादविनाशप्रत्ययस्य तदुपलम्भानुपलम्भविषयत्वेनैवोपपत्तेः । किं च पाकस्य विजातीयनीलत्वादिकमेवकार्यतावच्छेदकं न तु तत्समवायत्वम्. गौरवात् ।

केचित्तु घटो नील इत्यादिप्रतीत्या नीलादेर्घटाभेदमाहुः । तन्न । नीलपीताद्याश्रयस्यैव प्रतीतौ प्रकारत्वात् । किञ्च तत्तत्समवेतकार्यं प्रति तस्य समवायिकारणत्वेनाभेदासम्भवात् ।

केचित्तु नीलादेर्घटाभिन्नत्वेन तेषां त्वाचत्वापत्तिरिति । तन्न । इष्टापत्तेः । रूपत्वादेरेव तन्मते चक्षुमात्रग्राह्यत्वादिति कश्चित् ।

संख्यात्वजातिमती संख्या । संख्यात्वजातिस्तु एकत्वद्वित्वादौ संख्यासंख्येत्यनुगतप्रत्यक्षसिद्धा । सा च न द्रव्यम् । असंयोगित्वात् । नापि कर्म । कर्मत्वेनानुभूयमानत्वाभावात् । नापि जात्यादिकम् । जातिमत्वात् । नापि रूपादिकम् । तद्विलक्षणत्वेनानुभूयमानत्वात् । तस्मादतिरिक्त एव गुणः । सा च द्विविधा । व्यासज्यवृत्तिरव्यासज्यवृत्तिभेदात् । तत्राव्यासज्यवृत्तिरेकत्वम् । तच्च नित्यगतं नित्यमनित्यगतमनित्यम् । तत्र स्वाश्रयावयवगतमेकत्वमसमवायि । तच्चाश्रयनाशनाश्यम् ।

अन्ये तु भावकार्यस्यासमवायिकारणजन्यत्वनियमे मानाभवेन यत्र कार्येऽसमवायिकारणस्यान्वयव्यतिरेकौ

तत्रास्तु तस्य हेतुत्वम् । अत्रासमवायिकारणान्वयव्यतिरेकयोरभावान्नासमवायिकारणं तत्रैकत्वमित्याहुः । तच्चैकत्वत्वजातिमत् । सा चेदमेकत्वमिदमेकत्वमित्यनुगतप्रत्ययसिद्धा । गुणादावेकत्वप्रत्ययस्तु एकार्थसमवायेन । अत एव गुणादावेकत्वमस्तु द्रव्ये तत्प्रत्ययस्तु स्वाश्रयसमवायित्वेनेति परास्तम् । एतद् घटादिसमवेतेषु बहुषु तत्कल्पनापेक्षया एतद् घटादावेव तत्कल्पनाया लघीयस्त्वात् । न चैकत्रैव तत्कल्पनम् । विनिगमनाविरहात् । गुणान्तरे स्वाश्रयसमवायिसमवेतत्वसंबन्धेन प्रतीतिविषयत्वे गौरवापत्तेश्च । न च कार्यद्रव्यगतमप्येकत्वं नित्यमस्त्विति वाच्यम् । तस्यैकत्वे जातित्वापत्तेः । नानात्वे च कार्यसमवेतगुणस्यानित्यत्वनियमादिति कश्चित्[1] ।

व्यासज्यवृत्तिस्तु द्वित्वादिपरार्द्धान्ता । सा चानित्यैव । तत्र स्वसमानाधिकरणानि यावदेकत्वान्यसमवायिकारणम् । अपेक्षाबुद्ध्यादिनिमित्तकारणम् । अपेक्षाबुद्धिनाशान्नाशः परमाण्वादिद्वित्वादेरपेक्षाबुद्धिसहकारिनाशान्नाशः । अपेक्षाबुद्धेस्तत्तद्द्वित्वादौ कारणता तु तत्तद्द्वित्वादिसमानाधिकरणयावदेकत्वानामेकत्वत्वेन या बुद्धिस्तद्बुद्धित्वेन । अत एवायमेकोऽयमेक इत्याकारिकया इदमेकत्वमिदमेकत्वमित्याकारिकया वा समूहालम्बनरूपया द्वित्वोत्पत्तिः । एवं त्रित्वोत्पत्तिः त्रित्वोत्पत्तिसमये च नानन्तद्वित्वोत्पत्तिरपि, तस्याद्वित्वोत्पत्तावहेतुत्वादिति कश्चित् ।

१ कश्चिदित्यस्वरसस्तु लाघवात् कार्यद्रव्यगतमेकत्वमेकं नित्यमेवास्तु । नन्वेवं नित्यत्वे सति अनेकसमवेतत्वमिति जातिलक्षणान्वयाज्जातित्वापत्तिः । एकत्वेऽतिव्याप्तेरेव जाति न्यत्वे सत्यनेकसमवेतत्वमिति जातिलक्षणकरणात् ।

अपरे तु तत्र द्वित्वादौ तत्तद्द्वित्वादिसामानाधिकरणयावदेकत्वानामेकत्वत्वेन ज्ञानं हेतुः । त्रित्वोत्पत्तिसमये द्वित्वानामुत्पत्तिस्त्विष्टैव । अयमेक इमौ द्वौ इति बुद्ध्या त्रित्वानुत्पत्तिरिष्टैव । तत्समानाधिकरणयावदेकत्वानवगाहित्वादित्याहुः ।

अन्ये तु द्वित्वजनकतावच्छेदकमेकमपेक्षाबुद्धौ वैजात्यम् । एवं त्रित्वादिजनकतावच्छेदकमपि वैजात्यान्तरम् । तच्च द्वित्वजनकतावच्छेदकवैजात्यव्याप्यं सर्वं च मानसत्वाव्याप्यम्, अतो न चाक्षुषत्वेन त्रित्वजनकतावच्छेदकवैजात्यस्य द्वित्वजनकतावच्छेदकवैजात्यस्य वा संकरः अयमेक इमौ द्वाविति ज्ञानात् त्रित्वानुत्पादस्त्विष्ट एव । अथवा द्वित्वत्रित्वोत्पत्तौ विजातीयज्ञानस्य हेतुत्वादेकत्वत्रयानवगाहिनोऽप्येतादृशज्ञानात्त्रित्वोत्पत्तिर्जायत एव । यद्वा । त्रित्वजनकतावच्छेदकं द्वित्वजनकतावच्छेदकवैजात्यं विरुद्धमेवेति वदन्ति । तन्न । भगवदपेक्षाबुद्ध्या द्वित्वाद्यनुत्पादापत्तेः । किञ्च घटेषु त्रित्वोत्पादः पटयोर्द्वित्वोत्पादश्च युगपन्नस्यात् । अयमेकोऽयमेक इतिस्तम्भयोर्द्वित्वजनकविजातीयज्ञानस्य विषये पटद्वये द्वित्वोत्पादप्रसङ्गाच्च । अत एव घटेषु त्रित्वस्य पटयोर्द्वित्वस्य युगपदनुत्पादेऽपि न क्षतिः । तत्र पञ्चत्वसंख्याया एवोत्पत्तेः ।

परे तु एकत्वप्रकारतानिरूपितविशेष्यतया विजातीयं ज्ञानं द्वित्वोत्पादकं एवं त्रित्वोत्पादक तद्विजातीयम् । अयमेक इत्यादिज्ञाने द्वित्वत्रित्वजनकतावच्छेदकवैजात्ययोरभावान्न द्वित्वत्रित्वोत्पाद इत्याहुः । तन्न । चाक्षुषत्वादिना संकरवारणाय मानसत्वव्याप्यत्वमवश्यं कमनी-

श्रीगणेशाय नमः।

# श्रीमन्नागेशभट्टरचिता पातञ्जलसूत्रवृत्तिः।

नत्वा पतञ्जलिं देवं योगवृत्तिं लिखाम्यहम्।
छायया व्यासभाष्यस्य तद्गूढार्थप्रकाशिकाम् ॥१॥

ननु 'एतेन योगः प्रत्यु(१ क्त'इति व्याससूत्रेणास्य शास्त्रस्य प्रत्याख्यानात्किमेतच्छास्त्रविस्तारेणेति चेन्न, 'साङ्ख्यज्ञानेन योगमार्गेण वा न निश्श्रेयसमधिगम्यत इती'ति तद्भाष्यमुपादाय 'उपनिषद्बोध्यस्य तत्त्वज्ञानस्य योगापेक्षाऽस्त्येव, न जातु योगशास्त्रोक्तयमनियमादिबहिरङ्गोपायमन्तरङ्गं च ध्यानधारणासमाध्यादिमन्तरा औपनिषदाऽऽत्मसाक्षात्कार उदेति' इति मिश्रग्रन्थेन समाधानात्।

(१) तत्र हि भाष्ये यथा साङ्ख्यस्मृति श्रुतिप्रतिकूलतया स्वातन्त्र्येण प्रधानस्य कारणत्वं महदादीनां च कार्यत्वं प्रतिपादयति तथा योगस्मृतिरपीति साङ्ख्यस्मृतिप्रत्याख्यानेनेयमपि प्रत्याख्याता वेदितव्येत्यतिदेशार्थं सूत्रम। न चैव तुल्यन्यायेन साङ्ख्यस्मृतिप्रत्याख्यानेनैव गतार्थत्वादतिदेशो व्यर्थं, श्रोतव्यो मन्तव्यो निदिध्यासितव्य' 'त्रिरुन्नतं स्थाप्य समं शरीरं' इत्यादिना श्वेताश्वतरोपनिर्षदि योगस्यासनादिकल्पनापुरस्सरं बहुप्रपञ्चितत्वात 'तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणां' 'विद्यामेतां योगविधिं च कृत्स्नं' इत्याद्यनेकलिङ्गैश्च वेदबोधितत्वतत्त्वज्ञानाभ्युपायत्वप्रतिपत्तावष्टकादिस्मृतिवद्योगस्मृतेरपि प्रामाण्यग्रहे तद्बोधितप्रधानादिष्वपि वेदाविरुद्धत्वप्राप्त्यावतिदेशस्य सार्थक्यात। तथा च वेदनिरपेक्षेण साङ्ख्यमार्गेण योगमार्गेण वा न निःश्रेयसाधिगम 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'त्यादिश्रुतिविरोधात। तत्रोक्तानि ज्ञानध्यानादीनि तु वैदिकान्येव प्रत्यासत्ते। येन त्वंशेनाविरोधस्तेनेष्टमेव तयो प्रामाण्यमिति प्रतिपादितम। मिश्रैश्च तुल्यन्यायेन प्रधानादिष्वप्रमाणं यमादिष्वपि तथा स्यादित्याशङ्कास्य शास्त्रस्य प्रधानादिनिरूपणमात्रतात्पर्यकत्वे वेदान्तश्रुतिविरोधादप्रामाण्यं स्यात्स्याच्च तेन योगादिष्वप्यनास्था न चेह तथा योगव्युत्पादनपरं शास्त्रं प्रधानादि निमित्तीकरोति। अविषयेऽप्रामाण्येन विषयेऽप्यप्रामाण्यं चेद्रसादावप्रमाणं चक्षू रूपेऽप्यप्रमाणतामनुयात्तस्माद्वेदान्तश्रुतिविरोधात्प्रधानादिरस्याविषयो न तु ध्यानादिसप्रपञ्चयोगेऽप्यप्रामाण्यमित्यादिना व्यवस्थापितमस्य शास्त्रस्य प्रामाण्यमिति॥

श्रुतिविरुद्धं प्रधानादिसत्त्वमिति मिश्रोक्तेश्च । तत्प्रकरणे एव 'द्वैतिनोहिते साङ्ख्या योगश्च नात्मैकत्वदर्शिन' इति भाष्यमुपादाय ये प्रधानादिनिरूपणमात्रतात्पर्यकतया तच्छास्त्रं व्याचक्षते इत्यर्थं इति मिश्रैरुक्तम् । तथा तत्प्रकरण एव भाष्ये सर्वाणि तर्कस्मरणानि एतेन प्रतिवक्तव्यानि, ननु तान्यपि तर्कोपपत्तिभ्यां तत्वज्ञानायोपकुर्वन्तीति चेदुपकुर्वन्तु फलपर्यवसायि तत्वज्ञानन्तु वेदान्तवाक्यजमेव, 'नावेदविन्मनुते तं त्वौपनिषदं पुरुषं पृच्छामी'त्यादिश्रुतिभ्य इत्युक्तम् । अत एव ।

मुक्तिर्योगात्तथा योगात्सम्यग् ज्ञानं महीयते ।
तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ॥

इत्यादिस्मृतिषु योगो मोक्षहेतुतयोक्तः ॥

स किं स्वरूपः किमुपायः किं द्वारा च ज्ञानमोक्षयोः कारणमित्यादिजिज्ञासुशिष्यावधानाय भगवान्पतञ्जलिस्तदनुशासनारम्भम्प्रतिजानीते ।

**अथ योगानुशासनम् ॥ १ ॥**

अत्राथशब्द आरम्भरूपाधिकारार्थः, स्वरूपेण दध्यादिवन्मङ्गलमपि । योगोऽनुशास्यते विविच्य बोध्यतेऽनेनेति योगानुशासनं शास्त्रम् । अनेन (२) हिरण्यगर्भाद्युपदिष्टस्यैव योगस्य विविच्य बोधनमत्र ध्वनयता प्रामाण्यमस्य सूचितम् । एवञ्च योगानुशासनं शास्त्रमधिकृतं वेदितव्यमित्यर्थः ॥

तत्र योगलक्षणमाह ।

**योगश्चित्तवृत्तिनिरोधः ॥ २ ॥**

अत्र सर्वशब्दाग्रहणात्सम्प्रज्ञातयोगस्यापि लक्ष्यत्वं बोधि-

(२) 'हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः' इति याज्ञवल्क्यस्मृतेः ।

तम् । सर्वचित्तवृत्तिनिरोधरूपासम्प्रज्ञातस्य चेत्युभयस्येदं लक्षणम् । युज समाधावित्यनुशासनादिदं लब्धम्, समाधिश्च वृत्तिनिरोध एव । अङ्गभूतसमाधिस्त्वग्रे वक्ष्यते । नन्वेवं यत्किञ्चिद्वृत्तिनिरोधः सम्प्रज्ञात इति लब्धं तच्चायुक्तं सर्वभूमिषु बुद्धौ तत्सत्वात् । तथा हि क्षिप्तं मूढं विक्षिप्तं एकाग्रं निरुद्धमिति पञ्च चित्तस्यावस्थाः । चित्तं हि सात्त्विकराजसतामसगुणयुक्तं सत्वरजस्तमआत्मकत्वात्, तत्र तत्त्वज्ञानादयस्सात्त्विकाः प्रवृत्त्यादयो राजसाः निद्रादयस्तामसाः । एते हि सत्वादिद्रव्याश्रितत्वाद् गुणा उच्यन्ते सत्वादीनि तु द्रव्याण्यपि रज्ज्वारम्भकतन्तुवदेव गुणा उच्यन्ते । तत्र सत्वप्रधानमपि चित्तं यदा स्वोपसर्जनरजस्तमस्संसर्गादणिमाद्यैश्वर्यशब्दादिविषयानुरक्तं तदा क्षिप्तावस्थमित्युच्यते यथा दैत्यदानवानाम्, तदेव यदाभिभूतरजस्कतमसानुविद्धं तत्संसर्गादधर्म्माज्ञानावैराग्यानैश्वर्यनिद्रादिमद्भवति तदा मूढावस्थं यथा रक्षःपिशाचादीनाम्, तदेव यदा प्रक्षीणतमस्करजोमात्रासंसर्गात्सर्वविषयाकारवृत्तिमद्धर्मज्ञानवैराग्यैश्वर्यप्रियं तदा विक्षिप्तावस्थं यथा हिरण्यगर्भादिदेवानाम् । ऐश्वर्यमप्रतिहतेच्छत्वं तद्विपरीतमनैश्वर्यं, तत्र विक्षिप्तं क्षिप्ताद्विशिष्टं सत्वाधिक्येन समादधदपि चित्तं रजोमात्रयाऽन्तराऽन्तरा विषयान्तरवृत्तिमत्वादास्व पि यत्किञ्चिद्वृत्तिनिरोधसत्वादतिव्याप्तिरिति चेन्न । 'तदा द्रष्टुः स्वरूपेऽवस्थानमि'त्युत्तरसूत्रसाहित्येनास्य लक्षणत्वात् । द्रष्टुरात्यन्तिकस्वरूपावस्थितिहेतुचित्तवृत्तिनिरोधत्वस्यैव लक्षणत्वात् । यद्वा क्लेशकर्मादिपरिपन्थिचित्तवृत्तिनिरोधत्वं लक्षणं, प्रलयकालीनस्य समयसुषुप्तिकालिकस्य च निरोधस्य व्यावृत्तये आत्यन्तिकेति । उक्तासु च तिसृषु भूमिषु सन्नपि निरोधो बहुलविक्षेपशेषभूतत्वान्न स्वरूपावस्थितिहेतुर्नापि क्लेशादिपरिपन्थीति

नातिव्याप्तिः । एकाग्रे तु यदा विक्षेपहेतुरजस्तमोलेशेनापि रहितं बुद्ध्यात्मरूपयोस्सत्वपुरुषयोरन्यथाख्यातिरूपविवेकख्यातिमात्रवृत्तिकं तदोच्यते । यत्र वर्तमानः समाधिः परमार्थभूतं वस्तु साक्षात्कारयति अविद्यादिपञ्चक्लेशान् क्षिणोति कारणोच्छेदाच्च धर्म्माधर्मरूपाणि बुद्धिपुरुषयोर्बन्धकारणानि अदृष्टोत्पादात्क्षमाणि करोति, असम्प्रज्ञात प्रत्यासन्नं करोति अयमेव सम्प्रज्ञातस्समाधिः । सम्यक् प्रज्ञायते साक्षात्क्रियते ध्येयमस्मिन्नित्यर्थात् । अयञ्च वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मितानुगत इति चतुर्धाऽग्रे वक्ष्यते । एतेष्वेव क्रमेण मधुमती मधुप्रतीका विशोका संस्कारशेषा भूमिरिति च संज्ञा वक्ष्यन्ते अस्यैव पराकाष्ठा धर्ममेघसमाधिरित्युच्यते । अस्यैव परप्रसङ्ख्यानमिति तान्त्रिकी संज्ञा । अत्र च सम्प्रज्ञाते धर्मादिषु संसारहेतुत्वदोषदर्शनात्सात्विकीं वृत्तिमुपादाय रजस्तमोरूपेतरवृत्तिनिरोधे विवेकख्यातिनिष्ठा ततो विवेकख्यातेरप्यनात्मत्वसाक्षात्करणात् तत्रापि वैराग्ये सर्ववृत्तिनिरोधरूपोऽसम्प्रज्ञातस्समाधिः । तथा हि चितिशक्तिः पुरुषाख्याऽप्रकाशरूपं द्रव्य पूर्वधर्म्मापाये धर्म्मान्तरोत्पत्तिरूपपरिणामरहिता अत एव कूटस्थनित्या अक्रियत्त्वेन बुद्धिवद्विषयदेशागमनादसञ्चाररूपाऽप्रतिसङ्क्रमवती, अत एवासङ्गा बुध्या निवेदितविषया सुखदुःखमोहात्मकत्वरूपाऽशुद्धिरहिता पूर्णत्वरूपानन्तत्ववती । विवेकख्यातिस्तु सत्वगुणकार्यत्वात्तदात्मिका परिणामिनी अत एव विवेकाकारधारिणी दीपशिखावद्विषयेषु सञ्चरणशीला सुखाद्यशुद्धिमती परिच्छिन्ना चेति तस्यामनात्मत्वादिदोषदर्शनात्तत्फलसिद्धेश्च तस्यामप्यलम्प्रत्ययरूपवैराग्यवञ्चित्त तामपि निरुणद्धि परवैराग्येण हेतुना सा स्वयमेव लीयते तदा निरुद्धावस्थमित्युच्यते सुषुप्तौ जाग्रदादिवृत्तिवत् । शर्करास्वादेनैव गुडदोषाभि-

व्यक्तेर्विवेकख्यातेर्दोषदर्शने पुरुषदर्शनोपयोग । किञ्च यावद्वृत्तिदोषालिप्तत्वेनात्मा न गृह्यते तावच्चित्ते परमप्रियात्मन्वभ्रमाद्दोषदर्शनेऽपि न वृत्तिविषयवैराग्योत्पत्ति । निरोधश्चात्र चित्तस्य वृत्तिसंस्कारशेषावस्थारूप. । अभावस्याधिकरणावस्थाविशेषमात्ररूपत्वात् । सा चावस्था संस्कारपरिणामधारा तत्तत्काले संस्कारतारतम्यस्यैव चित्ते स्वीकारात् । न तु वृत्त्यभावमात्रम् । तत्त्वे संस्कारसौक्ष्म्यानुभवाज्जनकत्वानुपपत्तेः । निवृत्त्याख्ययत्नवत्कश्चिद्भावपदार्थो निरोध इत्यन्ये । अत एवायं निर्बीज इत्युच्यते । बीजस्य संस्कारस्य तत्त्वज्ञानपर्यन्तस्याशेषतो दाहात् । अत एवास्य स्वरूपावस्थितिहेतुत्व क्लेशादिपरिपन्थित्वं च । एतेनासम्प्रज्ञातेपि निर्विकल्पकमात्मज्ञानं स्वरूपसद्बुद्धिरूप तिष्ठतीत्यपास्तम् । सम्प्रज्ञातएव निर्विकल्पकात्मज्ञानस्य वक्ष्यमाणत्वात्सम्प्रज्ञातस्य तु स्वरूपावस्थानहेतुत्व ज्ञानद्वारा एतद्द्वारा च बोद्धव्यम् । ननु विषयान्तरसञ्चाररूपप्रतिबन्धकनिवृत्तिरूपतया सम्प्रज्ञातस्य ज्ञानहेतुताया तदङ्गानां च ज्ञानहेतुताया वक्ष्यमाणत्वेन ज्ञानेनैव मोक्षस्य 'तस्य तावदेव चिर' मित्यादिश्रुतिसिद्धतया सिद्धावसम्प्रज्ञातो व्यर्थ इति चेन्न । ज्ञाने जातेपि प्रारब्धकर्मणा देहधारणस्यावश्यकत्वेन तदानीमपि बाह्याभ्यन्तरवृत्तिभिर्दुःखस्य जायमानत्वेन तद्धानार्थे तदुपयोगात् । ज्ञानेन तु प्रारब्धकर्म्मोपभोगोत्तरमेव मोक्षोऽन्यथा जीवन्मुक्तिप्रतिपादकश्रुत्यसङ्गतिः स्यात् । असम्प्रज्ञातयोगस्तु अखिलसंस्कारदाहकतया भोगसंस्काराख्यसहकार्य्यभावेन तस्य फलादातृतया प्रारब्धकर्म्माप्यतिक्रम्य शीघ्रमोक्षदायक इति विशेषात् । न हि भोगसंस्कारस्य निःशेषतो दाहे प्रारब्धकर्म्मापि फलायालं दृष्टकारणाभावात् । 'योगाग्निदग्धकर्मा च योचिरादि'त्युक्तेस्तत्र संकोचे मानाभावाच्च ।

ज्ञानाग्निस्सर्वकर्म्माणीत्यादौ त्वगत्या सङ्कोचः । 'तस्य तावदेव चिर'मिति ज्ञानविषयकश्रुतेः जीवन्मुक्तिश्रुतेश्च । अर्द्धभुक्तप्रारब्धकर्मणामपि नाशः कर्मविपाकोक्तप्रायश्चित्तादिनैव । तदुक्तम् । 'नास्ति साङ्ख्यसमं ज्ञानं नास्ति योगसमं बल'मिति । बलं प्रारब्धातिक्रमेण शीघ्रमोक्षहेतुः । किञ्च सर्ववृत्तिनिरोधं विना न मोक्षः आत्यन्तिकदुःखनिवृत्तिर्हि सः, दुःखञ्च पुरुषस्य चित्तवृत्त्यौपाधिकमुपाधिनिवृत्त्यैव चौपाधिकनिवृत्तिः अत्यन्तवृत्तिनिरोधेनैव च चित्तस्य प्रलयः । 'मुक्तिर्हित्वाऽन्यथाभावं स्वरूपेण व्यवस्थिति'रिति स्मृतेरात्यन्तिकस्वरूपावस्थानस्यैव मोक्षत्वादित्याहुः । केचित्तु प्रारब्धनाशेऽपि संस्काराणां सत्वेन विदेहादिवत्प्रबन्धपराभवायाखिलसंस्कारदाहकासम्प्रज्ञातोऽपेक्षित एवेत्याहुः । सुषुप्तावपि निद्रारूपा वृत्तिरस्त्येवेति न तत्रातिव्याप्तिः । तदोक्तविशेषणाभावाच्च ॥

नन्वसम्प्रज्ञातावस्थे चित्ते विषयाकारवृत्तिविषयकबोधस्वरूपं पुरुषः केन रूपेण तिष्ठति किं व्युत्थानवत्प्रकाशरूप एव किन्तु वृत्त्याख्यदृश्याभावान्न पश्यति, अथ वा दशादिक्षये दीपवन्नश्यतीत्याशङ्कायामाह ॥

## तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥

तदेत्यनेन योग्यताबलात्सर्ववृत्तिनिरोधः परामृश्यते । तदाऽसम्प्रज्ञातयोगकाले द्रष्टुः चितिशक्तेः पुरुषस्य स्वरूपे निर्विषयचैतन्यमात्रे आरोपितशान्तघोरमूढरहिते प्रकाशेऽवस्थानमित्यर्थः । यथा जपाऽपाये स्फटिकस्यालोहिते स्वस्वरूपेऽवस्थानमेवञ्च तदा वृत्यात्मकदुःखाभावः पुरुषार्थ इति बोध्यम् । पुरुषस्य चैतदेव स्वरूपं न बुद्धिवृत्तिविषयबोधस्तस्यौपाधिकत्वात् उपाधिनिवृत्तावप्युपहि-

तानिवृत्तेर्न तन्नाशप्रसङ्गः । तत्र चरमासम्प्रज्ञातेऽशेषसंस्कारक्षया-च्चित्तेन सह वृत्तीनां निरोधे औपाधिकरूपनिवृत्तावात्यन्तिकस्वरूपा-वस्थान मोक्ष इति दिक् ॥

ननु व्युत्थानदशायामप्यात्मा एव रूप एव तदा दुःखित्वा-द्यङ्गीकारे परिणामित्वापत्तिस्तया रूपञ्च नानुभूयते कुत इत्यत आह ॥

## वृत्तिसारूप्यमितरत्र ॥ ४ ॥

इतरत्र व्युत्थाने चित्तेन सह द्रष्टुर्वृत्तौ तदवच्छेदेन सारू-प्यमित्यर्थः । व्युत्थाने हि बिम्बप्रतिबिम्बरूपयोर्बुद्धिवृत्तिपुरुषवृ-त्त्योस्सारूप्यम् । तदुक्तम्भाष्ये 'व्युत्थाने याश्चित्तवृत्तयस्तदविशिष्ट-वृत्तिः पुरुष' इति । वृत्तयश्च दीपस्य शिखा इव भङ्गुराश्चित्तस्या-वस्थापरिणामा द्रव्यरूपास्त्रिगुणकार्यत्वात्सुखदुःखमोहाश्रयतया शा-न्तघोरमूढाख्याः स्वसंयुक्तार्थाकारास्तदविलक्षणाश्च पुरुषस्यापि । तस्य दर्शितविषयत्वात् । विषयदर्शनं च स्ववृत्त्यारूढविषयस्य प्रति-बिम्बरूपेण चित्याधानम् । एवञ्च तत्प्रतिबिम्बान्येव पुरुषस्य वृत्तयः प्रतिबिम्बनमपि तासु स्वीयत्वाभिमान एव नैतावता तस्य कूटस्थ-त्वहानिः । एवञ्च तादृशवृत्तिसारूप्याच्चितिरपि दुःखादिमतीवा कर्त्र्यपि कर्त्रीवाभोक्त्र्यपि भोक्त्रीव यद्भवति स एव पुरुषस्य दुःखा-भ्यवहरणरूपो दुःखभोगस्तादृशदुःखहानमेव चास्य मोक्षः । इदमेव वृत्त्योस्सारूप्यमभिप्रेत्य पञ्चशिखाचार्यैरुक्तम् 'एकमेव दर्शनं ख्याति-रेव दर्शनम्' इति । ख्यातिर्बुद्धिवृत्तिः पुरुषस्य दर्शनं तदेव दर्शन ज्ञानमत एकमेव दर्शनमिति भ्रमो लोकानामिति तदर्थः । वस्तुत इदं चित्तस्य दर्शनमपरं पुरुषस्य दर्शनं चैतन्यरूपं तत्तु न लोकप्रत्यक्ष-गोचरोऽपित्वागमानुमानगोचर एवेति भावः । यत्त्वहं सुखीत्यादि-प्रत्ययात्मनः संयोगेन निमित्तेनात्मन एव पारमार्थिकीवृत्तिरित्या-

हुस्तन्न, परिणामित्वापत्तेः । मनःसंयोगात्मनोरुभयोः कारणतामपेक्ष्य मनस्त्वेनैव हेतुत्वे लाघवाच्च । अहं कर्ता अहं सुखीत्यादिप्रत्ययास्त्वहं गौर इत्यादिभ्रमशतान्तःपातित्वेन न प्रमाणभूताः

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥

इत्यादिस्मृतिविरोधाच्च । ननु सविषयवृत्तिस्फुरणं चेतनसम्बन्धादेव भवतु सम्बन्धश्च दूरस्थवनस्पत्योरिव दोषवशाज्जायमानो यो बुद्धिपुरुषयोरेकताभ्रम 'सुख्यहं जानामी'त्याकारस्तद्विषयत्वमतः परस्परप्रतिबिम्बकल्पना व्यर्थेति चेन्न । विभोश्चैतन्यस्य सर्वसम्बन्धात्सर्वदा सर्ववस्तुभानवारणाय चेतने बुद्धिवृत्तितद्विषयमात्रग्राहकत्वाय च प्रतिबिम्बस्वीकारात् । नचाज्ञानं ज्ञानप्रतिबन्धकं चैतन्ये कल्पनीयं, 'दुःखाज्ञानमया धर्म्माः प्रकृतेस्ते तु नात्मन' इति स्मृतिविरोधात् । तस्मादर्थभानस्य कादाचित्कत्वायार्थाकारतैवार्थग्रहणं वाच्यं बुद्धिवृत्तौ तथा दृष्टत्वात् । सा च तत्प्रतिबिम्बनं विनाऽनुपपन्ना, यद्यप्यर्थाकारता बुद्धौ परिणामरूपा न प्रतिबिम्बरूपा स्वप्नादौ विषयाभावेन तत्प्रतिबिम्बासम्भवात् । तथापि पुरुषे प्रतिबिम्बरूपैव, विद्यमानवृत्तिमात्रग्राहके पुंसि तेनैवोपपत्तेः ।

सलक्ष्यते यथा रक्तः केवलः स्फटिको जनैः ।
रञ्जकाद्युपधानेन तद्वत्परमपूरुषः ॥

इति स्मृतेश्च । संस्कारशेषाया बुद्धेस्तु न प्रतिबिम्बः, वृत्त्यतिरेकेण प्रतिबिम्बनासामर्थ्यात् । अतो नासम्प्रज्ञातयोगानुपपत्तिः । एवं बुद्धावपि चित्प्रतिबिम्ब आवश्यकः, अन्यथा चैतन्यभानानुपपत्तिः साक्षात्स्वदर्शने कर्तृकर्मविरोधात् । एवञ्च बुद्ध्यारूढस्यैवात्मनो घटादिवज्ज्ञेयत्वमयमेव चिच्छायापत्तिश्चिदाकारतेति

चोच्यते । उपाधौ प्रतिबिम्बश्च बिम्बाकारो बुद्धेः परिणाम एव स च साक्षिभास्यः । जलादावपि सूर्य्याद्याकारबुद्धिपरिणाम एव सूर्य्यादिप्रतिबिम्ब. एव चितिप्रतिबिम्बोऽपि वृत्त्याकारो बुद्धिपरिणाम एव सोयमभिमानात्मको द्विविधोऽपि । एतेनारूपत्वात्प्रतिबिम्बासम्भव इति परास्तम् । अस्मादेव परस्परप्रतिबिम्बरूपाद्दोषादेकताभ्रमो ऽहं कर्ता सुखी जानामीत्यादिरूप, यच्चैतन्ये बुद्धिवृत्त्याकारतारूप बुद्धिवृत्तिसारूप्यमेतदेव चैतन्यस्यार्थोपरक्तवृत्तिभान तदाकारश्च घटमहं जानामीत्यादि, वृत्त्यंशस्य दोषविशेषवशात्प्रमोषे अय घट इत्यप्याकारः । यद्यपि चित्प्रतिबिम्बेनैव तत्प्रतिबिम्बविशिष्टाया वृत्तेर्विषयाकारत्वेनैव वृत्तिप्रकाशन वक्तु शक्यते, तथापि जानामीत्येव बुद्धिवृत्तौ भासमान प्रतिबिम्बचैतन्य स्वज्ञेय न सम्भवति कर्तृकर्मविरोधादतस्तत्र बिम्बचैतन्येन भानावश्यकत्वे सर्वत्र तथैव कल्पनं युक्तम् । ननु चित्तवृत्तीनां प्रतिनियततत्तत्पुरुषमात्रबोध्यत्वे किं नियामकमिति चेन्न, बुद्धिपुरुषयोः प्रतिनियतानादिस्वस्वामिभावसम्बन्धस्य नियामकत्वात्तथाहि, यथाऽयस्कान्तमणिः स्वस्मिन्नेवायस्सन्निधीकरणाच्छल्यनिष्कर्षाख्यमुपकार कुर्वन् स्वामिन. स्व भवति भोगसाधनत्वादेवं चित्तमप्ययःसदृशविषयस्य स्वस्मिन्सन्निधीकरणेन दृश्यत्वरूपमुपकार कुर्वन्पुरुषस्य स्व भवति स्वामिनो भोगसाधनत्वादतो न परचित्तवृत्तिसारूप्यं परस्परयोः स्वस्वामिसम्बन्धाभावात् अयमेव भोक्तृभोग्यभाव, नचास्य प्रलयेऽभावात्कथमनादित्वं, स्वभुक्तवृत्तिवासनावत्त्वस्यैव बुद्धौ पुरुषस्वत्वरूपत्वात्, इदमेव च तस्य भोग्यत्वम् । एवञ्चानाद्योश्चित्तपुरुषयोरनादिरेवाय सम्बन्ध. प्रलयेऽपि कारणावस्थतया चित्तं तिष्ठत्येव । अन्यथा धर्म्माधर्मसंस्कारादीनामाश्रय विना प्रलयेऽवस्थानानुपपत्ते । सृष्टिकाले च पुन-

स्तादृशवासनाविशिष्टमेव तत उत्पद्यते तत्पुरुषसम्बद्धमेव । वर्षाऽपगमे मृद्भावमुपगतोऽपि मण्डूकः पुनर्वर्षाकाले तथैव प्रादुर्भवति यथा तद्वत् ॥

चित्तस्य कृत्यादिलक्षणबहुवृत्तिकत्वे सत्यपि निरोद्धव्या वृत्तयः पञ्च प्रकारा एवेत्याह ।

**वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः ॥ ५ ॥**

यैः प्रमाणादिलक्षणव्यापारैश्चित्तं जीवति ते तद्वृत्तय उच्यन्ते द्विजादीनां याजनादिवत् । वृत्तय इत्युद्भूतावयवभेदसमूहपरमिति बहुवचनम् । स च समूहो वक्ष्यमाणपञ्चप्रकारावयवक इत्यर्थः । तत्र क्लिष्टावदक्लिष्टा अपि निरोद्धव्या एव, तत्राक्लिष्टा उपादाय क्लिष्टानां निरोधः तासाम्परवैराग्येणेति क्रमः । 'सत्त्वेनान्यतमे हन्यात्सत्त्वं सत्त्वेन चैवहि' इति स्मृतेः । तत्र सर्वासां वृत्तीनां त्रिगुणात्मकत्वेपि दुःखाख्यक्लेशफलिका विषयाकारवृत्तयः क्लिष्टाः, यतो विषयाकारवृत्तिजन्यतृष्णया तत्साधनार्थं यजमानस्य परपीडानुग्रहाभ्यां धर्माधर्मोत्पत्तौ दुःखधारा भवति । यास्त्वविद्याकामकर्मादिरूपकारणनाशकत्वात्सत्वादिगुणारम्भ्या विवेकख्यातितत्साधनसम्बद्धास्ता अक्लेशफलकत्वादक्लिष्टाः । तत्राद्यास्तामस्य । अन्त्याः सात्विक्यः । क्लिष्टाक्लिष्टमिश्रराजस्यस्त्वत्रैवान्तर्भूता । तथा हि क्लिष्टप्रवाहे पतिता अक्लिष्टाः क्लिष्टशब्देनैव गृहीता भवन्ति एवमक्लिष्टच्छिद्रेषु क्लिष्टाक्लिष्टशब्देनैव गृहीता भवन्ति ताभ्यां क्लिष्टाक्लिष्टा एव संस्काराः । संस्कारैश्च पुनर्वृत्तय इत्येवं संसारानर्थबीजं जीवभ्रामकं चक्रमनिशमावर्तते तस्य च स्तम्भने प्रलये च निरोध एवोपायः । यतो निरोधावस्थं चित्तं क्रमेण समाप्यमानाधिकारमात्मा-

विभागेन निर्दुःखतया तिष्ठति व्युत्थानपर्यन्तं सम्प्रज्ञाते, असम्प्रज्ञाते त्वभ्यासपाटवेनाखिलसंस्कारैः सहात्यन्तिकं लयं गच्छतीति दिक् ।

ताश्च पञ्च प्रकारा वृत्तय आह ॥

**प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥**

स्पष्टम् । वृत्तयश्चैते प्रकारैः पञ्चप्रकारत्वात्पञ्चावयविका एवेति सिद्धम् ।

तत्र प्रमाणान्याह ॥

**प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥**

अनधिगततत्त्वबोधः प्रमा अविसंवादिज्ञानं वा प्रमा तत्करणं प्रमाणमिति सामान्यलक्षणं, तत्रेन्द्रियरूपसञ्चारमार्गेण चित्तं बाह्यवस्तूपरागात्सर्ववस्तुवासनावत्त्वेन तदर्थाकारतया परिणमते, स च परिणाम इन्द्रियेण सहैव चित्तस्य शङ्खपैत्याद्याकारताया नयनादिगतपित्ताद्यन्वयात् । एतावतैव चक्षुरादीनां करणत्वोपचारः । तत्र तद्विषया उपरक्तवस्त्वाकाराः सामान्यविशेषात्मनो न तु सामान्यमात्ररूपस्य नापि विशेषमात्ररूपस्य नाप्युभयवतोऽवयविरूपस्यार्थस्य सामान्योपसर्जना विशेषावधारणप्रधाना या चित्तस्य परिणामभूता प्रभावद्द्रव्यरूपा वृत्तिः सा प्रत्यक्षं प्रमाणम् । अर्थस्येत्यनेन विपर्ययव्यावृत्तिः, विशेषावधारणप्रधानेत्यनेनानुमानागमयोर्व्यावृत्तिः, उपरक्तवस्त्वाकारेत्यनेन स्मृतिव्यावृत्तिस्तस्य च वृत्तिरूपकरणस्य फलम्पुरुषनिष्ठश्चित्तवृत्तिविषयकस्तया वृत्त्या विशिष्टो बोधः पुरुषार्थमेव करणानाम्प्रवृत्तेः । स च बोधो विषयदेश एव विभुत्वात् । वृत्तिपुरुषयोर्विशेषः क्षीरेक्ष्वादिमाधुर्यस्येव विवेकिनामनुभवगोचरः । यद्यपि पुरुषस्वरूप एव बोधस्तथापि परेषां गगने श्रोत्रमितिवद्ग-

नकार्यं श्रोत्रमितिवच्च विशिष्टाविशिष्टभेदेन पुरुषनिष्ठ इति फलमिति चेत्याद्युपपाद्यम् । वृत्तेः करणत्वञ्च फलायोगव्यवच्छिन्नकारणत्वरूपं चक्षुरादीनां वृत्त्याख्यप्रमाकरणत्वञ्च व्यापारवत्करणत्वरूपं, तदुक्त-मभियुक्तैः ।

प्रमाता चेतनश्शुद्धः प्रमाणं वृत्तिरेव च ।
प्रमार्थाकारवृत्तीनां चेतने प्रतिबिम्बनम् ॥
प्रतिबिम्बितवृत्तीनां विषयो मेय उच्यते ।
वृत्तयः साक्षिभास्याः स्युः करणस्यानपेक्षणात् ॥
साक्षाद्दर्शनरूपं च साक्षित्वं साङ्ख्यसूचितम् ।

इति । वृत्तेस्तदाकारचैतन्यस्य च साक्षात्परम्परया वा बुध्यात्मकत्वेन कार्यकारणयोस्सामानाधिकरण्यम्बोध्यम् । एवमनु-मेयस्य साध्यविशिष्टपक्षस्य साध्यवत्त्वेन तुल्यजातीयेषु सपक्षेष्वनुवृत्तो विजातीयविपक्षेभ्यो व्यावृत्तस्तत्रैव पक्षे सम्बन्धो यो हेतुस्तद्विष-(१)यज्ञानजन्या सामान्यावधारणप्रधाना वृत्तिरनुमानम् । प्रत्यक्षव्यावृ-त्तस्वरूपकथनं सामान्येत्यादि । यथा चन्द्रतारकं गतिमत्, देशा-न्तरसंयोगात् । अन्वये दृष्टान्तश्चैत्रः व्यतिरेके त्वप्राप्तिरगति-र्विन्ध्यः । एवं भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषराहित्यरूपा-प्तत्वविशिष्टेन वक्त्रा दृष्टोऽनुमितः श्रुतो वाऽर्थः परस्य स्वबोधसदृश-बोधोत्पत्त्यर्थं यश्शब्देनोपदिश्यते तत्र शब्दज्ञानात्तदर्थाकाराश्रोतु-र्वृत्तिरागमः । यस्य शब्दस्य दृष्टानुमितार्थकत्वाभावेनाश्रद्धेयार्थो वक्ता स आगमः चैत्यं वन्देतेत्यादिः शब्दरूपप्रमाणवृत्तिजननास-मर्थः । मूलभूतवेदे दृष्टानुमितार्थत्वनिर्णयात्तन्मूलकमन्वाद्यागमः प्रमा-

१ तद्विषया तन्निबन्धना, विनिबन्धने वृत्त्यनुशासनात्, इति योगवार्तिककाराः ।

णमेव इतरप्रमाणानि त्वेष्वेवान्तर्भवन्तीति निरूपितं साङ्ख्यसूत्रवृ[१]त्तौ।

विपर्ययं लक्षयति ॥

**विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥**

विपर्यय इति लक्ष्यं मिथ्याज्ञानमिति लक्षणं, मिथ्येत्यस्य विवरणमतद्रूपप्रतिष्ठमिति । अतद्रूपोऽप्यसमानाकारो यो बाह्यो विषयस्तत्प्रतिष्ठं तद्विशेष्यकमित्यर्थः । भ्रमस्थले ज्ञानाकारस्यैव सदसद्रूपस्यानिर्वचनीयस्य वा विषये समारोपात् । अनुभवसिद्धसन्निकृष्टज्ञानाकारं विहायासन्निकृष्टदूरस्थरजताद्यारोपे मानाभावात् । तदा दृष्टमधुना नास्तीति स्वरूपतो बाधानुभवानुपपत्तेश्च । केचित्तु मिथ्यात्वे हेतुगर्भविशेषणमतद्रूपेत्यादि । न विद्यते तद्रूपस्य ज्ञानाकारस्य प्रतिष्ठा चिरस्थितिर्यत्रायेतनबाधज्ञानबाध्यत्वादित्यर्थमाहुः । मिश्रास्तु अश्राद्ध[२]भोजिवदतद्रूपप्रतिष्ठमित्यस्य तद्रूपाप्रतिष्ठमित्यर्थः । यज्ज्ञानप्रतिभासिरूपं तद्रूपत्वं तत्प्रतिष्ठा तदाश्रयत्वं तदभाववद्विशेष्यकमित्यर्थ इत्याहुः । ननु कुतो न स प्रमाणमिति चेन्न । सदर्थविषयतया बलवता प्रमाणज्ञानेन बाध्यत्वात् । यथा सद्विषयेणैकचन्द्रदर्शनेन प्रमाणेन द्विचन्द्रदर्शनस्य बाध्यत्वं, एतेनोत्तरेणोपजातविरोधिना ज्ञानेन न पूर्वं बाधनीयं किन्तु पूर्वेणैवानुपजातविरोधिना परमित्यपास्तम् । किञ्च यत्र पूर्वापेक्षापरोत्पत्तिस्तत्रैवमिह तु स्वकारण-

---

१ विवृताविति पा २ पु॰ ।

२ अश्राद्धभोजीत्यत्राश्राद्धं भुङ्क्त इति विग्रहस्तर्हि व्रतलोपप्रसङ्गोऽश्राद्धभोजनाभावे, न श्राद्धभोजीति विग्रहे त्वव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्ततापत्तिरिष्यते तु कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वं तदर्थं न श्राद्धं भुङ्क्त इति वाक्यं कृत्वा नञः क्रियान्वयाच्छ्राद्धशब्देनानन्वयाद्यथाऽसमर्थसमासस्तथात्रापि तद्रूपे न प्रतिष्ठत इत्यतद्रूपप्रतिष्ठमित्यसमर्थसमास इति भावः । स्पष्टं चेदं व्रते इति सूत्रे महाभाष्ये ॥

दन्योन्यानपेत्ते ज्ञाने जायेते तेनोत्तरस्य पूर्वमनुपमृद्योदयमनासाद-यतस्तद्बाधात्मैवोदयो न तु पूर्वस्योत्तरबाधात्मा तस्य तदानीमप्रसक्तेस्तस्मादनुपजातविरोधिता बाध्यत्वे हेतुरुपजातविरोधिता च बाधकत्वे इति दिक् । सेयं विपर्य्ययवृत्तिरेवाविद्याऽस्मितारागद्वेषाभिनिवेशरूपपञ्चपर्वाऽविद्या संसारानर्थबीजमेतत्पञ्चकस्यैव क्लेशसञ्ज्ञा । रागादीनां मिथ्याज्ञानत्वाभावेऽपि तद्रूपाविद्यानुगतत्वात्तत्त्वम् । एतएव तमोमोहमहामोहतामिस्रान्धतामिस्रसञ्ज्ञा इति सर्वथा हेयाः । न च मोहास्मितयोः पर्यायत्वे मोहस्य वृत्तिरूपत्वात्कथं शान्तघोरमूढत्वं वृत्तीनां, धर्मधर्मिणोरभेदेनाच वृत्तीनां विपर्ययादिरूपत्वव्यवहारात् । वस्तुतो वृत्तयो विपर्ययादिमत्य एवेति दिक् । अविद्यादयश्चाग्रे चित्तमलप्रसङ्गेन वक्ष्यन्ते ।

विकल्पं लक्षयति ॥

**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥**

शब्दश्च तज्जन्यज्ञानञ्च ते अनुपातिनी यस्य सः, एवञ्च बाधाबाधकालाविशेषेण सदैव तदुभयजनको वस्तुशून्यः प्रत्ययो विकल्प इत्यर्थः । शब्दज्ञानजन्य इत्यर्थ इति मिश्राः । इदमेव भाष्यसम्मतम् । स न प्रमाणान्तर्भूतो वस्तुशून्यत्वात्, नापि विपर्ययान्तर्भूतः ज्ञानस्य याथार्थ्ये सति यादृशस्तद्यायार्थ्यनिबन्धनो व्यवहारः शब्दप्रयोगरूपस्तादृशव्यवहारस्येतोपि दर्शनात् । विपर्ययस्तु नैवं बाधोत्तरमिदं रजतमिति शब्दप्रत्यययोरभावात् । एवञ्च विपर्ययलक्षणे शब्दज्ञानाननुपातित्वं विशेषणं देयम् । यथा चैतन्यं पुरुषस्य स्वरूपमिति, अन्यथा चितेरेव पुरुषत्वाद्भेदनियतसम्बन्धरूपस्य षष्ठ्यर्थस्याप्रतीत्यापत्तिः । भवति च चैत्रस्य

गौरिति यथार्थशब्दवत् । अत्रापि षष्ठ्यर्थे वृत्तिस्तस्यास्ततो विवेकिनामपि बोधश्च । एव प्रतिषिद्धवस्तु[1]धर्मो निष्क्रियः पुरुष इति, शास्त्रेण प्रतिषिद्धा वस्तुधर्माः सुखादयो यचेति क्रियारहित इति च[2] तदर्थः । अन्यथाऽभावस्याधिकरणमात्ररूपत्वेनाधाराधेयभावानुपपत्तिः । एव तिष्ठति बाणः स्थास्यति स्थित इति । अत्र गतिनिवृत्तिरभावरूपत्वाद्बाणवृत्तित्वेन कल्पिता तत्रापि भावरूपता तत्रापि पूर्वापरीभाव इति कल्पनापरम्परा । पूर्वापरीभूतकर्मप्रचयस्यैकफलावच्छिन्नस्यावगतेः । 'एवमनुत्पत्तिधर्मो पुरुष' इत्यत्रोत्पत्तिधर्मस्याभावमात्ररूपः पुरुषोऽवगम्यते न तु पुरुषान्वय्यनुत्पत्तिरूपो धर्मोऽस्ति शब्देन त्वनुत्पत्तिर्धर्मो यस्येत्यर्थकेन विकल्पितः स धर्मः प्रतीयते तन्मूलकश्चायं व्यवहारः पुरुषस्य सर्वधर्मशून्यत्वात् । एवं खपुष्पशशशृङ्गादयोऽपि विकल्पा एव वैशेषिकाणां त्वसावाहार्यज्ञानविशेषरूप इति [3]दिक् ।

निद्रां लक्षयति ।

**अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥**

निद्राया वृत्तित्वस्फुटीकरणाय पुनर्वृत्तिपद तस्या वृत्तित्वे वादिनाम्विप्रतिपत्तेर्जाग्रत्स्वप्नवृत्तीनामभावस्य यः प्रत्ययः कारण चित्तसत्वरजसोराच्छादकस्तमोद्रव्यरूपस्तदालम्बना तद्विषया स्वपिमीत्याकारा वृत्तिरित्यर्थः । तामेव बुद्ध्यमानः पुरुषः सुषुप्तस्थानोऽन्तः प्रज्ञ इत्युच्यते श्रुतिभिः । ननु सा वृत्यभाव एवास्तु किन्त-

---

१ भाष्ये तु प्रतिषिद्धवस्तुधर्मा-इति पाठ ।

२ वार्तिके निष्क्रय पुरुष इत्युदाहरणान्तरमित्युक्तं तदनुसारेण 'च' शब्दः ।

३ प्रमाणविपर्ययातिरिक्ताया विकल्पवृत्तौ बहुवादिविप्रतिपत्तेस्तन्निरासाय बहून्युदाहरणानीति योगवार्तिके ।

स्या वृत्तित्वकल्पनेनेति चेन्न, जागरे स्मरणविशेषदर्शनेन तस्या वृत्तिरूपत्वकल्पनात् । तथा हि यस्यां सत्वसचिवतमस आविर्भावः सा सात्विकी निद्रा तदुत्थितो ह्येवं स्मरति सुखमहमस्वाप्समिति ततस्तदभिनयति निर्मलं मे मनः प्रज्ञां सूक्ष्मार्थवृत्तिप्रतिबिम्बग्राहिणीं करोतीति, यदा रजःसचिवतमस आविर्भावस्तदा राजसी निद्रा तदुत्थितो ह्येवं स्मरति दुःखमहमस्वाप्समिति तदभिनयत्यकर्मण्यं मे मनो भ्रमत्यनवस्थितमिति । तमः सचिवतमसा तामसी निद्रा तदुत्थित एव स्मरति गाढं मूढोऽहमस्वाप्समिति तदभिनयति गुरूणि मे गात्राणि क्लान्तं मे चित्तमलमत्यन्त मुषितमिव परैरपहृतमिव कर्म्मानिच्छु चेति । तदिदमस्वाप्समिति स्मरणमसत्यनुभवे न स्यात् । ननु वृत्ति विनापि स्वापस्य साक्षिभास्यत्वेनैव स्मरणमस्त्विति चेन्न । तद्विषयस्मृतेश्चित्ताश्रितत्वाभावापत्तेः । अन्येनान्यदृष्टास्मरणात्साक्षिणि तु स्मरणमसम्भवि संस्काराभावात्स्मृत्याख्यपरिणामासम्भवाच्च । अत एव 'त्रिषु धामसु यद्भोग्य भोक्ता भोगस्य यद्भवे'दिति श्रुत्या सुषुप्तेपि भोग्यसत्तोक्ता । न च 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त यत्पश्ये'दि'ति सुषुप्तश्रुतिविरोधः तया हि तदानीं ज्ञानाभाव एवावगम्यतइति वाच्यम् । अद्वैसमयभेदेन सुषुप्तिद्वैविध्यात् । अद्वैपराऽऽद्या श्रुतिरन्त्यपरा द्वितीयेत्यविरोधः । तत्राप्यावरकतमोमात्रगोचरा वृत्तिरस्त्येव, अत एव तत्रापि सुखमहमस्वाप्सं न किंचिदवेदिषमिति स्मृतिः । इतरवृत्त्युत्थदुःखाभावादेव च सुखमिति परामर्शः । 'जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तय' इति स्मृतेश्च । सैषा निद्रावृत्तिरपीतरवृत्तिवत्सुखदुःखमोहात्मकतया समाधिप्रतिपक्षेति समा-

यथा गौः सर्वं प्रति गौरिति चेत् । बाढम् । साक्षात्त्वं हि जातिर्गोत्ववत् सर्वसाधारणी । यथा हि गौः सर्वं प्रति गौस्तथा साक्षात्कार्यपि सर्वं प्रति साक्षात्कार्येव सर्वैस्तथा व्यवह्रियमाणत्वादिति यथा तस्याः साक्षाद्धियो व्यवहर्तृषु साधारण्यं तथा विषयेष्वपि साधारण्यं ब्रूम इति चेत् । हन्त तस्याः साक्षात्त्वं नानानिरूप्यं जातित्वादिति साक्षात्कारिणी भवत्येव किन्तु विवक्षितविवेकेन सर्वविषया सा भवत्वित्यापादनार्थः । स चायुक्त आपादकाभावात् । न हि घटमात्रविषयाया धियः पटविषयत्वे किमप्यापादकमस्तीति । साक्षात्त्वञ्च साक्षात्करोमीत्यनुगतानुव्यवसायसाक्षिकमिति न तत्र मानान्तरापेक्षा नापि निर्वचनापेक्षा जातित्वेनाखण्डत्वात् गोत्वादिवत् । एवञ्च ज्ञानाकरणकानां ज्ञानानां साक्षात्कारित्वं तच्च जातित्वरहितेभ्यः (१) साक्षात्कारिणां भेदधीजनकमिति सिद्धम् । इन्द्रियार्थेत्यादि तु तदुपलक्षणम् । न चात्राधिक्यं एकैकमेव तदुपलक्षणात् अवान्तरलक्षणाच्च । अस्तु वा लक्षणस्य प्रत्यक्षव्यवहारसाधकत्वम् । तथाहि इदं हि लक्षणवाक्यं वादिवाक्यत्वाद्यद्यप्यप्रामाण्यशङ्काग्रस्ततया नाहत्य व्यवहारयति तथापि न्यायप्रयोगवदनुमानमुत्थाप्य व्यवहारयिष्यति । तद्यथा उक्तज्ञानानि प्रत्यक्षत्वेन व्यवहर्तव्यानि साक्षात्कारित्वात् । अयं च अन्वयी न सम्भवत्यन्वयाग्रहादिति व्यतिरेकितया परिणमत इति तावत् न्यायमतम् । तत्खण्डनन्तु व्यवहारविशेषो लक्षणसाध्यः तत्कर्तव्यता वा । नान्त्यः । न हि तदनभिज्ञः तत्कर्तव्यतां ग्राहयितुं शक्यः न हि वह्न्यनभिज्ञो वह्निसम्बन्धं ग्राह्यते । अथ व्यवहारवि-

(१) साक्षात्त्वरहितेभ्य इति २ पुस्तके पाठ ।

शेषाभिज्ञ एव लक्षणोद्देश्यो व्यर्थः कथन्तर्हि लक्षणं तत्फलस्य व्यवहारविशेषस्य स्वतः सिद्धत्वात्। आद्येऽपि व्यवहारविशेषो लक्षणेनानुमेयो न तु जननीयो मानस्य मेयाजनकत्वात्। तथा च स ज्ञानविशेषजन्यो वाच्यः ज्ञानविशेषश्चार्थविशेषाधीनः ज्ञानस्य स्वतो विशेषाभावात्। अर्थविशेषश्च न प्रमामात्रात् सिध्यति अतिप्रसङ्गात्। न हि घटप्रमया पटरूपोऽर्थविशेषः सिध्यति। नापि तत्तदर्थोपलक्षितप्रमया तत एव। नापि तत्तदर्थविशेषितप्रमया आत्माश्रयापत्तेः। तदुक्तम्।

नात्यापत्त्या(१) प्रमामात्रात्ते तेऽर्थाः स्वीक्रियोदिताः।
तद्धियस्तदुरीकारे स्वाश्रयं कश्चिकित्सतु॥

न च तत्तदर्थाहितविशेषया प्रमया अर्थविशेषसिद्धिः ज्ञानस्यार्थाहितविशेषाङ्गीकारे हि साकारपक्षप्रवेशः स्यात्। तदुक्तम्।

अथान्यः सविशेषश्चेत्तद्धीत्वं कश्चिदिष्यते।
दत्तः साकारवादाय विष्टरः(२) स्पष्टमेव तत्॥

अथ तद्धीत्वमनुमात्वादिवदर्थादुत्थास्नुस्तदार्थमन्तरेणैव स्यादित्यर्थो विलीयेत। तदुक्तम्।

अर्थादुत्थास्नवो(३) धर्मा नानुमात्वादयो यथा।
तद्धीत्वमपि तद्वत्स्या(४)दित्यर्थोऽनर्थमाविशेदिति॥

तस्मिन्नपि तद्धीविशेषे तद्विषयकस्तद्धीविशेषः प्रमाणमेवं तत्राप्येवं तत्रापि। तथा चानन्तायां तद्धीविशेषधारायां तद्धीनिर्वचनोक्तदूषणानि प्रसज्जतीत्याशयेन

(१) अत्यापत्तिः अतिप्रसङ्ग पटप्रमातोऽपि घटप्रसिद्धिलक्षणः।
(२) विष्टर आसनम।
(३) उत्थास्नव उत्थितिशीला.।
(४) तद्वत स्यात अर्थादुत्थित न स्यादित्यर्थ.।

सोऽपि वा धीविशेषः किं स्वीकार्यस्तद्धियं विना ।
एवञ्च सोऽपि सोऽपीति नान्तः सोपानधावने(१) ॥

एवमेष दोषो मन्मतानुसारेण परन्न लगतीति प्रश्नपूर्वकमाह

समस्तलोकशास्त्रैकमत्यमाश्रित्य नृत्यतोः ।
का तदस्तुगतिस्तद्वद्वस्तुधीव्यवहारयोः(२) ॥
उपपादयितुं तैस्तैर्मतैरशक्नीययोः ।
अनिर्वचनतावादपादसेवा गतिस्तयोः(३) ॥

अत्र ब्रूमः । यो हि तास्ताः प्रत्यक्षव्यक्तीः प्रत्यक्ष-तया व्यवहरति व्यवहारः सनिमित्तक इति च जानाति अप्रत्यक्षव्यवहारे किं निमित्तमिति बुभुत्सते तं प्रति साक्षात्कारित्वं लक्षणमुपतिष्ठते । तच्च साक्षात्कारित्वमनुमानच्छायामवलम्ब्य व्यवहारयति तत्रापि साक्षात्कारित्वव्यवहारयोः पक्षादन्यत्रासतोरन्वयव्याप्त्यनवधारणात् लक्षणं व्यतिरेक्यनुमानमिति पर्यवस्यति । ननूक्तव्यवहारोत्पत्तये ज्ञप्तये वा नानुमितिः व्यवहर्तरि तयोः सत्त्वादेवेति चेत् । मैवम् । प्रत्यक्षधियां प्रत्यक्षत्वेन व्यवहारः साक्षात्कारित्वनिबन्धनः निबन्धनान्तराभावे सति सनिबन्धनत्वात् साक्षात्कारित्वान्वयव्यतिरेकानुविधायित्वाद्वेत्यस्य मानार्थत्वात् । एतेन प्रत्यक्षत्वेन व्यवहारः प्रत्यक्षपदप्रयोगरूपः सोऽपि तत्प्रयोगे साक्षात्कारित्वस्यान्वयव्यतिरेकितयैव सेत्स्यति किं तदर्थं लक्ष-

(१) सोऽपि धीविशेषः घटधीविशेषः किं तद्धियं घटधीविषयकधियं विना स्वीकार्यं न स्वीकार्यं इत्यर्थः । एवञ्च सोऽपि सोऽपि घटधीधीगोचरधीविशेषादिरपि स्वस्वगोचरधियं विना स्वीकार्यं इति सोपानधावने ऽनवस्थेत्यर्थः ।

(२) तत तस्मात् समस्तलोकशास्त्रयोरैकमत्यमाश्रित्य नृत्यतोः भासमानयोस्तत्तद्वस्तुव्यवहारतत्तद्धीव्यवहारयोः का गतिरस्तु इत्यन्वयः ।

(३) तैस्तैर्मतैरुपपादयितुमशक्नीययोस्तयोरनिर्वचनतावादपादसेवा गतिरित्यन्वयः ।

णप्रणयनेनेत्यपास्तम्। अन्वयव्यतिरेकाभ्यामपि प्रत्यक्ष-शब्दवाच्यत्वादिकमपि यदवगन्तव्यं तदपि व्यतिरेकव्याप्तिबलेनैव न त्वेतद्व्यतिरेकयोः सामानाधिकरण्यमात्रबलेन अप्रयोजकत्वात्। तस्माच्चतुर्थविकल्पोऽयं नानिष्टाय। एवञ्च जवगडदशादिशब्दवाच्यतानुमानमप्यपास्तं व्यतिरेकव्याप्तिविरहात्। एवं युक्तो व्यतिरेक्यनुमानात्मकस्य लक्षणस्य प्रयोगः। व्यवहारविशेषश्च प्रत्यक्षत्वेन व्यवहारः तद्धेतुश्च ज्ञानगतो विशेषः स च साक्षात्कारिलक्षणजातिरूपः। एवञ्च स जातिविशेषो यस्मिन् ज्ञाने ऽस्ति स ज्ञानविशेषस्तज्जातियोगेन हेतुना प्रत्यक्षत्वेन प्रकारेण व्यवह्रियते। न च साध्यप्रसिद्ध्यप्रसिद्धोर्दोषः घटप्रत्यक्षादौ प्रसिद्धस्य प्रत्यक्षत्वव्यवहारस्यान्वयव्याप्त्यप्रतिसन्धाने ज्ञानाकरणकज्ञानत्वावच्छेदेन साक्षात्कारित्वेन व्यतिरेकिणा साधनात्। इतरभेदानुमाने न्यायाचार्या अप्येवमिति सर्वं सुस्थम्॥

ननु भवत्वेवं तथापि प्रमामात्रेण वा अर्थविशेषः स्वीकार्यः तदर्थविषयकप्रमया वा तदर्थाहितविशेषया वा। प्रमयेत्यत्र न किञ्चिदुक्तमिति चेत्। त्वयापि न किञ्चिदुक्तम्। तथाहि न हि प्रमया स्वीकारो ऽभेदात् किन्तु प्रमाणेन अर्थार्थान्विताभ्युपगमस्वीकारः। तत्र यथोक्तत्रितयमध्ये किं निमित्तमिति महावाक्यार्थ इति चेत्। तेनार्थेन समं स्वभावसम्बन्धेन यथार्थबोधेन स स्वीकार्य इत्यवेहि। तथा चार्थो ज्ञाने विशेषणम्। ज्ञानस्य तु तदर्थकस्य तदर्थव्यवहारजनने उपलक्षणं रूपवति रस इत्यत्र यथा धर्मिणि रूपं विशेषणं रसवृत्तौ तूपलक्षणं आश्रयव्यवच्छेदकत्वे सति क्रियानन्वयित्वात्। न हि ज्ञानं विशिष-

त्रप्यर्थो व्यवहारं जनयत्यनितादिसाधारण्यात् । नापि व्यवहारं विशिषन्नप्यर्थो ज्ञानेन जन्यते ज्ञानस्य तत्प्राक्सत्त्वनियमाभावात् । नाप्यर्थो ऽर्थेन जन्यते आत्माश्रयादित्यगत्यैवार्थस्योपलक्षणतेति तदेव तत्रैव तदैव विशेषणत्वोपलक्षणत्वेति महद्वैशसमिति चेत् । न । अबाधात् तत्र हि तद्विशेषणमेव घटे रूपवत् ज्ञानस्य तु प्रत्यक्षव्यवहारार्जने ऽनङ्गत्वादुपलक्षणं शेषमशेषं प्रत्यक्षखण्डनं कल्पितदूष्यत्वादुपेक्षितमिति। ननु साक्षात्त्वं जातिरव्याप्यवृत्ति तथा च परमाणौ । ननु व्यवसायो व्यवसाय इव परमाणोरपि साक्षात्कारी स्यादिति चेत् । वाढं किन्तु स व्यवसेयांशे त्वलौकिको ज्ञानलक्षणप्रत्यासत्तिजन्यत्वात् । व्यवसाये तु लौकिकः संयुक्तसमवायजन्यत्वात् । हन्तैव. लिङ्गबुद्धिलक्षणया प्रत्यासत्त्या वह्निरपि मानसो ऽस्त्विति चेत् । केयं लिङ्गबुद्धिः । वह्निनिरूपितव्याप्त्युपहितपक्षधर्मधूमधीर्विशेषणविशेषणं वह्निमपि स्पृशन्ती भवति वह्निमनसोः प्रत्यासत्तिरिति ब्रूम इति चेत् । तर्हि तादृशलिङ्गधीर्मानान्तरमित्यकामेनाप्युपेयं तदवष्टम्भेन मनसो बहिः प्रवृत्तेश्चक्षुर्वत् । एवं प्रत्यभिज्ञापि साक्षात्त्ववती तमिमं साक्षात्करोमीति प्रतीतेः । ननु साक्षात्त्वस्य(१) व्याप्याश्रयज्ञाने सता योग्यत्वेनावधारणे प्रत्यभिज्ञायां तत्तांशे साक्षात्त्वपरोक्षत्वसंशयो न स्यात् विशेषदर्शने भ्रमानुदयादिति चेत् । स्थाणुपुरुषसंशयवन्नायं सार्वलौकिकः(२) किन्तु तत्तद्दर्शनप्रामाण्याभिमानिनां विप्र-

(१) अत्रादर्शत्रये ऽपि द्वित्राण्यक्षराणि विलुप्तानि तत्र "व्याप्याश्रय" एवमनुमीयते ।

(२) अत्रापि पूर्ववदेवाक्षराणि विलुप्तानीति ।

तिपत्तेः परीक्षकाणामेवायं नित्यानित्यसंशयवत् । ननु स्वात्मानुमितिरात्ममनोरूपेन्द्रियार्थसन्निकर्षजत्वात् साक्षात्कारिण्यपि स्यादिति चेत् । न । तत्रात्मा नार्थत्वेन किन्तु समवायित्वेन मनोऽपि नेन्द्रियत्वेन किन्तु मनस्त्वेन जनकमिति मदुपगमात् । ननु भगवज्ज्ञानं कथं साक्षात्कारि इन्द्रियाजन्यत्वादिति चेत् । कार्यस्योपादानप्रत्यक्षजन्यत्वनियमादिति दिक् ॥

ननु नियतव्यञ्जकाभावात् साक्षात्त्वं न जातिरिति चेत् । न तावन्नियतव्यञ्जकधीपूर्विकैव जातिधीरिति नियमः ज्ञानत्वेच्छात्वयत्नत्वादौ व्यञ्जकस्यैवाभावात् । किञ्च त्वदुक्तरीत्या जातिर्न स्यादेव व्यञ्जकेनैवानुगतमतेरुपपत्तेः । अस्तु वा गोत्वे सास्नेवाननुगतमेव साक्षात्त्वे व्यञ्जकम् । तथाहि अस्मदादिरूपादिप्रत्यक्षे चक्षुरादिजन्यत्वं योगिप्रत्यक्षे योगजधर्मजन्यत्वं भगवत्प्रत्यक्षे धर्मिग्राहकमानम् । एतदनवधारणदशायामेव साक्षात्त्वसंशयो विशेषादर्शनादिति । अस्तु वा ज्ञानाकरणकज्ञानत्वमेव साक्षात्त्वस्य व्यञ्जकम् । न चैवमावश्यकत्वात्तदेव साक्षात्त्वधीविषयोऽस्त्विति वाच्यम् । साक्षात्त्वधीर्हि विधिमुखी सा कथं व्यतिरेकालम्बनास्तु गोत्वधीवत् । अन्यथा गोत्वधीरप्यगवापोहालम्बना किन्न स्यादित्यपोहापातः । तदुक्तं त्वयैव ।

विधिजः प्रत्ययोऽन्योऽयं व्यतिरेकासमर्थनः(१) ।
नैवञ्चेदपराद्धं ते किमन्यापोहवादिना ॥ इति ॥

अनुमानमपि किमुच्यते । लिङ्गपरामर्शो ऽनुमानं लिङ्गत्वं व्याप्तपक्षधर्मत्वमिति चेत् । पक्षता हि साध्यस-

(१) व्यतिरेकेणासमर्थनं यस्येत्यर्थः ।

न्देहः । स च पर्वतस्य नोपलक्षणमनुमित्युत्तरमपि अनुमित्यापत्तेः पर्वतस्य तदापि साध्यसन्देहोपलक्षितत्वात् । नापि विशेषणम् । अनुमित्युत्तरं पर्वतः पक्षताविशिष्टः तावन्नास्तीति तत्राऽग्न्यर्थिनः प्रवृत्तिर्न स्यात् वह्नेः केवलपर्वतावृत्तित्वात् । धूमः पक्षवृत्तिः वह्निस्तु केवलपर्वतवृत्तिरिति न सम्भवति वैयधिकरण्यापत्तेः । न चैवं वैयधिकरण्यं न दोषः सामानाधिकरण्यरूपव्याप्तिविरोधित्वात् । विशेष्ये पर्वते द्वयोः सामानाधिकरण्यमस्त्येवेति चेत् । तर्हि साधनस्य पक्षधर्मता व्यर्था स्यात् । सा हि न साध्यसामान्यसिद्ध्युपयोगिनी व्याप्तेरेव तत्र सामर्थ्यात् । नापि तद्विशेषसिद्ध्युपयोगिनी प्रतीत्यपर्यवसानस्यैव तत्र सामर्थ्यादिति । सिद्धसाधनपरिहारमात्रार्थं सेष्टव्या । सिद्धसाधनञ्च न स्वार्थानुमाने दोषः आगमेनेत्यादेः । एतेन संशययोग्यतापि निरस्तेति खण्डनम् ॥

तन्न । न हि साध्यसन्देहघटितां पक्षतामाचक्ष्महे प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका इति टीकाविरोधापत्तेः ।

आगमेनानुमानेन ध्यानात् प्रत्यक्षणेन च ।
त्रिधात्मनि प्रमाणानां संप्लवः स्वार्थमिष्यते ॥

इत्यागमविरोधापत्तेः श्रोतव्यो मन्तव्य इति श्रुतिविरोधापत्तेश्च । एतेन संशययोग्यतापि निरस्ता । न चैवं शास्त्रे संशयव्युत्पादनानर्थक्यम् । संकशुकतानिवृत्तये न्यायोपासने तदङ्गत्वोपगमात् । अत एव संशयाभावे ऽपि मन्तव्य इति विधिसमभिव्याहृतवाक्यजनितेष्टसाधनताज्ञानजसिषाधयिषया भगवदनुमानप्रवृत्तिरिति कुसुमाञ्जलावाचार्या अप्याहुः । अस्तु तर्हि सिषाधयिषाघटिता

सा । हन्तानिष्टार्थायामनुमितौ सापि व्यभिचरतीति चेत्। बाढम् । तद्योग्यता तावदस्ति । सापि साधकबाधकमानाभावरूपा श्रुतिस्वरूपसाधकमानावरुद्धे भगवति नास्तीति । उच्यते । सिषाधयिषाविरहसहकृतसाधकमानस्याभावः सा । सा च सर्वत्रैवास्ति । शेषमनुमाननिर्णयेऽध्यवसेयम् । अस्तु वा कापि पक्षता सा तावदनुमित्युत्तरं नास्तीत्यविवादम् । अन्यथा लिङ्गोपहितलैङ्गिकावगाहिन्यामनुमितौ व्याप्तपक्षधर्मलिङ्गभानावश्यकत्वेऽनुमिपक्षविच्छेदः स्यात् । तथा चानुमित्युत्तरं तत्र पक्षता त्वयाभ्युपेया । तथा च विशेषणाभावाद्विशिष्टः पर्वतोऽपि नास्तीति तन्निष्ठोऽग्निरपि नश्येदिति चेत् । एवं सति हि क्षणभङ्गः स्यात् असद्विशेषणोपरागेण सतोऽपि विशेष्यस्याप्ययोपगमात् स च प्रत्यभिज्ञानबाधितः । किञ्चानुमानेनाग्निनिश्चयं प्रसूय समूलकाषं कषितो ग्निसंशये विरोधिविधूननान्निष्कम्पा वह्न्यर्थिप्रवृत्तिः स्यादेव । अपि च धूमः पक्षवृत्तिरग्निः पर्वतवृत्तिरतो वैयधिकरण्यान्न व्याप्तिरनयोः तस्याः सामानाधिकरण्यरूपत्वादिति वदन् खण्डनकृद्व्याप्तिपक्षधर्मतयोरबोधमबोधयत् । तथाहि व्याप्तिर्हि अव्यभिचरितसम्बन्धरूपा । सा च समानाधिकरणयोरिवासमानाधिकरणयोरप्यस्ति । कथमन्यथा पृथिवीत्वादिना इतरेषामन्योन्याभावोऽनुमीयते तत्र हीतरे व्याप्याः पृथिवीत्वाभावस्तु व्यापकः । न चेतरे तत्समानाधिकरणा अवृत्तेरपीतरत्वात् । न च तत्रेतरतादात्म्यमेव पृथिवीत्वाभावस्य व्याप्यं तयोश्च सामानाधिकरण्यमस्त्येवेति वाच्यम् । तथा सति हीतरतादात्म्यस्यात्यन्ताभावः पृथिवीत्वेन सिद्धो न त्वितरान्योन्याभावः । इतरतादा-

To justify his own view of false predication, the Bhāsya-writer sets out the views of others, in the passage.—THIS ADHYĀSA SOME WRITERS DEFINE, &c We explain how this is so (*a*) Some say that Adhyāsa is false predication in regard to a certain subject, *e g* a pearl shell, of a predicate which belongs to some other thing, *e g* to silver—and this thing is held to be either a mental reality or, indeed, an external reality (*b*) To the second definition, beginning with the words Ke cittu yatra, the word vadanti—*they say*, must be added, and so, according to these writers, Adhyāsa would mean that erroneous identification of a subject and a predicate which is caused by non perception of the difference between these two (*c*) Others, again, say that Adhyāsa is the false presentation of a substrate as possessing properties which are contrary to its own nature In other words, they hold that something which does not then exist, *e g* the properties of silver, is presented as then belonging to a certain substrate, *e g* to a pearl shell

Page 12

In the succeeding sentence beginning with the words—HOWEVER UNDER ALL THESE FORMS &c—the Bhāsya-writer implies that all these views are in agreement with his own Now the current definition of Adhyāsa is 'the presentation of a property or predicate as belonging to a thing to which it does not really belong' And thus what we said in regard to the Bhāsya-writer's definition, *viz*, that the word *elsewhere*, paratra, implies that a presentation of *something else* has taken place (p 19), applies to the definitions now cited We explain how this is so Our statement applies to definition (*a*), for here the mental

reality or the external reality, *e g* silver, is said to be presented as a property or predicate of the pearl shell So also to definition (*b*), for here the pearl shell and the silver are presented in consciousness as identical, though they are really different things And, again, to definition (*c*), for here the shell is said to appear under the form of silver What the Bhāsya-writer implies here is that the existence of Adhyāsa cannot be disputed, because every definition of it contains these two invariable marks, *viz*, the fact of a previous knowledge of a something, and the fact of this something appearing now in consciousness as if it were a thing remembered The word *elsewhere* is inserted in the definition of Adhyāsa (p 19) to prevent the definition from applying to the groundless view of those who hold that Adhyāsa is possible even if no real substrate for it exists And this view we call groundless, because an unreal predication, which has no reference to some really existing substrate, is not and cannot be a fact of experience But against us it may be said that no real substrate exists for those forms which appear before one's eye when this organ is pressed on by the finger we reply that even these appearances have as their real substrate the material particles of the element light

Then, it may be said that, as in the case of the seed and the plant, so in the case of the silver and our consciousness of the silver, each is the real substrate from which the other proceeds We reply that the objection is not to the point For that seed, which itself produces a certain plant, does not come from that plant but from some other plant on the other hand, if, as the opponent

says, the consciousness, which makes known the silver and the silver itself are each the substrate from which the other proceeds, then the relation between them admits of no explanation And, further, even in the case of the seed and the plant we do not prove our point, (*viz*, the continued existence of some real substrate) by appealing to a mere succession of seeds and plants, for the state of the case is, as we learn from experience, that we cannot get rid of our expectation (of a real and permanent substrate) And if we are asked to state why we say that this and this are so and so, we reply by appealing to experience—it is thus observed to be In such cases, a thinker, however for back he may try to go, must come to a stop somewhere, for if he trusts to a succession of causes and effects he finds no halting place and cannot escape the logical defect termed infinite regress Moreover, bādha, or the conviction that the surmised object does not exist, is, in no case, a blank negation without limit of any kind For when through a process of inference or through the testimony of a reliable person we have been convinced that the surmised object, *e g* the snake seen in the darkness, did *not* exist, we feel under the necessity of learning what the thing seen was *really*, so that the real thing, present to our senses *e g* the piece of rope, is the limit to which our negative judgment, *e g*—this is not snake—necessarily relates So too in the case of Pradhāna and the other alleged causes of the world, we come to know the limit of our negative judgment (sc what the real cause is) when we have been convinced that the three gunas and so forth do not constitute the cause of the world Hence

the negation of all things has its limit in some positive or existent principle And since this positive principle is in itself undifferenced and cannot be denied when all else is denied, it follows that the negation of all things has as its limit the unchanging, undifferenced, self-presented Principle of Intelligence Nor is the falsely surmised object a sheer non-entity, for if it were that, it could not *appear* to be

But, says an opponent, your view is that all this world is non-entity Not so our view is that all this world consists in Nescience, a principle without beginning and inexplicable Well, he rejoins, you hold the world to be *unreal*, because after the rise of knowledge you have to admit that Nescience is inexplicable This statement we grant Accordingly we hold that the destructive judgment—'this thing is not silver,' arises in simply denying silver as existing here and now, but does not make known to us silver as existing elsewhere, for of silver existing elsewhere we are not now conscious So also when a person looking at a piece of rope in the distance imagines it to be a snake and is told by a trustworthy on-looker standing near it that it is not a snake, he learns only that a snake does not exist there, and not that it exists elsewhere For his friend's word—this thing is not a snake—cannot directly inform him of a snake's existence elsewhere, nor could he gain such knowledge by a process of disjunctive reasoning from two mutually exclusive alternative (*i e* the snake may not exist here or elsewhere) And our line of argument also applies to the case in which,

Page 13

after the existence of the snake has been denied, the existence of the rope as the real substrate is affirmed whether through direct perception or through reliable testimony Hence we conclude that there can be no such thing as a false predication which does not relate to some real substrate And so the word *elsewhere*, paratra, was rightly inserted in the definition of 'false predication'

But if this is so, the definition of Adhyāsa should be limited to the words—'paratra purvadrstāvabhāsah', for the additional words, 'as if it were a remembered thing' (cf p 19) are implied therein True, we reply, but the implication would be that the thing was indeed something remembered and not merely *like a remembered thing* And of course we do not hold that a thing remembered is in itself a case of false predication Well, then, rejoins the objector, confine the definition to the words—'paratra smrtirūpāvabhāsah', for here the words, 'as if it were a remembered thing,' must qualify that 'presentation of a thing previously known' which is what the word paratra, *elsewhere*, implies If this 'some thing else', parasya, were something not connected with the present consciousness it could not be described by the words—'as if it were a remembered thing' True, we reply, but the words 'pūrvadrsta make the meaning quite clear Hence the definition should stand as in the words of the Bhāsya

The Bhāsya thus continues AND WITH THIS AGREES OUR ORDINARY CONSCIOUSNESS EXPRESSED IN SUCH SENTENCES AS—THE PEARL SHELL APPEARS LIKE SILVER, OR, THE MOON APPEARS LIKE TWO MOONS The two examples here given suffice to describe the nature of false predication as some-

६११

thing vouched for by our ordinary experience and, therefore, not needing the support of argument , and so the Bhāsya-writer describes it merely

But it may be said that only the silver appears to consciousness and not the pearl shell, and that, therefore, the description is faulty as regards (*a*) *the pearl shell appears* and as regards (*b*) *like silver* To this we reply as follows —the statement under (*a*) refers to the real pearl shell whose existence is proved subsequently by a true cognition Statement (*b*) refers to the appearance in consciousness of something which is present to our sense-organ and which is not silver but which seems identical with unreal silver And, further, unreality is predicated of this appearance because it is due to some accidental defects in the sense-organ and is subsequently proved to be unreal On the other hand, statement (*b*) does not imply that we are conscious of this appearance as a something different from real silver also present to consciousness , for real silver not being present to a sense-organ at this time cannot appear in consciousness as the perceived object—such appearance being possible only to a thing which is in contact with a sense-organ Again the fact that the silver also appears as an object of immediate consciousness, though it is the product of a mental relic of silver previously cognized, must be held to be due to some defect in the sense-organ engaged, and to the fact that such consciousness of silver falls within the direct perception effected through the sense-organ

Page 14

The illustration of the pearl shell and silver shews that the silver is not really identical with the pearl shell

which is in contact with a sense-organ and of which it is predicated That is to say, it serves to shew that our personal consciousness is falsely predicated of the undifferenced Principle of Intelligence, which is the pure *subject* (अस्मित्प्रत्यय) present to consciousness as the *I* and with which the personal consciousness is not identical, while indeed the latter assumes the character of an *object* in so far as it is illumined by the Principle of Intelligence The illustration of the two moons shews that to jiva (personal consciousness) and the Lord Içvara, and, again, to the many jivas, do not really belong those differences which we ascribe to them

But against us it may be urged that defects are known to exist and prevent the perception of an external object, these defects pertaining either to the object itself, *e g* the resemblance which it bears to other objects, or to the visual organ, *e g* darkness , and since an external object is a whole made up of parts, it is possible that one part of the external object may be prevented from coming into our consciousness even while another part is perceived—such prevention being the result of the defects already described Whereas, in the case of the Intelligential Principle, certitude in regard to it is not dependent on any source of knowledge (kārana) other than this Principle itself, hence dependence of such a kind cannot be cited as a ground for the statement that, owing to certain defects in the source of our knowledge, it is possible for the Principle of Intelligence to fail to be presented to our consciousness—such failure is not possible in the case of Intelligence which is a self-luminous unity without parts. Again, it may be objected

that Brahman in its own nature is indeed not present to our consciousness, but that it does not follow from this fact that the jīva i e personal consciousness is not presented at all or is presented erroneously, just as it does not follow that, when a pearl shell fails to be perceived, some other object e g a pillar must also fail to be perceived at all or be falsely perceived Or it may be argued that Jīva is not really different from Brahman, on the strength of the Çruti passage —"By this living self (jīvena) it entered"—and that therefore it is the self which is not perceived and, further, that it is all the more impossible for Nescience (avidyā) to invest this self which is made up of knowledge (vidyā), for, in the words of Çruti,—"all this world shines in the light of that Self"—that is to say, is illumined by that Principle of Intelligence

To these objections we reply :—Beyond doubt there exists a defect even in regard to the Self, this defect is Nescience, it conceals the Light which is Self, and thus it is that the Self fails to be presented to our consciousness (agrahana) But what grounds have we for this statement ? Çruti and inference based thereon are the grounds Here are Çruti passages —"They are driven away (from Brahman) by what is false"—and "He grieves bewildered by his own impotence" And here too is the inference —Knowledge of Brahman is taught throughout the Veda with a view to final release, hence we infer that the natural bondage of man must consist in his failure to perceive the essential identity of his Jīva or personal consciousness with the absolute Brahman, that is to say, it must be due to Nescience

ॐ तत्सत ।

श्रीगणेशाय नमः ॥

# ब्रह्मामृतवर्षिणी ।

## श्रीरामानन्दसरस्वतीकृता ॥

श्रीरामचरणद्वन्द्वमद्वन्द्वानन्दसाधनम् ।
नमामि यद्रजोयोगात् पाषाणोऽपि सुखं गतः ॥
सङ्गतिस्संशयः पूर्वपरपक्षौ तयोः फलम् ।
भाष्यस्थाः श्रुतयस्सर्वास्सूत्राण्यनवशेषतः ॥
व्याख्यायन्ते स्फुटन्यायैर्मतभेदोऽपि कुत्रचित् ।
उच्यते सुखबोधार्थं श्रीरामो वीक्षतामिदम् ॥

इह खलु नित्याध्ययनविधिनाऽधीतस्वाध्यायमापातज्ञानवन्तं परमपुरुषार्थकाममैहिकामुष्मिकफलेषु विरक्तमुपलभमानः परमकारुणिको मुनिः सूत्रयामास ।

**अथातो ब्रह्मजिज्ञासा ॥ १ । १ । १ ॥**

इति । अत्राथशब्देन साधनचतुष्टयसम्पत्त्यानन्तर्यमुच्यते । 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितोलोकः क्षीयते' इत्यादिना कर्मफलानामनित्यत्वम् । "परीक्ष्यलोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन"इति वैराग्यं कर्मफलेषु दर्शितम् । "शान्तो दान्त" इत्यादिना शान्त्यादिः । "न स पुनरावर्त्तते" इत्यादिश्रुत्या मोक्षस्य नित्यत्वेन तत्रेच्छा । एत-

दानन्तर्यमेव साधनचतुष्टयसंपत्त्यानन्तर्यम् । अर्थान्मोक्षकामोऽधिकारी सूच्यते । अतःशब्देन साधनचतुष्टयस्य संभावना । ब्रह्मजिज्ञासेत्यनेनाज्ञातत्वेन विषयत्वं ज्ञातत्वेन प्रयोजनत्वं च ब्रह्मण उक्तं भवति । एवं च प्रेक्षावत्प्रवृत्त्यङ्गभूताधिकार्यादिसमर्पकत्वेन समन्वयाद्यखिलविचारोपोद्धातत्वादाद्यावस्य सूत्रस्य सङ्गतिः । श्रवणविधिविषयवेदान्तवाक्यैः स्वार्थनिर्णयायास्यापेक्षणात् श्रुतिसङ्गतिः । एवं सर्वेषां सूत्राणां श्रुतिसङ्गतिः । विशेषतो ब्रह्मपरवाक्यतात्पर्यनिर्णायकन्यायसूचकत्वाद्ब्रह्मविचारात्मकशास्त्रसङ्गतिः । एवमग्रेऽपि शास्त्रसङ्गतिरूह्या । "अथातो ब्रह्मजिज्ञासे"त्यादिभिस्सूत्रैः सर्वे वेदान्ता ब्रह्मपरा इति समन्वयप्रतिपादनात्तेषामाऽध्यायं समन्वयाध्यायसङ्गतिः । प्रथमपादे स्पष्टब्रह्मलिङ्गानां वाक्यानां विचार्यत्वादापादं पादसङ्गतिः । प्राथम्यादस्य सूत्रस्याधिकरणसङ्गतिर्नापेक्षिता । एतदानन्तर्यं त्वितरेषामपेक्षितम् । तच्च तत्तदधिकरणप्रस्तावे वक्ष्यामः ॥

तत्र तावत् "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति वाक्यं "द्रष्टव्य" इत्यात्मसाक्षात्कारफलमनूद्य तत्साधनत्वेन श्रवणं विदधाति । श्रवणं नाम सर्वेषामुपनिषद्वाक्यानामद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूलन्यायविचारः । तादृशविचारात्मकं वेदान्तशास्त्रमारम्भणीयं न वेति सन्देहः । सर्वत्र पूर्वोत्तरपक्षयुक्तिद्वयं संशयबीजं द्रष्टव्यम् । तत्र पूर्वपक्षः । शास्त्रं नारम्भणीयं विषयप्रयोजनशून्यत्वात् । तथाहि संदिग्धं विषयः । ब्रह्म तु जीवात्मना ब्रह्मात्मना वा न संदिग्धम् अहंप्रत्ययेन "सत्यं ज्ञानमनन्तं ब्रह्मे"ति वाक्येन

च निश्चितत्वात् । न च तत्त्वमस्यादिवाक्यैरैक्यप्रतिभासनादहंप्रत्ययेन भेदावभासनात्संशयः । अबाधिताहंप्रत्ययविरोधेनैक्यश्रुतेरुपचरितार्थत्वात् । न चाध्यस्तात्मविषयत्वमहंप्रत्ययस्य, स्वयंप्रकाश आत्मन्यध्यासायोगात् । नापि प्रयोजनं, उक्तरूपब्रह्मज्ञानेऽपि मुक्तेरदर्शनात् । तस्माच्छास्त्रं नारम्भणीयमिति प्राप्ते राद्धान्तः । शास्त्रमारम्भणीयं विषयप्रयोजनयोस्सम्भवात् । श्रुत्यहंप्रत्ययविरोधेन जीवाभिन्नब्रह्मणस्संदिग्धत्वेन विषयत्वात् । न च श्रुतेरुपचरितार्थत्वमुपक्रमादितात्पर्यलिङ्गसहकृतानेकवाक्यानामुपचरितार्थत्वायोगात् । मनुष्योऽहमित्यादौ परैरपि भ्रमत्वेन स्वीकारात्कर्तृत्वाद्यंशेऽपि श्रुतिबलाद्भ्रमत्वमास्थेयमिति नाध्यासानुपपत्तिः । किञ्च । न केवलं संदिग्धत्वेन, अपितु विपर्यस्तत्वेनापि विषयत्वम् । ननु स्वयंप्रकाश आत्मनि कथं सन्देहादिरिति चेन्न । अनाद्यविद्यावशात्तादृशेऽप्यात्मन्यध्यासस्यानुभवसिद्धतया स्वरूपज्ञानस्य तदविरोधित्वात् । नापि फलाभावः, यथावत्स्वरूपसाक्षात्कारस्येदानींसम्भवेऽप्यसम्भावनादिशङ्काकलङ्कितत्वेनाविद्यानिवर्तकत्वाभावेऽपि श्रवणमनननिदिध्यासनैश्शङ्कायां निरस्तायां ब्रह्मसाक्षात्कारेणाविद्यानिवृत्तौ प्रतिबन्धकाभावात् । तथा च श्रुतिः "तरति शोकमात्मवित्" "एतद्योवेदनिहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य" इति । तस्माद्विषयफलसम्भवाच्छास्त्रमारम्भणीयम् । अत्र कृत्स्नशास्त्रप्रतिपाद्यं ब्रह्म, अध्यायैस्तु प्रतिपाद्यानि समन्वयाविरोधसाधनफलानि । तदुक्तम् ।

"शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः ।

समन्वयाविरोधौ द्वौ साधनं च फलं तथा ॥" इति ।
तत्र विवरणमतानुसारिणस्सूत्रे "कर्तव्ये" ति पदमध्याहर्तव्यमिति वदन्ति । तथाहि "द्रष्टव्य" इति परमपुरुषार्थसाधनज्ञानमनूद्य तत्र "द्वासुपर्णे" त्यादिना "ब्रह्म वेद ब्रह्मैव भवती" त्यादिना च भिन्नाभिन्नात्मविचारयोः साधनत्वेन पक्षप्राप्तौ "श्रोतव्य" इत्यनेन प्रकृतिलक्षणया भिन्नात्मविचार एव साक्षात्कारसाधनमिति नियम्यते "व्रीहीनवहन्ती" तिवत् । एवं च "नावेदविन्मनुते तं बृहन्तं तं त्वौपनिषदं पुरुषं पृच्छामी" त्यादिना ब्रह्मणि प्रमाणान्तराभावान्मनननिदिध्यासनसहकृतविचारितवेदान्तवाक्यमेव साक्षात्कारहेतुरिति सम्पद्यते । तथा च विचारविध्यपेक्षिताधिकार्यादीनामागमिकत्वेऽपि न्यायेन निर्णयार्थमिदं सूत्रम् । तस्यानुवादकत्व आनर्थक्यं स्यादिति कर्तव्यपदाध्याहारः शास्त्रे पुरुषप्रवृत्तिसिद्धये श्रुतिसारूप्याय च । एवं सति जिज्ञासेत्यत्र प्रकृत्या ज्ञानमात्रपरया साध्यज्ञानमजहल्लक्षणया बोध्यते, प्रत्ययेनेच्छासाध्यविचारो जहल्लक्षणया बोध्यत इति नवीनमतम् । विवरणटिप्पण्यां तु प्रकृतेस्सिद्धज्ञानमात्रवाचकत्वमङ्गीकृत्य साध्यज्ञानेऽपि जहल्लक्षणैवेत्युक्तम् । तथाचायं सूत्रस्य श्रौतोऽर्थः साधनचतुष्टयसम्पन्नस्य ब्रह्मज्ञानाय विचारः कर्तव्य इति । ज्ञानस्य मोक्षहेतुत्वं वेदान्तानां विचार्यत्वं चार्थाल्लभ्यते । तथाचोक्ताधिकारिणो मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इत्यार्थिकार्थ इति । मिश्रमतानुसारिणस्तु श्रुतिसूत्रयोरैकरूप्यनियमाभावं विषयप्रयोजनज्ञानादेव पुरुषप्रवृत्तिसिद्धिं श्रवणविध्यसम्भवं च मन्वानाः "कर्तव्ये"

तिपदं नाध्याहर्तव्यमिति वदन्ति । तेषां मते साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मज्ञानेच्छा भवति, कर्मफलस्यानित्यत्वाद्ब्रह्मज्ञानात्परमपुरुषार्थश्रवणाच्चेति श्रौतोऽर्थः । ज्ञानस्य विचारसाध्यत्वाद्विचारकर्तव्यताऽऽक्षिप्यत इति । विचारकर्तव्यताऽऽर्थिक्येचेत्यत्र विचारानारम्भवादिन उपायान्तरसाध्या मुक्तिरिति फलम्, सिद्धान्तिनस्तु विचारसम्भवा ब्रह्मज्ञानसाध्यैवमुक्तिरिति फलफलिभावो द्रष्टव्यः ॥

एवं प्रथमसूत्रे ब्रह्ममीमांसायाः प्रतिपादितत्वात्तस्याश्च लक्षणप्रमाणसमन्वयाविरोधसाधनफलविषयतया ऽनेकविधित्वेऽपि प्रथमं ब्रह्मणः प्राधान्यात्तल्लक्षणार्थमिदं सूत्रम् ।

**जन्माद्यस्य यतः ॥ १ । १ । २ ॥**

अस्य पूर्वाधिकरणेन सन्दिग्धत्वाद्ब्रह्म विचार्यमित्युक्तमयुक्तम् जन्मादेरन्यनिष्ठत्वेन ब्रह्मणो लक्षणाभावेन स्वरूपस्यैवाभावादित्येवंरूपाऽऽक्षेपसङ्गतिः । एवं पूर्वाधिकरणसिद्धान्तयुक्तिमुत्तराधिकरणपूर्वपक्षयुक्तिं चावेक्ष्य यथासम्भवमाक्षेपसङ्गतिस्तत्रतत्रोह्या । दृष्टान्तप्रत्युदाहरणसङ्गती च सर्वत्र सम्भवतः । प्रकृते तु यथा सन्दिग्धत्वेन हेतुना ब्रह्मविचार्यमेवं जन्माद्यन्यनिष्ठत्वेन हेतुना ब्रह्मणो लक्षणं नास्तीति दृष्टान्तसङ्गतिः । यथा विचार्यत्वे हेतुर्न तथा लक्षणसद्भावे हेतुरस्तीति प्रत्युदाहरणसङ्गतिः । पूर्वसूत्रस्थब्रह्मलक्षणपरीक्षणात्तदेवात्र फलम् । अस्येदं विषयवाक्यम् "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति" । "प्रयन्ति" म्रियमाणानीत्यर्थः । तथा च

म्रियमाणानि सन्त्यभिसंविशन्तीति वाक्यार्थः । अत्र श्रूयमाणं जन्मादिकं ब्रह्मलक्षणं न वेति सन्देहः । जन्मादेः प्रपञ्चनिष्ठत्वेन ब्रह्मसम्बन्धाभावान्न तल्लक्षणत्वमिति प्राप्तम् । न च "सत्यं ज्ञान" मित्यादिवाक्यस्थं सत्यादिक लक्षणं भवत्विति वाच्यम् लोकसिद्धभिन्नार्थानामेकब्रह्मलक्षणत्वेनाप्रसिद्धत्वादिति प्राप्ते ऽभिधीयते । जगज्जन्मादिकारणत्वं ब्रह्मणो लक्षणं तटस्थम् । सत्यादिकं स्वरूपलक्षणम् । न च लोकसिद्धभिन्नार्थत्वात्सत्यादीनामेकब्रह्मलक्षणत्वमप्रसिद्धमितिवाच्यम्, सत्यादिपदानामखण्डार्थत्वेनैकब्रह्मपर्यवसायित्वेन सत्यादीनां लक्षणत्वसम्भवादिति । सूत्रार्थस्तु । जन्मादिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । जन्मस्थितिभङ्गं समासार्थः । पूर्वसूत्रस्थब्रह्मपदानुषङ्गस्तच्छब्दाध्याहारः । तेनास्य प्रत्यक्षाद्युपस्थितस्य प्रपञ्चस्य जन्मस्थितिभङ्गं यतो भवति तद्ब्रह्मेत्यर्थः । यद्यप्यभिचाराज्जन्मादिकारणत्वं प्रत्येकं लक्षणं सम्भवति तथाप्युत्पादकत्वमात्रं निमित्तेऽपीत्युपादानसिद्ध्यर्थं त्रितयग्रहणम् । न च लयग्रहणेनैव तत्सिद्धौ शेषं वैयर्थ्यमिति वाच्यम् । न ह्युपादानत्वं कुलधर्मतयोच्यते, किन्तु प्रकृतिविकारन्यायेनाद्वितीयब्रह्मसिद्ध्यर्थम् । एवं च भवतु ब्रह्मोपादानं, कुलालवदधिष्ठाता ऽन्य एवास्तु, राज्यस्थितौ राजवच्चान्यएव स्थितौ कर्ता ऽस्त्वित्याशङ्का मा भूदिति त्रितयग्रहणं कृतमिति ॥

एवं जगत्कारणत्वेन ब्रह्मणः सर्वज्ञत्वमर्थादुक्तम् । तथाऽऽर्थिकं सर्वज्ञत्वं हेत्वन्तरेण समर्थयितुमाह ॥

## शास्त्रयोनित्वात् ॥ १ । १ । ३ ॥

शास्त्रं वेदः, तद्योनित्वं तत्कर्तृत्वम् । सर्वज्ञकल्पवेदकर्तृत्वादपि ब्रह्म सर्वज्ञमित्यर्थः । अत्र सर्वज्ञत्वानिर्धारणं पूर्वपक्षफलं, तन्निर्धारणं सिद्धान्तफलम् । अथवा वेदस्य नित्यत्वाद्ब्रह्मणो विश्वयोनिता नेति शङ्कामपाकर्तुं शास्त्रयोनित्वमुच्यते । अस्मिन्पक्षे श्रौतप्रतिज्ञयैव सङ्गतिः, पूर्वसूत्रोक्तजगत्कारणत्वस्यैव समर्थनात् । "अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदस्सामवेद" इत्यादिवाक्यमस्य सूत्रस्य विषयः । अस्य नित्यसिद्धस्य ब्रह्मणो निश्वास इवानायासेनैव वेदस्सिद्ध इत्यर्थः । अत्र ब्रह्म वेदं करोति न करोति वेति सन्देहे, न करोति "वाचा विरूप नित्यये" ति नित्यत्वश्रवणात् । अस्मिन्मन्त्रे "विरूपे" ति देवतां सम्बोध्य नित्यया वाचा स्तुतिं प्रेरयेति प्रार्थ्यते ।

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।

आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥" इति स्मृतेः । अतो न वेदकर्तृत्वं ब्रह्मण इति न जगद्योनित्वमिति प्राप्ते ब्रूमः । निश्वसितन्यायेन वेदोत्पत्तिश्रवणात् । "तस्माद्यज्ञात्सर्वहुत ऋचस्सामानि जज्ञिरे" इति सर्वैर्यज्ञैर्हूयमानाद्यज्ञशब्दवाच्याद्ब्रह्मणो जज्ञिर इति वेदकर्तृत्वप्रतीतेर्विश्वयोनित्वम् । एतदनुरोधेन "वाचे" त्यादिश्रुतिस्मृत्योरर्थवादत्वम् । न च वेदस्य सकर्तृत्वे पौरुषेयत्वम्, उपलभ्यविरचितत्वानङ्गीकारादिति ।

अस्य सूत्रस्य द्वितीयं वर्णकं पूर्वसूत्रे जन्मादिकारणत्वकथनेन "अङ्कुरादिकं सकर्तृकं कार्यत्वाद्घटव" दित्यनुमानमपि ब्रह्मणि प्रमाणमित्याशङ्का स्यात्तन्माभूदितीदमुच्यते । ब्रह्म न मानान्तरवेद्यम् । कुतः । "शा-

स्त्रयोनित्वात्" । शास्त्रं वेदो योनिः प्रमाणं यस्य तत्त्वादित्यर्थः । "तं त्वौपनिषदं पुरुषं पृच्छामी" त्युपनिषद्वेद्यत्वप्रतीतेः "नावेदविन्मनुते तं बृहन्त" मिति श्रुत्या स्पष्टमानान्तरनिषेधाच्चानुमानं त्वनुकूलतर्कतयैवोपयुज्यते न स्वातन्त्र्येणेत्यभिप्रायः । ननु "यतो वाचो निवर्तन्त" इति श्रुतेर्वेदवेद्यत्वं कथमिति चेन्न । लक्षणया वृत्तिविषयत्वेन शास्त्रयोनित्वं चैतन्याविषयत्वेनाप्रमेयत्वमित्यविरोधात् ॥

पूर्वसूत्रे द्वितीयवर्णके ब्रह्मणः शास्त्रप्रमाणकत्वमुक्तं, तदाक्षिप्य समाधीयते । तथाचाक्षेपसङ्गतिः । फलं तु पूर्वपक्ष उपनिषत्सु मुमुक्षुप्रवृत्त्यनुपपत्तिः, सिद्धान्ते प्रवृत्तिसिद्धिरिति । वेदान्ताः कर्मशेषभूतकर्त्रादिपरा उत नित्यशुद्धबुद्धमुक्तब्रह्मपरा वेति संशये, न ब्रह्मपरा अहेयानुपादेयसिद्धब्रह्मपरत्वे निष्प्रयोजनत्वसापेक्षत्वयोः प्रसङ्गात्तदुभयनिवारणाय कर्तृदेवतादिप्रतिपादनद्वारा कर्मपरत्वमितिप्राप्ते सिद्धान्तः ।

## तत्तु समन्वयात् ॥ १ । १ । ४ ॥

"तु" शब्दः पूर्वपक्षव्यावृत्त्यर्थः । तद्ब्रह्म वेदान्तेषु तात्पर्येण प्रतिपाद्यते । कुतः । समन्वयात् । सम्यगन्वयः समन्वयस्तस्मात् । अन्वयस्य सम्यक्त्वं तात्पर्यत्वम् । वेदान्ता न कर्त्रादिप्रतिपादका भिन्नप्रकरणस्थत्वात् । न च प्रकरणाभेदादुपासनाविधिपरा इति वाच्यम्, "तत्त्वमस्या" दीनां विधिरहितानां बहुलमुपलब्धेः स्वरूपज्ञानादपि "नायं सर्व" इति वदनर्थनिवृत्तेः प्रयोजनस्य सद्भावादपि विधिशेषत्वकल्पनाऽयोगात् । न च सापेक्षित्वं, रूपादिविहीनस्य ब्रह्मणः प्रमाणान्तरागम्यत्वेन

तत्प्रतिपादकवेदान्तानां सापेक्षित्वाभावात् । तस्मादुपक्रमादिलिङ्गैर्वेदान्तानां ब्रह्मपरत्वमेवेति । उपक्रमादिकं च दृश्यते "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "आत्मावा इदमेक एवाग्र आसीत्" "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्मसर्वानुभूः" "ब्रह्मवेदममृतं पुरस्तात्" इत्यादिश्रुतीनामयमर्थः । "सदि" त्यस्तितामात्रं बोध्यते । "एवे" त्यवधारणे । किं तदवध्रियते तदाह "इद" मिति । यदिदं व्याकृतं जगत्त "दग्र" उत्पत्तेः प्राक् सदेवासीत् । अव्याकृतं सत्कारणात्मकं सदेवासीदित्यर्थः । हे "सोम्य" प्रियदर्शनेति पित्रा पुत्रः संबोध्यते । बुद्धिग्राह्यं स्थूलं पृथिव्यादि प्रागुत्पत्तेर्माभूदन्यत्वे महदादिसूक्ष्ममासीदेवेति नेत्याह "एक' मिति । सतोऽन्यत्कार्यं नासीदेवेत्यर्थः । तथा पि मृदो घटाकारपरिणामयितृकुलालवज्जगन्निमित्तं सतोऽन्यदासीदित्याशङ्क्याह "अद्वितीय" मिति । सतोऽपिचित्त्वं विना प्रधानवन्नहेतुतेत्याशङ्क्य श्रुत्यन्तरमुदाहृत "मात्मा वा ' इति । आप्नोती त्यात्मा मूलकारणम् । "वै" शब्देन प्रागवस्था स्मार्यते । अवशिष्टमुक्तार्थम् । तस्य निर्विशेषत्वार्थं श्रुत्यन्तरं "तदेत" दिति । ' तत्" शब्देन इन्द्रो मायाभि" रिति प्रकृतात्मोक्तः । विधेयं ब्रह्मापेक्ष्य नपुंसकम् । एतद्यत्तद्ब्रह्मेत्यर्थः । तत्किंलक्षणकं तत्राह ' अपूर्व" मिति । पूर्वं कारणं यस्य नास्ति तदपूर्वमकार्यमित्यर्थः । अपरं कार्यं वास्तवं यस्य नास्तीत्यनपरमकारणमित्यर्थः । अन्तरं जात्यन्तरमन्तराले यस्य नास्तीत्यनन्तरमेकरसमित्यर्थः । तथाविधमन्यदपि तटस्थमस्तीति किं नेत्याह "अबाह्य" मिति । बाह्यमनात्मभूतमेवंविधमस्य नास्तीत्यबाह्यमद्वितीयमित्यर्थः ।

तस्यापरोक्षतामाह 'अय" मिति । तत्सर्वसिद्ध्यर्थं चित्स्वरूपमाह 'सर्वे" ति । ब्रह्मात्मना सर्वमनुभवतीति सर्वानुभूः । अनुभाव्यस्य पृथक्त्वान्नाद्वैतमित्याशङ्क्य श्रुत्यन्तरं ब्रह्मे" ति । यत्पुरस्तात्पूर्वस्यां दिश्यब्रह्मेवाविदुषां भाति तत्सर्वमिदममृतं ब्रह्मैव वस्तुत इत्यर्थः ।

एवं लौकिकवाक्यानां सिद्धार्थे प्रामाण्यमभ्युपगच्छतां वेदान्तेषु विधिपरत्वं विनाऽनपेक्षत्वं फलवत्त्वं च न लभ्यत इति वदतां तेभ्यो ब्रह्मसिद्धिमनङ्गीकुर्वतां मतं ब्रह्मणो मानान्तरागम्यत्वात्सिद्धवस्तुज्ञानात्फललाभाच्च प्रत्युक्तम् । सम्प्रति सिद्धे व्युत्पत्तिमनिच्छतामुपास्तिविधिद्वारा वेदान्तेभ्यो ब्रह्मसिद्धिमिच्छतां मतनिरासाय वर्णकान्तरमारभ्यते । तत्र वेदान्ता विधेयोपासना विषयत्वेन ब्रह्म समर्पयन्त्युत साक्षादिति सिद्धे व्युत्पत्त्यभावभावाभ्यां संशये पूर्वपक्षः । प्रवृत्त्यादिलिङ्गाभावान्न सिद्धे व्युत्पत्तिः सम्भवति । न सिद्धब्रह्मपरा वेदान्ताः । किं च प्रवृत्तिनिवृत्तिपरस्यैव शास्त्रत्वेन सिद्धब्रह्मपरत्वे शास्त्रत्वं च न सम्भवति । नापि प्रयोजनवत्त्वं अहं ब्रह्मास्मी" ति ज्ञाने सत्यपि प्रयोजनस्यादर्शनात् । यद्येवंभूतज्ञानात्प्रयोजनसिद्धिस्तर्हि मननादिविधानं न स्यात् । तस्मात् 'आत्मेत्येवोपासीत" 'ब्रह्मवेद ब्रह्मैव भवति" ब्रह्मभवत्कामो ब्रह्मवेदनं कुर्यात्" इत्येवमादिषु विधिषु कोऽसावात्मेत्याकाङ्क्षायां, तत्समर्पकत्वेन सर्वे वेदान्ता उपयुज्यन्ते, उपासनासाध्यश्च मोक्ष इत्युच्यते । 'तत्तु समन्वयात्' । तद्ब्रह्म साक्षाद्वेदान्तप्रतिपाद्यं, कुतः समन्वयादित्यर्थः । न तावदुपासनासाध्यो मोक्षः । उपासनायास्तारतम्येन तत्साध्यमोक्षस्यापि तारतम्यमनित्यत्वं च

स्यात् । विधेयकर्मफलभोगदशायां शारीरस्यावश्यकत्वेन मोक्षेऽपि शारीरं स्यात्। किञ्च 'अशारीरं वावसन्तं न प्रियाप्रिये स्पृशत" इति मुक्तस्य प्रियाप्रियस्पर्शनिषेधो न स्यात् मोक्षस्य धर्मफलत्वेन तस्यैव प्रियस्य विद्यमानत्वात्। श्रुत्यर्थस्तु वस्तुतोऽशारीरं सन्तमात्मानं वैषयिके सुखदुःखे नैव स्पृशतः "वाव" त्यवधारणादिति । ननु धर्मजन्याशारीरत्वाख्यमोक्षातिरिक्तसुखादिनिषेधपरमिदं वाक्यमिति चेन्न, "अशरीरं शरीरेष्वनवस्थेष्ववस्थितं महान्तं विभुमात्मानं मत्वा धीरो न शोचति" "अप्राणोह्यमनाः शुभ्रः" "असङ्गोह्ययं पुरुषः" इत्यादिश्रुतिभ्योऽशारीरत्वस्य स्वाभाविकत्वावगमात्। श्रुतीनामयमर्थः । वस्तुतो नास्ति स्थूलशरीरं तत्र हेतु 'रशरीरं शरीरेष्वि" ति। अनवस्थेष्वनित्येष्ववस्थितं नित्यम् । तत्रैव हेत्वन्तरं महान्त" मिति । आपेक्षिकं महत्त्वं वारयति ' विभु" मिति । मन्तृमन्तव्यभेदं प्रत्याह "आत्मान' मिति। ईदृशमात्मानं मत्वा धीरो भवति। नहि तन्मतिं विना धीरत्वम्। स च शोकोपलक्षितं संसारं नानुभवतीत्यर्थः । सूक्ष्मशरीराभावे श्रुत्यन्तरं प्रमाणयति "अप्राण" इति । क्रियाशक्तिमान्प्राणोऽस्य वस्तुनो नास्तीति तन्निषेधात्तत्प्रधानानि सार्थानि कर्मेन्द्रियाणि निषिद्धानि तदभिप्रायेण हि' शब्दः। ज्ञातशक्तिमन्मनोऽस्य वस्तुनो नास्तीति तन्निषेधात्तत्प्रधानानि ज्ञानेन्द्रियाणि सार्थानि निषिद्धानि। अत एव शुभ्रः शुद्ध इत्यर्थः। ' सयत्तत्रकिञ्चित्पश्यत्यनन्वागतस्तेन भवती" ति स्वप्नादिकृतकर्मस्वकर्ताऽऽत्मेन्युक्तेऽर्थे हेतुरुच्यते "असङ्ग" इति। श्रुत्या मूर्त मूर्तान्तरेण युज्य-

मानं स्पन्दते आत्मा तु पूर्णत्वान्न मूर्तेन स्थूलसूक्ष्मशरीरादिना केनचिद्युज्यते, तेनाकर्तेत्यर्थः । एवं स्वाभाविकाशरीरत्वापरपर्यायमोक्षाख्यब्रह्मणि सुखादिसंस्पर्शाभावे श्रुत्यन्तरमपि "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे ति। 'धर्मा 'त्तत्फलाच्च सुखा "दधर्मा' त्तत्फलाद्दुःखा 'त्कृता" त्कार्या 'दकृता ' त्कारणा ' द्भूता "द्तीता द्भव्या' द्भाविनः 'च" शब्देन वर्तमाना 'दन्यत्रा 'न्यदित्यर्थः । एतत्सर्वा संस्पर्शीतियावत् । एवं भूतं यत्पश्यसि तद्वदेति मृत्युं प्रति नचिकेतसो वचनम् । अपि च मोक्षस्य कर्मफलत्वे स्वर्गादिवन्मुमुक्षूपादेयत्वं न स्यात् । "ब्रह्मवेद ब्रह्मैव भवति" "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति" "अभयं वै जनक प्राप्तोऽसि" ' तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् " "तत्र को मोहः कःशोक एकत्वमनुपश्यतः ' 'तद्वैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चे' त्येवमादीनां ब्रह्मविद्याकालएव मोक्षं दर्शयन्तीनां बाधश्च स्यात्कर्मफलानां कालान्तरभावित्वनियमात् । श्रुतीनामर्थस्तु । यो ब्रह्म प्रत्यक्त्वेन वेद साक्षात्करोति स तदेव वेद्यं ब्रह्म भवति । तस्मिन्परमात्मनि परं कारणमवरं कार्यं तद्रूपे तदधिष्ठाने प्रत्यक्त्वेन साक्षात्कृते सत्यस्य विदुषोऽभुक्तफलानि कर्माणि क्षीणानि भवन्ति । ब्रह्मणो रूपमानन्दं विद्वान्भयहेत्वभावान्निर्भयोभवति । "इति" शब्दः श्लोकपूरणार्थः । हेजनक त्वमभयं प्राप्तोऽसि तत्त्वसाक्षात्कारबलाद्यदस्मिन्देहे जले सूर्यवत्प्रविष्टं ब्रह्म जीवाख्यं तदाचार्येण बोधितमात्मानमेव सर्वकल्पनाती-

तमवेद्विदितवान् । कथम् । अहं ब्रह्माद्वितीयमस्मीति । तस्माज्ज्ञानादज्ञानकृतासर्वज्ञत्वादिनिवृत्त्या तद्ब्रह्मपूर्णात्मना स्थितमासीत् । "अस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानत' इति यः सर्वात्मभावो विद्याव्यङ्ग्यत्वेनोक्तस्तत्रात्मनि तत्कालेवा तदात्मैक्यमुपदेशेनाऽनुपश्यतः शोकाद्युपलक्षितः संसारो नेति । तत्तत्पदलक्ष्यं ब्रह्म तदात्मत्वेनावस्थितमहमस्मीतिपश्यन । अस्मि देवदर्शनादृषिर्वामदेवाख्यः परंब्रह्मविद्याध्वसद्वारा प्रतिपेदे प्रतिपन्नवान्किलेति । "ह" शब्दोऽव्यवधानेन सम्बध्यते । स चास्मिन्दर्शने स्थितः सर्वात्मभावप्रकाशकान् "अहं मनुरभव" मित्यादीन्मन्त्रांश्च ददर्श । इतश्च ब्रह्मधीर्न विधेया, तत्फलं च नवैधमिति गम्यते । तथाहि । "त्वं हि नः पिता योऽस्माकमविद्यायाः परंपारं तारयसि' 'श्रुतंह्येवमेव भगवद्दृशोभ्यस्तरति शोकमात्मविदिति' सोऽहंभगवः शोचामि तं मां भगवान् शोकस्य पारं तारयतु' "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः इत्याद्याः श्रुनयोब्रह्मविद्याया अविद्यानिवृत्तिद्वारा मोक्षहेतुत्वं दर्शयन्ति । अविद्यानिवर्तकत्वं च प्रमाणवस्तुपरतन्त्रज्ञानस्यैवेति न विधेया ब्रह्मविद्या तत्फलं च न विधेयसाध्यमिति । श्रुतीनामेषोऽर्थः । भरद्वाजादयः षडृषयः परविद्याप्रदं पिप्पलादाख्यं गुरुं विद्यानिष्क्रयार्थमन्यदननुरूपं पश्यन्तः पादयोः प्रणम्योचिरे "त्वं हि नः पिते" ति । त्वं खल्वस्माकं पिता ब्रह्मदेहस्याजरामरणस्य विद्यया जनयितृत्वात् । पितरौ तु हेयदेहमात्रमेव जनयतः । जनयितृत्वमपि सिद्धस्यैवाविद्यानिरासादित्वात् यस्त्व-

मस्मानविद्यामहोदधेः परं पारमपुनरावृत्तिरूपं पारं तारयसि विद्याप्लवेनेति । "श्रुतंह्ये" त्यादि "तारयत्वि" त्यन्तमुपक्रमस्थं शेषमुपसंहारस्थमिति भेदः । मे मया भगवद्दृशेभ्यो भगवत्तुल्येभ्यः श्रुतमेव यदात्मविच्छोकं मनस्तापमकृतार्थबुद्धिं तरतीति । सोऽहमनात्मविच्छोचामि । अतस्तं मां शोचन्तं शोकसागरस्य पारमन्तं तारयतु प्रापयतु भगवानात्मज्ञानोडुपेनेति नारदेन प्रेरितः सनत्कुमारस्तस्मै नारदाय मृदितकषायाय वैराग्यादिना क्षालितरागादिसमस्तदोषाय योग्याय तमसोऽविद्यायाः पारं परमात्मतत्त्वं दर्शितवानिति । ननुब्रह्मैवविधेयमस्तु मुक्तेः फलस्य सत्त्वात् । नच ब्रह्मणोऽकारकत्वादविधेयता "ब्रह्मवेदे' त्यादिना कर्मत्वप्रतीतेरिति चेन्न । फलासम्भवस्योक्तत्वाद्ब्रह्मणः कृतिसाध्यत्वाभावेन विधेयत्वानुपपत्तेश्च । नापि कर्मत्वम् । किं क्रियाकर्मत्वमुतोपासनाकर्मत्वम् । नाद्यः "अन्यदेव तद्विदितादथो अविदितादधि" 'येनेदं सर्वं विजानाति तं केनविजानीया" दित्यादिना विधिक्रियाकर्मत्वनिषेधात् । न द्वितीयः 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इत्युपासनाकर्मत्वप्रतिषेधात् । श्रुत्यर्थस्तु । तद्ब्रह्म विदितात्कार्यादन्यदेव । अथोऽप्यविदितात्कारणादप्यन्यदेव । अधि "उपरिष्टादेवान्यदिति येन प्रमात्रेदं सर्वं वस्तु लोको जानाति तं केन करणेन जानीयात्करणस्य ज्ञेयविषयत्वाज्ज्ञातर्यप्रवृत्तेः । तस्मान्न ज्ञाता ज्ञेयः किन्तु साक्षीति । "यद्वाचानभ्युदितं येन वागभ्युद्यत" इत्यविषयत्वमुक्त्वा "तदेवे"ति प्रमात्रादेः कल्पनामपोह्यात्मभूतं ब्रह्ममहत्तममितित्वं विद्धि यदुपाधिविशिष्ट देवतादिकमिदमित्युपासते जना नेदं

ब्रह्म त्वं विद्धीत्यर्थः । इतश्च ब्रह्मणोऽकर्मत्वं गम्यते । 'यस्यामतं तस्यमतं मतं यस्य न वेद सः अविज्ञातं विजानतां विज्ञातमविजानताम्" "नदृष्टेर्द्रष्टारं पश्येर्नविज्ञातेर्विज्ञातारं विजानीया' इत्यादिश्रुतयोऽविषयत्वं बोधयन्ति । यस्य ब्रह्मामतमविषय इति निश्चयस्तस्य तन्मतं सम्यग्ज्ञातम् । यस्यतु मतं विषयतया ज्ञातुं शक्यं ब्रह्मेतिधीर्नासौ तद्वेद भेदधीमत्त्वात् । एवमेवेतिनियमार्थमुक्तार्थमनुवदति 'अविज्ञात'मिति श्रुतिः । विषयतयाऽज्ञातमेव ब्रह्मसम्यग्ज्ञातं विशेषज्ञानवताम् । ज्ञानमेव विषयतया यथावदविजानतामिति । बुद्धिमान्विषयतया न विजानाति मूर्खस्तु विषयतया जानातीति तात्पर्यार्थः । दृष्टेश्चक्षुर्जन्यायाः कर्मभूताया द्रष्टारं स्वभावभूतनित्यदृष्ट्या व्याप्तारं दृश्यमानया दृष्ट्या न पश्येः । विज्ञातेर्बुद्धिधर्मस्य निश्चयस्य विज्ञातारं साक्षिणं तथैव वेद्यया विज्ञात्या विज्ञातारं न विजानीया इति मैत्रेयीं प्रति याज्ञवल्क्यवचनम् । नन्वविषयत्वे कथं शास्त्रप्रमाणकत्वमितिचेन्न । तज्जन्याविद्याभ्रान्तिध्वंसरूपातिशयत्वेन तद्विषयत्वसम्भवादिति । किञ्च न तावद्विधेयक्रियगोत्पाद्यत्वं मोक्षस्य स्वरूपत्वेनानादित्वात् । नविकार्यः "अविकार्योऽयमुच्यत" इति स्मृतेः । नाप्याप्यो नित्याप्तत्वात् । नाऽऽपि संस्कार्यो निर्गुणत्वेन गुणाधानलक्षणसंस्काराभावात् । नापि दोषापनयः संस्कारः सम्भवति ब्रह्मणि क्रियाया अभावेन स्वनिष्ठक्रियया दोषापगमायोगादन्यनिष्ठक्रिययाऽन्यत्र संस्कारायोगात् । न च देहनिष्ठक्रिययाऽऽत्मनि संस्कारो दृष्ट इति वाच्यं देहादिसंहतनिष्ठक्रियया तस्यैव संस्कार्यत्वं तत्फलभोक्तृत्वं वेत्य-

वगमात् । तथा च श्रुतिः ' आत्मेन्द्रियमनोयुक्तं भोक्ते-त्याहुर्मनीषिणः ' इति । आत्मीयं शरीरमात्मेत्युच्यते । तथा च शरीरादिसंयुक्तमात्मानं भोक्तेति मनीषिण आहुरित्यर्थः । यद्वा ऽऽत्मेति भोक्तेत्याहुरितिसम्बन्धः । इन्द्रिये "त्यादि क्रियाविशेषणम् । आत्मनि दोषाभावाच्च न दोषनिवृत्तिः सस्कारः सम्भवति । निर्गुणत्वे निर्दोषत्वे श्रुतिरेवमानम् । तथाहि "एकोदेवस्सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्च" "सपर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्ध' मिति । अनयोर्मन्त्रयोरयमर्थः । मूर्तित्रयस्य ब्रह्मरुद्राद्या मनो भेदं प्रत्याह "एक" इति । जाड्यं प्रत्याह "देव" इति । ज्ञानघन इत्यर्थः । आदित्यादिवैषम्यमाशङ्क्याह "सर्वे"ति । तर्हि किमिति न प्रतीयते तत्राह "गूढ"इति । अनादिमाययाच्छन्न इत्यर्थः । तत्तद्भ्रमतावच्छिन्नत्वेन परिच्छिन्नत्वं नेत्याह "सर्वव्यापी"ति । नभोवत्ताटस्थ्यं वारयति "सर्वभूते"ति । सर्वेषु भूतेष्वन्तस्स्थितस्य तत्तत्क्रियाकर्तृत्वं नास्तीत्याह "कर्म 'ति । सर्वकर्मसाक्षीत्यर्थः । सर्वभूतेष्वित्यादिना भूतानां पृथगुक्तेस्सद्वितीयत्वमाशङ्क्याह "सर्वे' ति । सर्वेषां भूतानामधिवासोऽधिष्ठानम् । न च कल्पितमधिष्ठानादर्थान्तरमित्यर्थः । न केवलं कर्मणामेवाध्यक्षः, अपि तु तत्कर्तृणामपीत्याह "साक्षी" ति । साक्षित्वे हेतुमाह "चेता" इति । चित्स्वभावइत्यर्थः । "केवलो" दृश्यवर्जितोऽद्वितीयः । "निर्गुणो" ज्ञानादिगुणरहितः । चकारोदोषाभावसमुच्चयार्थः । गुणदोषाभावे मन्त्रान्तरं "सपर्यगा" दिति । स "यस्मिन्त्सर्वाणिभूतानी'

योजकत्वात्। अन्यथा परमाणोरपि चाक्षुषद्रव्यसमवायिसमवायित्वेनानित्यत्वसाधनापत्तिरिति नेश्वरापेक्षाबुद्धेर्द्वित्वादिजनकत्वे मानमित्याहुः।

ननु जन्यापेक्षाबुद्धेरपि द्वित्वादिजनकत्वे किं मानम्। न चापेक्षाबुद्धिशून्यस्यापि द्वित्वादिप्रत्यक्षापत्तिरिति वाच्यम्। तस्या द्वित्वादिसाक्षात्कार एव कारणत्वात्। न च द्वित्वादिसाक्षात्कारत्वापेक्षया द्वित्वत्वादिकमेवापेक्षाबुद्धिकार्यतावच्छेदकं लाघवादिति वाच्यम्। अनन्तद्वित्वादिकल्पनापेक्षया द्वित्वादिसाक्षात्कारत्वस्यैव कार्यतावच्छेदकत्वादिति। नित्यमेव द्वित्वादिकमस्त्विति चेत्[1]। न कार्यतावच्छेदकलाघवेन व्यक्तिकल्पनायाः स्वीकारात्। द्वित्वत्वादेरेवापेक्षाबुद्धिकार्यतावच्छेदकत्वात्। अन्यथा स्वर्गाद्यन्यसुखत्वादिकमेव शरीरजन्यतावच्छेदकमस्तु। तथा च शरीरत्वेन सुखत्वेन च कार्यकारणभावात्तत्र शरीरकल्पनापि न स्यात्। न च स्वर्गेऽपि तत्तल्लौकिककारणजन्यं सुखं तच्च शरीरसाध्यमेवेति वाच्यम्। वनितासम्भोगजन्यसुखसजातीयसुखस्यैवादृष्टविशेषजन्यत्वात्। न च स्रक्चन्दनवनितादिजन्यसुखे तत्तज्जन्यतावच्छेदिका जातयस्तज्जातीयसुखेष्वदृष्टजन्यतावच्छेदिकास्त्वपरा जातयः कल्प्यास्तदपेक्षया शरीरकल्पनैव लघीयसीति वाच्यम्। शरीरतदवयवावयवतत्तत्कारणतत्तद्ध्वंसादिकल्पने च गौरवप्रसङ्गादित्याहुः।

१ यदि च त्र्यणुकमनित्यं चाक्षुषद्रव्यत्वात् घटवत्। चाक्षुषद्रव्यसमवायित्वात् द्व्यणुकमनित्यं कपालवदित्यनुमानेन त्र्यणुकद्व्यणुकयोरनित्यत्वं साध्यते तदा परमाणुरनित्यश्चाक्षुषद्रव्यसमवायिसमवायित्वादित्यनुमानेन परमाणोरपि अनित्यत्वसिद्धेरिति भावः।

अपरे तु अस्तु कार्यतावच्छेदकलाघवं प्रबलम् । न चैतावता द्वित्वादेरनित्यत्वम् । द्वित्वत्वादेर्लौकिकाविषयितया द्वित्वत्वादिप्रत्यक्षनिष्ठस्यैव कार्यतावच्छेदकत्वात् । न चैवमपेक्षाबुद्धिशून्यस्य द्वित्वप्रत्यक्षापत्तिरनिवारितैवेति वाच्यम् । द्वित्वत्वादिप्रत्यक्षातिरिक्तप्रत्यक्षस्याभावेन तदतिरिक्तस्यापादनासम्भवाद् द्वित्वत्वादिविषयकस्य च तत्सामग्र्यभावादेवासम्भवात् । अन्यथा घटसामग्रीविरहकाले कम्बुग्रीवादिमतोऽप्यापादनस्य महत्त्ववत्तयाकाशादौ केवलप्रत्यक्षापादनस्य च दुर्वारतापत्तेः । न च घटयोर्द्वित्वप्रत्यक्षकाले पटादिविषयकापेक्षाबुद्धिशून्यस्य सन्निकृष्टपटयोर्द्वित्वप्रत्यक्षापत्तिः । कारणवशात् कार्यतावच्छेदकावच्छिन्नमेवापादनीयं तस्य विद्यमानत्वात् । अन्यथा तवापि घटयोरिदानीं द्वित्वोत्पत्तिकाले भाविद्वित्वोत्पादप्रसङ्गः । यद्वा द्वित्वादिकं सर्वत्रैकमेव, नित्यं च । न चैवं द्वित्वादेर्जातित्वापत्तिः । समवेतशून्यत्वे सति अनेकसमवेतत्वस्यैव जातित्वात् । यत्र विशेष्यतयापेक्षाबुद्धिस्तत्र तत्प्रत्यक्षम् । अत एवापेक्षाबुद्धिशून्यस्य सन्निकृष्टपटयोर्द्वित्वे चक्षुःसंयुक्तसमवायसत्त्वेन प्रत्यक्षापादनमपि निरस्तम् । अथवा तत्तदेकत्वविषयापेक्षाबुद्धेस्तत्तद्द्वित्वमेव विषयितया कार्यतावच्छेदकम् । तत्तद्द्वित्वाद्यविषयकद्वित्वत्वादिग्रहस्यालीकत्वादेव नापेक्षाबुद्धिशून्यस्य द्वित्वत्वप्रत्यक्षापादनं सम्भवतीति द्वित्वादिकं नित्यमेवेति वदन्ति ।

परे तु तत्तदेकत्वज्ञानस्य तत्तदेकत्वसमानाधिकरणद्वित्वादिप्रत्यक्षे हेतुत्वम् । न चैक इति ज्ञानात्तत्तदेकत्वसमानाधिकरणनिखिलद्वित्वादेः प्रत्यक्षतापत्तिरिति

वाच्यम्। द्वित्वादेरेकत्वान्तरसमानाधिकरणतया तत्प्रत्यक्षाभावादेव तत्प्रत्यक्षासम्भवात्। अत एव परकीयापेक्षाबुद्धिजन्यद्वित्वादेः पुरुषान्तरं प्रत्ययोग्यत्वकल्पनापि निरस्ता। अत एव द्वित्वत्रित्वयोरेकदोत्पादपक्षे त्रिषु द्वित्वोत्पादप्रसङ्गवारणार्थं प्रागभावस्यासमवायिकारणस्य समवायिकारणस्य वा विशिष्य हेतुत्वकल्पना गौरवग्रस्ता परास्ता। न च द्वौ त्रय इति प्रत्ययापत्तिः। त्वन्मतेऽपि समाधेस्तुल्यत्वात्। अत एव एकत्वस्य सर्वत्रैकत्वे द्वयोरेकत्वमिति प्रत्ययापादनं परास्तम्। द्वयोर्गुरुत्ववदिष्टत्वात्। यथासंख्यातातिरिक्तस्थले द्वित्वान्वयिनी यावती व्यक्तिस्तत्रापरपदार्थनावच्छेदकावच्छिन्नान्वयाद् द्वयोः शब्द इत्याद्यप्रयोगः। क्षितिपयसोर्गन्धस्नेहाविति प्रयोगश्चोपपन्न इति दिक्।

नन्वागमसिद्धपरार्धसंख्याया अतीन्द्रियत्वेन तत्र परार्धत्वजातौ मानाभावेन परार्धत्वजातिमत्त्वं न तल्लक्षणमिति चेत्।

अत्र केचित्। परार्धं परार्धमित्यनुगतव्यवहारस्यैव परार्धत्वजातिसाधकत्वं प्राहुः।

अन्ये तु एकत्वादिभिन्नसंख्यात्वं परार्धत्वमिति वदन्ति।

परे तु स्वोत्पत्तिकालोत्पत्तिकयावत्संख्यासमानाधिकरणसंख्यात्वं निखिलविद्यमानद्रव्यगतत्वात् परार्धसंख्यायाः। परार्धं प्रति परार्धस्य प्रतिबन्धकत्वात् पूर्वपरार्धनाशानन्तरमपरपरार्धोत्पत्तिः। तदुत्तरक्षणे तत्परार्धाश्रयद्रव्यनाशो द्रव्यान्तरोत्पादश्च तदुत्तरक्षणे पूर्वपरार्धनाशस्तदुत्तरक्षणे परार्धान्तरोत्पत्तिः। एवं च यदा परार्धान्त-

रोत्पत्तिस्तदुत्तरक्षणे तत्परार्धाश्रयद्रव्याणां नाशः। तदुत्तक्षणे महाप्रलयः। तत्परार्धोत्पत्त्युत्तरक्षणे क्षणिकत्वापत्तिभयेन जन्यभावोत्पत्त्यनङ्गीकारात् तत्परार्धस्य स्वकालोत्पत्तिकयावत्संख्यासमानधिकरणत्वेन लक्षणसत्त्वेऽपि अन्यपरार्धस्य स्वोत्पत्तिद्वितीयक्षणोत्पन्नसंख्यया ऽसमानाधिकरणत्वादव्याप्तेः प्रथममुत्पत्तिपदम्। परार्धमात्रस्य स्वोत्पत्तिक्षणे नष्टद्रव्यस्य संख्यया समानाधिकरणत्वादसम्भवपरिहारार्थं द्वितीयमुत्पत्तिपदम्। स्वव्यापकस्वेतरसंख्याकान्यसंख्यात्वं तु न युक्तम्। पूर्वपरार्धोत्पत्त्यनन्तरोत्पत्तिको यः पूर्वपरार्धाश्रयद्रव्यनाशः, तदुत्तरं विद्यमानद्रव्याण्यादाय परार्धान्तरोत्पत्तिः, तत्परार्धस्य पूर्वपरार्धव्याप्यत्वात्तत्परार्धेऽव्याप्तेः। न च प्रतिलक्षणं द्रव्यस्य नाशोत्पत्तिस्वीकारान्नाव्याप्तिरिति वाच्यम्। मानाभावात्। परार्धस्य द्विक्षणस्थायित्वापत्तेश्च। यदा यदा द्रव्यनाशस्तदा तदा द्रव्योत्पादस्वीकारेणापि अव्याप्तिवारणसम्भवे सति प्रतिक्षणं द्रव्यनाशद्रव्योत्पादस्वीकारो मृग्य इति दिक्।

यत्तु स्वव्यापकस्वविजातीयसंख्यान्यसंख्यात्वं तल्लक्षणम्। परार्धस्य परार्धव्यापकत्वेपि तस्य सजातीयत्वमित्याह। तन्न। परार्धत्वजात्यभावेन तस्यापि विजातीयत्वात्। न च स्ववृत्तियावज्जात्यभाववत्त्वं स्वविजातीयत्वम्। परार्धस्य परार्धवृत्तयो यावत्यो जातयो गुणत्वादयस्तद्वत्त्वात्तत्सजातीयत्वमेवेति वाच्यम्। महापद्मत्वादिजातेरप्यभावेन परार्धस्य महापद्मादिसजातीयत्वेन महापद्मादावतिव्याप्तेः। तत्सत्त्वे तु तदेव लक्षणमस्त्विति दिक्।

नव्यास्तु एककालानवस्थायिद्रव्येषु द्वित्वाद्यनुत्पत्तिस्तेषु द्वित्वादिव्यवहारस्तु तत्तत्स्वरूपमात्रविषयकबुद्धिविषयत्वेनैवोपपादनीयः । एवं सर्वत्रैव तत्तद्बुद्धिविशेषविषयत्वेनैव द्व्यादिव्यवहारोपपत्तेर्नातिरिक्तसंख्यायां प्रमाणमित्याहुः ।

परिमाणत्वजातिमत्परिमाणम् । तच्च नित्यगतं नित्यमनित्यगतमनित्यं संख्यापरिमाणप्रचयजन्यं च । परिमाणत्वजातिस्तु परिमाणं परिमाणमित्यनुभवसिद्धा । तच्चतुर्विधम् । अणुमहद्दीर्घं ह्रस्वं च । अणुपरिमाणं नित्यगतं नित्यमनित्यगतमनित्यं चेति द्विविधम् । अनित्यं च परमाणुद्वित्वसंख्याजन्यं तच्च द्व्यणुक एव । नित्यं परमाणौ ।

महत्त्वत्वजातिमन्महत्त्वम् । सा च प्रत्यक्षसिद्धा । तच्च नित्यमनित्यंचेति द्विविधम् । नित्यंत्वनणुद्रव्यत्वेनानुमानसिद्धं दिगादिगतम् । अनित्यं तु त्र्यणुकाद्यन्त्यावयविगतम् । केषु चित् प्रत्यक्षसिद्धं केषु चित्त्रायवादिषु स्पर्शप्रत्यक्षान्यथानुपपत्त्या सिद्धम् । कार्यमहत्त्वं तु त्रित्वसंख्यामात्रजन्यं परिमाणमात्रजन्यं संख्यापरिमाणोभयजन्यं संख्यापरिमाणप्रचयत्रितयजन्यं परिमाणप्रचयोभयजन्यं चेति पञ्चविधम् । केवलप्रचयजन्यं प्रचयसंख्योभयजन्यं च महत्त्वं नास्त्येव । तथाहि । त्र्यणुकमहत्त्वं द्व्यणुकत्रित्वमात्रजन्यं कपालादिद्वयारब्धं घटादिमहत्त्वं स्वाश्रयकारणपरिमाणमात्रजन्यम् ।

केचित्तु अप्रचितारब्धत्र्यणुकमहत्त्वात्प्रचयारब्धत्र्यणुकमहत्त्वस्योत्कर्षात्तत्प्रचयमात्रजन्यम् । द्व्यणुकत्रित्वसंख्याया अत्यन्तापकृष्टमहत्त्वे हेतुत्वात् । न च प्रचयजन्यत्र्यणुकेऽप्यत्यन्तापकृष्टमहत्त्वापत्तिर्द्व्यणुके त्रित्वस-

त्त्वादिति वाच्यम् । अत्यन्तापकृष्टमहत्त्वे प्रचयस्य विरोधित्वादिति वदन्ति । तन्न । संख्याप्रचयमहत्त्वैर्जन्यमहत्त्वाश्रये संख्यामात्रप्रचयमात्रजन्यमहत्त्वयोर्वारणायावयवमहत्त्वस्योभयत्र प्रतिबन्धकत्वम् । प्रचयस्य च संख्यामात्रजन्यमहत्त्वविरोधित्वमिति प्रतिबध्यप्रतिबन्धकभावत्रयं स्वीकार्यं तदपेक्षया त्रित्वसंख्याजन्यतावच्छेदकजातिविशेषस्य प्रचयमात्रजन्यत्र्यणुकपरिमाणमात्रवृत्तिजातिव्यापकत्वं स्वीकृत्य तस्याश्चावयवमहत्त्वप्रतिबध्यतावच्छेदकत्वमस्तु । तथा चैकएव प्रतिबध्यप्रतिबन्धकभावः।

वस्तुतस्तु त्र्यणुकमहत्त्वे उत्कर्षापकर्षयोरननुभवान्न प्रचयमात्रजन्यत्वम् । अत एव संख्याप्रचयोभयमात्रजन्यमपि निरस्तम् ।

परे तु त्र्यणुकमहत्त्वं प्रचयजन्यमेव । न च प्रचयो द्व्यणुके नास्त्येव भूयोऽवयवावच्छेदेनानेकावयवावच्छेदेन वाऽवयवान्तरासंयुक्तेऽवयवे द्रव्यजनकसंयोगस्यैव प्रचयत्वादिति वाच्यम् । विजातीयसंयोगस्यैव प्रचयत्वात् । न च द्व्यणुकसंयोगे वैजात्यकल्पने गौरवमिति वाच्यम् । द्व्यणुकेषु त्रित्वसंख्यायास्तत्रेश्वरापेक्षाबुद्धेः कारणस्यापेक्षाबुद्धिनाशस्य तन्त्रित्वादिनाशव्यावृत्तकार्यतावच्छेदकस्य तन्नाशे कारणान्तरस्य च कल्पनापेक्षया द्व्यणुकसंयोगे प्रचय एव कल्प्यते लाघवादित्याहुः ।

केचित्तु त्र्यणुकमहत्त्वं प्रति स्वाश्रयावयवबहुत्वाणुत्वं हेतुरतो न तादृशमहत्त्वेऽवयवमहत्वस्य विरोधित्वमिति । तन्न । द्व्यणुकेऽपि तादृशमहत्वापत्तेः । तदवयवाणुत्वेऽपि इतरदादाय बहुत्वसत्त्वात् । स्वाश्रयावयवाणुत्वमात्रवृत्तिबहुत्वेन न च हेतुत्वम् । लाघवात् स्वाश्रयावयवमात्रवृत्तिबहुत्वस्य हेतुत्वादिति दिक् ।

स्वतन्त्रास्तु त्रसरेणोरनित्यत्वपक्षे तन्महत्त्वं प्रति जन्याणुत्वेन समवेतीयाणुत्वेनासमवेतसमवेतसमवेतद्रव्यत्वेन वा हेतुत्वम्। न चैवं द्व्यणुकद्वयात् त्र्यणुकोत्पादः स्यात्। इष्टत्वाद् इत्याहुः।

प्रचयरहितैरवयवैरारब्धस्य महत्त्वं महत्त्वबहुत्वोभयमात्रजन्यम्। प्रचयसहितैस्तादृशैरारब्धस्य महत्त्वं संख्यापरिमाणप्रचयजन्यम्। संख्यारहितनादृशाभ्यामवयवाभ्यामारब्धस्य महत्वं प्रचयमहत्त्वजन्यम्। तेषु महत्त्वेषु वैलक्षण्यानुभवादिति दिक्।

दिगादिगतं नित्यमहत्त्वं तु परममहत्त्वत्वजातियोगात्परममहत्त्वमित्याहुः।

दीर्घत्वत्वजातिमद्दीर्घत्वम्। तच्च त्र्यणुकमारभ्यान्त्यावयविपर्यन्तेष्वेव। सर्वमनित्यम्। तन्महत्त्ववत्पञ्चविधम्। अत्र दीर्घत्वं कारणमिति विशेष इति कश्चित्।

परे तु दिगादावपि परमदीर्घत्वम्। तच्च नित्यम्। न च महत्त्वमेव दीर्घत्वमिति वाच्यम्। तदवधिकमहत्त्ववत्यपि तदवधिकदीर्घत्वाव्यवहारादित्याहुः।

ह्रस्वत्वत्वजातिमद्ध्रस्वत्वम्। तदणुपरिमाणवन्मात्रवृत्ति। नित्यमनित्यं चाणुपरिमाणवत्। द्व्यणुकमात्रवृत्ति इत्यन्ये।

तत्र प्रमाणं तु अणुद्रव्यम् अणुव्यवहाराविषयपरिमाणवत् द्रव्यत्वादित्यनुमानम्। त्र्यणुकमहत्त्वे त्र्यणुकदीर्घत्वे च द्व्यणुकाणुत्वे ह्रस्वत्वे च समवाय्यसमवायिनोः साम्येपि प्रागभावादिनिमित्तभेदाद्भेद इति प्राञ्चः।

अन्ये तु अणुत्वह्रस्वत्वयोरतीन्द्रियतयानुमानस्याप्रयोजकतया च तयोर्मानाभावः। अणुके ह्रस्वव्यवहार-

आणुद्रव्येषु महत्त्वाभाववद्द्रव्यत्वनिबन्धनः। महद्द्रव्येषु तत्तद्द्रव्येभ्योऽणुत्वह्रस्वत्वव्यवहारश्च तत्तत्प्रकृष्टमहत्त्वदीर्घत्वाभावनिबन्धनस्त्वयापि स्वीकृत एवेति दिक्।

परे तु दीर्घत्वप्रतीतेरवयवसंयोगविशेषेणैवोपपत्तेर्न तत्परिमाणम्। अन्यथा वर्त्तुलत्वचतुरस्रत्वादीनां परिमाणान्तरतापत्तेः। न चैते महत्त्वविशेषा एवेति वाच्यम्। दीर्घत्वेऽपि तुल्यत्वात्। तदवधिकमहत्त्वविरहिणि तत्रा दीर्घत्वप्रतीतेर्न महत्त्वविशेषस्तदिति चेन्। न। वर्त्तुलत्वादावपि तुल्यत्वात्। संयोगस्य निरवधित्वाद्वर्त्तुलत्वादौ सावधित्वप्रतीत्या न दीर्घत्वमात्रस्य परिमाणत्वसाधकः सावधित्वानुभवोऽपीति दिक्।

पृथक्त्वत्वजातिमत्पृथक्त्वम्। सा च प्रत्यक्षसिद्धा। तदाश्रयश्चास्मादयं पृथगिति व्यवहारेण क्वचित् प्रत्यक्षेण च सिद्धः। न चान्योन्याभावेनैव तयोरुपपत्तिः। घटात्पटो नेत्यप्रतीतेरन्योन्याभावस्य सावधित्वाभावात्।

अपरे तु अन्योन्याभावेन पृथक्त्वव्यवहारे घटात्पटो नेत्यत्र पञ्चम्याः साधुत्वापत्तिः। अन्यारादिति सूत्रेणतरपदसमभिव्याहारात्तथातात्पर्यकेणान्यार्थपदयोगे पञ्चमीविधानात्। यथाश्रुते तु पटात्पृथग्भिन्न इत्यत्रापि पञ्चमी न स्यात् सूत्रे तेषामनुपादानादिति वदन्ति। तन्न। सूत्रेण पदविशेषयोगे पञ्चमीविधानात्। कथमन्यथा साध्यवदन्येत्यत्रान्योन्याभाववद्वाचकान्यपदयोगे पञ्चमी न स्यात्।

वस्तुतो नञ्पदस्यान्योन्याभाववाचकत्वादन्यपदस्यान्योन्याभाववद्वाचकत्वान्न पर्यायत्वमिति नञ्पदयोगे पञ्चमी न स्यादिति दिक्।

तच्च द्विविधम् । एकाश्रितमनेकाश्रितं च । आद्यं नित्यगतं नित्यमनित्यगतमनित्यम् । द्वितीयमनित्यमेव । प्रथमेऽनित्ये स्वाश्रयावयवगतमेकपृथक्त्वमसमवायिकारणम् । द्वितीये समानाधिकरणैकपृथक्त्वानि असमवायिकारणानि । तद्बुद्धिर्निमित्तकारणम् । तन्नाशान्नश्यति । न च घटौ पटात्पृथगिति प्रतीतेः पटावधिकैकपृथक्त्वद्वयेन घटौ रूपवन्ताविितिवत्प्रत्ययोपपत्तेर्न द्व्याद्याश्रिते प्रमाणमिति वाच्यम् । पटावधिकेनैव व्यासज्ज्यवृत्तिना पृथक्त्वेन घटः पटात्पृथगिति व्यवहारोपपत्तेरेकाश्रितेऽपि प्रमाणाभावप्रसङ्गात् । तस्मादाश्रयभेदादवधिभेदाच्च पृथक्त्वभेदो विनिगमकाभावादिति प्राञ्चः ।

परे तु घटावधिकं पृथक्त्वं नैकं सर्वद्रव्ये सम्भवति । तेषामेकदाऽभावात् । अतस्तत्तद्द्रव्ये उत्पन्ने तत्तन्निष्ठैकपृथक्त्वे तदितरस्यावधित्वंकल्प्यत इति न व्यासज्ज्यवृत्तिपृथक्त्वे मानम् । न चैकदोत्पन्नानन्तद्रव्येष्वेकमेव पृथक्त्वं लाघवात्तेनैव प्रत्येकं तदितरावधिकपृथक्त्वव्यवहारोपपत्तिरिति व्यासज्ज्यवृत्त्यपि दुर्वारमिति वाच्यम् । तेषु परस्परावधिकपृथक्त्वप्रतीत्या प्रत्येकपृथक्त्वस्वीकारावश्यकत्वान्न व्यासज्ज्यवृत्तेः स्वीकारो गौरवादित्याहुः ।

नव्यास्तु घटात्पृथगिति प्रतीतौ प्रतियोगित्वस्यैव प्रतीतेस्तस्याश्चान्योन्याभावेनैवोपपत्तेर्नातिरिक्तं पृथक्त्वम् । यद्वा । अन्योन्याभावस्यैव सावधित्वं कल्प्यम् । धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वादित्याहुः ।

संयोगत्वजातिमान् संयोगः । स च घटादिषु प्रत्यक्षात्परमाण्वादिषु कार्येणानुमानात्सिद्धः । संयोगत्वजातिस्तु संयोग इत्यनुगतप्रत्यक्षसिद्धा । स चानित्य एव ।

सर्वद्रव्यवृत्तिः । स द्विधा । कर्मजः संयोगजश्च । कर्मजन्यतावच्छेदकजातिमान् कर्मजः, संयोगजन्यतावच्छेदकजातिमान् संयोगजः । न च संयोगकर्मजन्यतावच्छेदकतया संयोगजातिद्वयकल्पनापेक्षया संयोगजनकतावच्छेदकतया कर्मसंयोगसाधारणी जातिरेव कल्प्यतामिति वाच्यम् । गुणत्वेन संकरप्रसङ्गादिति प्राञ्चः ॥

अन्ये तु गुणत्वजातेरनभ्युपगमेऽपि तुल्यन्यायतया विभागजनकतावच्छेदकतया कर्मविभागसाधारणजातिसिद्धौ तया संयोगजनकतावच्छेदकजातेः कर्मणि सामानाधिकरण्येन संकरान्न संयोगस्य विभागस्य च जनकतावच्छेदकतया एकजातिसिद्धिः । न च संयोगस्यापि विभागजनकत्वाद्विभागजनकतावच्छेदकजातेः संयोगसाधारण्यान्न संकर इति वाच्यम् । विभागं प्रति संयोगस्य विशिष्य हेतुत्वस्यावश्यकत्वात् । अन्यथाऽसंयुक्तेऽपि कर्मणा विभागप्रसङ्गात् । एतत्परिहारार्थमेव संयोगस्य विभागकारणत्वाङ्गीकारात् । न चासंयुक्ते विभागवारणार्थमस्तु संयोगस्य विशिष्य विभागजनकता तथापि विभागजनकतावच्छेदकजातेः संकरवारणार्थमेव संयोगादित्रितयसाधारण्यं कल्प्यतामिति वाच्यम् । संयोगजनकतावच्छेदकजातेरपि विभागादित्रयसाधारण्येन तत्परिहारसंभवात् ।

वस्तुतः संयोगस्य स्वसमवायिनि स्वसमवायिसमवायिनि संयोगजनकत्वात्कर्मणः स्वसमवायिनि स्वासमवायिनि संयोगजनकत्वाद्विशिष्यैव तयोः संयोगजनकत्वमित्याहुः ।

तत्र कर्मजो द्विविधः अन्यतरकर्मजउभयकर्मजश्च । तत्राद्यो निष्क्रिये क्रियावता संयोगः । यथा आत्मादिषु

संयोगः द्वितीयस्तु यथा सक्रिययोर्मल्लयोः । अन्यतरकर्मोभयकर्मजन्यतावच्छेदकतया सिद्धौ जातिविशेषावेव तयोर्लक्षणमिति प्राञ्चः ।

अन्ये तु विजातीयसंयोगं प्रति कर्मत्वेनैव कारणत्वं लाघवात् न त्वन्यतरकर्मोभयकर्मजन्यतावछेदकजातिद्वयकल्पनं गौरवादित्याहुः ।

संयोगजस्तु अवयवानवयवसंयोगादवयव्यनवयविसंयोगः । यथा हस्ततरुसंयोगाच्छरीरतरुसंयोगः । न चैष हस्तक्रियाजन्यः संभवति । तस्याः समवायेनैव संयोगजनकत्वात् कारणैकार्थसमवायेन समवायेन च कर्मणः कारणत्वापेक्षया समवायेन संयोगस्यैव हेतुत्वौचित्यात् । किं च यत्र कपालक्रियया कपालान्तरेण भूतलेन च संयोगः द्वितीयक्षणे क्रियानाशघटोत्पादौ ततः कपालभूतलसंयोगादेव घटभूतलसंयोगः । तदानीं कपालक्रियानाशादिति दिक् ।

ननु यत्रावयवक्रियोत्तरक्षणे ऽवयविनि क्रिया तत्रावयवोत्तरसंयोगकाले एवावयविनि पूर्वदेशसंयोगनाशात्तदुत्तरकाले ऽवयविन्युत्तरदेशसंयोगस्तस्य संयोगक्रियान्यतरजन्यत्वे विनिगमनाविरहः । उभयजन्यत्वे च सङ्कर इति चेत् । अत्र प्राचीनाः । संयोगद्वयमेव तत्रोत्पद्यते विविच्याग्रहस्त्वत्यन्तसादृश्यादिति ।

अपरे तु विचित्र एव तत्र संयोग उत्पद्यते न कर्मजन्यः । तत्र संयोगस्य प्रतिबन्धकत्वात् । नापि संयोगजः कर्मणस्तत्र प्रतिबन्धकत्वात् विचित्रसंयोगे कर्मसंयोगयोर्हेतुत्वम् । नीलपीतयोश्चित्ररूपवदित्याहुः ।

अन्ये तु असंयुक्त एव तत्रावयवी संयुक्तव्यवहारस्तु अवयवसंयोगेनेति वदन्ति ।

केचित्तु अवयवकर्मोत्पत्तिकालेऽवयविनि कर्मोत्पादस्य दुर्वारतयावयवावयविनोर्युगपदेवोत्तरदेशसंयोगयोर्जायमानत्वेन कर्मजन्य एव संयोगः । न च यत्रावयव्युत्पत्तिकाले ऽवयवकर्मोत्पत्तिस्तत्रेदमिति वाच्यम् । द्वितीयक्षणे अवयविनि कर्मानुत्पत्तेः । तद्धेतोरभावादित्याहुः । तन्न । यत्रावयविन उत्पत्तिद्वितीयक्षणेऽवयवकर्म तत्र पूर्वक्षणेऽवयविनोदनाद्यभावान्न कर्मोत्पत्तिः । किंतु तदुत्तरक्षणे तत्रावयविसंयोगस्य कर्मजन्यत्वं संयोगजन्यत्वं वेति विचारसंभवात् । न चावयविनि स्वोत्पत्तेर्द्वितीयक्षणे क्रियाऽसम्भवेऽपि तृतीयक्षणे क्रियासम्भवेनावयवविभागाद्विभागस्य सम्भवेन चावयवोत्तरदेशसंयोगकालेऽवयविनि पूर्वदेशसंयोगनाशसम्भवेन तदुत्तरक्षणेऽवयविसंयोगस्य संयोगजत्वं कर्मजत्वमिति विचारः सम्भवत्येवेति वाच्यम् । अवयविन उत्पत्तिक्षणे तज्जनकसंयोगजनककर्मणो नाशस्य जायमानत्वेन पूर्वमवयवे कर्मसत्त्वेनावयविन उत्पत्तिक्षणे ऽवयवे कर्मासम्भवात् ।

[न चावयविजनकसंयोगस्यान्यतरकर्मजन्यत्वस्वीकारादवयविनोत्पत्तिक्षणनिष्क्रिये कर्मोत्पत्तिः सम्भवतीति वाच्यम् । तन्मात्रस्वीकारे तच्चतुर्थक्षणे घटकनाशप्रसङ्गेन विचारासम्भवात् । ]

न च निष्क्रिये कर्मोत्पत्तिरिति वाच्यम् । तदुत्तरदेशसंयोगकाले घटनाशात् । न चावयविजनकसंयोगस्य संयोगजस्य स्वीकारान्नोक्तदोष इति वाच्यम् । द्रव्यजनकतावच्छेदकवैजात्यस्य कर्मजन्यतावच्छेदकवै-

[ ] एतन्मध्यगत पाठः पुस्तकान्तरस्थ ।

जात्यव्याप्यत्वस्वीकारात् । अन्यथा संयोगजन्यतावच्छेदकवैजात्येन सङ्करापत्तेः । न च संयोगजन्यतावच्छेदकवैजात्यव्याप्यत्वमेव तस्येति वाच्यम् । द्व्यणुकजनकसंयोगाभावाभावापत्त्या द्व्यणुकोत्पत्त्यभावापत्तेः । न चावयविन उत्पत्तिद्वितीयक्षणे अवयवे कर्म तत्र पूर्वक्षणे अवयविनि कारणाभावेन कर्मानुत्पत्तिः किं तु तदुत्तरक्षणे तत्र अवयविविभागस्य उभयजन्यत्वं अल्पतरजन्यत्वं वा न सम्भवतीति वाच्यम् । तत्र समाधेरुक्तप्रायत्वात् ।

विभागत्वजातिमान् विभागः । सा चानुगतप्रत्ययसिद्धा । स च घटादिषु प्रत्यक्षादतीन्द्रियेष्वनुमानात्सिद्धः । न च तदीयसंयोगाभावेन तत्र तद्विभक्तप्रत्ययोपपत्तिरिति वाच्यम् । उत्पत्तिकालेऽपि द्रव्ययोर्विभक्तप्रत्ययापत्तेः । अत एव न तत्संयोगप्रागभावेन । नापि संयोगध्वंसेन विभज्य संयुक्तेऽपि विभक्तप्रत्ययापत्तेः । स च सर्वोऽप्यनित्यः । सर्वद्रव्याश्रितश्च । सद्विधा । कर्मजो विभागजश्च । आद्यो द्विविधः । अन्यतरकर्मज उभयकर्मजश्च । तादृशसंयोगोदाहरणवदत्रोदाहरणं द्रष्टव्यम् । यत्रावयविनः उत्पत्तिद्वितीयक्षणेऽवयवकर्म तत्र पूर्वक्षणेऽवयविनोदनाद्यभावान्न कर्मोत्पत्तिः किं तु तदुत्तरक्षणे तत्रावयविकर्मोत्पत्त्युत्तरक्षणेऽवयविविभागस्योभयजन्यत्वमन्यतरजन्यत्वं वेत्येवं पूर्वपक्षः । समाधानं च संयोगवन्मृग्यमिति दिक् ।

परे तु विभागजोऽपि द्विविधः । एकः कारणाकारणविभागात्कार्याकार्यविभागः । अपरः कारणमात्रविभागात्कारणाकारणविभागः स च पाकजप्रक्रियावसरे प्रदर्शितः । स चाश्रयनाशनाश्यः उत्तरदेशसंयोगनाश्यश्च ।

ननु पूर्वसंयोगप्रत्यक्षस्य विभागप्रत्यक्षे हेतुत्वमन्वयव्यतिरेकसिद्धम् । पूर्वसंयोगप्रत्यक्षाभावकाले विभागज्ञानं तु मानसं पूर्वसंयोगेनानुमित्यात्मकं वेत्युत्तरदेशसंयोगकाले पूर्वसंयोगप्रत्यक्षाभावात्तदुत्तरक्षणे विभागप्रत्यक्षासम्भवेनोत्तरदेशसंयोगक्षणे विभागसत्त्वे न मानमिति चेत् । न । अस्तु तथा हेतुत्वं न तु कार्यसहभावेन गौरवात् । तथा च पूर्वसंयोगनाशोत्पत्तिक्षणोत्पन्नपूर्वसंयोगप्रत्यक्षादेवोत्तरदेशसंयोगोत्पत्तिकालोत्तरक्षणे विभागप्रत्यक्षसंभवात् । न च विषयस्य कार्यसहभावेन हेतुत्वं मानाभावात् । तथा हेतुत्वेऽपि न क्षतिः । विभागोत्पत्तिकालोत्पन्नसंयोगप्रत्यक्षादपि तत्प्रत्यक्षसम्भवात् । न च तस्यापि कार्यसहभावेन विभागप्रत्यक्षे हेतुता गौरवात् । आस्तां वा भवदभिमता तथा हेतुता तथापि लाघवाद्विजातीयोत्तरदेशसंयोगत्वेनैव विभागनाशकत्वं न तु पूर्वसंयोगनाशत्वेन गौरवादित्युपपादितं पाकजप्रक्रियावसरे ।

केचित्तु हस्तसंयोगः समवायेन हस्तविभागनाशकः यत्र हस्तविभागोत्तरं न हस्तसंयोगः स विभाग आश्रयनाशनाश्यः हस्तसंयोगज्ञानस्य हस्तविभागप्रत्यक्षे हेतुत्वान्न संयोगाज्ञाने तत्प्रत्यक्षम् । न च विभागस्य क्षणिकत्वापत्तिर्हस्तसंयोगस्य पूर्वं सत्त्वादिति वाच्यम् । कार्यसहवृत्तिन एव संयोगस्य विभागनाशे हेतुत्वात् । न च विभागोत्तरं जायमानहस्तसंयोगस्य क्षणिकत्वापत्तिः समवायेन हस्तविभागत्वेनैव हस्तसंयोगनाशकत्वादिति वाच्यम् । तस्यापि कार्यसहभावेन संयोगनाशकत्वादित्याहुः । तन्न । परमाणुपरमाणुविभागस्यानाशापत्तेः । न च तयोः पुनः संयोगादेव तन्नाशः । यत्र तयोः पुनरग्रेसंयोगाभावस्तत्र नाशाभावापत्तेः ।

अपरे तु तदीयसंयोगत्वावच्छिन्नाभावविशिष्टाश्रयनाशाजन्येन तदीयसंयोगप्रतियोगिकध्वंसेन तद्विभागव्यवहारोपपत्तेर्नातिरिक्तविभागे मानम् । घटपटान्यतरनाशजन्यघटपटसंयोगनाशेन घटपटयोर्विभक्तप्रत्ययाभावेनाश्रयनाशाजन्यत्वं संयोगनाशे विशेषणम् । विभज्य पुनः संयुक्ते विभक्तव्यवहारवारणाय तदीयसंयोगत्वावच्छिन्नाभावविशिष्टेति । तावन्मात्रं चेद् गुणादौ द्रव्यविभक्तप्रत्ययापत्तिरित्यग्रिमम् । यद्वा द्वयोर्विद्यमानत्वेन विशेषणं न तु विनाशे आश्रयनाशाजन्यत्वम् । अत एव विद्यमानघटे विभज्य पटसंयुक्ते आश्रयनाशाजन्यपूर्वपटसंयोगध्वंससत्त्वेऽपि पटनाशोत्तर न पटाद्विभक्त इति व्यवहारः । नापि घटे घटविभक्तव्यवहारः । न च विभागाभाव एव संयोगोऽस्त्विति वाच्यम् । अनन्तद्रव्यचाक्षुषादिकार्येषु द्रव्यचक्षुर्विभागाभावापेक्षया द्रव्यचक्षुःसंयोगादेरेव लाघवेन हेतुत्वात् । न च विभागजशब्दे लाघवेन विभागस्य हेतुत्वात् विभागसिद्धिरिति वाच्यम् । विलक्षणविभागस्यैव शब्दजनकतया तत्प्रयोजकसंयोगविशेषस्यैव शब्दहेतुत्वाङ्गीकारादित्याहुः ।

परत्वत्वजातिमत्परत्वम् । तत्सिद्धिश्च पर इति प्रत्ययात् । तद् द्विविधम् । दिक्कृतं कालकृतं च । द्वयमप्यनित्यम् । अपेक्षाबुद्धिनाशनाश्यं सावधिकं च । आद्यपरत्वे यस्यापेक्षाबुद्ध्या यदवधिकपरत्वोत्पत्तिर्यत्र तत्रावधिनिरूपितस्वदेशविप्रकृष्टत्वविशिष्टदेशमात्रवृत्तित्वबुद्धिर्निमित्तकारणं दिक्पिण्डसंयोगोऽसमवायिकारणम् । एवमपरत्वं तत्र सन्निकृष्टदेशमात्रवृत्तित्वबुद्धिर्निमित्तमिति विशेषः । अत एव तद् द्वयमव्यापकेष्वेव । कालकृते परत्वे

च यदवधिकं परत्वमुत्पद्यते तत्पूर्वकालोत्पन्नत्वबुद्धिर्निमित्तं कालपिण्डसंयोगोऽसमवायि । अपरत्वे तदुत्तरकालोत्पन्नत्वबुद्धिर्निमित्तमेतावान् भेदः । तच्च द्वयमनित्यद्रव्येष्वेव द्वित्वादिवत्परत्वादेरपेक्षापेबुद्धेर्व्यञ्जकत्वोत्पादकत्वं द्रष्टव्यम् । एतत्तत्वं निरूपितं प्रागिति दिक् ।

गुरुत्वत्वजातिमद् गुरुत्वम् । तच्चातीन्द्रियमनुमानात्सिद्धम् । नित्यगतं नित्यमनित्यगतमनि यमाश्रयनाशनाश्यं च । स्वाश्रयावयवगतं गुरुत्वमसमवायिकारणम् । तच्च पृथिवीजलवृत्ति । संयोगासमवधानकालीना क्रिया गुणासमवायिकारणिका क्रियात्वात् संयोगजन्यक्रियावदित्यनुमानात् तत्सिद्धिरिति प्राञ्चः ।

अन्ये तु गुरुत्वस्य यावद्द्रव्यभावित्वेन सर्वदा क्रियावारणाय कारणान्तरस्याभावेन प्रतिबन्धकस्य सद्भावेन वा सर्वदा क्रियानुत्पादो वाच्यः । तथा च गुरुत्वे न मानम् । उक्तानुमानस्य च पक्षविशेषणासिद्धिरित्याहुः । एतत्तत्वं गुणरहस्यटिपण्यां वेदितव्यमिति दिक् ।

द्रवत्वत्वजातिमद् द्रवत्वम् । तच्च द्रवत्वं द्रवत्वमित्यनुगतप्रत्यक्षादतीन्द्रियेष्वनुमानात्सिद्धम् । तच्च पृथिव्यादित्रयवृत्ति । नैमित्तिकं स्वाभाविकं च । तत्र विलक्षणतेजःसंयोगजन्यतावच्छेदकजातिमन्नैमित्तिकम् । तद्भूतेजोवृत्ति । तच्चानित्यम् । तत्र तेजःसंयोगोऽसमवायि । तच्चाश्रयनाशनाश्यम् । अग्निसंयोगनाशनाश्यं च । द्रवत्वविशेषजनकतावच्छेदकजातिमत् स्वाभाविकं । तच्च जले । नित्यगतं नित्यमनित्यगतमनित्यम् । तत्रावयवद्रवत्वमसमवायि । तच्चाश्रयनाशनाश्यम् ।

ननु स्वाभाविकद्रवत्वनिष्ठजातिविशेषस्य जलजन्यतावच्छेदकत्वमेवास्तु लाघवात्[1], न तु द्रवत्वजन्यतावच्छेदकत्वं गौरवात्। न च जलपरमाणौ द्रवत्वापत्तिः। परम्परया द्रवत्वस्य कारणत्वे तु परमाणौ तेन संबन्धेन द्रवत्वाभावादेव न तदुत्पत्तिरिति वाच्यम्। द्रवत्वं प्रति द्रवत्वस्य प्रतिबन्धकत्वादेव तत्र द्रवत्वानुत्पत्तेरिति चेत्।

अत्र प्राञ्चः, भावकार्यस्यासमवायिकारणजन्यत्वनियमेन तद्द्रवत्वस्य द्रवत्वकारणत्वावश्यकत्वे जलस्यापि तत्र विनिवेश्य कारणत्वे गौरवमिति वदन्ति।

नव्यास्तु उक्तनियमानङ्गीकारेण जलत्वेनैव तत्र हेतुत्वम्। यद्वा जलमात्रवृत्तिजात्यङ्गीकारेण तस्या एव तत्कारणतावच्छेदकत्वं कल्प्यते। तथा च स्वाभाविकं द्रवत्वं सर्वं जन्यं जन्यजलमात्रवृत्ति। परमाणुष्वनन्तद्रवत्वानङ्गीकारेण लाघवम्।

अथ वा द्रवत्वविशेषजनकतावच्छेदिका जातिर्त्र्यणुकादिमात्रवृत्तिस्तज्जनकतावच्छेदकं द्व्यणुकादिमात्रवृत्तिजलत्वं, तज्जनकतावच्छेदकं सकलजलवृत्तीत्येतावतैव सामञ्जस्ये ऽनन्तद्व्यणुकादिषु द्रवत्वस्वीकारे गौरवम्। त्वन्मते तु पृथिव्यां स्वाभाविकद्रवत्ववारणाय विलक्षणद्रवत्वं प्रति विलक्षणद्रवत्वस्य हेतुता वाच्या, तथा च कारणतावच्छेदकतया कार्यतावच्छेदकतया च जातिद्वयकल्पने गौरवम्। न च सर्वद्रवत्ववृत्तिद्रवत्वत्वेनैव स्वाभाविकद्रवत्वकारणतावच्छेदकत्वं, न च पृथिव्यां स्वाभाविकद्रवत्वापत्तिः। द्रवत्वोत्पत्त्यन-

---

[1] स्वाश्रयसमवेतत्व कारणतावच्छेदकसबन्धत्वकल्पने गौरवम। जलस्य तु तादात्म्येन कारणत्वे लाघवमिति भाव।

न्तरं द्रवत्वस्य प्रतिबन्धकत्वात्पूर्वं चावयवद्रवत्वाभावादेव द्रवत्वानुत्पादसम्भवादिति वाच्यम् । तथापि परमाणुष्वनन्तद्रवत्वादिकल्पने गौरवापत्तेः । यत्र पार्थिवावयवे नैमित्तिकद्रवत्वोत्पत्त्यनन्तरमवयविन उत्पत्तिस्तत्र स्वाभाविकद्रवत्वापत्तेश्च । अवयवद्रवत्वस्य सत्त्वात् ।

केचित्तु अग्निसंयोगप्रयोज्यं नैमित्तिकं पृथिवीतेजोवृत्ति, अग्निसंयोगाप्रयोज्यं स्वाभाविकं तज्जलवृत्ति, न तु स्वाभाविकत्वं जातिविशेषः प्रमाणाभावात् । तथा च द्रवत्वे जातित्रयम् । तेजःसंयोगजन्यतावच्छेदिका एका, सर्वद्रवत्वसाधारणी द्रवत्वविशेषजनकतावच्छेदिकाऽपरा, द्रवत्वविशेषजन्यतावच्छेदिकाऽन्या । अत एव द्रवत्ववज्जतुघृतयोः संयोगेन घृतान्तरोत्पत्तौ अवयवद्रवत्वात्तत्र द्रवत्वोत्पत्तिः । विलक्षणस्वाभाविकद्रवत्वस्वीकारे तु तत्राग्निसंयोगकल्पनेन, द्रवत्वजन्यतावच्छेदकजातेः स्वाभाविकद्रवत्वजन्यतावच्छेदकजातिव्यापकत्वस्वीकारेण वा द्रवत्वोत्पत्तिरिति वदन्ति । तन्न । स्वाभाविकद्रवत्वजनकतावच्छेदकजात्या सङ्करप्रसङ्गात् ।

कश्चित्तु, संग्रहः सक्तुकादीनां संयोगविशेषः । तत्र द्रवत्वं स्नेहसहितं निमित्तं, स्पन्दनाख्यक्रियाविशेषे द्रवत्वमसमवायिकारणम् । स्नेहसहितेत्युपादानात् सुवर्णादिद्रवत्वेन संग्रहासम्भवेऽपि न दोष इत्याह । तन्न । स्नेहहेतुत्वेनैवानतिप्रसङ्गेऽपि द्रवत्वप्रवेशे द्रव्यैकत्वादेरपि प्रवेशापत्तेरिति दिक् ।

स्नेहत्वजातिमान् स्नेहः । स प्रत्यक्षसिद्धः । जलमात्रवृत्तिः । नित्यगतो नित्योऽनित्यगतोऽनित्यः । तत्र स्वाश्रयावयवस्नेहोऽसमवायी । स चाश्रयनाशनाश्यः । स च संग्रहाख्यसंयोगविशेषे हेतुरिति केचित् ।

वस्तुतो जलेनैव सक्तुकादेर्द्दढनरसंयोगो जायते न तैलादिनेति तादृशसंयोगविशेषे जलसंयोगविशेषस्य संयोगविशेषेण जलस्यैव वा हेतुत्वात् प्रत्यक्षस्यापामरसाधारणस्याभावान्न स्नेहसिद्धिरिति दिक्।

एवं प्रकृष्टस्नेहो दहनानुकूलः। स च तैलादौ विद्यमानजलभागनिष्ठः। अप्रकृष्टश्च प्रसिद्धजलगतो दहनविरोधीति निरस्तम्। कर्पूरादिद्रव्यस्य कर्पूरत्वादिनैव दहनानुकूलत्वाज्जलत्वेनैव दहनविरोधित्वाच्चेति दिक्।

संस्कारत्वजातिमान् संस्कारः। मूर्त्तामूर्त्तवृत्तिकालवृत्त्यवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमान्वा। शब्दजनकतावच्छेदकसंयोगविशेषगतजातिवारणाय गुणत्वसाक्षाद्व्याप्येति। स त्रिविधः। वेगो भावना स्थितिस्थापकश्चेति।

तत्र वेगत्वजातिमान् वेगः। स च मूर्त्तवृत्तिः कर्मजः कर्मजनकश्च। क्वचिदवयववेगजन्यश्च। स च विलक्षणसंयोगात् क्वचिदाश्रयनाशाद्विलक्षणकर्मणा च नश्यति।

ननु क्रियातिरिक्तवेगे किं मानमिति चेत्?

अत्र केचिद्वेगेन चलतीति प्रत्ययात्तत्सिद्धिमाहुः।

अन्ये तु युगपत् प्रक्षिप्तनाराचयोः शीघ्रगामित्वं मन्दगामित्वं वेगकृतम्। तथा हि किं चित् कर्म सन्निकृष्टदेशसंयोगजनकं किं चिच्च दूरदेशसंयोगजनकमिति कर्मणि वैलक्षण्यं कारणवैलक्षण्याधीनम्। अतो दूरदेशसंयोगजनकविलक्षणं कर्म विलक्षणवेगजन्यं यस्यैषोः स शीघ्रं गच्छति। यस्य तु सन्निकृष्टदेशजनकं तद्विलक्षणं कर्म विलक्षणवेगजन्यं स मन्दं गच्छतीति वदन्ति।

अपरे तु विलक्षणसंयोगात् कर्म, तेन वेगः स्वाश्रयविभागश्च, ततः पूर्वदेशसंयोगनाशः, तत उत्तरदेशसंयोगः,

ततः कर्मनिवृत्तिः, ततः पूर्वोत्पन्नवेगात्कर्म, ततस्तेन कर्मणा स्वजनकवेगनाशः स्वाश्रयविभागश्च, ततः पूर्वसंयोगनाशवेगौ, तत उत्तरदेशसंयोगः, ततः कर्मनिवृत्तिः, ततः पूर्वोत्पन्नवेगात्कर्म। कर्मणः समवायेन कर्मोत्पत्तिप्रतिबन्धकत्वान्न वेगद्वितीयक्षणे कर्म। एवं वेगं प्रति समवायेन वेगस्य प्रतिबन्धकत्वान्न वेगद्वितीयक्षणे वेगः। एवं च यत्र वेगबाहुल्येन क्रियाबाहुल्यं स दूरदेशगामी। यत्र वेगस्वल्पतया क्रियास्वल्पता स निकटदेशगामीति। न च तत्रापि वेगबाहुल्यं कुतो नेति वाच्यम्। विलक्षणकर्मण एव वेगजनकत्वात्तस्य च तत्राभावाद्वेगानुत्पत्तेः, साधकं वेगस्याहुः।

यत्तु कर्मणा वेगः, तेन पूर्वकर्मनाशः कर्मान्तरोत्पत्तिः पूर्वदेशसंयोगनाशश्च, तेन कर्मणा वेगःपूर्ववेगनाशश्च। एवमुत्तरदेशसंयोगोत्तरमेव पूर्वोत्पन्नकर्मणा विभागात् क्षणद्वयन्यूनतया कर्मोत्पत्तिः सप्तमे क्षणे उत्तरदेशसंयोगानन्तरोत्तरदेशसंयोगसम्भवाच्छीघ्रगामित्वम्। यत्रोत्तरदेशसंयोगात् पूर्वकर्मनाशः "तत्क्षणे क्रियाजनकसंयोगकल्पनात्" तदुत्तरक्षणे कर्म; तेन स्वोत्तरक्षणे विभागः, तत्र पूर्वकर्मण उत्पत्त्युत्तरमेव नवमे क्षणे उत्तरदेशसंयोगादुत्तरदेशसंयोगः तत्र क्षणद्वयविलम्बान्मन्दगामित्वम्। कर्मविशेषस्यैव वेगजनकत्वान्न सर्वकर्मणा वेगोत्पत्तिः। कर्मविशेषस्य नाशे वेगस्य हेतुत्वान्नोत्तरसंयोगजन्यकर्मनाशे व्यभिचार इत्याहुः। तन्न। समवायेन कर्मोत्पत्तौ समवायेन कर्मणो विरोधित्वेन वेगोत्पत्तिद्वितीयक्षणे कर्मानुत्पत्तेः। एवं वेगं प्रति वेगस्य प्रतिबन्धकत्वेन कर्मोत्तरक्षणे वेगानुत्पत्तेश्च न च संयोगजन्यतावच्छेदककर्मनिष्ठवैजात्यावच्छिन्न एव

" " एतन्मध्यगः पाठो नास्ति पुस्तकान्तरे।

कर्मणो विरोधित्वं न कर्मत्त्वाच्छिन्न इति वाच्यम् । वेगात् क्रमिककर्मद्वयोत्पादप्रसङ्गात् । इष्टापत्तौ गौरवमेव बाधकम् । किंच कर्मोत्पत्तिद्वितीयक्षणे विभागो वेगश्च तेन पूर्वदेशसंयोगनाशक्षणे कर्मनाशात्तेन कर्मणा चोत्तरदेश-संयोगाजननात्किमर्थं प्रथमकर्मस्वीकारः ? अथ वेगोत्पत्ति-द्वितीयक्षणे पूर्वकर्मणा पूर्वसंयोगनाशजननात्तत्क्षणोत्प-न्नकर्मणा पूर्वसंयोगनाशोत्तरक्षणे उत्तरदेशसंयोगो वेगश्च-तेन पुनः कर्मविभागः पूर्वकर्मनाशश्च ।

" ननु पूर्वकर्मणा तदानीं विभागः विभागं प्रति कार्य-सहवृत्तित्वेन कर्मणो हेतुत्वात् । अन्यथोत्तरदेशसंयोगा-नन्तर विनश्यदवस्थकर्मणा विभागोत्पत्त्यापत्तेः" ततस्तेन वेगः पूर्वदेशविभागश्च, एव क्रमेण यत्र वेगक्रियाबाहुल्यं तत्र दूरदेशगामित्वं यत्र क्रियावेगयोः स्वल्पता तत्र सन्निकृष्टदेशगामित्वमिति चेत् ? न । क्रियायां वेगनाश्य-तावच्छेदकस्योत्तरदेशसंयोगनाश्यतावच्छेदकस्य च वैजा-त्यस्य कल्पने क्रियावेगयोः प्रतिक्षणमुत्पादविनाशकल्पने च गौरवापत्तेः । उत्तरदेशसंयोगानन्तर विनश्यदवस्थक-र्मणा विभागोत्पत्तिवारणाय विभागं प्रति कर्मणः कार्यस-हवृत्तित्वेन हेतुत्वेन विनश्यदवस्थकर्मणाविभागासम्भवाच्च एतेनोक्तप्रतिबध्यप्रतिबन्धकभावस्वीकारेऽपि क्रिया, ततो वेगविभागौ, ततःक्रियानाशसंयोगनाशौ, ततोवेगात्क्रिया ततो वेगनाशोत्तरदेशसंयोगौ, ततः क्रियातो वेगविभागौ, ततः कर्मनाशपूर्वसंयोगनाशौ, ततःकर्म, ततउत्तरदेशसंयोगः एवं क्रमेण यत्र वेगक्रियाबाहुल्यं तत्र दूरदेशगामित्वं, यत्र

" " पुस्तकान्तरादधिक एतन्मध्यगः पाठ ।

वेगक्रियास्वल्पता तत्र संन्निकृष्टदेशगामित्वमित्यपि परास्तम् ।

नव्यास्तु संस्कारत्वजातौ न मानम् । अत एव तद्‌घटितोक्तलक्षणमपि निरस्तम् । किं च मूर्तामूर्तवृत्त्यवृत्तिकालवृत्तिजातिमत्त्वस्यैव सम्यक्त्वेन शेषवैयर्थ्यं, शब्दजनकतावच्छेदकजातेः शब्दनिमित्तकारणसंयोगे स्वीकारेण तस्या अमूर्तवृत्तिवृत्तित्वाभावात् ।

यच्चोक्तं दूरदेशवृत्तिसंयोगजनकविलक्षणकर्मजनकतया वेगसिद्धिः । तदपि न । विलक्षणवेगजनककर्मण एव चिरकालस्थायितया दूरदेशसंयोगजनकत्वमस्तु किं वेगेन? एवं विलम्बगामित्वस्यापि विलक्षणकर्मणैवोत्पत्तौ किं वेगेन ? यद्वा विलम्बगामिनि द्रव्यान्तरक्रियाजन्यसंयोगा उत्तरदेशसंयोगप्रतिबन्धका विभागादेरुत्पत्तिसमय एव कल्प्यन्तां, ततएव तस्य विलम्बगामित्वमिति किं वेगेन ? अत एव युगपत् प्रक्षिप्तनाराचयोः कस्य चित् सन्निकृष्टगामित्वेन कस्य चिद्विप्रकृष्टदेशगामित्वेन वेगसिद्धिरपि निरस्ता । तत्तत्क्रियाया एव फलबलेन तत्तद्देशसंयोगजनकत्वकल्पनात्किमनन्तवेगादिक्रियादिसन्तानकल्पनयेति ।

अपरे तु यत्रोत्तरदेशसंयोगोत्पत्त्युत्तरक्षणे क्रियान्तरजनकसंयोगकल्पना तत्र शीघ्रगामित्वं तदुत्तरदेशसंयोग एव वा क्रियाजनकतावच्छेदकवैजात्यकल्पना तत्र शीघ्रगामित्वं तदुत्तरोत्तरक्षणे । यत्र क्रियान्तरजनकसंयोगकल्पना तत्र न मन्दगामित्वम् । एवं यत्र तदुत्तरतृतीयक्षणे क्रियान्तरजनकसंयोगकल्पना तत्र ततोऽपि मन्दगामित्वसम्भवात् किं वेगेनेत्याहुः ।

एतेन स्वोत्पादकजातीयोत्पादकतावच्छेदकतया सं-

स्कारत्वजातिसिद्धिः। तथा हि। वेगः कर्मजन्यः कर्मसजातीयजनकः। एवं भावना ज्ञानजन्यज्ञानसजातीयस्मृतिजनिका, स्थितिस्थापकोऽपि क्रियाजन्यः तज्जन्यक्रियान्तरजनकश्चेति निरस्तम्। शब्दस्यापि शब्दजन्यत्वेन तत्सजातीयशब्दजनकत्वात् तत्रापि तादृशकारणभासत्त्वेन संस्कारत्वसत्त्वापत्तिरिति वदन्ति। भावनाख्यस्त्वात्मविशेषगुणः। आत्मवृत्तिरनुभवजन्यः स्मृतिजन्यश्च। स्मृतिजनकतावच्छेदकजातिमाननित्य एव, तस्य च कचित् समानप्रकारिका स्मृतिः, कचिद्विरोधिज्ञानं, कचिन्मदः, कचित्तीव्रदुःखं, कचित्कालश्च नाशकः। तस्यात्ममनःसंयोगो समवायो। स चाभ्यासादरप्रत्ययाभ्यां दृढतर उत्पद्यते सादृश्यदर्शनाद्यदृष्टचिन्ताद्यन्यतमसहकृतः स्मृतिहेतुः। न चातीन्द्रियसंस्कारे मानाभावः स्मृतिस्त्वनुभवध्वंसव्यापारकानुभवादेवोत्पद्यते इति वाच्यम्। अनुभवस्य कारणीभूताभावप्रतियोगित्वेन स्मृतिप्रतिबन्धकत्वापत्तिरिति प्राञ्चः।

अपरे तु कारणीभूताभावप्रतियोगित्वं न प्रतिबन्धकत्वम्। दण्डाभावस्य कारणीभूतस्वाभावात्मकदण्डप्रतियोगित्वेन घटप्रतिबन्धकत्वापत्तेः, किं तु यदभावत्वेन यत्र कारणत्वं तत्र तस्य प्रतिबन्धकत्वम्। दण्डाभावाभावत्वेन न घटकारणता गौरवाद्दण्डध्वंसादपि घटापत्तेश्च; किं तु दण्डत्वेन। एवं च स्मृतौ नानुभवाभावत्वेन हेतुता। अत्यन्ताभावेनापि स्मरणापत्तेः। किं तु ध्वंसत्वेनेति नानुभावस्य प्रतिबन्धकत्वम्। न चानुभवध्वंसस्य कारणत्वे सर्वदा स्मरणापत्तिः। उद्बोधकस्य फलैकोन्नेयत्वेन तवापि समानत्वात्। न च यत्र देवदत्तस्य दश-

वारं दर्शने सति देवदत्तस्य दशवारं स्मरणं तत्र यज्ञदत्तज्ञानत्वेनैव देवदत्तस्मरणे कारणताकल्पने लाघवात् । पश्चाच्च यज्ञदत्तज्ञानेऽपि सति न देवदत्तस्मरणम् । तत्र देवदत्तस्मरणादिना तस्य संस्कारस्य नाशान्न स्मृतिः । भवन्मते च दशयज्ञदत्तज्ञानानां दशसु देवदत्तस्मरणेषु तत्तद्व्यक्तित्वेन हेतुत्वे दशकार्यकारणभावकल्पने गौरवमिति वाच्यम् । एतावता स्थलविशेषे संस्कारसिद्धावपि सर्वत्र तस्यासिद्धेः। किंच संस्कारस्य तद्ध्वंसे संस्कारेऽनुभवस्य संस्कारनाशे च स्मृत्यादेःकारणत्वस्य च संस्कारं प्रति संस्कारस्य प्रतिबन्धकताया अनन्तसंस्कारादेश्च कल्पनापेक्षया यज्ञदत्तज्ञानेष्वेव देवदत्तस्मरणजनकतावच्छेदकधर्मस्यैव कल्पनाया उचितत्वम् । न च तस्य विषयतारूपत्वे तदवच्छिन्नं प्रति अनुगतं कारणं वाच्यमिति गौरवमिति वाच्यम् । घटनिर्विकल्पकोत्तरं घटत्वविशेष्यकघटप्रकारकज्ञानानङ्गीकारपक्षे तत्तद्विशेषणज्ञानत्वेनैव तत्तद्विशिष्टबुद्धौ जनकत्वेन तत्तज्ज्ञानजन्यासु यज्ञदत्ततत्तद्बुद्धिषु तस्याः स्वीकारेण तादृशविषयताशालित्वावच्छिन्ने आत्मत्वादिना हेतुत्वेऽप्यक्षतेः । तत्तद्यज्ञदत्तज्ञानातिरिक्तस्य विषयताशालिज्ञानस्याभावान्न तदनन्तरं तदापादनम् तत्तज्ज्ञानात्मकं तु तत्तज्ज्ञानकारणज्ञानाभावादेव न संभवति । अस्तु वा स धर्मः शक्तिवन्नित्य एव, स्वीक्रियतां वा कारणत्वेन रूपसामान्याभाववत् कारणतावच्छेदकतया तत्तज्ज्ञानभिन्नत्वावच्छिन्नभेदः, मास्तु वा तदवच्छिन्नं प्रति कारणत्वाङ्गीकारोऽपि, कार्यमात्रवृत्तिजातेरेवानुगतकारणजन्यतावच्छेदकत्वमिति दिक् ।

स्थितस्थापकस्तु स्पर्शवद्विशेषमात्रवृत्तिः । संस्कार-

त्वव्याप्यजातिविशेषवानतीन्द्रियः । नित्यगतो नित्यो ऽनित्यगतो ऽनित्यः कारणगुणपूर्वकश्चेति कश्चित् ।

परे तु स क्रियाविशेषजन्यःकारणगुणजन्यः क्रियाविशेषे हेतुश्च । न च वेगादेव धनुःशाखादौ क्रियासम्भवात् किं तेनेति वाच्यम् । वेगस्य स्वदेशोत्तरदेशसंयोगजनकक्रियाजनकत्वं बलादुन्नमितधनुःशाखादिक्रिया तु स्वाश्रयस्य यथापूर्वसंयोगजनिका विलक्षणा विलक्षणं कारणं कल्पयति तदेव तादृशजातिमदिति प्राञ्चः ।

अपरे तु कारणगुणपूर्वकस्य स्थितिस्थापकस्य द्रव्योत्पादद्वितीयक्षण एवोत्पादात् सर्वदा तादृशक्रियापत्तेर्न तत्र मानम् । न च क्रियात्वव्याप्यजात्यवच्छिन्नं प्रति तस्य कारणत्वात् सर्वदा क्रियासामान्यकारणाभावान्न तदुत्पाद इति वाच्यम् । वेगादिना धनुषि क्रियोत्पादकालेऽपि तादृशक्रियोत्पादप्रसङ्गात् । कथं तर्हि विलक्षणा क्रिया न कथंचित् क्रियासामान्यकारणवशाज्जायमाना क्रिया क्रियासंयोगयोर्विशिष्यैव कार्यकारणभावस्याङ्गीकारात्तत्तद्देशसंयोगं जनयतीति वदन्ति ।

श्रोत्रग्राह्यगुणत्वव्याप्यजातिमान् शब्दत्वजातिमान्वा शब्दः । स प्रत्यक्षसिद्धः ।

केचित्तु आकाशविशेषगुणत्वं ज्ञानासमानाधिकरणविभुविशेषगुणत्वं वा तल्लक्षणमाहुः ।

स द्विविधः । वर्णात्मकोऽवर्णात्मकश्च । तत्राद्यस्य ताल्वादिना आकाशसंयोगोऽसमवायी । ताल्वादिना वाय्वाद्यभिघातो निमित्तं वर्णात्मकद्वितीयादेस्तु पूर्वशब्दोऽसमवायी यस्य यत्स्थानं तस्य तत्स्थानेन वायुसंयोगो निमित्तं संयोगजा अवर्णात्मकास्तु आद्याः शङ्खादि-

वायुसंयोगान्निमित्ताच्छङ्खाद्याकाशसंयोगासमवायिकारणादुत्पद्यन्ते । द्वितीयादयस्तु पूर्वपूर्वशब्दाद्यसमवायिकारणादिकाः । सर्वोऽपि शब्दोऽनित्यः । 'अन्त्यादन्यः कार्यशब्दनाश्यः । अन्त्यस्तु उपान्त्याद्रुपान्त्यनाशाद्वा नश्यति । अन्त्यः सर्वोऽपि श्रोत्रग्राह्यः विभागजानामाद्यानां तु वंशादिदलद्वयविभागो निमित्तम् । दलाद्याकाशविभागो समवायिकारणम् । न चात्रपि दलाकाशसंयोगो वाय्वाकाशसंयोगो वाऽसमवायिकारणमस्तु, किं विभागेनेति वाच्यम् । तयोः पूर्वं सत्त्वेन शब्दानुत्पत्तेर्विभागस्यैवासमवायित्वात् । द्वितीयादयः पूर्वशब्दाद्यसमवायिकारणादिकाः

कर्णशष्कुलीविवरावच्छिन्नं नभः श्रोत्रं शब्दग्राहकमतो न देशान्तरवृत्तिशब्दग्रहः । यद्वा यः शब्दो यत्कर्णावच्छिन्नः स तेन गृह्यते । अत एव भेर्यादिशब्दोत्पन्नशब्दानां कर्णावच्छिन्नत्वाभावेन ग्रहणासंभवाद्वीचीतरङ्गन्यायेन कदम्बगोलकन्यायेन वा शब्दोत्पत्तिस्वीकारात् कर्णावच्छेदेनोत्पन्नो गृह्यते भेरीशब्दो गृह्यत इति धीर्भ्रान्तैव;किं तु भेर्यादिप्रयोज्य एव गृह्यत इति प्राञ्चः ।

परे तु भावकार्यत्वस्यासमवायिकारणजन्यत्वव्याप्यत्वे मानाभावेन भेर्यादिदण्डादिसंयोगान्निमित्तकारणसहकृतादाकाशादेव शब्दस्योत्पत्तौ भेर्याद्याकाशसंयोगजन्यत्वे मानाभावः । न चभेर्याद्याकाशसंयोग एव का णमस्तु; किं भेरीदण्डसंयोगेनेति वाच्यम् । तस्यान्वयव्यतिरेकाभ्यां हेतुत्वात् । न न शब्दस्य नित्यत्वमवास्तु भेर्यादिसंयोगादिकं तदुपलम्भकं नानन्तशब्दकल्पनमिति वाच्यम् । विनष्टः शब्द उत्पन्नः शब्द इति प्रात्य-

यादनन्तशब्दोत्पादकल्पनात् । न च स एवायं शब्द इति प्रत्ययादभेदे सिद्धे बहुकालस्थायित्वसिद्धौ शब्दस्य शब्दानाश्यत्वसिद्धौ अन्यस्य नाशकस्याकल्पनान्नित्यत्वमिति वाच्यम् । तदेवेदमौषधं सेयं दीपकलिकेतिवत् प्रत्यभिज्ञायास्तज्जात्यवच्छिन्नभेदाभावविषयत्वात् । न च तत्सजातीयोऽयमिति स्यात् यत्र तद्व्यक्तिभेदाभावो विषयस्तत्रैव स एवायमिति प्रत्यभिज्ञानादिति वाच्यम्। पूर्वोत्तरयोरौषधयोर्भेदज्ञानकालेऽपि तदेवौषधमिति प्रत्यभिज्ञानात् । अत एव यत्र व्यक्तिभेदज्ञानं तत्र तज्जातीयमिति प्रत्यभिज्ञेत्यपि निरस्तम् । कथं तर्हि गकारोऽयं स एवायं गकारजातीयोऽयमिति विलक्षणा विलक्षणा प्रत्यभिज्ञा । इत्थं यत्र गकारे गत्वं स्वरूपेण भासते तत्र गकारोऽयं, यत्र गत्वे गवृत्तित्वं भासते तत्र स एवायं,यत्र गत्वे जातित्वं तत्र गकारजातीयोऽयमिति वदन्ति ।

अन्ये तु प्रत्यभिज्ञानादेकैका एव गकारादयो नित्या अजन्याश्च । तदुत्पादकत्वाभिमतसामग्र्यास्तत्प्रत्यक्षजनकत्वाङ्गीकारान्न सर्वदा तत्प्रत्यक्षम् । उत्पादविनाशप्रत्ययस्तु भ्रान्त एव । अन्यथानन्तशब्दाङ्गीकारे गौरवापत्तेः । अत एवोत्पादविनाशप्रत्यययोरुभयोरप्रमात्वकल्पनापेक्षया प्रत्यभिज्ञाया एवाप्रमात्वकल्पनमिति निरस्तम् । न च तारत्वमन्दत्वविरुद्धधर्माभ्यां गकारादीनां भेदः तयोरन्यनिष्ठत्वात् । अस्तु वा तारतमादिभेदेन मन्दतमादिभेदेन नानात्वमात्रम् । अस्तु वा तारत्वमन्दत्वयोरविरोधः। य एव तारः स एवान्यापेक्षया मन्द इति प्रतीतेः । अत एव गत्वाद्यपेक्षया गादिप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे गौरवमित्यपि निरस्तम् । अन-

न्तव्यक्त्यादिकल्पनापेक्षया तस्य प्रामाणिकत्वात् । अत एव तादात्म्येन तत्तत्कर्णावच्छिन्नशब्दस्यशब्दविशिष्टलौकिकविषयतया तदीयश्रावणप्रत्यक्षे हेतुत्वं न । किं तु तत्तत्कर्णस्यैव तेन तेन गृह्यमाणशब्देऽवच्छेदकत्वं कल्प्यते न तु वीचितरङ्गन्यायेन कदम्बगोलकन्यायेन वा शब्दोत्पादो गौरवात् । भेर्यादिशब्दः श्रुत इति धीः प्रमैवेति निरस्तम्। अनन्तगकारादीनां तदुध्वंसानां च कल्पने गौरवापत्तेः। न च घटादिजनकसामग्र्याः घटादिप्रत्यक्षहेतुत्वमेवास्त्विति वाच्यम् । घटाद्युत्पादानन्तरमपि घटादेः केषां चित्प्रत्यक्षभिन्नसामग्र्या वक्तव्यत्वादित्याहुः । तन्न क्रियासंयोगयोर्विशिष्यैव कार्यकारणभावस्यावश्यकतया तत्तच्चक्षुः संयोगाद्यवच्छिन्नघटादेस्तत्तद्घटादिचाक्षुषे हेतुत्वसंभवेन घटादेरपि नित्यत्वापत्तेः । उत्पादविनाशप्रत्ययस्य प्रत्यभिज्ञायाश्चोभयत्र तुल्यत्वादिति दिक् ।

सुखत्वजातिमत्सुखम् तच्च धर्मासाधारणकारणकम् । जन्यसाक्षात्कारविषयताव्याप्यजातिमदात्मविशेषगुणः । क्षणद्वयस्थायि । स्रक्चन्दनवनितादिना शरीरसंयोगान्निमित्तात्क चित् ज्ञानादिरूपान्निमित्तादुत्पद्यते । धर्मस्यापि तदुत्पादनद्वारा हेतुत्वम् । आत्ममनःसंयोगस्तत्रासमवायी । तच्च द्विविधम् । वैषयिकं मानोरथिकं च । वैषयिके स्रक्चन्दनवनितादिसंयोगो निमित्तम् । मानोरथिके ज्ञानं निमित्तम् । सर्वमनित्यमेव । न चेश्वरे सुखत्वप्रतिपादकागमवशात्तस्य नित्यत्वमपि वाच्यम् । धर्मत्वेन सुखत्वेन कार्यकारणभावात् । ईश्वरे सुखाभावेन तत्प्रतिपादकस्यागमस्यौपचारिकत्वात् । न च ज्ञानत्वेन शरीरत्वेनात्ममनःसंयोगत्वेन च कार्यकारणभावादीश्वरे

ज्ञानप्रतिपादकागमोऽप्यौपचारिक एवास्त्विति वाच्यम्। ईश्वरस्य कर्तृत्वेन सिद्धस्य नित्यज्ञानवत्त्वेनैव सिद्धेः। जन्यज्ञानत्वादिकमेवात्ममनःसंयोगादिजन्यतावच्छेदकं कल्प्यते। किं चेश्वरसुखाभेदप्रतिपादकस्यैवागमस्य सत्त्वात्तस्यौपचारिकत्वस्य गुणगुणिनोरभेदानङ्गीकारेणावश्यकत्वमेवेति दिक्।

दुःखत्वजातिमद् दुःखम्। तच्चाधर्मासाधारणकारणकम्। तच्च साक्षात्कारविषयताव्याप्यजातिमदात्मविशेषगुणः। तच्चानित्यमेव सुखवत्। वैषयिकं मानोरथिकं च। कण्टकादिसंयोगविशेषनिमित्तोत्पन्नं वैषयिकम्। व्याघ्रादिज्ञाननिमित्तोत्पन्नं मानोरथिकम्। क्षणद्वयस्थायि।उत्तरोत्पन्नगुणनाश्यत्वात्। ननु स्वोत्तरोत्पन्नस्य स्वनाशकताऽवश्यं वाच्या। अन्यथा स्वस्याप्यन्यापेक्षयोत्तरत्वेन क्षणिकत्वापत्तिः।उत्पत्तिपदं च स्वस्यापि स्वोत्तरत्वेन स्वनाशकतापत्त्या क्षणिकत्वापत्तिवारणायेति स्वत्वघटितत्वादननुगतता। तथा च यत्र रोगाद् दुःखं धारारूपेणानुभूयते तत्रानन्तदुःखस्वीकारे गौरवात्तावत्कालमेकमेव दुःखमस्तु। तत्र स्वोत्तरोत्पन्नस्य स्वोत्तरोत्पन्नत्वेन स्वोत्तरवृत्तित्वविशिष्टत्वेन वा नाशकताया अकल्पनात्।यत्क्षणे नश्यति तत्क्षणपूर्वक्षणोत्पन्नायास्तद्व्यक्तित्वेन तत्र नाशकताकल्पनात्। अत एव शतवर्षपर्यन्तमेकमेव दुःखमस्तु एवमेव सुखेऽपि चेत्। न। यदा तद् दुःखोत्पत्तिस्तदान्येषामपि दुःखानि उत्पद्यन्ते। तेषां चतुर्थादिक्षणेऽप्रत्यक्षात्तृतीयक्षणे नाशो वाच्यः। तदनुरोधेन तत्क्षणोत्पन्नदुःखनाशत्वावच्छिन्नं प्रति वस्तुगत्या यस्तदुत्तरक्षणस्तत्क्षणोत्पन्नत्वेन तत्क्षणवृत्तित्वविशिष्टत्वेन वा कारणत्वमनुगतरूपेण निखिलतत्क्षणो-

त्पन्नदुःखनाशसाधारणं वाच्यमित्यर्थात् तत्क्षणोत्पन्नसुखदुःखादेः क्षणद्वयस्थायित्वात् । न चैवं तत्क्षणानामप्यानन्त्यात्तत्तत्क्षणभेदादनन्तकार्यकारणभावस्वीकार इति वाच्यम् । इष्टत्वात् । तवापि द्विक्षणस्थायिसुखादिनाशे तत्तत्क्षणोत्पन्नव्यक्तीनामिव विनिगमनाविरहेण तत्तत्क्षणानामपि हेतुत्वेन क्षणभेदेन कार्यकारणभावबाहुल्यात्तत्क्षणोत्पन्ना यावत्यो व्यक्तयस्तद्भेदात्क्षणभेदाच्च कार्यकारणभावभेदः । मम तु तत्साधारणो ह्येक एवेति लाघवमिति दिक् ।

परे तु तत्तत्क्षणोत्पन्नदुःखाद्यपेक्षया तत्तत्क्षणानां न्यूनताभावेन तत्तद्व्यक्तित्वापेक्षया तत्तत्क्षणोत्पन्नत्वेन करणत्वे कारणतावच्छेदके गौरवात्तेन रूपेण न नाशकता । एवं नाश्यतापि न तत्तत्क्षणोत्पन्नसुखत्वेन, गौरवात् । किं तु तत्तद्व्यक्तित्वेनेति । तत्कालोत्पन्नदुःखादिविशेषस्य बहुकालावस्थायित्वे बाधकाभाव इति । तन्न । यत्क्षणे दुःखादेरुत्पत्तिस्तत्पूर्वक्षणावृत्तिदुःखत्वादिना नाश्यतावच्छेदकत्वात् । न च तत्पूर्वक्षणानामपि नानात्वेन कार्यतावच्छेदके नानात्वं समानं गौरवमपरमधिकमिति वाच्यम् समनियताभावानामेकत्वेन तत्क्षणवृत्तित्वाभावतत्क्षणसमानकालीनक्षणवृत्तित्वाभावयोरेकत्वेन तत्क्षणवृत्तित्वाभावस्य स्वरूपेण कार्यतावच्छेदकप्रवेशेन गौरवाभावात् । एवं कारणतापि यत्क्षणे दुःखादेरुत्पत्तिस्तत्क्षणावृत्तित्वेन लाघवात् । न च दुःखादेरुत्पत्तिद्वितीयक्षणोत्पन्नदुःखादेरपि तत्पूर्वक्षणावृत्तित्वेन नाश्यत्वात्तदुत्पत्तिक्षणावृत्तित्वेन नाशकत्वाच्च क्षणिकत्वापत्तिरिति वाच्यम् । तस्यापि स्वपूर्वक्षणावृत्तित्वेन स्वोत्पत्तिक्षणा-

वृत्तिनाश्यतया कारणान्तराभावात् क्षणिकत्वासम्भवात्। यत्क्षणे यानि दुःखादीनि उत्पद्यन्ते तेषां तत्पूर्वक्षणावृत्तिदुःखत्वादिना नाश्यता तदुत्पत्तिक्षणे यः तत्क्षणावृत्तित्वेन नाशकतायाः सर्वत्र स्वीकारात्। न च स्वोत्पत्तिक्षणे नष्टस्यापि स्वक्षणावृत्तित्वेन स्वनाशकतया स्वस्य क्षणिकत्वापत्तिरिति वाच्यम्। तदुत्तरक्षणवृत्तित्वस्यापि नाशकतावच्छेदके निवेशात्।

वस्तुतस्तु नाशे प्रतियोगिनोऽपि कारणतया न तदुत्पत्तिक्षणे तन्नाशः। द्वितीयक्षणे तु तन्नाशसम्भावनापि न। नाशकस्याभावादिति तत्त्वम्। न च बुद्धिसुखदुःखेच्छाप्रयत्नधर्माधर्मद्वेषशब्दसाधारणी जातिरेकैव कल्प्यतां, तथा च तत्साधारण एक एव कार्यकारणभाव इति वाच्यम् ज्ञानत्वादिना सङ्करप्रसङ्गात्। न च सुखदुःखसाधारणी एका कल्प्यताम्। इष्टत्वादिति वदन्ति। तन्न। विनिगमनाविरहेण तत्तद्व्यक्तित्वेन नाशकताया दुर्वारत्वात्। एतत्तत्त्वं गुणरहस्यटिपण्यां वेदितव्यम्।

वस्तुतस्तु तत्तत्क्षणवृत्तिनाशे तत्तत्क्षणावृत्तेर्नाशकत्वं ज्ञानेच्छासाधारण्येन वाच्यम्। न च तत्तत्क्षणावृत्तिघटादेः क्षणिकत्वापत्तिः। द्रव्यनाशादावसमवायिकारणनाशादेर्हेतुत्वे नातिप्रसङ्गविरहात्। अत एवेश्वरज्ञानादेस्तत्तत्क्षणावृत्तित्वेनैव वारणात् सर्वज्ञानेच्छादिसाधारणवैजात्यकल्पनमपि निरस्तमिति दिक्।

इच्छात्वजातिमतीच्छा। सा चेच्छामीत्यनुगतमानसप्रत्यक्षसिद्धा।

केचित्तु द्वेषान्यत्वे सति प्रयत्नासाधारणकारणात्मविशेषगुणवृत्तिगुणत्वव्याप्यजातिमत्त्वं तल्लक्षणमाहुः।

सा च सुखे दुःखाभावे च सुखत्वदुःखाभावत्वप्रकारिका सुखत्वदुःखाभावत्वप्रकारकज्ञानसाध्या[1]। तत्साधनेषु च सुखे दुःखाभावसाधनताज्ञानसाध्या । ननु सुखसाधने पाकादिच्छा न स्यात् तत्र सुखस्य दुःखाभावस्य वा साधनत्वस्याभावेन तज्ज्ञानासंभवादिति चेत्। न । येन रूपेण यत्रेच्छा तद्रूपाश्रयसाधनताज्ञानस्येच्छाहेतुत्वात् । इष्टसाधनताज्ञानस्य धर्मितावच्छेदकधर्मप्रकारकेच्छाजनकत्वान्नान्यरूपेणेच्छा ।

कामोऽभिलाषो रागश्च संकल्पः करुणा तथा ।

वैराग्यं कपटं भावः स्पृहा तृष्णा तथैव च ॥

लोभादिकमुपायेच्छा भेदा एव तु विश्रुताः ।

तत्र मैथुनेच्छा कामः । अभ्यवहरणेच्छाऽभिलाषः । पौनःपुन्येन विषयसङ्गेच्छा रागः । अनासन्नक्रियावश्यकर्त्तव्येच्छा संकल्पः । निरुपाधिकपरदुःखप्रहाणेच्छा करुणा। दोषदर्शनाद्विषयपरित्यागेच्छा वैराग्यम् । परवञ्चनेच्छा कपटम्। अन्तर्निगूढेच्छा भावः । परद्रव्यादानेच्छा स्पृहा अवश्यकर्तव्येऽपि स्वद्रव्यापरित्यागेच्छा कार्पण्यम् । अन्यायेन परद्रव्यादानेच्छा लोभः। इदं च स्वरूपकीर्त्तनं न तु लक्षणम्। अतिव्यापकत्वादव्यापकत्वाच्च। लक्षणं च भक्तिश्रद्धादेरिव जातिविशेषा विषयताविशेषास्तत्तत्क्रियाभेदादुपाधिभेदाद्वा बोध्याः। एवं चिकीर्षासिसृक्षासंजिहीर्षालक्षणमपीति दिक् ।

१ इच्छा द्विविधा । फले फलसाधने च । फलं द्विविधम् । सुख दुःखाभावश्च । तत्र फलेच्छा प्रति फलज्ञान कारणम् । उपायेच्छा प्रति इष्टसाधनताज्ञान कारणम । एव फल साधनस्यपीष्टात्वातफलसाधनेच्छा प्रत्यपीष्टसाधनताज्ञान कारणमिति विवेकः ।

धौ निरोद्धव्येति बोध्यम् । यत्तु त्वङ्मनोयोगरूपकारणाभावात्सुषुप्तौ ज्ञानसामान्याभाव इति तन्न । इन्द्रियाद्युत्पत्तेः प्रागेव हिरण्यगर्भस्य ज्ञानोत्पत्त्या ज्ञानसामान्ये तस्य हेतुत्वाभावात् । गाढतमोरूपदोषेतरसर्ववृत्त्यभावस्यास्माभिरप्यङ्गीकारात् ॥

अथ स्मृतिं लक्षयति ।

**अनुभूतविषयासम्प्रमोषः स्मृतिः ॥ ११ ॥**

पूर्वमनुभूतौ यौ विषयौ वृत्तितदारूढार्थविषयरूपौ तयोरसम्प्रमोषोऽस्तेयमनपहरणं धर्मधर्म्यभेदात्तद्वतौ तदुभयविषया वृत्तिः स्मृतिरित्यर्थः । एव च स देवदत्त इत्येव स्मरणाकारः । तत्ता च पूर्वानुभूततैव । यद्यपि समूहालम्बनात्मकनानापदार्थानुभवेऽपि दृश्यते कस्य चिदेव स्मरणं, तथाप्यनुभवबलाद्विषयाशप्रमोषस्वीकारोऽस्तु न तु वृत्त्यशप्रमोषः विषयोद्बोधकस्य नियमेन वृत्त्यंशोद्बोधकत्वात् । तथा हि वृत्तिग्राह्यं विषयं ज्ञानं चैतन्यरूपं विषयवृत्त्युभयाकारप्रतिबिम्बवत्स्वबिम्बाश्रये तज्जातीयमेव संस्कारमारभते तादृशस्य च संस्कारस्य स्वाभिव्यञ्जककालाद्युद्बुद्धस्य स्वसमानाकारग्राह्यग्रहणोभयविषयकस्मृतिजनकत्वात् । समानाकारत्वेनैवानुभवसंस्कारस्मृतीनां कार्य्यकारणभावात् । एतेन स्मृतिर्ग्राह्यविषयैव वृत्तिविषयसंस्कारे मानाभावादिति प्रलपितमपास्तम् । ननु समानप्रकारकानुभवस्य स्मृतिं प्रति कारणत्वं प्रकृते च तव मतेऽयं घटो घटमहं जानामीत्यनुभवो विषयप्रकारकज्ञानविशेष्यकः स्मृतिस्त्वयं स घट इत्याकारा विषयविशेष्यिका ज्ञानप्रकारिकेति तादृशानुभवेन नेदृशं स्मरणमिति चेन्न । लाघवेन समानाकारत्वेनैव कार्य्यकारणभावान्न तु प्रकारतानिवेशोऽपि गौरवात् । तदुक्तं भाष्ये "ग्रहणाकारपूर्वा बुद्धिर्ग्राह्याकारपूर्वा स्मृतिरिति" । पूर्वशब्दो विशेष्यपरः, बुद्धिरनुभवः, सा च द्विविधा

भावित्वेन सूचितस्मर्तव्यार्थो यथा स्वप्ने, तद्भिन्ना च यथा जाग्रत्समये । सर्वोऽपि स्वप्न एतज्जन्मनि जन्मान्तरे वा पूर्वदृष्टविषय एवेति बोध्यम् । सर्वाश्चैताः स्मृतयः प्रमाणविपर्य्ययविकल्पनिद्रास्मृतीनां प्रभावाज्जायन्ते इति स्मृतेरन्ते उपन्यासः । सर्वाश्चैता वृत्तयश्चित्तद्रव्यस्य विषयाकारा द्रव्यरूपाः परिणामा सुखदुःखमोहगुणिका रूपादिमत्यो भार्या इव पुरुषस्य भोग्या अतो निरोद्धव्याः । न च सुखात्मकत्वेनोपादेया एव किं न स्युः । सुखानुशयी सुखविषयो रागो, दुःखानुशयी द्वेषो, मोहः पुनरविद्येत्यग्रे वक्ष्यमाणत्वेन सुखस्यापि रागजनकत्वेन दुःखतया क्लेशत्वात् । आसां च निरोधे सम्प्रज्ञातासम्प्रज्ञातयोगौ भवतः ॥

अथ सा निरोधे क उपाय इत्यत्राह ।

## अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥

प्रयाजादीनामपूर्वरूपव्यापारभेदादिव चित्तस्थितिदोषदर्शनं ज्ञानप्रसादरूपव्यापारभेदाभ्यां समुच्चिताभ्यां तन्निरोध इत्यर्थः । यथा कदाचिन्नदी समुद्राभिमुखं वहति कदाचिद्वैपरीत्येन भूम्यभिमुखी तथैषा चित्तनदी उभयतो वहति मोक्षाय संसाराय च तत्र यदा कैवल्याभिमुखी विवेकविषयनिम्ना तदा मोक्षार्था । यदा तु संसाराभिमुखी अविवेकविषयनिम्ना तदा संसारार्था । तत्र वैराग्येण विषयमार्गगं स्रोतः क्रमेण खिलीक्रियते शोषं प्राप्यते विवेकदर्शनाभ्यासेन च विवेकमार्गगं स्रोत उद्घाट्यते बलवत् क्रियते येन कैवल्यसागरे सा लीयत इत्युभयाधीनश्चित्तवृत्तिनिरोध इति भावः ।

उक्तं च गीतायाम् ।

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥

इति ।

तत्राभ्यासं लक्षयति ।

**तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥**

तत्र तयोर्मध्ये वृत्यन्तरशून्यस्य चित्तस्य या हर्षशोकादितरङ्गरहिते काग्रवृत्तिधारा सा स्थितिः । स्थिताविति च विषयसप्तमी[१]। तदर्थो यो यत्नो वीर्योत्साहापरपर्य्यायः सोऽभ्यास इत्यर्थः । उक्तस्थितिसंपादनेच्छया श्रद्धावीर्य्यस्मृतिप्रज्ञादिरूपवक्ष्यमाणतत्साधनानुष्ठानविषयो यत्न इति यावत् ॥

नन्वनादिव्युत्थानसंस्कारेण प्रतिबन्धात्कथमभ्यासस्तां संपादयेदत आह ।

**स तु दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढभूमिः॥१४॥**

स तु अभ्यासस्तु दीर्घकालं नैरन्तर्य्येण तयोर्ब्रह्मचर्य्यविद्याश्रद्धादिसम्पादितस्वरूपसत्कारवान्यथा भवति तथा आसेवितः कृतो दृढभूमिः । व्युत्थानसंस्कारेण सहसाऽनभिभूतस्थितिविषयो भवतीत्यर्थः ॥

अथ वैराग्यं लक्षयति ।

**दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥**

अपरवैराग्यं चतुर्विधं यतमानसंज्ञा व्यतिरेकसंज्ञा एकेन्द्रियसंज्ञारूपवितृष्णाचयरूपं वशीकारसंज्ञा च । तत्र वैराग्यसाधनानामर्ज्जनरक्षणक्षयहिंसाद्यनन्तदोषदर्शनानां ज्ञानपूर्वमनुष्ठानमाद्या, विरक्तिर्दोषदर्शनादिति स्मृतेः । जितान्येतानीन्द्रियाणि एतानि जेत-

(१) अत्र यद्यपि वार्तिके चर्मणि द्वीपिनमित्यादिवन्निमित्तसप्तमीत्युक्तं, तथाऽपि तस्याः कर्मयोग एवानुशासनात्प्रकृते कर्मयोगाभावाद्भट्टैर्विषयसप्तमीत्युक्तम् । वैषयिके आधार इति तदर्थः ।

व्यानीति व्यतिरेकावधारणा द्वितीया। बाह्येन्द्रियविषयेषु रागद्वेषादित्वये सति मानापमानादिविषयकरागद्वेषाद्यपसारणा तृतीया। एतत्त्रितयाभ्यासेन हि विषयसंयोगेऽपि दोषदर्शनमप्रतिबद्धं जायते। वैराग्याद्दोषदर्शनमिति स्मृतेः। चतुर्थलक्षणमिदं, रागाभावमात्रं तु न वैराग्यं रोगादिनिमित्तकारुचौ तद्व्यवहाराभावात्। उक्तवैराग्यत्रयमपि न निरोधहेतुः तद्वैराग्यानन्तरमपि विषयसान्निध्येन चित्तक्षोभतः सौभर्य्यादेर्योगानिष्पत्तेः। स्त्रियोऽन्नपानमैश्वर्यमिति दृष्टविषये वितृष्णस्य स्वर्गवैदेह्यप्रकृतिलयत्वप्राप्तिरूपानुश्रविकविषये वितृष्णस्य पूर्वोक्तत्रिविधवैतृष्ण्याभ्यासवतो दिव्यादिव्यविषयसंनिधानेऽपि विषयदोषदर्शिनश्चित्तस्य दोषसाक्षात्काररूपप्रसंख्यानस्य बलवत्त्वाद्धेयोपादेयत्वबुद्धिशून्यत्वरूपा वशीकारसंज्ञा तद्वैराग्यमित्यर्थः। अनुश्रूयते गुरोरित्यनुश्रवो वेदस्तद्बोधित आनुश्रविकः स्थूलदेहविरहेऽपि लिङ्गदेहेनैव भोगभाजो महदाद्युपासका देवा विदेहास्तद्भावो वैदेह्यम्। ये तु प्रकृतावात्मत्वोपासनया सावरणब्रह्माण्डाद्बहिर्भूतप्रकृत्याख्यावरणलिङ्गदेहेन सह गतास्तेषां भावः प्रकृतिलयत्वं, विदेहास्तु सावरणब्रह्माण्डान्तर्गता इति भेदः ते च मलिनाल्पैश्वर्य्यभोगाः। प्रकृतिलयास्तु तेषामपीशाः स्वसङ्कल्पमात्रनिर्मितसत्वप्रधाननिर्मलविषयभोगास्त ईश्वरकोटय उच्यन्ते। प्रलयकालीनप्रकृतिलयास्तु नेह गृह्यन्ते तेषां भोगाभावात्। एतदपरं वैराग्यमुत्तरसूत्रे परग्रहणात्॥

परं वैराग्यमाह।

**तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥**

तद्वैराग्यमात्मसाक्षात्काराभ्यासाद्धेतोरुत्पद्यमानं सकलगुणेषु वैतृष्ण्यं परं श्रेष्ठं वैराग्यमित्यर्थः। किमस्य श्रेष्ठत्वमिति चेच्छृणु, पूर्वं विषयदोषदर्शनाद्विषयेष्वेव वैराग्यं न तु ज्ञाने। यद्यपि

ज्ञानेऽपि विनाशित्वादिदोषदर्शनं तदाऽस्ति तथापि तत्र नालं बुद्धिरूप वैराग्यमविद्यानिवृत्याख्यतत्प्रयोजनेऽपेक्षासत्वाद्दृष्टानुश्रविकदोषदर्शी तेभ्यो विषयेभ्यो विरक्त पुरुषसाक्षात्काराभ्यासादपरिणामित्वादिज्ञानरूपपुरुषविवेकेन स्थूलरूपव्यक्तसूक्ष्मरूपाव्यक्तधर्मकेभ्य सत्वादिगुणेभ्यो विरक्तो भवति । एवं द्विविध परस्परभिन्न वैराग्य तत. समूलाविद्यानिवृत्तौ यदुत्तरं ज्ञानप्रसादरूप वैराग्यं तत् श्रेष्ठम् । यद्यपि सूत्रे वैतृष्ण्यं तृष्णाभावरूपमुक्त तथापि अभावस्याधिकरणावस्थाविशेषरूपत्वेन चित्तस्येदृशज्ञानावस्थैव तृष्णाभाव. । यद्वा ज्ञानप्रसादेन वैतृष्ण्यागतविशेषणानुमानाल्लिङ्गलिङ्गिनोरभेदोपचाराद्भाष्ये एवमुक्तम् । यस्योदये सति निष्पन्नात्मज्ञानो योगी प्रापणीयं ज्ञानं प्राप्तमविद्यादयः क्षेतव्याः क्लेशाः क्षीणाः देहाद्देहान्तरसंचाराख्यो भवसङ्क्रमोधर्म्माधर्मकार्य्यभूतो विच्छिन्नो न पुनर्भविता यस्याविच्छेदाज्जननमरणधारेति मन्यते स ज्ञानप्रसादो ज्ञानस्यैव पराकाष्ठा दुःखात्मिका विवेकख्यातिरपि शाम्यत्वित्येवं रूपा तत्परं वैराग्यं यस्य नान्तरीयक नियत फलं कैवल्यमिति दिक् ॥

अथाभ्यासवैराग्यरूपोपायद्वयेन निरुद्धराजसतामसवृत्तेः कति प्रकारः संप्रज्ञातयोग इत्याशङ्कायामाह ॥

**वितर्कविचारानन्दास्मितानुगमात्संप्रज्ञातः ॥ १७ ॥**

साक्षात्काररूपवितर्कादिभिरनुगमात्सम्प्रज्ञातो वितर्कादिभूमिभेदैश्चतुः प्रकार इत्यर्थः । अत्र भाष्ये वितर्कविकलः सविचार इत्येव प्रयोगाद्रूपानुगमादिति सूत्रपाठः प्रामादिकः । वस्तुतस्तु चतुर्थेऽस्मितामात्र इत्युक्त न तु सास्मिता इति तेन मात्रार्थकरूपशब्दघटित. पाठो युक्त इति । तत्र वितर्कश्चित्तस्य स्थूले आलम्बने

आभोगः स्वरूपसाक्षात्कारः । तथाहि यन्निज शरीरं वा चतुर्भुजादिकं वा स्थूल षड्विंशतितत्वसङ्घातमाश्रित्य प्रथमं भावना प्रवर्त्तते तदालम्बन स्थूलम्, अदृष्टजातीयचैतन्यपर्य्यन्तेषु विवेकेन पूर्वं चिन्तनाऽसम्भवात् । योगबलादेव हि तानि पश्चात्साक्षात्क्रियन्ते । एव च स्थूलभूतेन्द्रिययोरदृष्टाश्रुतामतविशेषसाक्षात्कारः सवितर्कः वितर्को विपरीततर्कण तच्च शब्दार्थज्ञानविकल्पादित्यग्रे स्फुटीभविष्यति । सवितर्कनिर्वितर्कौ चास्य वितर्कस्यावान्तरभेदौ वक्ष्यति । अदृष्टाश्रुतादीना साक्षात्कारो योगबलादेवेत्युक्तम् । विचारस्तु तत्रैवालम्बने भूतेन्द्रियकारणत्वेनानुगता ये पञ्चतन्मात्राहङ्कारमहत्प्रकृतिरूपा उत्तरोत्तरसूक्ष्मा अर्थास्तदाकारत्वात्सूक्ष्मचित्तस्याभोगः सूक्ष्मगताशेषविशेषसाक्षात्कारस्तदनुगतः सविचारः सूक्ष्मवस्तुपर्यन्तं विशेषेण चरण विचारः सविचारनिर्विचारौ चास्य विचारस्यावान्तरभेदौ वक्ष्यति । आनन्दस्तु तत्रैवालम्बने चित्तस्य सूक्ष्मभूम्यारोहात्सत्वप्रकर्षेण जायमाने ल्हादाख्यसुखविशेषे आभोगः साक्षात्कारः स आनन्दविषयत्वादानन्दस्तदनुगतः सानन्द । अत्राह सुखीत्यानन्दगोचरैव वृत्तिः । यस्त्वानन्दशब्देन तद्वानिन्द्रियवर्ग इति तन्न, ततः सूक्ष्मपञ्चतन्मात्रादियोगोत्तरं पुनः स्थूलारोहस्यानौचित्यात् । एवमग्रेऽस्मितापदस्याहङ्कारपरतया व्याख्यानमपि चिन्त्यम् । अस्मिता तु केवलपुरुषविषया संवित्साक्षात्कारोऽस्मीत्येतावन्मात्राकारा देहादिभिन्नोऽस्मीत्येतावन्मात्राकारा वा । अस्य जीवात्मपरमात्मविषयकत्वेन द्वैविध्य वक्ष्यते । विविक्तचेतनाकारस्यैवास्मिताशब्देनोपलक्षणात्तदनुगतः सास्मित इति । सोपाधिकेश्वरसम्प्रज्ञातस्तु सविचारे प्रवेशमर्हति । क्वचित्तु आनन्दं विचारे प्रवेश्य त्रेधा विभाग एवोक्तः।

तत्र पूर्वपूर्वभूमिकात्यागेनोत्तरोत्तरभूम्यारोह एकत्रैवालम्बने कार्यो ऽन्यथा पूर्वपूर्वोपासनात्यागदोषापत्तेः । चित्तचाञ्चल्यदोषापत्तेश्च । वितर्कादिक्रम औत्सर्गिक एकदा चित्तस्य परमसूक्ष्मे प्रवेशासम्भवात् 'स्थूले विनिर्जितं चित्तं ततः सूक्ष्मे निवेशयेदि'ति स्मृतेः । धानुष्कादौ तथा दृष्टत्वाच्च । तत्र स्थूलादिविषयरागे उत्तरभूमौ चित्तसमाधानाऽसम्भवोऽतः स्थूलादिसाक्षात्कारे तत्र तत्र दोषदृष्ट्योत्तरोत्तरभूम्यारोहः । यदि तु कस्य चिदीश्वरप्रसादादादावेवोत्तरभूम्यारोहो भवति तेन पूर्वभूमिकाभ्यासस्तत्सिद्धिकामना विना न कार्य्यः तत्सिध्यैतज्जन्यसिद्धयोऽपि भवन्तीत्यन्ये । जपादिजन्याध्रुवादीनां चतुर्भुजादिसाक्षात्कारादयं सवितर्को विलक्षणः । तेषां हि तपोध्यानादितुष्टः परमेश्वरः स्वयं शरीरं निर्माय पुरः प्रकटीभूय वागादि व्यवहारं चक्रे । योगिनस्तु योगबलेन श्वेतद्वीपादिस्थमेव तच्छरीरमन्यत्र स्थिताः पश्यन्ति तद्गतं बाह्याभ्यन्तरमतीतादिकं गुणादि च पश्यन्तीति । न च स्थूले प्रथमे आलम्बने कथं सूक्ष्मदृष्टिर्यथार्था सर्वेषां, षड्विंशतितत्वकार्यतया कार्यकारणयोश्चाभेदेन तद्रूपत्वात् । तत्राऽपि कार्यरूपताऽस्थिरा तदपेक्षया कारणरूपता सत्या । यद्यपि सुखवद्दुःखमोहावपि सर्वत्र तथाऽपि सुखरागेणैव संसारादात्मदर्शनप्रतिबन्धाच्च । तदेवाशेषतो द्रष्टव्यमित्यानन्दमात्रे तदुपदेशः येन तत्राऽपि दोषदर्शनेन योगजसिद्धिष्वपि वैराग्यं भवत्वित्याशयेन । अस्मिता चरमभूमिका तदुत्तरं ज्ञातव्याभावात् । तत्राऽपि पूर्वं जीवात्मविषयाऽस्मिता ततः परमात्मविषया सूक्ष्मतरत्वात् । जीवस्वरूपज्ञानं हि प्रत्यक्षं तत्रापरिच्छिन्नकूटस्थत्वादिज्ञानस्यैव तत्साक्षात्कारत्वात् । तत्रान्त्य. कौर्मे उक्तः ।

यत्र पश्यति चात्मान नित्यानन्द निरञ्जनम् ।
मामेक स महायोगो भाषित. पारमेश्वर. ॥

इति । 'यत्र साक्षात्प्रपश्यन्ति विमुक्ता विश्वमीश्वरमि'ति । कारणरूपेण विभुत्वेन च सर्वत्रानुगमादस्मितायाः अचेतनघटाद्यालम्बनेष्वपि सम्भव इति दिक् । एवञ्च पूर्वपूर्वभूमिषूत्तरोत्तरभूमिविषयस्याऽपि चिन्तनादाद्यश्चतुष्टयानुगतः, उत्तरोत्तरभूमौ च पूर्वपूर्वपरित्यागाद्द्वितीयस्त्र्यनुगतः, तृतीयो द्व्यनुगत., चतुर्थस्त्वस्मितामात्र इति । तत्राद्ये तत्प्राय:पिण्डवदेकीभावेन सर्वेषा भानम् । अत्र सामान्यतो विचारादित्रयविषयग्राहकतामात्रेण तदनुगतत्वमुक्तमतो न साङ्कर्यम् । चत्वारोऽप्येते सालम्बनाः सबीजा योगा इत्युच्यन्ते ध्येयरूपालम्बनयोगादिति दिक् ॥

अथासम्प्रज्ञातस्य क उपाय. किञ्च स्वरूपमित्याकाङ्क्षायामाह ।

**विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ १८ ॥**

वृत्त्यापि विरम्यतामिति प्रत्ययो विरामप्रत्ययः परवैराग्यं तस्याभ्यासात्पौन पुन्याज्जायत इति उपायकथन तदभ्यास' पूर्वो यस्येति विग्रहः । सस्कारशेष इति स्वरूपकथनम् । अन्य इति लक्ष्य असम्प्रज्ञात इत्यर्थः ।;सर्ववृत्तिविलये सस्कारशेषो निरोधश्चित्तस्य यत्र स समाधिरसम्प्रज्ञातः तस्योक्त परवैराग्यमुपायः । सालम्बनो ह्येकाग्रतारूपोऽभ्यासो वृत्तिरूपत्वेन विरोधित्वान्न तदुत्पत्तये समर्थ इति परवैराग्याख्यश्चिन्तनीयवस्तुरहितो विरामप्रत्यय एवाखिलध्येयवैराग्यरूपो ध्येयार्थशून्येन तेन साधनतयाऽऽश्रीयते । एवं हि कृतवैराग्याभ्यासं चित्त निर्विषयवृत्तिरूपकार्याकरणादभावप्राप्तमिव

मृतवद्भवति । अत एषोऽसम्प्रज्ञातो जन्मबीजकर्मशून्यादस्य इत्युच्यते ॥

सोऽयं पूर्वाचार्यैरुपायप्रत्ययो भवप्रत्ययश्चेति द्विधोक्तः । तत्राद्यो योगिनामेवेति बहुवक्तव्य इति सूचीकटाहन्यायेनान्त्यं प्रथमं निरूपयति ।

**भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥**

भवो जन्म तदेव प्रत्ययं कारणं यस्येत्यर्थः । तत्र स्थूलशरीरनैरपेक्ष्येण बुद्धिवृत्तिमन्तो महदादयो देवास्तेषां साधनानुष्ठानं विनैवाऽसम्प्रज्ञात एतद्देहपातानन्तरं तत्तत्त्वे प्रादुर्भावरूपजन्मनिमित्तको भवति तत्तत्स्थानसाद्गुण्यनौत्पत्तिकाज् ज्ञानात् । ते हि दैनन्दिने प्रलये कदाचित्सर्गकालेऽपि स्वसंस्कारमात्रशेषेण निरोधावस्थेन चित्तेन पदमिवकैवल्यं प्राप्नुवन्तो व्युत्थानकाले देवभावयोग्यं देवभावप्रापकसंस्कारफलमैश्वर्यभोगं प्रारब्धकर्मयन्त्रिता अतिवाहयन्ति ततो मुच्यन्ते । तथेश्वरोपासनया प्रकृतिदेवतोपासनया वा ब्रह्माण्डावरणानि भित्वा लिङ्गशरीरेण सह प्रकृत्यावरणं गतास्ते प्रकृतिलयास्तेऽप्यसमाप्तकार्यत्वात्साधिकारे चेतसि उपासनाबलेन प्रकृतिलीने संस्कारमात्रशेषतया कैवल्यपदमिवानुभवन्ति तावद्यावदधिकारशेषवशाच्चित्तं व्युत्थितं न भवति व्युत्थानोत्तरञ्च तत्तदेव भोगेनाधिकारसमाप्तौ मुच्यन्ते । यत्तु ।

दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकाश्च शतं पूर्णं सहस्रं त्वाभिमानिकाः ।
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः ।
पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः ॥

इति । तत्तु इन्द्रियाद्युपासकानामनुत्पन्नज्ञानानां कर्मदेवाना तत्तत्पदावस्थितिकालपरिच्छेदक न तु तेषामसम्प्रज्ञातसमाधिकाल-परिच्छेदक, इन्द्रियाद्युपासकाना तत्तदभिमानिसूर्यादिपदप्राप्तेरन्यत्र श्रवणात् । सम्प्रज्ञातस्य तु न भवप्रत्ययरूपो विशेषः धारणाध्यान-समाधीना सम्प्रज्ञातेन्तरङ्गत्वेन तेषान्निष्पत्तौ तत्रैव जन्मनि सम्प्रज्ञा-तावश्यम्भावादिति दिक् ॥

अथ द्वितीयमसम्प्रज्ञात तदधिकारिणश्चाह ॥

**श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥**

इतरेषा विदेहप्रकृतिलयातिरिक्तानां देवानां वा मनुष्याणां वा न जन्ममात्रादसम्प्रज्ञातो भवति किं तु श्रद्धादिपञ्चकेभ्य एवे-त्यर्थः । तत्पञ्चकसम्पत्तिमन्तो हि योगिनः । तत्र श्रद्धा योगे मे प्रीतिर्भूयादित्यभिलाषरूपश्चेतस. सम्प्रसादः, सा हि कल्याणी समर्था मातेव योगप्रतिबन्धसहस्रतिरस्कारेण योगिनं याति ततः श्रद्धायु-क्तस्य तस्य विवेकार्थिनो वीर्यं धारणारूप भवति ततः प्राप्तधारणस्य स्मृतिर्ध्यानमुपतिष्ठते तदुपस्थितावनाकुल चित्त क्रमेण समाधिमद्भ-वति । एव धारणाद्यङ्गत्रयात्सम्प्रज्ञातयोगवत आत्मतत्वसाक्षात्का-ररूपो विवेक उपजायते । येन यथार्थवस्तु सम्यक् जानाति ततस्त-त्साक्षात्काराभ्यासात्तद्विषयवैराग्ये सत्यसम्प्रज्ञातः समाधिरिति भावः । ते योगिनस्त्रिविधाः मृदूपायो मध्योपायोऽधिमात्रोपाय इति । उपायः श्रद्धादिः तस्याधिमात्रताऽतिप्रमाणता इतरे प्रसिद्धे । ते प्रत्येकं त्रिविधा । मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेग इति नव । संवेग उपायानुष्ठाने शैघ्र्यम् । यत्तु वैराग्यमिति, तन्न उपायकार्यं वैराग्यस्योपायमृदुत्वादिक विहाय स्वातन्त्र्येण मृदुत्वाद्यसम्भवात् । संवेगशब्दस्य तदवाचकत्वाच्च ।

तेषु मध्येऽधिमात्रोपायानां चेपीयसीसिद्धिस्ता दर्शयति ।

**तीव्रसंवेगानामासन्नः ॥ २१ ॥**

समाधिनिष्पत्तिस्तत्फललाभश्च भवतीति शेषः ।

**मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ २२ ॥**

तीव्रत्वस्यापि मृद्वादिभेदेन त्रैविध्यात्ततोप्यासन्नादपि विशेषस्तारतमरूपो भवति तीव्रत्वविशेषादित्यर्थः । एवञ्चाधिमात्रोपायस्य मृदुतीव्रसंवेगस्यासन्नः । ततोऽपि मध्यतीव्रसंवेगस्यासन्नतरः । ततोऽप्यधिमात्रतीव्रसंवेगस्यासन्नतमः समाधिलाभस्तत्फलं चेति शेषः ॥

ननु किमयमेवोपाय आसन्नतमः समाधावथोपायान्तरमप्यस्तीत्याशङ्कायामस्तीत्याह ॥

**ईश्वरप्रणिधानाद्वा ॥ २३ ॥**

पूर्वसूत्रस्थविशेष इत्यनुवर्तते । प्रणिधानमत्र तद्वाचकप्रणवजपस्तदर्थभावनमिति वक्ष्यमाणो भावनाविशेष एव, तेन जीवात्मसम्प्रज्ञातवतः पुरुषस्य पूर्वोपायेनैवासम्प्रज्ञात आसन्नतमः परमात्मविषयकसम्प्रज्ञातवतस्तु तदभावेप्यासन्नतमः स इति तात्पर्यम् । एवञ्चातितीव्राभ्यासनैरपेक्ष्येणायं श्रेष्ठ आद्योऽनुकल्प इति बोध्यम् । अत एव श्रुत्यादिषु बहुशो ब्रह्मज्ञानमेवोपदिश्यते मोक्षहेतुत्वेन क्वचिदेव तु स्वातन्त्र्येण जीवतत्त्वज्ञानमिति । नन्वेश्वरस्य सम्प्रज्ञातस्य कुतस्तदनपेक्षत्वमिति चेन्न । श्रुतिवाक्यैर्ब्रह्मण आत्मताज्ञाते तत्र प्रेमलक्षणभक्तितो जायमानाद्ब्रह्मात्मताचिन्तनरूपाद्वक्ष्यमाणात्प्रणिधानादभिमुखीकृत ईश्वरस्तं ध्यायिनमस्य समाधिमोक्षावासन्नतमौ भवेतामित्यभिध्यानमात्रेणासन्नतमासम्प्रज्ञातसिध्याऽनुगृह्णातीति भावः । अत्राऽपि वैराग्यं सहकारितयाऽपेक्षितमेवेति बोध्यम् ॥

अथ प्रधानपुरुषातिरिक्ततत्त्वसत्वे मानाभाव । उपाधिशुद्धस्य कस्य चिज्जीवस्यैवेश्वरत्वेन श्रुत्यादौ व्यवहारसम्भवादिति साङ्ख्याक्षेपे उत्तररूपन्तदतिरिक्तेश्वरलक्षणमाह ॥

**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः॥ २४॥**

पुरुषविशेष एवेश्वरो नातिरिक्तः, तदुपाधिश्च प्रधानमेवेति भावः। अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशा । कुशलाकुशलसाधनधर्म्माधर्मौः कर्माणि । तत्फलजात्यायुर्भोगरूपो विपाकः । भोगोऽत्र शब्दादिवृत्तिः । विपाककारणीभूता वासना आशयः । करभजातिनिर्वर्तकस्य कर्मणः प्राग्भवीयकरभभोगभावितवासनाभिव्यक्तिं विना करभोचितभोगाजनकत्वेन वासनाना विपाककारणत्वात् । एतैरपरामृष्ट इत्यर्थः । यद्यपि जीवोऽपि स्वतस्तदपरामृष्ट एव तेषां चित्तधर्मत्वात् । तथापि पुरुषयोद्धृनिष्ठजयपराजययोस्तत्स्वामिनि राजनीव चित्तफलभोक्तृत्वरूपचित्तस्वामित्वात्तच्च व्यपदिश्यन्ते। तत्फलभोक्तृत्व तत्फलसुखदुःखादिवृत्तिप्रतिबिम्बवत्वात् । तावतैव तत्र क्लेशादिमत्त्वव्यवहारो विदुषा समवायेन पुरुषे सुखादिबुद्धिस्त्वविद्या । ईश्वरस्तु ईदृशेन भोगेनापरामृष्ट एव पुरुषविशेषः । विवेकग्रहणे सत्येव सोपाधिसुखसाक्षितारूपो भोगस्तु तस्याप्यस्त्येव । 'उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वर' इति स्मृतेः । अभिमानपूर्वकसुखाद्यनुभवरूपो मुख्यो भोगस्तु तस्य 'अनश्नन्नन्योऽभिचाकशीती'ति श्रुत्या प्रतिषिध्यते । एकशरीरस्थत्वेन जीवभोग्यदुःखादिभोक्तृत्वञ्च प्रतिषिध्यते । अपरामृष्टत्व तत्परामर्शशून्यता । एतेन 'आद्यस्तु मोक्षो ज्ञानात्मे'ति वाक्येन ज्ञानस्यापि कैवल्यमोक्षादिशब्दार्थत्वात्कैवल्य ज्ञानं प्राप्ता कैवलानां जीवन्मुक्ताना स्वामिनः केवलिनो

हिरण्यगर्भादय सन्ति एतएवेश्वराः सन्त्वित्यपास्तम् । ते हि पूर्वस्थितान्येव प्रकृतिलयसम्बन्धीन्यष्टप्रकृतिष्वभिमानरूपाणि प्राकृताख्यानि विदेहसम्बन्धीनि वैकारिकाख्यानि शब्दादिविषयरागरूपाणि गृहस्थसम्बन्धीनि दानाध्ययनादिष्वभिष्वङ्गरूपाणि दक्षिणाख्यानि त्रीणि बन्धनानि छित्वा कैवल्य प्राप्ता इति तेषु तत्परामर्शशून्यत्वाभावात् । यथा च मुक्तानां पूर्वा बन्धकोटि. प्रज्ञायते प्रकृतिलयानाञ्चोत्तराऽपि बन्धकोटि' सम्भाव्यते नैवमीश्वरस्येति तस्य तत्परामर्षशून्यत्वमत स सदैव मुक्तः सदैवेश्वरश्च । तदुक्तम् ।

तत्र यः परमात्मा हि स नित्य निर्गुणः स्मृतः ।
कर्मात्मा पुरुषो योऽसौ मे त्तबन्धैः स युज्यते ॥

निर्गुणत्व गुणाभिमानशून्यत्वम् 'परस्तु निर्गुणः प्रोक्तो ह्यहङ्कारयुतोऽपर' इति नारदीयात् । सदैवेश्वरत्व सदैवाप्रतिहतेच्छायुक्तत्वम् । ईश्वरोपाधिसत्वस्य नित्यज्ञानेच्छासुखादिमत्वात् । तादृशस्याऽपि त्रिसदृशपरिणामाभावरूपसाम्यावस्थोपपत्तः । प्रलयेऽपि प्रधानस्य साम्यावस्थत्वमप्युपपन्नं द्विपरार्द्धान्ते तस्य लयेऽपि स्वकार्योकरणरूप एव । 'आत्मा वा इदमेक एवाग्रआसीन्नान्यत्किं चनमीषदि' ति श्रुत्या प्रलयेऽपि तस्य ऽर्थद्रष्टृत्वसिद्धेश्च । तस्मात्तदुपाधेर्ज्ञानादिलक्षणा वृत्ति. प्रलयेप्यस्ति, तद्वृत्ति विनैव तस्य ज्ञातृत्वाङ्गीकारे दृष्टानुसारत्यागापत्तिः 'ज्ञानशक्तिरहं परे' ति प्रकृत्यभिमानिदेवतावाक्यविरोधश्च 'तत्परेणेरित विषमत्व प्रयाती' ति श्रुतावीश्वरयत्नेनैव गुणवैषम्यश्रवणाच्च ।

प्रकृतिं पुरुष चैव प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास सम्प्राप्ते सर्गकाले महेश्वर ॥

इति स्मृत्या वैषम्यहेतुत्वेनाभजनकेच्छाया अपि तस्य स्मरणाच्च । प्रलये तदस्वीकारे तु प्रलये स्वसङ्कल्पेन स्वोपाधिं स्वस्माद्वियोज्येश्वरः शेते, पूर्वसर्गीयसङ्कल्पसंस्काराभ्यां च सर्गादावुपाधिरीश्वरेण सह संयुज्यत इति स्वीकार्य्यं स्यात् । तच्चायुक्तं प्रकृतसूत्रेण

क्लेशकर्मविपाकाद्यैर्वासनाभिस्तथैव च ।

अपरामृष्टमेवाहु पुरुषं ह्रीश्वरं श्रुति ॥

इति स्मृत्या चेश्वरोपाधौ संस्कारस्य प्रतिषिद्धत्वात् । किं चाग्रे वक्ष्यमाणं कालानवच्छिन्नत्वमपि भज्येत । उपाधिवृत्त्यभावेन तस्य कालावच्छिन्नत्वसम्भवात् । यत्तु प्रलये निरुद्धोऽप्युपाधिः पूर्वसर्गीयसङ्कल्पवासनाभ्यां स्वयं व्युत्थितो भवतीति शास्त्रं तद्दैनन्दिनप्रलये योगनिद्रया शयानस्य स्वयम्भोरुपाधिपरम् । तदुक्तं भाष्ये 'योऽसौ प्रकृष्टसत्वोपादानादीश्वरस्य शाश्वतिक उत्कर्ष' इति । प्रकृष्टं सत्वं रजस्तमोलेशेनाप्यस्पृष्टं कारणसत्वमुपादानादित्यनेन तदनभिभूतत्वं सूचयति । नचेच्छयोपादानमुपादानेनेच्छेत्यन्योन्याश्रयः, अनादित्वात् । तथा च श्रुतिः । 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति । 'तदैक्षत सोऽकामयत स एको ब्रह्मण आनन्दः साक्षी चेता केवलो निर्गुणश्चे'ति । आनन्दान्तमौपाधिकं स्वतो निर्गुणश्चाभिमानरहितत्वादित्यविरोध । ननु तस्य तादृश उत्कर्षः किं प्रमाणक इति चेन्न । तस्य श्रुत्यादिरूपशास्त्रप्रमाणकत्वात् । ननु शास्त्रप्रामाण्यमेव कुत इति चेन्न । तदुपाधिरूपं यत्प्रकृष्टसत्वं तद्वृत्तिरूपार्थज्ञानजन्यत्वेन तस्य प्रमाणत्वात् । नचान्योन्याश्रयः, शास्त्रप्रामाण्यात्प्रकृष्टसत्वसिद्धिस्तत्सिद्धौ च तन्मूलकतया तत्प्रामाण्यसिद्धिरिति वाच्यम् । ईश्वरसिद्धेः प्रागपि मन्त्रायुर्वेदादावर्थाव्यभिचारनिश्चयात्प्रामाण्यस्य दृष्टत्वेनान्यत्रापि शास्त्रे प्रामाण्यसिद्धेः ।

प्रकृष्टसत्त्वस्य च शास्त्रप्रामाण्यनिर्वाहकतामाचमचोक्तमिति तदभावात् । न च तस्यान्यकर्तृत्वं भवति । ओषधीनां तत्संयोगस्य वर्णोद्धारस्य चान्वयव्यतिरेकाभ्यां सामर्थ्यज्ञानस्यान्यस्य पुरुषायुषसहस्रेणाप्यशक्यत्वात् । नचागमादन्वयव्यतिरेकौ ताभ्यां चागम इति तत्सन्तानयोरनादित्वान्न दोष, महाप्रलये तयोर्विच्छेदात् । त्रिसदृशपरिणामक्षीरेक्षुरसादेर्दधिगुडादिरूपपरिणामात्पूर्वं सदृशपरिणामतायां दृष्टत्वेन महदादिविसदृशपरिणामवतः प्रधानस्य कदाचित्सदृशपरिणामावश्यकत्वेन साम्यावस्थारूपसदृशपरिणामस्यैव महाप्रलयत्वात् । विषयताकार्यकारणभाववाच्यवाचकभावैः समवायेन चेश्वरसत्त्वे वर्तमानयोः शास्त्रोत्कर्षयोरनादिसबन्धोऽत. सदैवेश्वरः प्रलयेऽपि ज्ञानेच्छाकृतिमान्सदैव क्लेशादिराहित्यरूपमुक्तत्ववाश्चेति सिद्धम् । एतेन स्वस्य प्रकर्षकार्यतया प्रकर्षं बोधयच्छास्त्रमनुमानमेव स्यान्नागम इत्यपास्तम् । स चाद्वितीयो यतस्तस्यैश्वर्यं साम्यातिशयाभ्यां रहितं यतस्तदैश्वर्यान्तरेण नातिक्रम्यतेऽतो निरतिशयं यदेव च सर्वातिशयि तदेवैश्वर्यमन्ययैश्वर्यमेव न, अप्रतिहतेच्छत्वरूपाभावात् । यत्र चैश्वर्येण काष्ठा प्राप्यते स ईश्वरः । अन्यच त्वैश्वर्यमौपचारिकमेव । तत्समानैश्वर्यस्य क्वाप्यभावात् । सत्वे हि द्वयोस्तुल्ययोरेकच वस्तुनि इदमल्पकालस्थायित्वरूपनवत्ववदस्तु, तद्विपरीतपुराणत्ववदस्त्विति कामनायामेकस्य सङ्कल्पसिद्धावपरेच्छाविघातादूनत्वं स्यादिति न समानानेकेश्वरसम्भवः । उभयोः सङ्कल्पसिद्धिस्तु विरुद्धत्वान्न भवत्येव । तस्माद्यस्य साम्येनातिशयप्रतियोगित्वेन च निर्मुक्तमैश्वर्यं स ईश्वरः स च पुरुषविशेष एवेति न

प्रधानपुरुषातिरिक्ततत्त्वापत्तिः । अविरुद्धाभिप्रायत्वे कृतमन्यैरेकेनैव कृतत्वात् । सम्भूयकारित्वेन कश्चिदीश्वरः स्यात्परिषद्वदिति दिक् । नन्वेकस्यैवात्मन आकाशस्येवोपाधिभेदैर्जीवेश्वरादिरूपत्वसम्भवेन लाघवादैकात्म्यमेवास्तु तत्त्वमस्यादिश्रुतिभिरात्मैक्यस्यैव प्रतीतेश्च भेदाभेदश्रुतिमध्ये भेदनिन्दयाऽभेदज्ञानस्य मोक्षफलकत्वकथनेन चाभेदवाक्यान्येव स्वार्थपराणि भेदवाक्यानि त्वारोपितभेदानुवादपराण्येव तत्तदुपाधिविशिष्टयोश्च जीवत्वेश्वरत्वे इति चेन्न । विशिष्टस्यानतिरेके जीवत्वेश्वरत्वबन्धमोक्षादिसाङ्कर्यापत्तेः । अतिरेकेऽनित्यत्वे तस्य विनाशितया बन्धमोक्षसामानाधिकरण्यानुपपत्तिः । अवच्छेद्याशस्य नित्यतया तदुपपत्तिः कार्य्योपाध्यवच्छेद्यत्वमेव बन्धः तत्त्याग एव मोक्ष, विशिष्टश्च सामान्यात्मनो भेदाभेदाविति चेदिष्टापत्तेः । अस्यैवास्मन्मते स्वीकारेण बाधकाभावात् । अस्माभिरपि सामान्यरूपेणाभेदो वैधर्म्यलक्षणभेदनिरासायेष्यते विशेषतस्तु भेद इति । एव चाग्निविस्फुलिङ्गादिदृष्टान्ता उपपन्नाः । आकाशादिदृष्टान्ताश्चाशांशिभावेनाविभागलक्षणाभेदस्य सार्वकालिकत्वेन पारमार्थिकत्वेपि किञ्चिदवच्छेदेन फेनबुद्बुदादिवदतिभङ्गुरस्य विभागलक्षणस्य भेदस्यापरमार्थिकस्यौपाधिकत्वप्रतिपादकाः, विवेकाख्यभेदज्ञानं हि पारमार्थिकाभेदज्ञानफलकमिति न तस्य मोक्षहेतुत्वे विरोध इति दिक् ॥

अथ तस्येश्वरस्य निरतिशयसार्वज्ञरूपं विशेषान्तरमाह ॥

**तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥**

सूत्रे सर्वज्ञेति भावप्रधानं, सर्वज्ञत्वस्य बी-

junction nor inherent relation between that non-existence and the floor

934 If non-entity is included in entity, then every thing is real, and what is real cannot be non-existent

935 If entity is included in non-entity, then since what is real is also non-existent, there is no foundation for any difference, and how can there be any relation where there is no difference?

936 As long as anything discriminative is found to exist on this earth, it is understood that that thing is no other than the real which is devoid of beginning, middle or end

937 Scripture itself teaches us the unity of the real *(sad-aikātmya)* by clearly declaring that "all this is real &c" and "reality is the root &c"

938 It will now be explained how it is against reason that the absence of a proof should be a proof, and the absence of an object, an object

939 The rule is that whatever makes known an unknown thing is a proof There is no proof in this sense in the want of a proof Hence it cannot be a proof

940 If the absence of an object is proved by the absence of proof, what is there to prove that very absence of proof?

941 It cannot be proved by the five proofs, such as direct perception &c ,[1] since they relate only to what is real, nor by their absence, through inference, for that itself is a thing to be proved

[1] प्रत्यक्ष, अनुमान, उपमान, शब्द, and अर्थापत्ति The Mimamsakas add अनुपलब्धि ।

942 If, like blue and other colors, direct perception etc is an attribute *(viseshana)* of the absence *(abhāva)*, then, since the absence is always qualified by that attribute, how can it result from the above proofs?[1]

943 If, on the other hand, you say that absence is without an attribute, then, the absence of an object would itself be a proof for want of any distinction[2]

944 To distinguish absence as that of a pot etc is not in my opinion, sound, for, the words have no connected sense, the two things being mutually exclusive

945 If it is conceded that two words expressing a thing and an absence can be compounded only if there is a connection in sense *(sāmarthya)* between them, then no such compound is admissible, since the pot &c and the absence are not mutually complementary

946 In the phrase "the absence of a thing," what is the exact force of the possessive, for, a formless, non-existent something can have no sort of connection whatever?

947 If absence be considered a separate thing, then how can one thing become another?[3] If, nevertheless, one thing can become another, then there will be no distinction as in the case of blue color[4]

---

[1] तर्हि नीलादिनोत्पलादेर्वैशिष्ट्यावदक्षादिना विशेषणेनाभावस्य वैशिष्ट्याद्विशिष्टोऽभावोनाक्षादिविषयस्तस्याशत स्वविषयत्वापत्ते. । Anandagiri

[2] Between the absence of object and the absence of proof, (which the opponent argues, is itself a proof).

[3] *viz* its absence

[4] The blue is of the very nature of the flower, and is inseparable from it This cannot be said of a thing and its absence

948 If absence is considered as not incapable of some connection (with the thing), then it does not make a negation of the thing with which it is so connected If it does not express that with which it is to be connected, then the connection itself will be impossible

949 Since no connection is possible in the absence of the thing, the possessive too admits of no meaning Nor can there be simultaneous prescription *(vidhi)* and prohibition *(nishēdha)*, owing to inconsistency [1]

950 Since thoughts are momentary, there is not even a continuity of thought, properly so called, nor is the blue color known by enquiring into the absence of every color but blue

951 There can be no negativing of an invisible thing, as the empty floor negatives the pot &c Nor can it be said to be qualified by the absence of other things, for that will be only when the absence of *every* other thing is known [2]

952 If a thing is no other than the absence of other things, the thing and absence will be as non-existent as a sky-flower If the absence of a thing is said to be a different thing by itself, then the existence of the one reality is self-established [3]

953 All proofs tend to establish this alone Where then is difference or negation? Even when the object of vision is a many colored painting, the painting is only a single thing, since the proof is one

[1] It has been stated in verse 941 supra that direct proof &c do not negative the thing which is absent The opponent now contends that they are partly affirmative and partly negative

[2] This requires Godly omniscience

[3] Since there is neither difference nor absence

954 If each color like blue, yellow, &c is seen by itself, where then is variety? If a thing is no other than difference, then the thing itself will be non-existent[1]

955 If difference is an attribute of something else then the thing, being undifferentiated, establishes itself by proof It cannot be both differentiated and undifferentiated, for, being inconsistent in itself, it cannot be amenable to a single proof If it be said that there is no inconsistency on account of its reality, then it is the reality that becomes the object of proof

956 How can what is real differ in itself? Difference is the result of human desires In the case of filial and other relations, the son's birth &c are of the very nature of things

957 Though the acts of burning, melting and illuminating are different, there is no difference in fire Since the thing is one, there can be no difference even as regards its actions

958 As there is no inconsistency in the single thing, fire, being the possessor of qualities which give rise to various actions, why cannot the same be said of those actions also?

959 If you consider each of two things to be the absence of the other, then they will become interdependent, and a pot will be established by its own absence

960 Even according to those[2] who consider separateness capable of proof as a quality, the proof affects the quality, as in the case of blue color etc, and not something unreal

---

[1] भेदस्य विदारणात्मत्वात्तदात्मनो वस्तुन. शून्यतापातात् Anandagiri

[2] The *Vaiśēshikas*

961 If again, a thing be said to be qualified by separateness, then too the proof is of the thing only, as in the instance 'the cow is white,' and not of the difference

962 If separateness exists as not different from the things themselves, then it too becomes a thing If different, then the thing becomes devoid of separateness

963 If the separateness of a thing and its absence do not differ, then they are not separate If they differ then the separateness cannot be mutual

964 If separateness is dependent on another thing, then a pot by itself has no separateness Though its quality may be twofold,[1] the thing is one, like the lily, etc

965 Though qualities are differently understood it is always the rule that there is no difference in the thing qualified Hence, though cows etc are different rom each other, the reality (*san-mātra*) remains one

966 Even supposing that what is cognised is the abstract nature of the cows etc in general, then, since the essential reality is unaffected thereby, that reality alone is cognised The character of cow etc will be anomalous, as in the case of the *sabalā* [2]

967 All talk about intermediate things [3] is understood as not independent of their real nature The reality of existence always dwells in them

968 The nature of substance etc does not differ even from existence in the abstract How can they

[1] *i e* separateness as to other things and non separateness in itself

[2] A spotted cow which is of the same form as the ordinary cow but to which the name of 'cow' is not ordinarily applied

[3] Like pillar pot etc

differ, then, from anything else? Thus knowledge is of only one sort, for example, substance is real, quality is real, etc

969 This unity cannot be the result of inseparable connection (*samavāya*) between two different things If so, there is no certainty that it is the result of that connection alone, for the idea of unity exists even as regards a genus.

970 Nor can there be any connection at all [1] since they cannot be thought of as separate from each other. There is no reason to justify an inseparable connection (*samavāya*)

971 If there is conjunction, there must be disjunction too, and an inseparable connection would become uncertain If such connection exists by itself, then there is no need for assuming it at all, since the unity of substance etc will also be self-established [2]

972 All things are surrounded by reality at all times, but yield themselves at times to relative talk To talk of them as always different is an illusion

973 Even according to those who say that a thing is both generic and individual, there is no difference, since the thing is one owing to the absence of any difference in the thing qualified (*dharmin*)

974 Even if there be a sense of difference between generality and individuality, that sense extends only thus far, and cannot imply any difference in the thing of which they are attributes

[1] *e g* between गोत्व, a species, and सत्ता, the generality of existence

[2] The above is a refutation of the *Vaiśēshika* doctrine that सामान्य and विशेष are two different categories (generality and individuality)

975 If a thing is one, there can be no differentiation, and if there is differentiation, there can be no unity It cannot be said that a thing may be both generic and individual, for, owing to the fault of inapplicability, it cannot be both [1]

976 Further, how can you speak of non-entity, since there is only one reality amenable to cognition, whose form alone is existence, while all other forms are non-existent

977 If the absence of proofs like direct perception etc be said to establish non-entity, tell me of what nature is that absence If you say it is the complete inactivity of the self, it is that very reality, *viz*, the self, which I insist on If you say it is the knowledge of some other thing, then it is *a fortiori* an entity

978 If you say that non-entity (*abhāva*) is another condition (*bhāva*), that is wrong, since its name and nature contradict each other [2] Hence no difference is knowable by perception and other proofs, since the reality (*vastu*) is one [3]

979 In the knowledge "this is a pot," what is cognised is the pot Its differentiation from all other things like a cloth &c is not present therein, since they are not in the knowledge of a cloth

980 The negation of the pot cannot be in the pot itself, for, it will be inconsistent, or in any other

[1] For the quality of white cow cannot extend to a brown cow

[2] For a *bhāva* cannot be called *abhāva*

[3] अभावनिरासेन भेदमपि निरस्य सामान्यमेव वस्त्विति पक्षमङ्गीकुर्वन्भेदाप्रामाणिकत्वमुपसंहरति । तस्मादिति । वस्तुनस्त्रैविध्यायोगात्परिशेषत सामान्यमेव तदिति स्थितत्वात्तस्य च सन्मात्रस्य सर्वत्रैक्याच्च प्रमितो भेदोऽस्तीत्यर्थ ॥ Anandagiri

thing, for, there can be no relation expressible by the genitive case Such a vague theory, therefore, cannot apply to reality

981 The pot, by generating a knowledge which is distinguished by its own shape, establishes itself and not its differentiation from the cloth etc

982 So, too, in the knowledge of the cloth, the only thing which distinguishes it is the cloth And one sees nothing else therein, such as non-entity etc which are spoken of so often

983 Doubt, certainty, and other attributes of the mind, while qualifying knowledge, do not differ from the object or from the knowledge, and there is no idea of differentiation at all

984 Thus too, "I alone, who am the perceiver, know," and such other functions of the knower (*mātri-dharmāh*), merely particularise the knowledge which effects them, but do not admit of any differentiation

985 There is but one knowledge which is self-established, which is identical in definition with the Self, and which alone gives rise to all acts and conditions (*vyavahāra*) like being, non-being, etc

986 Hence, irrespective of knowledge (*anubhava*), there is neither difference nor unity There can be no proof but is consonant with that knowledge On what proof, then, can any contradiction be founded?[1]

987 Logicians are agreed that the object of all proofs is something unknown But that unknown thing is not *a priori* established by the proof, for it exists even before any proof comes in

[1] अनुभवानुसारेण मानानां मानत्व तत्कथं तमनुसरन्तो वेदान्तामानान्तरैर्विरुध्येरन् ॥ Anandagiri

# अथ विधिविवेकः ।

श्रीगणेशाय नमः ।

साधने पुरुषार्थस्य सङ्गिरन्ते त्रयीविदः ।
बोधं विधौ समायत्तमतः स प्रविविच्यते ॥

# अथ न्यायकणिका ।

श्रीसरस्वत्यै नमः ।

परामृष्टः क्लेशैः कथमपि न यो जातु भगवान्
न धर्माऽधर्माभ्यां त्रिभिरपि विपाकैर्न च तयोः ।
परं वाचां तत्त्वं यमधिगमयत्योमिति पदं
नमस्यामो विष्णुं तममरगुरूणामपि गुरुम् ॥ १ ॥

भुवनभवनस्थेमध्वंसप्रबन्धविधायिने
भवभयभिदे तुभ्यं भेत्त्रे पुरां तिसृणामपि ।
चितिहुतवहहव्येत्वाऽम्भःप्रभञ्जनचन्द्रम-
स्तपनवियदित्यष्टौ मूर्तीर्नमो भव बिभ्रते ॥ २ ॥

अज्ञानतिमिरशमनीं परदमनीं न्यायमञ्जरीं रुचिराम् ।
प्रसवित्रे प्रभवित्रे विद्यातरवे नमो गुरवे ॥ ३ ॥

आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् ।
रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ॥ ४ ॥

प्रकरणाऽऽरम्भे प्रेक्षावत्प्रवृत्त्यङ्गं विषयप्रयोजनहेतुकं प्रकरणस्य विधिविषयविवेचनं प्रयोजनमाह—

साधने पुरुषार्थस्य सङ्गिरन्ते त्रयीविदः ।
बोधं विधौ समायत्तमतः स प्रविविच्यते ॥

इह केचिदाहुः। यदप्रयोजनविषय न तत्प्रेक्षावत्प्रवृत्तिगोचर। यथा काकदन्तपरीक्षा। तथा चैतत् प्रकरणमिति व्यापकविरुद्धोपलब्धिः। न चेयमसिद्धा। प्रयोजन खल्विह विधेर्वेदप्रामाण्यसिद्धिर्वा, पदार्थसंसर्गप्रतीतिर्वा, हिताऽहितसाधनताऽवगमो वा प्रवृत्तिनिवृत्तिनिमित्तम्। न तावत्प्रामाण्यसिद्धि,रन्तरेणाऽपि विधि तत्सम्भवात्।

स्यादेतत्। विधिविरहे कार्यशून्यतया भूताऽर्थाऽवगाहिनो भूतस्य च मानान्तरविषयतया तदपेक्षत्वाद्वेदस्य प्रामाण्य विहन्येत, पुरुषवाक्यवत्। तदनुपपन्नम्। अपेद तु भवान् पृष्टो व्याचष्टां,यदेतत्पुरुषवचसा मानान्तराऽपेक्षत्व, तत्किं भूतार्थतया, ऽऽहोस्वित् पुरुषबुद्धिप्रभवतया? न तावद्भूतार्थतया। प्रत्यक्षादीनामप्रामाण्यप्रसक्तेः। तान्यपि हि भूतार्थान्येव। चैत्यवन्दनादिवाक्यस्य च कार्याऽर्थाऽभिधायिनो निरपेक्षतया प्रामाण्यप्रसङ्गात्। विनियोगमात्रपरमेतन्न कार्यपरमिति च स्वतन्त्रसिद्धान्तश्रद्धामात्रविजृम्भित, न प्रामाणिकमिति निवेदयिष्यते। तस्माद्वक्तृधीप्रभवत्वमेव सापेक्षत्वे हेतु। तच्च भूतार्थे ऽपि वैदिके नास्तीति नास्ति सापेक्षता। सा च कार्यनिष्ठानामपि पुरुषवचसाम्। तन्न प्रामाण्य सिद्धिरर्थो विधेः।

नाऽपि पदार्थसंसर्गप्रतीतिः। विना ऽपि विधिना स्थाल्यामोदनं पचति चैत्र इति पदार्थसंसर्गप्रतीतेरुपपत्तेः। यदि मन्येत विवक्षाऽधीनरचनानि पुंसो वचनानि,विवक्षा च मानान्तराऽवधारणाऽधीना, मानान्तर च पदार्थसंसर्गगोचरं न पदार्थमात्रगोचर,मिति तत्प्रभवतया पुंवाक्यान्यपि पदार्थससर्गमेव गोचरयन्ति। न त्वेव वेदवाक्यान्यपौरुषेयाणीति पदार्थससर्गसिद्ध्यर्थे विधिरेषितव्य इति।

तदयुक्तम् । विधावपि तदनुपपत्तेः । तस्मिन् सति तदाकाङ्क्षानिबन्धन: सम्बन्ध पदार्थानामिति चेत् ? तदाकाङ्क्षैव कुत: तदपर्यवसानादिति चेत् ? न । क्रियादिष्वपि साम्यात् । यथा हि शब्दाऽभिहितो विधिर्विषयनियोज्यादिभिर्विना न पर्यवस्यति तथा क्रियादयो ऽपि पदार्था: कारकादिभिर्विनेति तएव पदैरुपात्ता आकाङ्क्षायोग्यतासन्निधिसध्रीचीनाश्च ससर्गं गमयिष्यन्तीति कृतं विधिना। विशिष्टाऽर्थप्रतीतिप्रयुक्तत्वेन च पदाना समभिव्याहारस्य लोके विदितत्वात्तदुपायत्वाच्च वैदिकाऽर्थप्रतीतेः ।

नाऽपि हिताऽहितसाधनताऽवगमस्तस्य प्रयोजनं सम्भवति । सन्तापमपनयति च तप्तस्य सलिलाऽवसेक., दहति च ज्वलनज्वालाकलापाऽऽलिङ्गनमिति वर्तमानाऽपदेशादपि हिताऽहितसाधनताऽवगमात् । ततश्चेप्साजिहासाभ्या प्रमाणान्तरादिव प्रवृत्तिनिवृत्त्योरुपपत्तेर्व्यर्थो विधिरिति सिद्धा व्यापकविरुद्धोपलब्धि. । अतो नाऽऽरम्भणीयमेतत्प्रकरणमिति । तान् प्रत्याह—साधने पुरुषार्थस्य सङ्गिरन्ते वयोविद. । बोधं विधौ समायत्तमिति । मा भूवन्नन्यानि प्रयोजनानि विधेः । पुरुषार्थसाधनताऽवबोधस्तु विधिनिबन्धन. । न हि स्वर्गकामो यजेतेति विधौ असति स्वर्गो भावनाया भाव्य: सम्भवति । सा हि भाव्यमात्राऽपेक्षिणी । भविता च भाव्यो यागादयश्च भवितार इति समानपदोपादानतया प्रकृत्यर्थतया च तदनुरक्ताया एव भावनायाः प्रतीते । स्वर्गस्य च पदान्तरोपादानतया पुरुषविशेषणतया च व्यवस्थानात्तमपहाय यागादीनेव[१] भाव्यतया भावना गृह्णीयात् । कर्त्रपेक्षितोपायतारूपविध्युपहितमर्यादा पुनरियं भावना समानपदोपादानमपि प्रथमाऽवगतमपि दु:खाकरतया कर्त्रनपेक्षितमपहाय धात्वर्थमसमानपदोपादानमपि पुरुषविशेषणमप्यपेक्षिततया स्वर्गमेव भाव्यमवलम्बते । समासादिततथाविधभा-

१ यागादिमेवेति १ पु॰ पा ।

**स खलु शब्दभेदो वा, तद्व्यापारोऽतिशयो वा, ऽर्थं-**

व्या च यागादीन् करणतया स्वीकरोतीति पुरुषार्थसाधनता तेषां सिद्धा भवति। कथं तर्हि वर्तमानाऽपदेशेभ्यो लोके[1] पुरुषार्थसाधनताऽवगतिः? प्रमाणान्तरवशान्न शब्दसामर्थ्यात्। यथा चैतत्तथा द्रव्यसंस्कारकर्मस्विति चाऽसाधकं तु तादर्थ्यादिति च व्याचक्षाणा उपपादयिष्यति स्वयमेवाऽऽचार्यः।

नन्वेष विधिः शब्दात्प्रसिद्धो वा स्यादप्रसिद्धो वा। स चेत्प्रसिद्धो, नाऽनेन प्रकरणेन प्रतिपादनीयः। शब्दप्रतिपन्नस्याऽप्रतिपित्सितत्वात्। निष्पादितक्रिये कर्मणि साधनस्य तथाऽनुपपत्तेः। अप्रसिद्धश्चेन्नतरां वेदार्थतया प्रतिपाद्यः। तस्मादनर्थकमेतद्विषयं प्रकरणमिति। अत आह—अतः स प्रविविच्यते इति। सत्य शब्दाऽवगम्यो ऽपि विधिर्विप्रतिपत्तेः साधकबाधकप्रमाणविरहे सति संशयमापन्नः सन् प्रतिपित्सित उपपत्त्यनुपपत्तिभ्यां परीक्ष्य शङ्कितसमारोपितरूपव्यवच्छेदेन यथावत्प्रतिपाद्यते। तदुच्यते[2]—विविच्यते इति।

नन्वस्य विवेको ऽपि वार्तिककृत्प्रभृतिभिरकारीति सो ऽपि व्यर्थ एवेत्यत आह—प्रेति। कृतो ऽपि तैर्विवेको ऽकृतकल्प एव। "अभिधाभावनामाहु"[3]रित्यादिसङ्कीर्णशब्दप्रयोगात्। इह तु कर्तुरिष्टाऽभ्युपाय इति निष्कृष्याऽभिधानात् तस्य च व्युत्पादनात्प्रकर्षोपपत्तेरर्थवदेतत्प्रकरणमिति[4]। तत्र प्रथमं तावद्विप्रतिपत्तिनिमित्तं विमर्शमाह—स खलु शब्दभेदो वा। लिङादिः। शब्दान्तराद्भिद्यते इति भेदः। तस्य खलु लिङादेरयस्कान्तमणेरिव वस्तुस्वभावजो ऽतिशयो येन लोहमिव चेतनं प्रवर्तयति। तद्व्यापारोऽतिशयो वा। प्रवृ-

१ वर्तमानापदेशे तथा लोके इति २ पु॰ पा॰।
२ तदिदमुच्यते २ पु॰ पा॰।
३ अभिधा भावनाम॰ २ पु॰ पा॰।
४ इति विद्धम॰ २ पु॰ पा॰।

भेदो वा । यदभिधानाच्छब्दो ऽपि तथा व्यपदेश्यः ।

प्रमाणत्वादनियमात्प्रवृत्तेः संविदाश्रयात् ।
समभिव्याहृतेः शब्दो न विधिः कार्यकल्पनात् ॥

प्रमाणं हि शब्दः प्रतिज्ञायते । बोधकं च प्रमाणम् । तत्र प्रवृत्तिहेतुं कं चनाऽर्थातिशयमवगमयन् शब्दश्चोदनात्वेन प्रमाणतामश्नुते । स्वयमेव तु प्रवृत्तेः कारकस्तां प्रमाणतामपजह्यात् । न हि कारको हेतुः प्रमाणम् । अपि तु ज्ञापकः ।

त्तिहेतुरुपेयते । अर्थभेदो वा वक्ष्यमाणभेदः । यद्यर्थभेदः, कथं तर्हि चोदनेति क्रियाया. प्रवर्तक वचनमिति विधिना त्वेकवाक्यत्वादिति चे?त्यत आह—यदभिधानाच्छब्दो ऽपि तथा व्यपदेश्यः ।

तत्र शब्दस्वरूपस्य तावद्विधिभावं निषेधति-

प्रमाणत्वादनियमात् प्रवृत्ते' संविदाश्रयात् ।
समभिव्याहृतेः शब्दो न विधिः कार्यकल्पनात् ॥

कारिकां व्याचष्टे—प्रमाणं हि शब्द. प्रतिज्ञायते चोदनालक्षणोऽर्थो धर्म इति । बोधक च प्रमाणम् । अबाधिताऽनधिगताऽसन्दिग्धाऽर्थप्रमाजनकम् । तत्र प्रवृत्तिहेतु क चनाऽर्थातिशयमवगमयन् शब्दश्चोदनात्वेन प्रमाणतामश्नुते शब्दस्वरूपविधिवादिना मते । स्वयमेव तु प्रवृत्तेरप्रमायाः कारकस्ता प्रमाणतामपजह्यात् । नन्वप्रमाया अपि प्रवृत्तेः कारकः कस्मान्न प्रमाण?मत आह—न हि कारको हेतुः प्रमाणम् । मा भूद्बीजादीनामङ्कुरादिकारकाणां प्रामाण्यम् । किं तर्हि प्रमाण? मित्यत आह—अपि तु ज्ञापकः । इन्द्रियादौ तथाभावात्[3] ।

ननु मा नाम वादीत्प्रवृत्तिहेतु कं चनाऽर्थातिशयम्, अस्तु शब्दः स्वयमेव प्रवृत्तिहेतुः । तथाऽपि यच्च प्रवृत्तिरनेन जनयितव्या

१ प्रभेद. २ पु पा ।  २ नन्वयमप्रमाया · २ पु पा· ।
३ तथा भावात प्रवृत्तिहेतुभूतमर्थं प्रमापयत एव प्रामाण्यात २ पु· पा ।

विषयाऽवबोधनान्न दोष इति चेत् ? न । तन्मात्रस्याऽन्यत्राऽपि तुल्यत्वात् । चोदनालक्षणोऽर्थो धर्म इत्यभ्युपगमाऽनर्थक्यात् । शब्दस्वातन्त्र्ये च नियोगतोऽवश्यं प्रवृत्तिः स्यात् । तथा चाऽकुर्वन् विहितं कर्मेति निर्विषयं स्यात् । न हि तदानीं बलवदनिलसलिलौघनुद्य-

तद्विषयः[1] पुरुषस्य व्यापारो बोध्यते[2] इति कारकहेतोरपि विषये प्रमाजनकत्वात्प्रमाणतोपपत्स्यते । अङ्कुरस्येव पचादिहेतोः स्वकारण प्रमापयत इति शङ्कते—विषयाऽवबोधनान्न दोष इति चेत्? । निराकरोति—नेति । कुतः ? तन्मात्रस्याऽन्यत्रापि[3] वर्तमानापदेशेऽपि चैत्रः पचतीत्यादौ तुल्यत्वात् । न हि तत्र भावना नाऽवगम्यते । अस्तु तुल्यता, का नो हानि ? रित्यत आह—चोदनालक्षणोऽर्थो धर्म इत्यभ्युपगमाऽऽनर्थक्यात् । प्रवर्तकत्व चोदनात्व प्रवृत्तिहेतुं क चनाऽर्थाऽतिशयमवगमयन्ननेन रूपेण प्रामाण्यमश्नुते, न भावनामात्रवचनत्वेन । तस्याऽन्यत्राऽपि तुल्यत्वात् । तस्माद्येन रूपेण प्रामाण्यं न तेन चोदना, येन चोदना न तेन प्रामाण्यम्, तस्य प्रवृत्तिं प्रति कारकत्वादित्यर्थः । प्रमाणत्वादिति हेतु व्याख्याय अनियमात् प्रवृत्तेरिति व्याचष्टे, शब्दस्वातन्त्र्ये च पुंसः प्रवृत्तौ नियोगतोऽवश्य प्रवृत्तिः स्यात् । भवतु, को दोष ? इत्यत आह—तथा चा'ऽकुर्वन् विहित कर्म'ति धर्मसूत्रकारवचनं निर्विषयं स्यात् ।

नन्विच्छाधीनप्रवृत्तित्वात्पुंसां तस्याश्च कादाचित्कत्वात् न विहितेऽप्यवश्यम्भावनियमः प्रवृत्तेरिति सम्भवति विहिता-

१ स विषयः २ पु पा ।
२ व्यापारः शब्दस्तदवबोधने इति २ पु॰ पा ।
३ तस्याऽन्यत्रापि॰ २ पु पा ।

मानस्येवेच्छा ऽपि तन्त्रं प्रवृत्तिं प्रति पुरुषस्य । ज्ञापकश्च स्वरूपकर्मसम्बन्धविषयज्ञानमपेक्षते । लिङादिस्वरूपं च प्रवृत्तेः कारकमित्यनुपयुक्तस्वरूपतत्कर्मसम्बन्धविषयसंविदो ऽपि पुंसः प्रवृत्तिप्रसङ्गः ।

ननु शङ्खध्वनिवदेतत् स्यात् ? यथा हि शङ्खशब्दात् प्रवर्तितव्यमित्युपयुक्तस्वरूपसम्बन्धसंविद एव प्रवर्तन्ते, नेतरे । न च शङ्खशब्दः प्रवृत्तेरभिधायको ऽन्यस्य वा कस्य चित्प्रवृत्तिहेतोः, येन ज्ञापकः स्यात् । वार्तमेतत् । न हि शङ्खध्वनिः प्रवृत्त्युपयुक्तसङ्गतितया प्रवृत्ति-

करणेन[1] निर्विषयता वचनस्य, इत्यत आह—न हि तदानीं बलवदनिलसलिलौघनुद्यमानस्येवेच्छा ऽपि तन्त्रं प्रवृत्तिं प्रति पुरुषस्य । संविदाश्रयादिति व्याचष्टे-ज्ञापकश्च स्वरूपतत्कर्मसम्बन्धविषयज्ञानमपेक्षते, न तु कारकः । लिङादिस्वरूपं च प्रवृत्तेः कारकमित्यनुपयुक्तस्वरूपतत्कर्मसम्बन्धविषयसंविदो ऽपि पुंसः प्रवृत्तिप्रसङ्गः । एतदुक्तं भवति, स्वकार्ये संविदाश्रयत्वं ज्ञापकत्वेन व्याप्तम्, धूमादौ तथा दर्शनाद्बीजादौ चाऽनुपलब्धेः । तदिह तद्विरुद्धकारकत्वोपलब्धिरूपा ऽनुपलब्धिरेव[2] संविदाश्रयत्वं निवर्तयेदिति ।

चोदयति ननु शङ्खध्वनिवदेतत् स्यात्? ।तदेव स्फुटयति-यथा हि शङ्खशब्दात् प्रवर्तितव्यमिति प्रवृत्त्युपयुक्त[3] स्वरूपसम्बन्धसंविद एव प्रवर्तन्ते नेतरे । न चाऽस्य तत्र ज्ञापकत्वम्, अनभिधानात् । अपि तु कारकत्वमेवेत्याह—न च शङ्खशब्दः प्रवृत्तेरभिधायको, ऽन्यस्य वा कस्य चित्प्रवृत्तिहेतोः, येन ज्ञापकः स्यात् । अनभिधायकोऽपि शङ्खध्वनिर्न प्रवृत्तौ कारको ऽपि तु प्रवृत्तिहेतुमभिप्रायविशेषमनुविधेयस्याऽवगमयन् ज्ञापक एवेति न व्यभिचार इति । परिहरति—वार्तमेतत् ।

१ विहिताऽकरणमिति २ पु पा । २ कारकोपलब्धिरेव २ पु पा ।
३ इत्ययुक्त १ पु पा । 

कारणं शङ्खशब्दात् प्रवर्तितव्यमिति, अपि तु प्रवर्तितव्यमिति। प्रकृत्यर्थाऽतिरिक्ते प्रत्ययार्थे च विधेयस्य पुंसोऽभिप्रायभेदे कृतसङ्केतस्तमनुस्मारयति। ततस्तदनुविधायिनः प्रवर्तन्ते। अविदितविषयतया नाऽनधिगतसमयाः प्रवर्तन्ते इत्यपि मिथ्या। तन्मात्रसङ्गतिज्ञस्याऽपि तत्प्रसङ्गात्। अप्रत्ययपूर्वायां च शब्दपरतन्त्रस्य प्रवृत्तौ विष-

न हि शङ्खध्वनिः प्रवृत्त्युपयुक्तसङ्गतितया प्रवृत्तेः कारणम्। कुतः? शङ्खशब्दात् प्रवर्तन्ते इत्यस्मादपि स्वकार्य[1]प्रवृत्तिं प्रति कारणत्वमस्याऽवगम्यते। हेतौ पञ्चमीविधानात्। ततश्चाऽनेन प्रकारेण विदितस्वकार्यशब्दाच्छङ्खध्वनेरेवाऽभिप्रायविशेषाऽनुमानसिद्धात् प्रवृत्ति[2]प्रसङ्गात्। कथं ततः प्रवृत्ति?रित्यत आह—अपि तु प्रवर्तितव्यमिति प्रकृत्यर्थाऽतिरिक्ते प्रत्ययार्थे ऽनुविधेयस्याऽभिप्राय[3]भेदे आज्ञादौ कृतसम्बन्धः कृतसङ्केतस्तमनुस्मारयति। तमभिप्रायविशेषमुपलक्षणीकृत्याऽनुमातुर्बुद्धिस्थेति यावत्। स्मारयति सम्बन्धम्। ततः कृतसम्बन्धस्मरणसहकारिणः शङ्खध्वनेरेवाऽभिप्रायविशेषाऽनुमानसिद्धिः।

क्वचित्पाठः। कृत सम्बन्धमनुस्मारयति तावत्। अथ तत्स्मरणसहकारी सन्नभिप्रायभेदमनुमापयतीति द्रष्टव्यम्। एतेन शङ्खध्वनेर्ज्ञापकत्वाद्व्यभिचार इति दर्शितम्। भवत्वेवं, प्रवृत्तिस्तु कुत? इत्यत आह—ततोऽभिप्रायभेदादनुमितात्तदनुविधायिनः प्रवर्तन्ते।

ननु भवतु प्रवृत्तेः कारको यश्च त्वनेन प्रवर्तयितव्यः पुरुषः स विषयोऽज्ञातो न[4] प्रवृत्तिविषयो भवतीति तत्र लिङादिर्ज्ञापकोऽभ्युपगन्तव्यः। तथा चाऽस्य सविदाश्रयत्वमुपपन्नम्। प्रवृत्तिकारकस्याऽपि प्रवृत्तिविषये प्रामाण्यादित्यत आह—अविदितविषयतया नाऽनधिगतसमयाः पुमांसो लिङादिभ्यः प्रवृत्तिकारकेभ्योऽपि प्रवर्तन्ते इत्यपि मिथ्या। कुतः? तद्विषयमात्रसङ्गतिज्ञस्याऽपि तत्प्रवृत्तिप्रसङ्गात्।

१ स्वकार्यम् २ पु पा। २ ध्वनेरेव प्रवृत्ति पु पा।
३ अनुविधेयस्य पुंसोऽभिप्राय २ पु पा। ४ पुरुषो यो ऽज्ञान २ पु पा।

यवेदनाऽनुपयोगात् । प्रबलपवनेरितस्येवाऽन्धपङ्ग्वादेर्न वेदनं प्रवृत्त्यङ्गम् । कारके ऽपि प्राणिस्थो ऽहिदंशो ज्ञानमपेक्षते । नैवम् । ज्ञानस्यैव तत्र कारकत्वात् । विना ऽप्यहिदंशं शङ्काविषेणाऽपि मरणदर्शनात् ।

यो ऽप्याह--अभिधेयविज्ञानं प्रति कारकहेतुरपि शब्दो यथा शक्तिज्ञानमपेक्षते तथा प्रवृत्तिशक्तिसंविदमपीति । तेनाऽपि न ज्ञापकादन्यत्र ज्ञानाऽपेक्षा प्रदर्श्यते । ज्ञानकारकस्यैव ज्ञापक इत्याख्यानात् ।

दूषणान्तरमाह--अप्रत्ययपूर्वायां च शब्दपरतन्त्रस्य प्रवृत्तौ विषयवेदनाऽनुपयोगात् । कस्मादुपयोगो नास्तीत्यत आह--प्रबलपवनेरितस्येव नाऽन्धपङ्ग्वादेर्वेदन प्रवृत्त्यङ्गम् । चोदयति--कारको ऽपि प्राणिस्थो ऽहिदशो ज्ञानमपेक्षते इति व्यभिचारः । परिहरति--नैवम् । ज्ञानस्यैव तत्र कारणत्वात्[1] । कुतः ? विना ऽप्यहिदश शङ्काविषेणा[2]ऽपि मरणदर्शनात् । दशस्यैव मरणकारणत्वे ऽसति तस्मिन् न शङ्काविषेण प्रेयात् । न जातु बीजविज्ञानमङ्कुरमसति बीजे जनयति । बालानामपि प्राग्भवीयभावनाप्रबोधादहिदशविज्ञाने सति भयसम्भवान्मरणमिति मन्तव्यम् ।

यो ऽप्याह--अभिधेयविशेषविज्ञान प्रति कारकहेतुरपि शब्दो यथा शक्तिज्ञानमपेक्षते तथा प्रवृत्तिशक्तिसविदमपीति । तेनाऽपि न ज्ञापकादन्यत्र ज्ञानाऽपेक्षिता प्रदर्श्यते । ज्ञानकारकस्यैव ज्ञापक इति आख्यानादिति न सपक्षेण व्यभिचार इति भावः । सर्वस्यैव ज्ञापकस्य कार्यजनकतास्वरूपतच्छक्तिसविदाश्रयभावितोक्ते[3]ति मत्वा

१ कारकत्वात २ पु पा ।
२ विशेषेण १ पु पा ३ भावेनोक्तेति २ पु पा ।

ननु ज्ञानकारको ऽपि चक्षुरादिर्न शक्तिज्ञानमपेक्षते। किमतः ? शब्दस्याऽकारकत्वप्रसङ्गः[१]। अयमपरो दोषः। कुतस्तर्ह्यर्थबोधः?

अभ्यासात् कशाऽङ्कुशवत्। उक्तं च-

अभ्यासात्प्रतिभाहेतुः सर्वः शब्दः समासतः।

भ्रान्तश्चोदयति। ननु ज्ञानकारको ऽपि चक्षुरादिर्न शक्तिज्ञानमपेक्षते। समाधातुं निगूढाऽभिसन्धिराह-किमतः ? अत्रान्तरे पार्श्वस्थः प्रसङ्गमापादयति-ज्ञानं प्रति[२] शब्दस्याऽकारकत्वप्रसङ्गः। ज्ञानकारकचक्षुरादिवैधर्म्यात्। अत्राऽनन्तरतया पार्श्वस्थं प्रति तावदुत्तरमाह-अयमपरो दोषः। न वयं मीमांसकाः, येन शब्दार्थयोः स्वाभाविकं सम्बन्धमाचक्ष्महे इति भावः। ननु यद्यवाचकः शब्दः, कुतस्तर्ह्यर्थबोधः ? न च नास्तीति वक्तव्यं, वचनेन भवतो ऽस्मत्प्रतिपादनायाऽप्रवृत्तिप्रसङ्गादिति भावः। उत्तरम्-अभ्यासात् कशाऽङ्कुशाऽभिघातवत्। नाऽभिधानाऽधीनो ऽर्थबोधः शब्दात्, अपि त्वभ्यासाऽधीनः। यथा हि खलु कशाऽङ्कुशाऽभिघातादयो ऽनभिधायका अपि वाजिगजादीनामभ्यासात् स्वतः[३] प्रवृत्तिनिवृत्तिहेतुमर्थप्रतिभासां प्रतिभां भावयन्तः प्रवर्तका निवर्तकाश्च तथा सङ्क्षेपतः सर्वे शब्दो[४] व्युत्पन्नानामव्युत्पन्नानां चेह जन्मनीत्यर्थः। उक्तं च-

अभ्यासात्प्रतिभाहेतुः सर्वः शब्दः समासतः।

१ प्रसङ्गादिति मूलपुस्तके पाठः।

२ ज्ञानप्रति, नास्ति २ पु।

३ स्वतो न २ पु॰ पा॰।

४ सर्वे एव शब्दा २ पु पा॰।

**बालानां च तिरश्चां च यथाऽर्थप्रतिपादने ।**
**अनागमश्च सोऽभ्यासः समयः कैश्चिदिष्यते । इति ।**

**न च ब्रूमः सर्वो ज्ञापको ज्ञानाऽपेक्षः, किन्तु स एव, नेतरः । बीजादिष्वदर्शनात् ।**

व्युत्पन्नाना पुनरर्थाभिधानतः[1] । अभ्यासजनितां भावनामभ्यासशब्देनाह । कार्ये कारणोपचारात् । अय च प्राग्भवीयो ऽभ्यासो ऽवश्याऽभ्युपेय इत्यत्र दृष्टान्तमाह—

बालाना च तिरश्चां च यथा ऽर्थप्रतिपादने ।

न हि तेषां प्राग्भवीयभावनामन्तरेण प्रवृत्तिनिवृत्तिहेतुभूताऽर्थप्रतिभासप्रतिभोत्पादनसम्भवः । अर्थाऽऽभासप्रतिभोत्पादनेन चाऽर्थप्रतिपादनमुक्तम् । एतच्च सिद्धान्ते विस्तरेण वक्ष्यते ।

अनागमश्च सोऽभ्यासः

आगम्यते प्राप्यते ऽस्मादिति कारणमागम । अविद्यमान आगमो यस्मिन्नसावनागमो ऽनादिरित्यर्थः ।

समय कैश्चिदिष्यते ॥

समय इत्यादिमतामाह । नैयायिकादयो हीश्वरनिर्माणं शब्दार्थसम्बन्ध[2] समय इत्याचक्षते । स चाऽभ्यासस्य भावनाया विषय इत्यभ्यास उक्तः । एव पार्श्वस्थ निराकृत्य प्रकृत चोदक प्रत्युत्तरमाह—न च ब्रूम, सर्वो ज्ञापको ज्ञानाऽपेक्षः किन्तु स एव ज्ञापक एव, नेतरः कारकः । कुतः ? बीजादिष्वङ्कुरादिकारकेष्वदर्शनात् ज्ञानाऽपेक्षाया । यत्र ज्ञानाऽपेक्षा ऽवधार्यते स तु ज्ञापकः[3] एतेन निगूढो ऽभिसन्धिरुद्घाटितः ।

ननु ज्ञापकत्वे समाने ऽपि के चिदनाश्रितसंविदो ज्ञानं जनयन्ति, यथा चक्षुरादयः । के चित्पुनराश्रितसंविदः, यथा धूमादयो

१ न पुनरभिधानत २ पु पा । २ सिद्धार्थसम्बन्धम २ पु पा॰ ।
३ ज्ञानाऽपेक्षाया । ज्ञानाऽपेक्षा ऽवधार्यते नतु ज्ञानापेक्षेष्वेव ज्ञापकत्वम॰१ पु पा

न च दृष्टविपरीतस्वभावकल्पना लिङादीनाम् अनुपपत्त्या । तादृशाऽनुसारेणाऽप्युपपत्तेः । प्रत्ययश्च सहाऽभिधानात्प्रकृत्या, तदनुवादाद्वा, तद्द्योतनाद्वा, तत्सम्बन्ध्यर्थान्तराऽभिधानाद्वा तया समभिव्याहारमर्हति । अवाचकस्य तु प्रवृत्तेः कारकस्य स न युक्तः । संख्याद्यभिधेयान्तरनिबन्धनः स इति चेत्?

धूमध्वजादिविज्ञानम् । एवं यद्यप्यन्ये कारका हेतवः स्वकार्यजनन प्रत्यनाश्रितसंविदस्तथा ऽपि शब्दप्रवृत्तिकारको ऽपि संविदमाश्रयिष्यते[1] अन्यथा प्रवृत्त्यनुपपत्तिरित्यत आह—न च दृष्टविपरीतस्वभावकल्पना लिङादीनामन्यथा ऽनुपपत्त्या । कुतः ? प्रवृत्तिहेतुभूताऽर्थज्ञापकतया दृष्टाऽनुसारेणाऽप्युपपत्तेः । प्रकृतिप्रत्यययोः सहाऽभिधानम् । तथा च प्रत्ययश्च सहाऽभिधानात्प्रकृत्या सह समभिव्याहारमर्हति नाऽन्यथा । सहाऽभिधानप्रकार दर्शयति- तदनुवादाद्वा प्रकृत्यर्थाऽनुवादात् । यथैको द्वौ बहव इति । तद्द्योतनाद्वा प्रकृत्यर्थद्योतनाद्वा । यथा कुमारीति ईप्रत्ययः[2] स्त्रीत्व द्योतयति । तत्सम्बन्ध्यर्थान्तराभिधानात् । यथा पचति पाचको दण्डीति तिबकेनयः[3] प्रकृत्यर्थविशिष्टभावना'कर्तृसम्बन्धार्थो । अस्तु, प्रस्तुते किमायात?मित्यत आह—अवाचकस्य तु लिङादेः प्रवृत्तेः कारकस्य न समभिव्याहारो युक्तः । सहाऽभिधानाऽसम्भवात् । शङ्कते—अभिधेयान्तरनिबन्धन. स इति चेत्? । न हि वयमनभिधेयतां सर्वथैव लिङादीना ब्रूम', येन सहाऽभिधानाऽसम्भवात् प्रकृत्या[4] समभिव्याहृतिर्न स्यात्। किन्तु कर्तृ-

१ आश्रयति २ पु पा• । २ ङीप् प्रत्यय. २ पु पा• ।
३ तिङकेनय २ पु. पा• ।
४ प्रकृत्या सह २ पु• पा ।

अस्तु । प्रवृत्तेस्तु प्रत्ययेनाऽप्रतिपाद्यमानायाः कथं प्रवृत्त्यभिसम्बन्धः ? अभिधेयैव प्रत्ययस्य प्रकृत्यर्थाऽनुरक्ता प्रवृत्तिरिति चेत् ? न तावद्भावना कार्यरूपा लिङाद्यभिधेयेति शब्दविधिवादिभिः शक्यं वक्तुम् । तस्यां तर्हि तादृशालिङादेः कारकत्वेन सङ्गतिः । समभिव्याहृतिस्तु तस्या वाच्यं लक्ष्यं वा तथाविधेन सम्बन्धमुपाश्नुते ।

सङ्ख्यादयो हि तस्याऽभिधेयाः । ते च कथञ्चित्प्रकृत्या सम्बद्धा इति समभिव्याहारोपपत्तिरित्यर्थः । निराकरोति—अस्तु समभिव्याहारमात्रम्, विशेषस्तु न सिध्यतीत्याह—प्रवृत्तेस्तु प्रत्ययेनाऽप्रतिपाद्यमानायाः कार्यायाः कथं प्रकृत्यर्थसम्बन्ध ? न खलु समभिव्याहारमात्र लिङादीनां प्रकृत्या सहाऽवगम्यते, अपि तु कर्तव्यतोपहितसीमानं प्रवृत्तिभावनां प्रकृत्यर्थविशिष्टामभिदधताम् । न च कर्तृसङ्ख्याद्यभिधाने सत्यप्ययं विशेषः सेद्धुमर्हती[1]त्यर्थः । शङ्कते—अभिधेयैव प्रत्ययस्य प्रकृत्यर्थाऽनुरक्ता प्रवृत्तिर्भावना । तेन समभिव्याहारविशेष[2] उपपन्न इति चेत् ? निराकरोति—न तावद्भावना कार्यरूपा लिङाद्यभिधेयेति शब्दस्वरूपविधिवादिभिःशक्यं वक्तुम् । कर्तव्यता[3]ऽऽकारायाः एव भावनायाः प्रवृत्तिहेतुतया विधित्वेन शब्दस्वरूपस्य तत्त्वाऽनुपपत्तेः । तस्मात्प्रवृत्तिमात्र लिङाद्यर्थो न पुनः कर्तव्यतारूपेति तैरभ्युपगन्तव्यम् । तथा च तस्या तर्हि प्रवृत्तौ तादृश्या कर्तव्यताऽऽकारायां लिङादेः कारकत्वेन सङ्गतिर्न पुनरभिधायकत्वेनेति प्रकृत्यर्थाऽनुरक्तकार्यरूपप्रवृत्त्यभिधायकत्वेन रूपेण । विशिष्टसमभिव्याहृतिस्तु कुतः सा किमित्यहेतुके?त्यत आह—वाच्य लक्ष्य वा तथा-

१ विशेष सिध्यति २ पु पा० ।
२ व्याहारप्रवृत्तिरिति विशेष. २ पु० पा० ।
३ कार्यता २ पु० पा ।

अप्रतीतयोर्घटनाऽयोगात्। कार्यायां तु प्रवृत्तौ न नियमनिमित्तं समस्ति अनभिधेयस्य प्रवृत्तिहेतोः। अपि चाऽश्रुतफलेषु फलाऽध्याहारः, क्व चित् क्रतूपकारकल्पना, श्रुतानामपि स्वर्गादीनां फलत्वाऽध्यवसाय इति सर्व एष[1] महिमा विधेः। स शब्दस्य तद्भावे ऽनुपपन्नः। न हि तदा शब्दादनवगम्यमानमन्यथा गम्यते। न हि लिङादिस्वरूपस्यैवाऽन्यथाऽनुपपत्तिः। प्रवर्तकस्येति चेत्? न। तस्याऽपि

विधेन वाच्येन लक्ष्येण वा सम्बन्धमुपाश्नुते। शब्दादप्रतीतयोर्घटनाऽयोगात्। शाब्दे प्रमेये प्रवृत्तिमात्रस्याऽभिधेयत्वात्। कार्याया तु कर्तव्यताऽऽकारायां प्रवृत्तावनभिधेयायां न नियमनिमित्त विशिष्टसमभिव्याहारनिमित्त समस्ति अनभिधेयस्याऽविद्यमानविशिष्टाऽभिधेयस्य शब्दस्वरूपविधिवादिनो मते प्रवृत्तिहेतोर्लिङादेः। कार्यकल्पनादिति विवृणोति—

अपि चाऽश्रुतफलेषु पिण्डपितृयज्ञादिषु स्वर्गादिफलाऽध्याहारः। क्व चित् क्रतूपकारकल्पना समिदादौ। श्रुतानामपि पुरुषविशेषणतया स्वर्गादीना फलत्वाऽध्यवसाय इति सर्व एष महिमा विधे। स शब्दस्य तद्भावे विधिभावे ऽनुपपन्नः। कस्मात्? न हि तदा शब्दादनवकल्प्यमानमन्यथा फलं क्रतूपकार विना[2] किञ्चिद्गम्यते। यच्छब्दादवगत फलादिना विना ऽनुपपद्यमानं फलादीनां कल्पनाबीज भवेत्। मा भूत् लिङादिगम्यस्याऽन्यथाऽनुपपत्तिः। लिङादिरेव सेति चे[3]त्तत्राह-न हि लिङादे स्वरूपस्यैवाऽन्यथाऽनुपपत्तिः। न हि तद्रूपस्य श्रोत्रग्राह्यस्य सांनिध्ये फलादि वर्तते, येन तद्विना नोपपद्यते। शङ्कते—प्रवर्तकस्येति चेत्? लिङादय. खलु पुंसां प्रवर्तका.। न चैते

१ एव० मू० पु।

२ क्रतूपकारकत्वेन विना २ पु०।

३ लिङादेरेव भवेदिति चेत् २ पु० पा०।

पवनादिवर्तिन इवोपपत्तेःफलरूपं कारकं विना । तस्मान्न विधिः शब्दस्तद्व्यापारो वा ।

नन्वनभिधेये एते दोषाः, अभिधेये एव तु लिङादि-शब्दानां पुरुषं प्रति प्रयोजकव्यापार आत्मीयः प्रवर्तना । एवं ह्युक्तम् । 'अभिधाभावनामाहुरन्यामेव लिङादयः' । तथा च ज्ञापकत्वात्प्रामाण्यम् । प्रवृत्तिहेतुं बुद्ध्वा पुरुषस्येच्छया प्रवृत्तिः संबन्धबोधाऽपेक्षा च । अभिधेयसम्बन्ध-

निष्फले प्रवर्तयितुं पुरुषमीशते इति तदन्यथाऽनुपपत्त्या फलकल्पनेत्यर्थः । निराकरोति—न । तस्याऽपि प्रवर्तकत्वस्य पवनादिवर्तिन इवोपपत्तेः । न हि यो यः प्रवर्तयति स सर्वः फलमपेक्षते । पवनादीनां प्रवर्तयतामपि तदनपेक्षत्वदर्शनादित्यर्थः । कारिकार्थमुपसंहरति—तस्माद्धेतुपञ्चकान्न विधिः शब्दः । तद्व्यापारो वा न विधिः । अत एव हेतुपञ्चकाच्चोदयति—नन्वनभिधेये शब्दव्यापारे एते दोषाः पूर्वोक्ताः । अभिधेये एव तु लिङादिशब्दानां पुरुषं प्रवर्तमानं प्रयोज्यं प्रति प्रयोजकव्यापार आत्मीयः प्रवर्तना । न चेतत्स्वोत्प्रेक्षितमित्याह—एवं ह्युक्तम्—

'अभिधाभावनामाहुरन्यामेव लिङादय' । इति ।

अभिधायाः शब्दस्य भावनां प्रवर्तनामाहुरित्यर्थः । एवं च यत्कारणत्वेना[1]ऽप्रामाण्यमासञ्जितं तत्स्वकार्यप्रवर्तनाज्ञापकत्वेन परिहृतं भवतीत्याह—तथा च ज्ञापकत्वात् प्रामाण्यम् । इच्छासहकारिणश्च प्रवर्तकत्वात् इच्छायाश्चाऽवश्यम्भावाऽनियमात् । प्रवृत्तिनियमोऽप्युपपन्न इत्याह—प्रवृत्तिहेतुं बुद्ध्वा पुरुषस्येच्छया प्रवृत्तिः । ज्ञापकत्वे सति संविदाश्रयत्वमप्युपपन्नमित्याह-सम्बन्धबोधाऽपेक्षा च । प्रकृत्य-

१ कारकत्वेन यत् २ पु॰ पा ।

नियमश्च । अभिधेयत्वात् । प्रतीतप्रवर्तनाऽन्यथाऽनुपपत्त्या कार्यकल्पनेति ।

नैतत्सारम् ।

न प्रयोगाऽनिरूप्यत्वाद्वैयर्थ्यात्पूर्वदोषतः ।

अप्रवृत्तेः फलाऽयोगाद्रूपोक्तेर्व्यापृतिः श्रुतेः ॥

विधिरित्यनुषज्यते । न हि प्रेरणाऽध्येषणाऽभ्यनुज्ञालक्षणः शब्दस्य व्यापारो निरूप्यते। तस्य पुरुषधर्मत्वात्।

न्तराऽनुरक्तप्रवर्तनाऽभिधायिना च प्रत्ययेन सह प्रकृतेः समभिव्याहारविशेषोऽप्युपपन्न इत्याह—अभिधेयसम्बन्धनियमश्च । अभिधेययोर्धात्वर्थप्रत्ययार्थप्रवर्तनयोः सम्बन्धनियमात्प्रकृतिप्रत्यययोः समभिव्याहारविशेषोऽप्युपपन्न इत्यर्थः । कुतः ? प्रवर्तनाया अभिधेयत्वात् । शब्दव्यापारश्चाऽभिहित इच्छासहकारी प्रवर्तयतीति । कार्यकल्पनाऽप्युपपन्नेत्याह—शब्दप्रतीतप्रवर्तनाऽन्यथाऽनुपपत्त्या कार्यकल्पनेति । तदेतद् दूषयति—नैतत्सारम् । तथा हि ।

न प्रयोगाऽनिरूप्यत्वाद्वैयर्थ्यात्पूर्वदोषतः ।

अप्रवृत्तेः फलाऽयोगाद्रूपोक्तेर्व्यापृतिः श्रुतेः ॥

विधिरित्यनुषज्यते । स च न व्यापृतिः श्रुतेरिति निषिध्यते । प्रयोगाऽनिरूप्यत्वादिति विवृणोति—न हि प्रेषणाऽध्येषणाऽभ्यनुज्ञालक्षणः शब्दस्य प्रयोगो व्यापारो निरूप्यते । ननु शब्दोच्चारणाऽनन्तरं तदवगमात्तेनोक्तमिति[1] कथं प्रेषणादिलक्षणः शब्दप्रयोगो न निरूप्यत इत्याह—तस्य पुरुषधर्मत्वात् । सत्यं शब्दविज्ञानाऽनन्तरमुपलभ्यते ।

१ अवगमात् किमिति २ पु पा ।

द्वेषत्वजातिमान् द्वेषः। सा चानुगतप्रत्यक्षसिद्धा। आत्मविशेषगुणः। अनित्य एव प्रयत्नहेतुः। शत्रौ द्वेषात्तद्वधे प्रवृत्तिरिति कश्चित्।

परे तु निवृत्तौ स हेतुरिति वदन्ति। स च दुःखे दुःखत्वप्रकारकज्ञानसाध्यः। तत्साधनेषु दुःखसाधनताज्ञानसाध्यः। तत्साधनेष्वपि तत्साधनताज्ञानसाध्यः। यद्वा दुःखसाधनताज्ञानमेवोपायद्वेषहेतुः, दुःखपदेन द्वेषविषयस्य ग्रहणात्। तथा च यत्र द्वेषस्तत्साधनताज्ञानं दुःखादन्यत्र द्वेषे कारणम्।

अन्ये तु दुःखप्रयोजकताज्ञानमुपायद्वेषे कारणमाहुः। स च द्रोहक्रोधाक्षमामर्षेर्ष्यासूयामन्युभेदाद्बहुविधः। तत्रालक्षितविकारश्चिरानुबद्धापकारपर्यवसायी द्रोहः। शरीरेन्द्रियादिवैकृत्यहेतुप्रत्युत्पन्नदुःखप्रभवस्त्वाशुतरविनाशी क्रोधः। परकीयगुणादिविषये द्वेषोऽक्षमा। स्वगुणपरिभवशङ्किनः परगुणद्वेषोऽमर्षः। परमपकुर्वतीर्ष्या। अपकारासहिष्णोरसमर्थस्य परापकारपर्यवसायी निगूढश्चिरकालावस्थायी द्वेषोऽसूया। अपकर्तरि प्रत्यपकारासमर्थस्यान्तर्निगूढो द्वेषो मन्युरित्यादिस्वरूपकीर्त्तनमिति दिक्।

यत्नत्वजातिमान् यत्नः। स च जीवनयोनिरितरश्च। जीवनयोनिरनित्य एव। इतरश्च नित्योऽनित्यश्च। नित्यो भगवतो, जीवानामनित्यः प्रत्यक्षश्च। जीवनयोनिस्त्वतीन्द्रियः।

ननु तत्र किं मानम्? प्राणक्रियाया अदृष्टादेरेवोत्पत्तिसम्भवेन किमन्तर्गडुना यत्नेनेति चेत्?

अत्र केचित्। प्राणक्रिया यत्नजन्या क्रियात्वात् शरीरचेष्टावदिति वदन्ति। तन्न। ईश्वरयत्नजन्यत्वेन सिद्धसाधनात्। जन्ययत्नजन्यत्वसाधने च वायुक्रियायां व्यभिचारात्। इतरश्चानित्य इच्छाजन्यः, चेष्टाजनकः। प्रयत्नवदात्मसंयोगासमवायिकारणिका क्रिया चेष्टा। क्वचिद् द्वेषादपि स इति कश्चित्। नित्यस्तु कार्यमात्रहेतुः। निवृत्त्याख्यो यत्न इत्यपि केचित्। प्रवृत्त्यभाव एव निवृत्तिरित्यन्ये।

धर्मत्वजातिमान् धर्मः। स च सुखकीर्तनादिनाश्योऽनित्य एव। आत्मविशेषगुणोऽतीन्द्रियः। धर्मत्वजातिस्तु कारणतावच्छेदकतया सिध्यति। सुखत्वावच्छिन्नं प्रति धर्मत्वेन हेतुत्वादिति कश्चित्।

परे तु विलक्षणस्वर्गादौ वाजपेयादेस्तज्जन्यविलक्षणादृष्टस्य वा हेतुत्वमावश्यकम्। अन्यथा विहितकर्मान्तरेण धर्मान्तरेण वा वाजपेयजन्यस्वर्गोत्पादापत्तेः। तथा च धर्मत्वेन कार्यकारणभावे मानाभावान्न धर्मत्वजातौ मानम्। न च गङ्गादिदर्शनादिजन्यधर्मस्येश्वरे वारणाय धर्मत्वेनात्मत्वेन कार्यकारणभावाद्धर्मत्वजातिसिद्धिरिति वाच्यम्। अधर्मादिवारणार्थमधर्मत्वेनाऽऽत्मत्वेन कार्यकारणभावान्तरापत्तेरधर्मकारणज्ञानादिसत्त्वात्। न चेष्टापत्तिः। अनेककार्यकारणभावापेक्षया धर्माधर्मादिसाधारणीं जातिं कल्पयित्वा तदवच्छिन्नं प्रति लाघवेनात्मत्वेन हेतुताया एव कल्पने उचितत्वात्। यद्यपि तत्त्वज्ञानिनां धर्माधर्मोत्पत्तिवारणार्थं मिथ्याज्ञानस्य कारणत्वमवश्यं वाच्यम्। तत एवेश्वरे धर्माधर्मोत्पत्तिवारणसम्भवान्नात्मत्वेनादृष्टत्वावच्छिन्ने कारणत्वे मानम्। तथापि तत्त्व-

ज्ञानत्वेन ध्वंसस्यैवादृष्टत्वावच्छिन्ने प्रतिबन्धकत्वस्वीकारेण तथा हेतुत्वस्यावश्यकत्वम्। किं च मिथ्याज्ञानत्वेन कारणत्वे सुप्ते मिथ्याज्ञानाभावाददृष्टोत्पत्तिर्न स्यात्। न च मिथ्याज्ञानशब्देन वासनाशब्दवाच्यभावनाख्यसंस्कारो वाच्यः। तथा च सुप्ते तस्य विद्यमानत्वाददृष्टोत्पत्तिरिति वाच्यम्। संस्कारस्य प्रागेव दूषितत्वात्। तस्मात्तत्त्वज्ञानध्वंसस्यैव प्रतिबन्धकत्वमिति दिक्।

तल्लक्षणं तु सुखजनकवृत्त्यतीन्द्रियविशेषगुणमात्रवृत्तिजातिमत्त्वमिति कश्चित्। विलक्षणात्ममनःसंयोगवारणाय विशेषेति। ननु तस्यातीन्द्रियत्वे तत्र किं मानम्।

अत्र केचित् यागादेः स्वर्गसाधनत्वस्य वेदेन बोधनात् साधनत्वस्य कार्याव्यवहितपूर्वक्षणे स्वस्वव्यापारान्यतरसत्त्वरूपस्य व्यापाराभावे बाधाद्वेदाप्रामाण्यनिरासाय व्यापारत्वेनादृष्टकल्पनम्। न च देवताप्रीतिरेव व्यापारोऽस्तु तस्या यागजन्यत्वस्य क्लृप्तत्वात् स्वर्गजनकत्वमात्रं कल्प्यते। 'यजदेवपूजाया'मिति स्मृतेः पूजा च गौरवितप्रीतिहेतुभूता क्रियेति वाच्यम्। प्रीतेरन्याशुतरविनाशित्वात्, प्रीतिपरम्पराकल्पने गौरवापत्तेश्च। गङ्गास्नानादौ देवताप्रीतेरभावाच्च। विष्ण्वादिदेवताके प्रीतेरभावाच्च। न च विष्णुप्रीतेः फलत्वेन श्रवणाद्विष्णावपि प्रीतिरस्तीति वाच्यम्। तत्र कर्मधारयेण व्यापिकाया बहुकालीनायाः प्रीतेरेवफलत्वश्रवणात्। न च यागध्वंस एव व्यापारोऽस्त्विति वाच्यम्। यद्ध्वंसजन्यं यत्तत्तदजन्यमिति व्याप्तेः। स्वर्गे यागाजन्यतापत्तेः। यागस्य कारणीभूताभावप्रतियोगित्वेन प्रतिबन्धकतापत्तेः। ध्वंसस्यान-

न्तत्वेन फलानन्त्यापत्तेश्च । न च विधिबोध्यवर्षादिप-र्यन्तमेव फलं ध्वंसो जन तीति वाच्यम् । स्वर्गकामो यजेतेत्यादौ विधिना तादृशफलाबोधनात्तत्र फलानन्त्यापत्तेः । एतत्तत्त्वमन्यत्राभिहितमेवेति दिक् ।

अधर्मत्वजातिमानधर्मः । दुःखकारणविशेषगुणवृत्ति-सविषयावृत्तिजातिमान्वा । स चानित्य एव । दुःखात्क्वचित् प्रायश्चित्तादिना च नश्यति । स चातीन्द्रिय आत्मविशेषगुणः । धर्मवदेतत्साधर्म्यं द्रष्टव्यम् । विस्तरस्तु गुणरहस्यटिप्पण्यां वेदितव्य इति दिक् ।

बुद्धित्वजातिमती बुद्धिः । पटं जानामि घटं जानामीत्यनुगतप्रत्यक्षस्य तत्र मानत्वात् । सा च द्विविधा । स्मृतिरनुभवश्च । स्मृतिः समानप्रकारकज्ञानजन्याऽनित्यैव यथार्थाऽयथार्था च । अनुभवो द्विविधः । नित्योऽनित्यश्च । ईश्वरस्य नित्यः । स च यथार्थ एव तत्तद्रूपेण सर्वविषयकश्च । जीवानां त्वनित्यः । स च सर्वविषयकोऽसर्वविषयकश्च । प्रमेयत्वादिसामान्यलक्षणाजन्यः सर्वविषयकः । अन्यस्त्वसर्वविषयकः । स चानुभवः प्रमाऽप्रमाभेदाद् द्विविधः । तत्र प्रमा चतुर्विधा । प्रत्यक्षानुमित्युपमितिशाब्दभेदात् । तत्करणं प्रमाणमपि चतुर्विधम् । प्रत्यक्षानुमानोपमानशाब्दभेदात् । तत्र प्रत्यक्षं द्विविधम् निर्विकल्पकसविकल्पकभेदात् । तत्र सविकल्पकं द्विविधम् । प्रमाऽप्रमाभेदात् । तद्वति तत्प्रकारकानुभवस्तत्प्रमा तत्तत्संबन्धेन तद्वद्विशेष्यकत्वावच्छिन्ना तेन सम्बन्धेन तत्तत्प्रकारता तद्वाननुभवस्तेन तेन सम्बन्धेन तत्तत्प्रमा । तेन संयोगेन वह्निमति समवायेन वह्निज्ञानं न प्रमा । न वा शुक्तिरजतयो रजतशुक्ती इति ज्ञानं प्रमा । न वा स्मृति-

यथार्था प्रमेति । न च स्मृतेःप्रमात्वेष्टापत्तिरिति वाच्यम् । अनुभवमात्रस्य प्रमात्वे इष्टापत्तिरिति वक्तुमुचितत्वात् । भ्रमकरणस्य प्रमाणत्वापत्तिस्तत्र बाधिकेति चेत् ? स्मृतिकरणस्य प्रमाणत्वापत्तिस्तत्रापि बाधिकेति तुल्यम् । किं च भ्रमरूपानुभवकरणस्य प्रमाण वाङ्गीकारेऽपि न प्रमाणविभागव्याघातः । तस्य प्रत्यक्षादिष्वन्तर्गतत्वेन तत्करणस्यापि प्रत्यक्षादिप्रमाणेष्वन्तर्भावस्य वक्तुं सुवचत्वात् । स्मृतेः प्रमात्वे तु न तत्करणं प्रत्यक्षादिप्रमाकरणेष्वन्तर्भवतीति प्रमाणविभागव्याघातापत्तिरिति दिक् ॥

अप्रमा च तदभाववति तत्प्रकारकज्ञानम् । तद् द्विविधम् । अनुभवस्मृतिभेदात् तत्रानुभवरूपं तद्धि प्रत्यक्षादिभेदेन चतुर्विधम् । निर्विकल्पकं तूभयबहिर्भूतमिति कश्चित् । अप्रमाभिन्नं ज्ञानं प्रमेत्यन्ये ।

तत्र साक्षात्कारिप्रमाकरणं प्रत्यक्षप्रमाणं साक्षात्कारत्वं च साक्षात्करोमीत्यनुगतप्रत्यक्षसिद्धजातिविशेषः । न चेन्द्रियजन्यज्ञानत्वमेव तत्प्रत्ययविषयोऽस्तु । मनोरूपेन्द्रियजन्यत्वेनानुमित्यादावपि तथा प्रत्ययापत्तेः । इन्द्रियाप्रत्ययेऽपि तथाप्रत्ययाच्च । ननु गुरुत्ववान् घट इत्यादिप्रत्यक्षप्रत्यये साक्षात्कारत्वसत्त्वेऽपि गुरुत्वं साक्षात्करोमीत्यप्रत्ययाल्लौकिकविषयताया एव तादृशप्रत्ययविषयत्वं, तथा च साक्षात्कारत्वजातौ न मानमिति चेत् ।

अत्र केचित् द्रव्यत्वविशिष्टलौकिकविषयतया प्रत्यक्षे समवायेन महत्त्वस्य कारणत्वान्महत्त्वकार्यतावच्छेदककोटिप्रविष्टायास्तस्या ईश्वरप्रत्यक्षसाधारण्याभावे ईश्वरप्रमायाः प्रत्यक्षप्रमायामनन्तर्भावे प्रमाविभागव्या-

घातापत्तिभयेन साक्षात्कारत्वस्य तत्साधारणस्य प्रमा-विभाजकधर्मस्य स्वीकारः । न च तत्साधारणान्यतरत्वेनैव विभागोऽस्तु । अनुमितितत्साधारण्यान्यतरत्वेनापि अनुमितिविभागोपपत्तावीश्वरप्रमायाः प्रत्यक्षेऽनुमितौ वाऽन्तर्भावे विनिगमकाभावात्तत्र तत्स्वीकारादित्याहुः।

अपरे तु न कार्यतावच्छेदकतयापि प्रत्यक्षत्वजातिसिद्धिः द्रव्यत्वविशिष्टलौकिकविषयतासंबन्धेन ज्ञाने महत्त्वस्य हेतुत्वात् । न च तादृशविषयतया ईश्वरज्ञानस्य सर्वद्रव्ये सत्त्वाद् व्यभिचार इति वाच्यम्। लौकिकविषयतया प्रत्यक्षस्य प्रवृत्तौ हेतुत्वेनेश्वरज्ञाने लौकिकविषयताया मानाभावात् । तत्र तत्स्वीकारे त्वस्तु कार्यतावच्छेदकतया प्रत्यक्षत्वसिद्धिः ।न त्वीश्वरप्रत्यक्षे मानाभावाद्व्यभिचारापत्तेश्च।न च रजतं पश्यामीति प्रत्ययाद्भ्रमेऽपि लौकिकविषयतासत्त्वाद्व्यभिचार इति वाच्यम्।विद्यमानरजतस्यैव तत्र भानाङ्गीकारान्महत्त्वस्य तत्र सत्त्वात् । अनुव्यवसायस्य प्रमात्वनियमानङ्गीकारेण भ्रमे लौकिकविषयताया अनङ्गीकाराच्च । अत एव लौकिकविषयतया द्रव्यचाक्षुषे चक्षुःसंयोगस्य कारणत्वेऽपि न व्यभिचारः । न चेश्वरज्ञाने प्रत्यक्षत्वानङ्गीकारे ईश्वरप्रमाया आधिक्येन प्रमाविभागव्याघात इति वाच्यम् । ईश्वरज्ञाने लौकिकविषयतास्वीकारपक्षे तयैव प्रत्यक्षप्रमाविभागसम्भवात् । तस्य ईश्वरप्रमायामनङ्गीकारेऽपि न विभागानुरोधेन तत्रप्रत्यक्षत्वसिद्धिः। सिद्धधर्मेण विभागो न तु तदनुरोधेनापि पदार्थसिद्धिः । अतिप्रसङ्गात्। न वा प्रमाविभागव्याघातः। सिद्धधर्मेणान्यतरत्वादिनैव प्रत्यक्षप्रमाणविभागसम्भवात्। न चैवमनुमितितत्साधारणान्यतरत्वमनुमितिनिष्ठप्रमाविभाजकताव-

च्छेदको धर्मोऽस्तु । तथा चेश्वरप्रमाया अनुमितावेवान्तर्भावोऽस्तु इति वाच्यम् । अनुमितित्वजातेस्तत्साधारण्याङ्गीकारेणानुमितावन्तर्भावस्य तथाप्यपरिहारात् । प्रकारान्तरेणानुमितावन्तर्भावे बाधकान्तरमिति चेन्ममापि समानमिति दिक् ।

साक्षात्कारिप्रमाकरणं प्रत्यक्षं घ्राणरसनचक्षुःश्रोत्रत्वङ्मनोभेदात् षड्विधम् । नन्वालोकस्यापि साक्षात्कारूपप्रमाकरणत्वेन प्रत्यक्षप्रमाणत्वापत्तिरिति चेत्? न । साक्षात्कारत्वव्याप्यजात्यवच्छिन्नकार्यता प्रतियोगिककारणतारूपकरणत्वेन प्रत्यक्षप्रमितिकरणविभागादालोकादेस्तादृशकरणत्वाभावात्तेन विनाऽप्यन्धकारादेश्चाक्षुषस्य जायमानत्वाच्चक्षुरादेश्च चाक्षुषत्वावच्छिन्नं प्रत्येव हेतुत्वान्नालोकस्य तथात्वमिति केचित् ।

परे तु आलोकादेः प्रमाणत्वेऽपि प्रत्यक्षप्रमाणेऽन्तर्भावान्न प्रमाणविभागव्याघातः । प्रत्यक्षप्रमाणस्य षड्विधत्वकथनं नाधिकसंख्याव्यवच्छेदपरम् । अत एव क्वचिदिन्द्रियार्थसन्निकर्ष इत्यादिनाऽन्येषामपि प्रमाणत्वकथनम् । अत एव द्रव्यचाक्षुषं प्रति संयोगेन, द्रव्यसमवेतचाक्षुषं प्रति संयुक्तसमवायेन, द्रव्यसमवेतसमवेतचाक्षुषत्वाद्यवच्छिन्नं प्रति संयुक्तसमवेतसमवायादिना चक्षुषो हेतुताया आवश्यकत्वेन चक्षुष्ट्वेन हेतुत्वे मानाभावेऽपि न क्षतिः । सामान्यकार्यकारणभावस्यापि युक्तिसिद्धस्यैव स्वीकारादित्याहुः । करणत्वं च व्यापारवत् कारणत्वम् । अव्यवधानेन कार्योत्पादकत्वं वा । आद्ये चक्षुरादीनाम्, अन्त्ये तत्संयोगादीनां चेति दिक् ।

परेतु व्यापारवदसाधारणं कारणं करणम् । घटं प्रति कपालद्वयसंयोगवारणाय व्यापारवदिति । ईश्वरज्ञानवारणायासाधारणेति। तन्न। यद्धर्मावच्छिन्नं यद्धर्मावच्छिन्नं जनयित्वैव यद्धर्मावच्छिन्नं जनयति तद्धर्मावच्छिन्नस्य तद्धर्मावच्छिन्नं तद्धर्मावच्छिन्ने जननीये व्यापारः । न चेश्वरज्ञानस्य कार्यतावच्छेदकावच्छिन्ने जनयितव्ये किंचिद्धर्मावच्छिन्नं व्यापारोऽस्तीति । ननु चक्षुषा संयोगेन द्रव्यग्रहे परमाण्वाकाशादीनामपि ग्रहणं स्यात्तत्रापि तत्संयोगस्य सत्त्वात्। न च चक्षुःसंयोगस्यातीन्द्रियत्वेन फलैकोन्नेयत्वेन तत्र फलाभावेन तत्सत्त्वे मानाभाव इति वाच्यम्। परमाणौ महत्त्वाभावस्याकाशे उद्भूतरूपाभावस्य च चाक्षुषतया तज्जनिकाया इन्द्रियसंयुक्तविशेषणतायाःसत्त्वेन तत्र चक्षुःसंयोगस्यावश्यकत्वात् । न च द्रव्यत्वविशिष्टलौकिकचाक्षुषे महत्त्वस्योद्भूतरूपस्य च समवायेन हेतुत्वान्न दोष इति वाच्यम् । एवमप्यन्धकारे भूतलादेश्चाक्षुषापत्तेः । तत्र समवायेन महत्त्वोद्भूतरूपयोः सत्त्वात्। अन्धकारे चाक्षुषान्यथानुपपत्त्या चक्षुःसंयुक्तविशेषणतायास्तत्र सत्त्वेन तत्र चक्षुःसंयोगस्यापि सत्त्वात्। न च द्रव्यचाक्षुषे संयोगेन महदुद्भूतरूपवदालोकस्य महत्त्ववद्रूपवदालोकस्य रूपवदालोकस्य विलक्षणसंयोगेनालोकस्य वा हेतुत्वमत एवनसुवर्णादिसंयोगेन घटादिचाक्षुषमिति नोक्तदोष इति वाच्यम् । एवमपि घटे किंचिदवयवावच्छेदेनालोकसंयोगेऽन्यावच्छेदेन चक्षुःसंयोगे चाक्षुषापत्तेः। आलोकसंयोगावच्छेदकावयवावच्छेदेन चक्षुःसंयोगवतां घटचाक्षुषस्य जायमानत्वेन विजातीयसंयोगेनालोकस्य तत्र सत्त्वातिदि चेत्?

अत्र केचित् आलोकसंयोगावच्छेदकावच्छिन्न-

चक्षुःसंयोगस्य समवायेन द्रव्यचाक्षुषे हेतुत्त्वान्नोक्त-दोषः ।

परे तु आलोकसंयोगावच्छेदकावच्छिन्नचक्षुःसंयोगस्य चक्षुःसंयोगावच्छेदकावच्छिन्नालोकसंयोगस्य वा हेतुत्व-मित्यत्र विनिगमकाभावान्न तथा हेतुत्वम्। अत एवालोक-संयोगावच्छिन्नचक्षुःसंयोगोऽपि न हेतुः । नापि तत्तदवय-वावच्छिन्नस्यालोकसंयोगस्य चक्षुःसयोगस्य च हेतुत्वम् । घटादावन्यावयवावच्छेदेनालोकसंयोगस्य चक्षुःसंयोगस्य च सत्त्वे प्रत्यक्षस्य जायमानत्वेन व्यभिचारात् । नाप्या-लोकसंयोगावच्छेदकावच्छिन्नसंयोगसम्बन्धेन चक्षुर्हेतुः । चक्षुःसंयोगावच्छेदकावच्छिन्नसंयोगेनालोकेन वेत्यत्र विनिगमनाविरहात् । अत एव एतदीयद्रव्यचाक्षुषे एत-दीयचक्षुःसंयोगस्य कारणत्वं वाच्यं, तथा चातिप्रसङ्ग-वारणार्थमालोकसंयोगावच्छेदकावच्छिन्नैतच्चक्षुःसंयोग-स्यैव कारणत्वं कल्प्यत इति निरस्तम् । एतद्द्रव्य-चाक्षुषे एतच्चक्षुःसंयोगावच्छेदकावच्छिन्नसंयोगेनालो-कस्य कारणत्वस्यापि वक्तुमुचितत्वादिति तेन तेन रूपेण तेन तेन संबन्धेन वा द्वयोरेव हेतुत्वमाहुः ।

अन्ये तु अन्यावयवावच्छेदेन घटादावालोकसंयो-गसत्त्वेऽपि चक्षुःसंयोगोऽस्त्येव । न च तत्र मानाभाव अ-न्धकारादिप्रत्यक्षान्यथानुपपत्त्या तत्र तत्स्वीकारावश्य-कत्वात् । तथा च द्रव्यचाक्षुषे विजातीयसंयोगेन चक्षुषो हेतुत्वान्नातिप्रसङ्गः । न चैवमन्धकारे चक्षुःसंयोगावच्छेद-कावयवावच्छेदेनालोकसंयोगे संपादितेऽपि तच्चाक्षुषं न स्यादिति वाच्यम् । तदानीमन्यस्यैव चक्षुःसंयोगस्याङ्गीका-रात् । न चैवं घटादिचाक्षुषानन्तरमालोकस्यापनयने सति घटादेश्चाक्षुषापत्तिः पूर्वचाक्षुषानुरोधेन विजातीयच-

क्षुःसंयोगस्य सत्त्वादिति वाच्यम् । तदा तत्तत्संयोगस्य नाशाभ्युपगमात् । न चैवमनन्तसंयोगतद्ध्वंसकल्पने गौरवमिति वाच्यम् । कारणतावच्छेदके तत्सम्बन्धे च गौरवभयेनानन्तव्यक्तिस्वीकारस्यान्यत्र स्वीकारात् । न च चैत्रीयचक्षुःसंयोगान्मैत्रस्य द्रव्यचाक्षुषापत्तिः तदीयद्रव्यचाक्षुषे विजातीयसंयोगेन तदीयचक्षुषोऽपि हेतुत्वाङ्गीकारादित्याहुस्तन्न । द्रव्यचाक्षुषे विजातीयसंयोगेनालोकस्य तत्पुरुषीयद्रव्यचाक्षुषे विजातीयसंयोगेनालोकस्य वा हेतुत्वमिति विनिगमनाविरहात् । न चैवं सति तत्तत्पुरुषीयद्रव्यचाक्षुषजनकतावच्छेदकतया आलोकसंयोगे नन्तजातिकल्पनागौरवं, मम तु तच्चक्षुषो विजातीयसंयोगेन तत्तत्पुरुषीयद्रव्यचाक्षुषे हेतुत्वकल्पनादेकैव चक्षुःसंयोगे जातिरिति लाघवमिति वाच्यम् । कारणतावच्छेदके त्वन्मते तदीयचक्षुष्ट्वस्य प्रवेशेन तदपेक्षया संबन्धेऽनन्तजातिस्वीकारस्यैवोचितत्वात् । किं चैवं सति महदुद्भूतरूपयोः समवायेन द्रव्यचाक्षुषे हेतुत्वं न स्यात् परमाण्वाकाशादौ विजातीयचक्षुःसंयोगाभावादेवाचाक्षुषोपपत्तेः । न चेष्टापत्तिः । आलोकसंयोगो वायुसंयोगो वेत्यत्र विनिगमनाविरहात् ।

वस्तुतस्तु तत्तत्पुरुषीयद्रव्यचाक्षुषजनकतावच्छेदकत्वेनालोकसंयोगे न वैजात्यकल्पनं जातिसङ्करापत्तेः । तथा हि । यत्र चैत्रमैत्रादीनामेकेनैवालोकसंयोगेन द्रव्यचाक्षुषं तत्रालोकसंयोगे चैत्रमैत्रद्रव्यचाक्षुषजनकतावछेदकजातिद्वयसत्त्वात् । येन मैत्रस्यैव प्रत्यक्षं तत्र चैत्रचाक्षुषजनकतावच्छेदकजात्यसत्त्वात् । येन चैत्रस्यैव प्रत्यक्षं तत्र मैत्रचाक्षुषजनकतावच्छेदकजात्यसत्त्वादिति । न च चैत्र-

मैत्रप्रत्यक्षजनकभिन्नसंयोगस्वीकारान्न सङ्कर इति वाच्यम् अनन्तसंयोगकल्पने गौरवपत्तेः । तथा च विलक्षणसंयोगेन तदीयचक्षुष एव विलक्षणविलक्षणसंयोगेन चक्षुष एव वा तत्तदीयद्रव्यचाक्षुषे हेतुत्वम्, महत्त्वोद्भूतरूपयोः कारणत्वाभावस्त्विष्ट एव । अत एव घटसूक्ष्मावयवावच्छेदेन सन्निकर्षे घटप्रत्यक्षापादनमपि निरस्तमिति दिक् ।

नन्वालोकसंयोगावच्छेदकावच्छेदेन चक्षुःसंयोगस्य हेतुत्वमतेऽपि बिडालादेरन्धकारे घटादिचाक्षुषं न स्यात् आलोकसंयोगस्य तत्राभावात् । न च तच्चक्षुःसंयुक्तमहदुद्भूतरूपवदालोकसंयोगस्तत्रास्तीति वाच्यम् । अन्येषामपि चाक्षुषापत्तेरिति चेत् ।

अत्र केचित् । तच्चक्षुःसंयुक्तालोकस्तच्चक्षुःसंगावच्छेदकावच्छेदेन संयुज्यते नान्यचक्षुःसंयोगावच्छेदकावच्छेदेन तादृशयोगस्य फलैकोन्नेयत्वादिति ।

ननु समवायेन विलक्षणालोकसंयोगस्य द्रव्यचाक्षुषे हेतुत्वेऽन्धकारे दीपादीनां चाक्षुषं सम्भवतीति दीपचक्षुःसंयोगस्य समवायेन दीपे सत्त्वात् । विलक्षणसंयोगेनालोकस्य हेतुत्वे दीपादौ तेन सम्बन्धेनालोकान्तराभावात् । स्वस्य च तत्रावृत्तेर्न तेषां चाक्षुषमिति चेन्न । तादात्म्यसम्बन्धेन तत्रावृत्तेस्तन्निष्ठगुणादिकारणत्ववद्विलक्षणदीपादिसंयोगेन दीपावृत्तेरपि दीपादेः स्वचाक्षुषे हेतुत्वसम्भवात् । अत एव महदुद्भूतरूपवदालोकस्य सुवर्णादेःसंयोगेन न घटादेश्चाक्षुषम् । न चान्धकारे सुवर्णचक्षुःसंयोगात् सुवर्णादेः प्रत्यक्षम् । तादृशसुवर्णादिसंयोगे वैजात्यानङ्गीकारात् । न चैवं विजातीयसंयोगेनालोकस्य हेतुत्वे महदुद्भूतत्यालोकविशेषणवैयर्थ्यम् । इष्टत्वात् ।

अन्ये तु महदनभिभूतोद्भूतरूपवदालोकसंयोगस्य हेतुत्वमन्धकारे सुवर्णसंयोगात् सुवर्णस्य घटादेश्च प्रत्यक्षमिति । तन्न । बलात्सजातीयग्रहणकृतस्याग्रहणस्याभिभवत्वेनान्धकारे तादृशाभिभवस्य सुवर्णरूपादावभावेन सुवर्णादेः प्रत्यक्षापत्तेरपरिहारात् । बलवत्सजातीयसम्बन्धस्याभिभवत्वे तु कारणतावच्छेदकगौरवापत्तिरिति दिक् ।

चक्षुःसंयुक्तसमवायेन द्रव्यसमवेतचाक्षुषम् । चक्षुःसंयुक्तसमवेतसमवायेन द्रव्यसमवेतसमवेतचाक्षुषम् ।

ननु द्रव्यसमवेतचाक्षुषे चक्षुःसंयुक्तसमवायस्य हेतुत्वे परमाणुघटितचक्षुःसंयुक्तसमवायेनान्धकारे पृथिवीत्वचाक्षुषवारणायालोकसंयोगावच्छेदेन चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवायस्य हेतुत्वं वाच्यं तथा च त्रसरेणुचाक्षुषे व्यभिचारः । तस्य द्रव्यसमवेतचाक्षुषत्वेनालोकसंयोगावच्छेदेन चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवायजन्यत्वाभावात् । न च द्रव्यान्यद्रव्यसमवेतचाक्षुषे तस्य हेतुत्वान्नोक्तदोष इति वाच्यम् । घटादावपि तादृशसन्निकर्षसत्त्वेन द्रव्यान्यद्रव्यसमवेतचाक्षुषापत्तेः । न च द्रव्यान्यद्रव्यसमवेतस्य रूपादेर्घटादौ चाक्षुषं जायत इति वाच्यम् । द्रव्यान्यद्रव्यसमवेतस्य रूपादेस्त्रसरेणौ चाक्षुषसत्त्वेन व्यभिचारतादवस्थ्यात् । द्रव्यान्यद्रव्यसमवेतत्वविशिष्टलौकिकविषयतासम्बन्धेन चाक्षुषे तस्य हेतुत्वं तर्हि तादृशविषयतया घटादौ चाक्षुषापत्तेर्दुर्वारत्वादिति चेत् ।

अत्र केचित् तादृशचाक्षुषे द्रव्यस्य तादात्म्येन प्रतिबन्धकत्वान्नोक्तदोष इति वदन्ति ।

नव्यास्तु त्र्यणुकस्य नित्यत्वाङ्गीकारेण तच्चाक्षुषे

द्रव्यसमवेतचाक्षुषत्वाभावान्नोक्तव्यभिचार इति । द्रव्यसमवेतत्वविशिष्टलौकिकविषयतासम्बन्धे चाक्षुषे आलोकसंयुक्तचक्षुःसंयुक्तरूपवत्समवायो हेतुः द्रव्यसमवेतत्वविशिष्टलौकिकविषयतया चाक्षुषे वा स हेतुः । अत एव द्रव्यसमवेतरूपादिचाक्षुषस्य रूपत्वादौ सत्त्वेन तत्र चक्षुःसंयुक्तरूपवत्समवायसन्निकर्षाभावेऽपि न क्षतिः । एवं द्रव्यत्वादिविशिष्टलौकिकविषयतया चाक्षुषे चक्षुःसंयोगादेर्हेतुत्वमित्याहुः ।

अपरे तु त्र्यणुकनित्यत्वाङ्गीकारे द्रव्यसमवेतचाक्षुषे स्वविषयसमवेतत्वसम्बन्धेनाश्रयचाक्षुषस्य द्रव्यचाक्षुषस्य वा हेतुत्वं, न तु तादृशचक्षुःसंयुक्तसमवायस्यापि, घटादिचाक्षुषानन्तरमेव तद्रूपादिचाक्षुषाङ्गीकारान्न व्यभिचार इत्याहुः । तन्न । घटचाक्षुषे व्यभिचारात्पूर्वं कपालचाक्षुषाभावात् । अन्यथा त्र्यणुकादिक्रमेण घटचाक्षुषापत्तेः ।

वस्तुतो द्रव्यत्वविशिष्टलौकिकविषयतावत्समवेतत्वसम्बन्धेन चाक्षुषस्य द्रव्यान्यद्रव्यसमवेतत्वविशिष्टलौकिकविषयतासम्बन्धेन चाक्षुषे हेतुत्वं तादात्म्यसम्बन्धेन द्रव्यस्य च प्रतिबन्धकत्वं त्रसरेणोरनित्यत्वपक्षेऽपि सम्भवति । अत एव द्रव्यचाक्षुषस्य स्वविषयगुणसमवेतत्वसम्बन्धेन रूपत्वादौ सत्त्वेऽपि क्षतिविरह इति ध्येयम् ।

ननु चक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतचाक्षुषे हेतुत्वे परमाणुघटिततादृशसन्निकर्षात्परमाणुरूपगतशुक्लत्वचाक्षुषापत्तिस्तद्वारणार्थं चक्षुःसंयुक्तमालोकसंयुक्तं यन्महदुद्भूतरूपवत् तत्समवेतसमवायो हेतुर्वाच्यः । तथा च त्रसरेणुचाक्षुषे तद्रूपादिचाक्षुषे च व्यभिचारवारणार्थं द्रव्यान्यसमवेतं यत्तत्समवेतचाक्षुषे हे-

तुत्वं वाच्यं न तु द्रव्यान्यदिति द्रव्यसमवेतविशेषणम् । त्रसरेणुरूपचाक्षुषे व्यभिचारापरिहारात् । तथा च घटादौ तद्रूपादौ च तादृशचाक्षुषापत्तिरतस्तादृशचाक्षुषे द्रव्यसमवेतस्य प्रतिबन्धकत्वं वाच्यम्, तथा च सत्तायां तादृशचाक्षुषं न स्यात् । तस्या द्रव्यसमवेतत्वादिति चेत् ।

अत्र केचित् । द्रव्यमात्रसमवेतस्य तत्र प्रतिबन्धकत्वान्नोक्तदोष इत्याहुः ।

अन्ये तु द्रव्यसमवेतमात्रसमवेतचाक्षुषे द्रव्यसमवेतस्य प्रतिबन्धकत्वमाहुः । तन्न । त्रसरेणुरूपादौ तादृशचाक्षुषसत्त्वेन तत्र द्रव्यसमवेतस्य प्रतिबन्धकत्वासिद्धेः द्रव्यान्यद्रव्यसमवेतं तन्मात्रसमवेतचाक्षुषे तादृशसन्निर्षस्य हेतुत्वे द्रव्यसमवेतस्य प्रतिबन्धकत्वान्नोक्तदोषः ।

परे तु चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवेतसमवायस्य महत्त्ववत्समवेतसमवेतचाक्षुषे हेतुत्वान्न दोष इत्याहुः ।

नव्यास्तु त्रसरेणोर्नित्यत्वाङ्गीकारेण द्रव्यसमवेतसमवेतचाक्षुषे चक्षुःसंयुक्तरूपवत्समवेतसमवायस्य हेतुत्वान्नोक्तदोष इत्याहुः

वस्तुतो द्रव्यसमवेतसमवेतचाक्षुषत्वं न कार्यतावच्छेदकं लाघवेन समवेतसमवेतचाक्षुषत्वस्यैव कार्यतावच्छेदकत्वात् । एवं वचोऽपि त्वाचग्रहे हेतुत्वं रूपस्थाने स्पर्शप्रवेशेन द्रष्टव्यम् ।

अत्र प्रचीननैयायिकाः । त्वचा द्रव्यग्रहे समवायेनोद्भूतस्पर्शमात्रं न प्रयोजकमपि तु रूपमपि । आत्मान्यद्रव्यप्रत्यक्षे मानसान्यद्रव्यप्रत्यक्षे वा समवायेनोद्भूतरूपस्य हेतुत्वात् । अन्यथा तादृशप्रत्यक्षेऽनुगतकारणाभावापत्तेः । न च महत्त्वमेव तादृशप्रत्यक्षे कारणमिति

वाच्यम्। तस्य द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति कारणत्वेन तादृशप्रत्यक्षं प्रत्यपि कारणत्वे गौरवापत्तेः। तेन च रूपस्यापि द्रव्यचाक्षुषे कारणत्वेन तादृशप्रत्यक्षेऽपि कारणत्वे गौरवमिति वाच्यम्। द्रव्यचाक्षुषे चक्षुःसंयोगस्यात्मान्यद्रव्यप्रत्यक्षे रूपस्य हेतुत्वेनैवानतिप्रसङ्गात्। न च द्रव्यचाक्षुषे उद्भूतरूपं मानसान्यद्रव्यप्रत्यक्षे उद्भूतस्पर्श एव हेतुरस्तु न तु द्रव्यस्पर्शने उद्भूतस्पर्शो मानसान्यद्रव्यप्रत्यक्षे उद्भूतरूपमिति वाच्यम्। आलोकादेरप्रत्यक्षत्वापत्तेः। न च त्वन्मते वायोरप्रत्यक्षत्ववन्मन्मते आलोकादेरप्रत्यक्षत्वमिष्टमेवेति वाच्यम्। आलोकादेरप्रत्यक्षत्वे चलति पक्षिकाण्डादौ दूरत्वादिदोषेण क्रियाया अप्रत्यक्षेण पूर्वदेशविभागोत्तरदेशसंयोगेन क्रियानुमानानुपपत्तेः। तद्देशस्यालोकस्योद्भूतस्पर्शाभावेन त्वन्मतेऽप्रत्यक्षत्वेन तद्विभागस्य तत्संयोगस्य चाप्रत्यक्षत्वेन पूर्वदेशविभागोत्तरदेशसंयोगरूपलिङ्गस्याज्ञानेनानुमानासम्भवात्। किं च वायोः प्रत्यक्षत्वे तद्गतसंख्यादेः प्रत्यक्षापत्तिः। न च वायोरप्रत्यक्षत्वे शीतस्पर्शवान् वायुरिति त्वाचज्ञानानुपपत्तिः, बहिरिन्द्रियाणां स्वायोग्यमुख्यविशेष्यकज्ञानाजनकत्वादिति वाच्यम्। तादृशसिद्धान्ताङ्गीकारेऽपि शीतस्पर्शो वायुवृत्तिरिति त्वाचज्ञानानन्तर मनसैव शीतस्पर्शवान् वायुरिति ज्ञानाङ्गीकारादित्याहुः। तन्न। शीतो वायुरिति त्वाचप्रत्यक्षानुरोधेन तादृशप्रत्यक्षे महत्त्वस्यैव हेतुत्वात्। किं चाऽऽत्मान्यद्रव्यप्रत्यक्षत्वस्य जातित्वाभावेन तादृशप्रत्यक्षस्यार्थसमाजग्रस्तत्वेन च तदवच्छिन्नं प्रत्यनुगतकारणाभावेऽपि न क्षतिः। अत एव द्रव्यचाक्षुषप्रतिबन्द्यपि निरस्ता। तथा च मानसान्यद्र-

व्यप्रत्यक्षत्वापेक्षया लाघवेन च द्रव्यचाक्षुषे उद्भूतरूपस्य द्रव्यस्पार्शने उद्भूतस्पर्शस्य हेतुत्वाद्वायुः स्पार्शन एव तद्गतसंख्याप्रत्यक्ष फूत्कारादौ त्विष्टमेवेति नव्याः ।

घ्राणस्य संयुक्तसमवायेन । गन्धस्य प्रत्यक्षे घ्राणजे वा हेतुत्वम् । गन्धगतजातिप्रत्यक्षे गन्धसमवेतप्रत्यक्षे वा संयुक्तसमवेतसमवायेन, गन्धप्रत्यक्षे महत्त्वं तु स्वाश्रयसमवेतत्वेन महत्त्वघटितसन्निकर्षो वा हेतुः । गन्धत्वादिप्रत्यक्षे तु महत्त्वादिघटितसन्निकर्ष एव हेतुर्न तु महत्त्वं स्वाश्रयसमवेतसमवेतत्वसम्बन्धेन हेतुः । परमाणुघटितसन्निकर्षेण गन्धत्वप्रत्यक्षापत्तेः

एवं रासनेऽपि बोध्यमिति दिक् ।

गन्धत्वविशिष्टलौकिकविषयतया प्रत्यक्षं प्रति वा घ्राणजं प्रति वा घ्राणसंयुक्तमहत्त्ववन्निरूपितसमवायो हेतुः । न च रूपादौ तादृशप्रत्यक्षापत्तिः । तेषां घ्राणायोग्यत्वात् । तादात्म्येन गन्धस्य कारणत्वाद्वा । तादृशसंयुक्तसमवेतसमवायेन घ्राणस्य गन्धगतजातित्वविशिष्टलौकिकविषयतया घ्राणजप्रत्यक्षेगन्धसमवेतत्वविशिष्टलौकिकविषयतया प्रत्यक्षे गन्धसमवेतस्य तादात्म्येन समवेतत्वसंबन्धेन गन्धस्य वा हेतुत्वेन न रूपत्वादौ तादृशप्रत्यक्षम् । एवमेव रसनया रसस्य तत्समवेतानां च ग्रहो बोध्यः । तथा हि रसत्त्वविशिष्टलौकिकविषयतया रासने रसनासंयुक्तमहत्त्ववन्निरूपितसमवायेन रसनायास्तादात्म्यसंबन्धेन रससमवेतस्य रससमवेतत्वसंबन्धेन रसस्य वा हेतुत्वान्नरूपादौ रूपत्वादौ च तादृशप्रत्यक्षम् । न वा गन्धघटितरसनासन्निकर्षेण सत्तादौ रासनं श्रोत्रेण समवायेन शब्दग्रहः समवे-

ति प्रकृतात्मा परितः समन्तादगात्सर्वतो गत इत्यर्थः । शुक्रमित्यादिशब्दाः पुंलिङ्गत्वेन नेयाः स इत्युपक्रमात् । "शुक्रो' दीप्तिमान्। "अकायो लिङ्गशरीररहितः। "अव्रणः" अक्षतः। " अस्नाविरः" अस्नायुशिरः । आभ्यां स्थूलशरीराभाव उक्तः । "शुद्धो" रागादिगुणरहितः "अपापविद्धो" धर्माधर्मविधुर इति। तस्मान्न संस्कार्यो मोक्षः । तस्मान्न कर्तव्यविधिशेषतया ब्रह्मोपदेशसम्भवः । यत्तु सिद्धे प्रवृत्त्यादिलिङ्गाभावान्न शक्तिग्रह इति तन्न । प्रवृत्तिनिवृत्तिवृत्तिरेव लिङ्गमिति न निर्बन्धः "पुत्रस्तेजात" इत्यादौ हर्षादिलिङ्गेनापि शक्तिग्रहसम्भवात् । यत्तु प्रवृत्त्यादिपरस्यैव शास्त्रत्वमिति तदपि न हितशासनाद्वेदान्तानां शास्त्रत्वोपपत्तेः । नापि फलाभावो ब्रह्मात्मसाक्षात्कारस्य मोक्षफलकत्वात् । तादृशसाक्षात्कारार्थं मननादिसार्थक्यञ्चेति न कथञ्चिदपि विधिप्रवेशः । ब्रह्मात्मावगतेः प्रवृत्त्यादिनिरपेक्षाया मोक्षहेतुत्वं श्रुतिरपि दर्शयति "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः किमिच्छन्कस्यकामाय शरीरमनु संज्वरे "दिति। अयं परमात्माऽहमस्मीत्यपरोक्षतया यदि कश्चित्पुरुषो विजानीयात् । आत्मसाक्षात्कारदौर्लभ्यं द्योतयति"चेत्" शब्दः । स स्वातिरिक्तमात्मनः किं फलमिच्छन्कस्य वा पुत्रादेः कामाय फलाय तदलाभेन शरीरं तप्यमानमनु तदुपाधिस्सन् संज्वरेत्तप्येतेति । नन्वशरीरत्वाख्यमोक्षस्य स्वाभाविकत्वं सिद्धवत्कृत्य न धर्मजन्यत्वमित्युक्तं तदयुक्तं शरीरदशायामशरीरत्वाभावेन धर्मजन्यत्वसम्भवादिति चेन्न सशरीरत्वस्य मिथ्यात्वेनाऽशरीरत्वस्य स्वाभाविकत्वात् ।

तथा च ब्रह्मविद्विषया श्रुतिः "तद्यथाऽहिनिर्ल्वयिनी वल्मीकेमृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एवे"ति "स चक्षुरचक्षुरिव सकरणोऽकरणइव सवागवागिव समना अमना इव सप्राणोऽप्राणइवे "ति च । अनया श्रुत्याऽहं ब्रह्माऽस्मीतिज्ञाने सत्यपि मुक्तिर्न दृश्यते किन्तु यथापूर्वं संसारित्वमेवेति शङ्काऽपि परिहृता भवति । श्रुत्योरर्थस्तु । " अत्र ब्रह्म समश्नुत" इति पूर्ववाक्ये जीवन्मुक्तिरुक्ता । स जीवन्मुक्तो देहज्ञोऽपि पूर्ववन्न संसरतीत्यत्र दृष्टान्तमाह "तद्यथे" ति । "तत्" तत्र जीवन्मुक्तदेहे । ईदृशे देहे दृष्टान्तो "यथे"ति । यथा लोके हिनिर्ल्वयिनी सर्वविमुक्तत्वग्वल्मीके प्रत्यस्ता प्रक्षिप्ता मृतपूर्वमिव सर्वेणात्मत्वेनाऽगृहीता वर्तत एवमेवेदं विदुषः शरीरं प्रागिवात्मत्वेनागृहीतं तिष्ठतीत्यर्थः । त्वचः साम्यं शरीरस्योक्ता । सर्पसाम्यं विदुषो दर्शयति "अथे" ति । तथाऽर्थको ऽ"थ" शब्दः । यथा प्रत्यस्तांत्वचमहिरहमितिनाऽभिमन्यते तथाऽयं जीवन्मुक्तो देहज्ञोऽपि न तत्राहंधियमादधातीत्यशरीरः । अशरीरत्वादेवामृतः । देहाऽभिमानवतो हि मृतिः । निरुपाधिकः सन्प्राणिति जीवतीति प्राणः साक्षी स च ब्रह्मैव तच्च तेजो विज्ञानज्योतिः । अनया स्थूलदेहस्य मिथ्यात्वं दर्शयित्वा " सचक्षुरचक्षु "रिति श्रुत्या लिङ्गशरीरस्य मिथ्यात्वं दर्शयति । वस्तुतोऽचक्षुरपि बाधितचक्षुराद्यनुवृत्त्या सचक्षुरिवेत्यादियोजना । तस्माद्वेदान्ताः साक्षादेव ब्रह्मणि समनुगता न विधिद्वारेति सिद्धम् । ब्रह्म स्वतन्त्रमेव शास्त्रप्रमाणकमिति ॥

एवं चतुर्भिस्सूत्रैः सर्वज्ञं सर्वशक्ति जगत्कारणं वेदान्तप्रतिपाद्यं ब्रह्मेत्युक्तम् । वस्तुतस्तच्चेतनमचेतनं वेति संशयः । तत्र साङ्ख्याः, कूटस्थब्रह्मणो ज्ञानक्रियाशक्त्यभावान्न जगत्कारणत्वं, प्रधानस्य तु तत्सत्त्वाज्जगत्कारणत्वं सत्वगुणमादाय ज्ञानशक्तिमत्त्वं, त्रिगुणत्वात्क्रियाशक्तिमत्त्वं, ब्रह्मण एकत्वान्न क्रियाशक्तिः, तस्मात्सर्वज्ञं सर्वशक्ति प्रधानमेव, तदनुवादकावेदान्ता इति वदन्ति । तन्मतनिरासार्थमिदं सूत्रमारभ्यते ।

## ईक्षतेर्नाऽशब्दम् ॥ १ । १ । ५ ॥

साङ्ख्यपरिकल्पितं प्रधानं जगत्कारणं न भवति । तत्रहेतु "रशब्द' मिति । हेतुगर्भविशेषणमेतत् । अशब्दत्वादवेदप्रमाणकत्वादित्यर्थः । वेदाप्रमाणकत्वे हेतु- "रीक्षते 'रिति । धातुवाचकेक्षतिशब्दो लक्षणया धात्वर्थेक्षणपरः । ईक्षितृत्वश्रवणादित्यर्थः । अस्य चाऽऽक्षेपसङ्गतिः फलं च प्रधानैक्यसम्पदुपास्तिः पूर्वपक्षे, सिद्धान्ते तु ब्रह्मैक्यप्रमितिरितिविवेकः । एवं हि श्रूयते "सदेव सोम्येदमग्रआसीदेकमेवाऽद्वितीय" मित्युपक्रम्य "तदैक्षत बहुस्यां प्रजायेये"ति । तत्र प्रधानस्यैवोपक्रम ईक्षितृत्वश्रवणं विरुध्येतेक्षणस्य चेतनधर्मत्वात् । न च ब्रह्मणो ज्ञानक्रियाशक्त्यभावः, अविद्यामहिम्ना सर्वस्याप्युपपत्तेः । सत्यप्रधानपरमाणुप्रेरकईश्वरः सद्वितीय ईक्षतेति पातञ्जलादिमतनिराकरणार्थं श्रुतावेकमितिपदम् । उपादानस्य चेतनत्वार्थं "तदैक्षते"ति । उपादानत्वार्थं तु "बहुस्या' मिति । एवमेवैतरेयश्रुतिः "आत्मावा इदमेक एवाग्र आसीन्नान्यत्किञ्चनमिषत्सईक्षत लोकान्नु सृजा-

इति स इमान्लोकानसृजते' तीक्षणपूर्विकामेव सृष्टिमाचष्टे । "मिष" च्चलत्सत्त्वाक्रान्तमितियावत् । एवं सर्वत्रेक्षणपूर्वकसृष्टिश्रवणाद्ब्रह्मैव जगत्कारणमिति ॥

नन्वीक्षणमात्रेण न ब्रह्मजगत्कारणमिति निश्चयः "तत्तेज ऐक्षत ता आप ऐक्षन्ते" त्यचेतनयोरप्यप्तेजसोरीक्षणश्रवाणात् । तत्समभिव्याहारात्प्रधानेऽपीक्षति गौणेति प्राप्ते उच्यते ।

## गौणश्चेन्नात्मशब्दात् ॥ १ । १ । ६ ॥

अप्तेजसोरिव प्रधानेऽपीक्षतिर्गौणेति चेन्न । कुतः । 'आत्मशब्दा' दात्मशब्दस्य श्रवणादित्यर्थः । सदेव सोम्येदमग्रआसी" दित्युपक्रम्य तदैक्षत तत्तेजोऽसृजते'-ति तेजोऽबन्नानां सृष्टिमुक्त्वा तदेव प्रकृतं सदीक्षितृ तानि च तेजोऽबन्नानि देवताशब्देन परामृश्याह सेयं देवतैक्षत हन्ताहमिमास्तिस्रोदेवता अनेन जीवेनात्मनानु प्रविश्य नामरूपे व्याकरवाणी"ति श्रुतिः । तत्र यद्यचेतनं प्रधानमेवेक्षितृ तदा सेयं देवतैक्षतेति तस्यैव परामर्शात्तदात्मत्वेन जीवकीर्तनमनुपपन्नं स्यात् । आत्माहि स्वरूपम् । न च चेतनो जीवोऽचेतनस्यात्मा । ब्रह्मणितु जीवविषय आत्मशब्द उपपद्यते । "स य एषोऽणिमैतदात्म्यमिदं सर्व तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इति श्वेतकेतोर्जीवस्यात्मना तादात्म्योपदेशात् । नहि चेतनस्य चेतनाभेदे शङ्का । न चाप्तेजसोर्गौणेक्षणश्रवणात्तत्प्रायपठितत्वेन 'तदैक्षते'त्यादौ गौणेक्षणमेवेति वाच्यम् । संशयस्थलएव प्राय पाठस्य निश्चायकत्वात्प्रकृते तु गौणमुख्ययोर्गौणस्य जघन्यत्वेन संशयाभावात् । अत एव भगवा-

न्जैमिनिः 'विषये प्रायदर्शना''दिति संशयस्थले प्रायद्-र्शनस्य निश्चायकत्वमाह । अप्तेजसोस्तु नैवं मुख्यत्वे किञ्चित्कारणमस्तीति गौणमीक्षणं 'कूलं पिपतिषती" तिवत् । श्रुत्यर्थस्त्वाकाशं वायुं च सृष्ट्वात "त्सदेवे"त्यु-पक्रान्तसच्छब्दवाच्यं ब्रह्म तेजः सृष्टवदिति । प्रकृतं सदात्मापरामृश्यते 'सेय' मिति । सन्निहितेक्षितृपरा-मर्शो 'देवते'ति । अलौकिकमुक्तमीक्षणमभिनयति 'हन्ते' ति । सृष्टिवाक्येनोक्तानि तेजोऽबन्नानि परामृ-शति "इमा" इति । सूक्ष्मभूतास्तिस्रो देवता मया सृष्टा इत्यर्थः । सूक्ष्मत्वेन परोक्षत्वाद्देवताशब्दप्रयोगः । तासां व्यवहाराङ्गत्वं कथमित्यत आह "अनेने" ति । अनेन पूर्वसृष्ट्यनुभूतेन प्राणधृतिहेतुना जीवेनाऽऽत्मना तद्रूपेणोक्तदेवतासर्गानन्तरं नामरूपं चेति विसृष्ट "मा" समन्तात्करवाणीति परा ऽधिदेवतेक्षितवतीत्यर्थः । तत्सदाख्यःस एषोऽणिमाऽणुरित्यर्थो दुर्विज्ञेय इतियावत् । 'एतदात्म्य'मेतदात्मकं भावभवित्रोरभेदात् । परं सूक्ष्मं सर्वात्मकं तदेव सत्यं पारमार्थिकं तत्त्वम् । स एष सर्वस्या-ऽऽत्मा निरुपचरितस्वरूपः । हेश्वेतकेतो त्वञ्च संसारी नाऽसि किन्तु तदेव ब्रह्मेत्यक्षरयोजना ॥

नन्वात्मशब्दो ऽपि प्रधाने गौणोऽस्तु नानाऽर्थकत-या मुख्यो वेत्यत आह ।

## तन्निष्ठस्य मोक्षोपदेशात् ॥ १ । १ । ७ ॥

न प्रधानमात्मशब्दवाच्यं "तत्सत्यं स आत्मे" ति प्रकृतं सदणिमानमादाय "तत्त्वमसि श्वेतकेतो" इति श्वेतकेतोश्चेतनस्य मोक्षयितव्यस्य तन्निष्ठतामुपदिश्य

"आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथसंपत्स्य" इति मोक्षोपदेशात् । यदि ह्यचेतनं प्रधानं सच्छब्दवाच्यं मुमुक्षुं श्वेतकेतुं चेतनं "तत्त्वमसी" ति शास्त्रं ग्राहयेत् "हेश्वेतकेतो चेतनाचेतनोऽसी"ति तदा शास्त्रप्रामाण्यादचेतनोऽस्मीति ध्यायमानो मोक्षाद्व्याहन्येताऽनर्थं चेयात् । तथा च शास्त्रमुन्नतप्रलापो भवेत् । तच्चानिष्टम् । तस्माच्चाऽऽत्मशब्दश्चेतनपर इति । ऐक्यापरोक्षप्रतिबन्धकनिवृत्तिमाह श्रुति "राचार्यवा" निति । उक्तप्रमित्या सर्वबन्धनिवृत्त्या देहादि दृष्टेरपि निवृत्तिः प्राप्ता । आरब्धकर्मणा तद्दृष्ट्याऽनुवृत्तिमाह "तस्ये" ति । कथं तर्हि प्रारब्धकर्मनिवृत्तिरित्याशङ्क्य भोगादित्याह "याव" दिति । प्रारब्धध्वस्तावपि कथं देहादिध्वंस इत्याशङ्क्याऽप्रतिबन्धादित्याह "अथे" ति । उत्तमपुरुषस्तूभयत्र प्रथमपुरुषे छान्दसत्वादिति ॥

ननु स्थूलारुन्धतीन्यायेन प्रधानोपदेशद्वाराऽऽत्मोपदेशोऽयमस्तु तत्राऽऽह--

## हेयत्वाऽवचनाच्च ॥ २ । २ । ८ ॥

यद्यनात्मैव प्रधानं सच्छब्दवाच्यं "स आत्मा तत्त्वमसी" तीहोपदिष्टं स्यात्स तदुपदेशश्रवणादनात्मज्ञतया तन्निष्ठो माभूदिति मुख्यमात्मानमुपदिदर्शयिषु शास्त्रं तस्य हेयत्वं ब्रूयात् । यथाऽरुन्धतीदिदर्शयिषुस्तत्समीपस्थताराया हेयत्वं ब्रूते तद्वदित्यर्थः । एकविज्ञानात्सर्वविज्ञानोपक्रमविरोधसमुच्चयार्थं "श्च" शब्दः । तथा हि "उत तमादेशमप्राक्ष्यो येनाऽश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति । कथं नु भगवः स आदेशो भवति । यथा

सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमेवं सौम्य स आदेशो भवती" ति वाक्य एकविज्ञानात्सर्वविज्ञानोपक्रमः श्रूयते । स विरुध्येत प्रधानज्ञानात्तद्विकारज्ञानेऽपि भोक्तृवर्गविज्ञानासम्भवादिति। श्रुत्यर्थस्तु । हे श्वेतकेतो येन श्रुतेन शास्त्रतोऽन्यदश्रुतमपि श्रुतं भवति,येन मतेन तर्कतोऽन्यदमतमपि मतं भवति, येन विज्ञातेनाऽन्यदविज्ञातमपि विज्ञातं भवति, तमादेशम् । आदिश्यत इत्यादेशः शास्त्राचार्योक्तिगम्यं वस्तु । अप्राक्ष्यः पृष्टवानसि त्वमाचार्यमिति पितृवाक्यार्थः । अन्यज्ञानादन्यन्नज्ञेयमिति पुत्रो ब्रूते "कथं नु भगव" इति । कार्यस्य कारणान्नान्यत्वमित्याह "यथे" ति । ज्ञातेऽपि मृत्पिण्डे कथं तद्विकारधीरित्यत्राऽऽह "वाचे" ति । यो विकारस्स वाचारम्भणमुच्यते, परं न वस्तुतोऽस्तीत्यर्थः । तत्र हेतु "नामधेय" मिति । नाममात्रमेव नाऽर्थतोऽस्तीत्यर्थः । तर्हि मृद्घटयोरभेदे घटनाशे मृदोऽपि नाशः स्यादत आह "मृत्तिके" ति । घटो मृद्भिन्नत्वेन निर्वक्तुं न शक्यत इति । स ततोऽभिन्न एव । मृत्तु घटाद्भिद्यत इति न दोष इति ॥

"सदेव सोम्ये" ति सच्छब्दवाच्यं प्रधानमितो न भवतीत्याह-

## स्वाऽप्ययात् ॥ १ । १ । ९ ॥

तदेव सच्छब्दवाच्यं कारणं प्रस्तुत्य श्रूयते । "यत्रैतत्पुरुषः स्वपिति नाम सत्ता सोम्य तदासम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवती" त्येषा श्रुतिः पुरुषस्य लोकप्रसिद्धं स्वपितिनाम-

निर्वक्ति । स्वशब्देन सच्छब्दवाच्यात्मा परामृश्यते । स्वं प्रत्यपीतो भवति लीनो भवति । अपि पूर्वस्यैतेर्लयार्थत्वात्सुषुप्त्यवस्थायामुपाधिकृतविशेषाभावात्स्वात्मनि प्रलीन इवेति "स्वं ह्यपीतो भवती"त्युच्यते । तथा च सूत्रार्थः स्वस्मिन्प्रकृते सच्छब्दवाच्यात्मन्यप्ययाल्लयश्रवणादिति। तत्र यदि प्रधानमेव सच्छब्देनोच्येत तदा चेतनमचेतनेऽप्येतीति विरुद्धं स्यात् । श्रुत्यन्तरं च "तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद न चाऽन्तरमेवमेवाऽयं पुरुष प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽन्तर"मिति सुषुप्त्यवस्थायां चेतनेऽप्ययं दर्शयति। अतोऽस्मिन्नप्ययः सर्वेषां चेतनानाम् । तच्चेतनं सच्छब्दवाच्यं कारणम् ॥

किञ्च—

## गतिसामान्यात् ॥ १ । १ । १० ॥

गतेस्सर्वेषु वेदान्तेषु चेतनकारणावगतेः समत्वादित्यर्थः । न हि क्वचिदपि विरुद्धमुपलभ्यते कुत्रचिद्वाक्ये चेतनं कारणं कुत्रचिदचेतनमिति । किन्तु सर्वत्र चेतनमेव कारणमुपलभ्यते । "यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथाऽऽयतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका" इति, "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आत्मन एवेदं सर्व'मिति, "आत्मन एष प्राणो जायत' इत्याद्याः श्रुतय आत्मन एव कारणत्वं दर्शयन्ति । आत्मशब्दश्चेतनपर इत्युक्तः । "यथाग्ने"रित्यादेरयमर्थः । विस्फुलिङ्गप्रसङ्गार्थं ज्वलत" इति । "विप्रतिष्ठेरन्"नानागतित्वेन

दिशो विप्रसृताः स्युः । "प्राणा" श्चक्षुरादयो ' यथाऽऽयतनं " यथागोलकं " विप्रतिष्ठन्ते " विविधमुपगच्छन्तीति यावत् । प्राणेभ्योऽनन्तरमादित्यादयो देवास्तदनुग्राहकास्तेभ्योऽनन्तरं । लोक्यन्त इति लोका विषया भवन्तीत्यर्थः । प्राणोहिरण्यगर्भः ॥

किञ्च-

श्रुतत्वाच्च ॥ १ । १ ॥ ११ ॥

स्वशब्देनैव सर्वज्ञेश्वरो जगतः कारणमिति श्रूयते । श्वेताश्वतराणां मन्त्रोपनिषदि "ज्ञः कालकालो गुणी सर्वविद्य" इति सर्वज्ञमीश्वरं प्रकृत्य 'स कारणं करणाधिपाधिपो न चाऽस्य कश्चिज्जनिता न चाऽधिप " इति । 'ज्ञः" सर्वज्ञः । 'सकारण 'मिति कारणत्वोक्तेः सर्वज्ञता । विशेषतः सर्वविद्यः । "स" सर्वज्ञः "कारणम् '। तस्य सर्वेश्वरत्वमाह 'करण" ति । करणानीन्द्रियाणि तेषामधिपाः स्वामिनो जीवास्तेषामधिपः परमेश्वरः । तस्य सर्वहेतुत्वमाह "न चे "ति । सर्वजीवान्प्रतीश्वरत्वं हिरण्यगर्भस्याऽप्यस्तीति ततो विशेषमाह 'न चाधिप "इति । तस्य नियन्ता स्वयं न स्वस्य नियन्ताऽस्तीत्यर्थः। तस्मात्सर्वज्ञ ब्रह्म जगत्कारणं नाऽचेतनं प्रधानमन्यद्वेति सिद्धम् ।

अस्मिन्नधिकरणे गुणसूत्राणि षट् । नन्वेव ' मथाऽत " इत्यारभ्य श्रुतत्वाच्चे 'त्येतदन्तैस्सूत्रैः सर्वेषां वेदान्तानां सर्वज्ञसर्वशक्तिब्रह्मपरत्वं समर्थितं, किमवशिष्टं यदर्थमुत्तरसूत्रसन्दर्भ इति चेदुच्यते । निर्विशेषब्रह्मणः स्वरूपेणोपदेशाऽयोगात्किञ्चिदुपाध्युपहितत्वेनोपदेश इति वक्तव्यम् । तत्र कस्मिन्वाक्य उपाधिर्विवक्षितः कस्मिन्वाक्ये नविवक्षित इत्याकांक्षायां तद्विवेचनार्थमुत्तरसूत्र-

सन्दर्भोऽर्थवानिति । तथैव सविशेषं निर्विशेषं च ब्रह्म श्रूयते । ‘ यत्र हि द्वैतमिव भवति तदितर इतर पश्यत्य- थ यत्राऽन्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम् ’ “सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते ” इत्यादि- सविशेषवाक्यानि, ‘ यत्र त्वस्य सर्वमात्मैवाऽभूत्तत्केन कं पश्येत् ” यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजा- नाति स भूमा ” ‘ निष्कलं निष्क्रियं शान्तं निरवद्यं निर- ञ्जनम् । अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ” स एष नेति नेत्यात्मा ” “ अस्थूलमनणु ” इत्यादिनिर्विशेषवाक्या- नि ब्रह्मणो द्विरूपतां दर्शयन्ति । तत्र कानिचित्क्रमसुक्तय- र्थान्युपासनानि कानिचिदभ्युदयार्थानीति बोध्यम् । श्रु- त्यर्थस्तु । यत्र यस्यां खल्वविद्याऽवस्थायां तुच्छमपि द्वैतं सदिव भाति तत्रेतरः संसारी सन्नितरं पश्यति द्रष्ट्रयादि- गोचरमुपाधिमद्वस्तु वदतीत्यर्थः । यस्मिन्नात्मनीष्टव्यादि- चक्षुरादिनानुसन्धत्ते तदल्पं परिच्छिन्नमुपहितमिति याव- त् । भूम्नोऽल्पस्य च विशेषान्तरमाह ‘ योवा ” इति । अ- थे ” ति द्योतितो विशेषोऽनेन प्रकटितः । सर्वज्ञ ईश्वरो नामरूपादिकं विश्वं निर्माय तत्र प्रविश्य जीवरूपेणाभि- वदनादिकुर्वन्योऽवतिष्ठतेऽन्तर्यामी तं विद्वानिहैवाऽमृतो भवतीत्यर्थः । यत्र यस्यां विद्याऽवस्थायामस्य विदुषः सर्वं कर्त्राद्यात्मातिरेकेणासदेवाऽऽसीत्तत्र केन करणेन किं विषयं को वा कर्ता पश्येदित्याक्षेपादव्यवहार्यमनौपाधिकं तत्त्वमित्यर्थः । यत्र भूम्निस्थितो विद्वानन्यद्द्रष्टव्यं चक्षु- षा न पश्यत्यन्यच्छ्रोतव्यं श्रोत्रेण न शृणोति न चान्यन्म- न्तव्यं ज्ञातव्यं मनसा बुद्ध्या वा मनुते जानाति स भूमा

दृष्ट्याद्यगोचरो निरतिशयमहत्त्वसम्पन्नः परमात्मेत्यर्थः। "निष्कलं ' निरंशमत एव ' निष्क्रियं " निष्क्रियत्वादेव 'शान्तं' परिणामरहितमत एव "निरवद्यं" रागादिरहितं 'निरञ्जनं " धर्मादिरहितमित्यर्थः। यद्वा निष्कलत्वान्निरञ्जनं जडसम्बन्धशून्यमित्यर्थः । यथा मृद्दारुमयस्सेतुर्नदीकूलादिपरकूलप्राप्तेरुपायस्तथा संसारसागरस्य परं पारं परं ब्रह्म तद्भावस्याऽमृतस्य वाक्योत्थबुद्ध्यभिव्यक्तं सत्साधनं सेतुवदवस्थितम्। वाक्योत्थज्ञानस्य कथं नाशस्तत्राह 'दग्धे'' ति। यथा दग्धेन्धनो वह्निश्शाम्यति तथा ज्ञानमपीत्यर्थः। "इती" दमर्थे। इदं नेदं नेति निषेधावधिभूत आत्मेत्यर्थः। तथा सविशेषनिर्विशेषपरं वाक्यान्तरमपि "न्यूनमन्यस्थानं सम्पूर्णमन्य"दिति । अस्याऽर्थो निष्प्रपञ्चादन्यदुपास्यं गुणानां स्थानं न्यूनं परिच्छिन्नं ततो ऽन्यन्निष्प्रपञ्चं मुक्तोपसृप्यं त्रिधापरिच्छेदशून्यं सच्चिदानन्दात्मकं सम्पूर्णमपरिच्छिन्नमिति। एवं च यत्र सगुणवाक्ये गुणविवक्षा तत्रोपासनामतिर्यत्र तु श्रूयमाणोऽपि गुणो न विवक्षितस्तद्वाक्यं ज्ञेयब्रह्मपरमिति निर्णयार्थमुत्तरसूत्रसन्दर्भ इति फलितम् ॥

## आनन्दमयोऽभ्यासात् ॥ १ । १ । १२ ॥

पूर्वं तावत्सर्वेषां वेदान्तानां निर्गुणब्रह्मपरत्वमुत्सर्गतस्सिद्धम्। तत्सगुणवाक्यदर्शनेनाऽपोह्य सगुणवाक्यविचारः प्राप्तः । तमपोह्येदमधिकरणं निर्गुणविचारात्मकमारभते। यद्यप्यपवादापवादकत्वादस्य सगुणविचारानन्तर्यं युक्तं तथाऽपि पूर्वाधिकरणे संशयाऽभावात्प्रायपाठेन निश्चायक इत्युक्ते 'रन्योऽन्तरात्माऽऽनन्दमय" इत्यत्र

मयटो विकारे प्राचुर्ये च मुख्यत्वात्संशये विकारप्रायपाठो निश्चायकोऽस्त्विति पूर्वाधिकरणसिद्धान्तयुक्त्यभावेन प्रवृत्तत्वात्प्रत्युदाहरणलक्षणसङ्गतिरस्तीति सगुणविचारात्प्रागिदमारभ्यते । पूर्वपक्षे जीवस्याऽऽनन्दमयत्वेनोपास्तिः फलम्, सिद्धान्ते निर्गुणब्रह्मप्रमितिरिति सिद्धान्तगत्या । एकदेशिमते तूभयत्रोपास्तिरिति विवेकः । तैत्तिरीयकेऽन्नमयप्राणमयमनोमयविज्ञानमयकोशचतुष्टयानन्तरं ' तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरात्माऽऽनन्दमय इति श्रूयते । तत्र संशयः किमानन्दमयशब्देन ' सत्यंज्ञान ' मिति प्रकृतं परं ब्रह्मोच्यत उताऽन्नमयादिविकारवद्ब्रह्मणोऽर्थान्तरं जीव इति । तत्राऽन्नमयादिविकारप्रायपाठा "त्तस्य प्रियमेव शिरो मोदोदक्षिणः पक्षः प्रमोद उत्तरःपक्ष आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठे" त्यादिना प्रियाद्यवयवयोगा ' त्तस्यैष एव शारीर आत्मे" ति शारीरत्वश्रवणाच्च जीव इति प्राप्तम् । तस्य पूर्वोक्तस्य विज्ञानमयस्यैष आनन्दमय एव शारीर आत्मेति श्रुत्यर्थः । एवं प्राप्त उच्यते । "आनन्दमयोऽभ्यासात्" । आनन्दमयः परमात्मा भवितुमर्हति । कुतः । अभ्यासात् । आनन्दमयशब्दस्य ब्रह्मण्येव बहुकृत्वोऽभ्यासादित्यर्थः । तथा ह्यानन्दमयं प्रस्तुत्य ' रसो वै स' इति तस्यैव रसत्वमुच्यते । रसं ह्येवाऽयं लब्ध्वाऽऽनन्दीभवति कोह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादेषह्येवाऽऽनन्दयाति" ' सैषानन्दस्य मीमांसा भवति" ' एतमानन्दमयमात्मानमुपसंक्रामति " "आनन्दं ब्रह्मणोविद्वान्न बिभेति कुतश्चनेति" "आनन्दो ब्रह्मेति व्यजाना" दिति बहुधाऽभ्यासः श्रूयते । नचाऽऽनन्दपदस्यैवाभ्यासो नानन्दमयपदस्येति वाच्यम् । "वसन्ते

वसन्ते ज्योतिषा यजेते' त्यत्र ज्योतिः पदस्य ज्योतिष्टोमपरत्ववदानन्दपदस्यानन्दमयपरत्वात् । श्रुत्यर्थस्तु रसः सार आनन्द इत्यर्थः । अयं जीवः पूर्णानन्दः सर्वसाक्षी सर्वप्रेरको न स्याच्चेत्तर्हि प्राणादेरचेतनस्य चेष्टा न युक्तेत्याह 'कोह्यी' ति । 'अन्यात्' जीवेत् 'प्राण्यात्'' निश्वसेत् । ''यत्' यदि ''आनन्द' इत्यनन्तरं प्रेरक इति शेषः । आनन्दयितृत्वादपि परमानन्दत्वमित्याह 'एषह्यी' ति । आनन्दयतीत्यर्थः । 'याती'' तिदीर्घं छान्दसम् । स्वयं धनी परं धनिनं करोति लोके तद्वत्स्वयमानन्दः परमान्दयतीति । यत्तु प्रायपाठादानन्दमयस्य विकारित्वमिति तन्न, स्थूलारुन्धतीन्यायेनाऽन्नमयादिविकारामुख्यात्मप्रदर्शनस्यात्मज्ञानार्थत्वेनाऽऽनन्दमयस्य सर्वान्तरत्वात् । स एवाऽऽमेत्यवधारणादनन्तरमन्यस्यात्मनोऽनुपदेशात्सर्वान्तरत्वमवगम्यते । विज्ञानकोशवशादौपाधिकप्रियाद्यवयवयोगो न विरुध्यते । ब्रह्मणोऽन्नमयादिकोशपरंपरया शारीरत्वमप्युपपन्नमेव शारीरजीवप्रतिबिम्बत्वादीश्वरस्य । तस्मादानन्दमयःपरमात्मा ॥

## विकारशब्दान्नेतिचेन्न प्राचुर्यात् ॥ १ । १ । १३ ॥

ननु नाऽऽनन्दमयं ब्रह्म । कुतः । विकारार्थकमयट्प्रत्ययाद्ब्रह्मणश्चाऽऽनन्दविकारत्वानुपपत्तेरितिचेन्न । कुतः । ''प्राचुर्या''न्मयटः प्रकृत आनन्दप्राचुर्यवाचकत्वादित्यर्थः ।

मयटः प्राचुर्यार्थकत्वेहेत्वन्तरमाह-

## तद्धेतुव्यपदेशाच्च ॥ १ । १ । १४ ॥

तमानन्दं प्रति ब्रह्मणोहेतुत्वव्यपदेशादित्यर्थः । 'एषह्येवानन्दयती'' ति ब्रह्मण आनन्दहेतुत्वं व्यपदिश्यते । योऽन्यानानन्दयति स प्रचुरानन्द इति प्रसिद्धम् ॥

इतश्चा ऽनन्दमयः परमात्मेत्याह -

**मान्त्रवर्णिकमेव च गीयते ॥ १ । १ । १५ ॥**

यत् " ब्रह्मविदाप्नोतिपर " मित्युपक्रम्य " सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहाया " मित्यस्मिन्मन्त्रे सर्वान्तरं ज्ञेयत्वेनोक्तं तन्मान्त्रवर्णिकं ब्रह्माऽ"न्यो ऽन्तरात्माऽऽनन्दमय" इति गीयते । मन्त्रब्राह्मणयोरैक्यार्थाद्यद्यप्यत्र व्याख्यानव्याख्येयभावाभावेन न मन्त्रब्राह्मणभावस्तथाऽपि ब्राह्मणस्य व्याख्यानरूपेण व्याख्येयमन्त्रं प्रत्युपायत्वात्प्रकृते ऽप्युपेयोपायभावो ऽस्तीति मान्त्रवर्णिकमित्युक्तम् ॥

इतश्चाऽऽनन्दमयः परमात्मा न जीव इत्याह-

**नेतरोऽनुपपत्तेः ॥ १ । १ । १६ ॥**

ईश्वरादितरो जीवो नाऽऽनन्दमयः । कुतः । अनुपपत्तेः । "सोऽकामय' दिति सृष्टेः पूर्वमीक्षणं' बहुस्यां प्रजायेये ति सृष्ट्यात्मकत्वं सतपोऽतप्यत स तपस्तप्त्वेदं सर्वमसृजते ' ति सृष्टिहेतुत्वं च श्रूयते, तत्सर्वस्याऽनुपपत्तेरिति सूत्रार्थः । जीवज्ञानस्य शरीरसाध्यत्वादीक्षणाऽनुपपत्तिर्बोध्या । श्रुतौ तपःशब्द ईक्षणपरः ॥ किञ्च

**भेदव्यपदेशाच्च ॥ १ । १ । १७ ॥**

नाऽऽनन्दमयो जीवः । कुतः । जीवानन्दमययोर्भेदेन व्यपदिश्यमानत्वादित्यर्थः । तथा च श्रूयते " रसोवै स रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवती ' त्यानन्दमयस्य लब्धव्यत्वेन जीवस्य लब्धृत्वेन व्यपदेशः । नहि लब्धैव लब्धव्यो भवति ॥

नन्वानन्दमयशब्देन प्रधानमुच्यताम् । तत्राह

**कामाच्च नाऽनुमानाऽपेक्षा १ । १ ॥ १८ ॥**

अनुमीयत इत्यनुमानमनुमानैकगम्यं प्रधानमित्यर्थः । आनन्दमयत्वेन कारणत्वेन वा प्रधानस्य नाऽपेक्षा न स्वीकारः । कुतः । "कामा' दानन्दमयाधिकारे "सोकामयते" ति कामयितृत्वश्रवणादित्यर्थः । नह्यचेतने प्रधाने कामः सम्भवति । "ईक्षते र्नाऽशब्द' मित्यत्र निराकृतमपि प्रधानं गतिसामान्यप्रपञ्चनाय पुनर्निराकृतमिति बोद्धव्यम् ॥

**अस्मिन्नस्य च तद्योगं शास्ति ॥ १ । १ । १९ ॥**

इतश्च न जीवे प्रधाने वाऽऽनन्दमयशब्दो यस्माद्स्मिन्नानन्दमये प्रकृत आत्मनि प्रबुद्धस्य जीवस्य तद्योगम् । तदात्मना योगस्तद्योगस्तद्भावापत्तिर्मुक्तिरित्यर्थः । तंशास्ति शास्त्रं तस्मादित्यर्थः । 'यदाह्येवैषएतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवति यदाह्येवैषएतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयंभवती " तिशास्त्रम् । अस्याऽर्थः । यस्यामैक्यज्ञानावस्थायामेष विद्वानेतस्मिन्ब्रह्मणि पञ्चीकृतभूतपञ्चकेन तत्कार्येण समष्टिस्थूलदेहेन विराजा दृश्यशब्दात्मकेन तादात्म्यहीनेऽनात्म्ये निष्कृष्योत्पद्यन्त इति निरुक्तानि भूतसूक्ष्माणि तैश्चाभेदवर्जितेऽनिरुक्ते निःशेषलयस्थानं निलयनं सकलकार्यसंस्काराधाराविद्यातद्भेदशून्ये प्रकर्षेण स्थितिं पुनरावृत्तिरहितां लभते । अभयं यथा स्यादित्युक्तं व्यनक्ति 'अथे ति । ज्ञानफलमुक्त्वा ज्ञानाऽभावे दोषमाह श्रुति "यदाही"ति । यद्यस्मिन्नानन्दमये ब्रह्मण्यल्पमप्यन्तरमतादात्म्यस्वरूपं पश्यति तदा संसारभयान्न निवर्तत इत्यर्थः । इदं शास्त्रं प्रधानपरि-

ग्रहे जीवपरिग्रहे वा न घटत इति । तस्मादानन्दमयः परमात्मेति सिद्धम् ।

इदं त्वेकदेशिमतम् । भगवत्पादास्त्वभ्यस्यमानानन्दपदस्याऽऽनन्दमये लक्षणा, "अन्योन्तरात्माऽऽनन्दमय" इत्यत्रानन्दमयपदस्य प्राचुर्यार्थकत्वे ब्रह्मणि दुःखलवप्रसङ्गः स्यादिति प्रचुरानन्दे लक्षणा, "ब्रह्मपुच्छंप्रतिष्ठे" त्यत्र ब्रह्मपदस्यावयवविशेषे लक्षणेति मुख्यत्रितयलङ्घनं विकारप्रायपाठपरित्यागश्चैकदेशिमते स्यात्, स्वपक्षेतु "ब्रह्मपुच्छ" मित्यत्र पुच्छपदस्यावयवप्रायपाठपरित्यागमात्रमिति मन्वाना आनन्दमय इति मयडधिकार्थक एवेति वदन्तः सूत्राण्यन्यथाव्याचक्रुः । अधिकरणरचनातु । "ब्रह्मपुच्छं प्रतिष्ठे" त्यत्र किमानन्दमयावयवत्वेन ब्रह्मोच्यत उत स्वप्रधानत्वेनेति ब्रह्मपुच्छशब्दाभ्यां संशयः । ईक्षत्यधिकरणे संशयाभावात्प्रायपाठस्य न निश्चायकत्वम्, इह तु पुच्छपदस्याऽवयवाधारत्वयोर्लक्षणासामान्यात्संशयेऽवयवप्रायपाठस्य निश्चायकत्वमिति प्रत्युदाहरणसङ्गतिः । प्रयोजनंच पूर्वमुक्तम् । तत्र पुच्छशब्दावयवत्वे प्राप्त उच्यते । "आनन्दमयोऽभ्यासात्" । आनन्दमयशब्देनानन्दमयवाक्यस्थ "ब्रह्म पुच्छं प्रतिष्ठे' त्यत्र विद्यमानं ब्रह्मपदमुपलक्ष्यते । तद्ब्रह्मपदं स्वप्रधानब्रह्मपरम् । कुतः । अभ्यासात् । 'असन्नेवसभवत्यसद्ब्रह्मेतिवेदचेदस्ति ब्रह्मेति चेद्वेदे' त्यादौ ब्रह्मपदस्याभ्यासात् । यत्तु पुच्छशब्दादवयवपरत्वमिति तत्राऽऽह । "विकारशब्दान्नेतिचेन्न प्राचुर्यात्'। विकारशब्दादवयवपरपुच्छशब्दान्न तत्समानाधिकरणब्रह्मपदं स्वप्रधानब्रह्मपरमिति चेन्न कुतः।प्राचुर्यादवयवशब्दोपपत्तेः । प्राचुर्यंचात्रावयवप्रायप्रयोगः ।

नाप्यन्यस्तत्समर्थाचरणलक्षणः कारीषादिवत् । अनुपलब्धेः । तत एवोपलब्धिः सम्बन्धाऽपेक्षणादसमीचीना । न च णिज्वत्प्रेषणाद्यतिरिक्ते तत्समर्थाचरणमात्रे लिङादयो निरूपितप्रयोगाः । कारीषादिस्तु शीतापनोदनादिना

न त्वसौ शब्दस्याऽभिप्रायभेदत्वात् । प्रेषणादेरचेतनत्वेन शब्देऽसम्भवादित्यर्थः ।

अथ मा भूवन् प्रेषणादयः पुरुषधर्मा शब्दे, यथा तु कारीषोऽग्निरध्यापयतीत्यध्ययनप्रवृत्तो समर्थं शीताऽपनोदनमध्येतुर्भावयन् कारीषो ऽग्निरध्ययने प्रवर्तयति पुरुषम् एव लिङादयो ऽपि प्रवृत्तिसमर्थं कञ्चिदुपकारं पुरुषस्याऽऽचरन्त. स्वव्यापारेण प्रवर्तयिष्यन्तीत्यत आह—नाप्यन्य. प्रेषणादिभ्यस्तत्समर्थोऽऽचरणलक्षणः कारीषादिवत् । कुत. ? अनुपलब्धेः । प्रमाणान्तरेण ।

यद्युच्येत, मा भूदपि प्रमाणान्तरेण, शब्दादेव स व्यापारो ऽवगम्यते इत्यत आह—तत एवोपलब्धिरसमीचीना । कुतः ? सम्बन्धग्रहणापेक्षणात्[1] । अयमर्थः । गृहीतसम्बन्धः खलु शब्दः स्वार्थमवबोधयति । सम्बन्धबोधश्च सम्बन्धिसंवेदनाऽधीनः[2] । शब्दादेव चेदर्थः सम्बन्धी प्रतिपत्तव्यो, दुरुत्तरमितरेतराश्रयं प्रसज्येत, सम्बन्धबोधे शब्दो ऽर्थमवबोधयति, तदवबोधे च सम्बन्धबोध इति । ननु यथा णिच्प्रत्ययः कारीषादीनामध्ययनप्रवृत्त्यनुकूलं व्यापारमभिधत्ते अभिधास्यन्ते तथा लिङादयः स्वव्यापारमेव पुरुषप्रवृत्त्यनुकूलां प्रवर्तनामित्यत आह—न च णिज्वत् प्रेषणाद्यतिरिक्ते तत्समर्थाऽऽचरणमात्रे लिङादयो निरूपितप्रयोगा मानान्तरेण लिङादीनां व्यापा-

१ सम्बन्धापेक्षणात २ पु पा ।
२ अधीनजन्मा २ पु पा ।

शक्तता सम्पादयन् प्रवृत्तिहेतुः । शब्दस्तु कथमिति न निरूप्यते ।

स्यान्मतम्–पवनादिरिव लिङादिः प्रेरयति पुरुषम्। तदसत् । अभिधानवैयर्थ्यात् । अप्रतीतव्यापारस्याऽपि वाय्वादेरिव स्वभावतः प्रेरकत्वात् । पूर्वोक्तदोषापाताच्च। न हि प्रवृत्तिं प्रति कारकत्वे शब्दस्य सदपि तद्व्यापाराऽभिधानमङ्गम् । अनभिहितव्यापारस्याऽपि तस्य कारकत्वात्[1] । कारकस्याऽनपेक्षितज्ञानत्वात्[2] । उपेत्यापि तु शब्दस्य प्रयोगं ब्रूमः । न प्रवर्तेत पुरुषः । प्रवर्तयतो ऽपि शब्दस्याऽननुरोध्यत्वात् । न हि सर्वस्मिन् प्रवर्तयितरि

रस्याऽनुपलब्धेरित्युक्तम् । शिञ्जाद्यस्तु कारीषादीना व्यापारो न तथेत्यत आह–कारीषादिस्तु शीताऽपनोदनादिना शक्तता सम्पादयन् प्रवृत्तिहेतुः । शब्दस्तु कथमिति न निरूप्यते वैयर्थ्यादिति विवरीतु शङ्कते–स्यान्मतम् । पवनादिरिव लिङादि. प्रेरयति पुरुषम्, कि मानान्तरतस्तद्व्यापारग्रहणेने ? ति । निराकरोति–तदसत् । अभिधानस्य वैयर्थ्यात् । कुत: ? अप्रतीतव्यापारस्याऽपि लिङादेर्वाय्वादेरिव स्वभावत प्रेरकत्वात्, पूर्वोक्तदोषाऽऽपाताच्च । अप्रमाणत्वादिदोषप्रसङ्गादित्यर्थः ।

नन्वनभिधेयत्वे व्यापारस्यैते दोषा, न त्वभिधेयत्वे इत्युक्तम्, अत आह–न हि प्रवृत्तिकारकत्वे शब्दस्य सदपि तद्व्यापाराऽभिधानमङ्ग प्रवृत्ति प्रति । अनभिहितव्यापारस्याऽपि तस्य कारकत्वात् । कुत ? कारकस्याऽनपेक्षितज्ञानत्वात् । एतेन वैयर्थ्यात्पूर्वदोषत इति च विवृते। अप्रवृत्तेरिति विवृणोति–उपेत्याऽपि तु शब्दस्य प्रयोग ब्रूमः, न प्रवर्तेत पुरुष । कुत ? प्रवर्तयतो ऽपि शब्दस्याऽननुरोध्यत्वात् । न हि सर्वस्मिन् प्रवर्तयितरि प्रवृत्ति. प्रेक्षावताम्,

१ कार्यकरत्वात मू॰ पु पा । २ अनपेक्षितव्यापारत्वात्॰ मू॰ पु पा ।

**प्रवृत्तिः प्रेक्षावताम्, अपि त्वनुविधेये । न चार्थाऽनर्थप्राप्तिपरिहाराद्यनुविधानकारणं स्वाम्यादाविव शब्दे समस्ति । फलात्प्रवृत्तौ तद्वैयर्थ्यम् । तत एव फलाऽवगमादवैयर्थ्यमिति चेत्? तन्न । फलाऽयोगात् । आप्ते हि सप्रत्ययक्रिये हितकरे एव प्रवर्तयितरि अन्यथानुपपत्त्या फलाऽवगमः ।**

अपि त्वनुविधेये । अथाऽनुविधेयः शब्दः कस्मान्न भवतीत्यत आह—न चार्थाऽनर्थप्राप्तिपरिहाराद्यनुविधानकारणं स्वाम्यादाविव शब्दे समस्ति । आदिशब्दाभ्यां करुणादुःखिनोर्ग्रहणम् । यद्युच्येत, फलप्राप्तिरनुविधानकारणमस्तीति, तत्राह—फलात्प्रवृत्तौ तद्वैयर्थ्यम् । तदिति शब्दव्यापारं परामृशति । शङ्कते—तत एव शब्दव्यापारात् शब्देन कृताऽवभासनात् फलाऽवगमादवैयर्थ्यमिति चेत्? तन्न । फलाऽयोगात्, स्वव्यापारेण कृताऽवभासनेन । शब्दे प्रवर्तयितरि फलस्याऽयुक्तत्वमाह—आप्ते हि सप्रत्ययक्रिये हितकरे एव प्रवर्तयितरि अन्यथाऽनुपपत्त्या फलाऽवगमः । प्रमाणेन हिताऽहितप्राप्तिपरिहारोपायतत्त्वाऽवगतिराप्तिः, तया सह वर्तते इत्याप्तस्तस्मिन् । स च हिताऽहितप्राप्तिपरिहारोपायतत्त्वाऽवगतावपि कदाचिदकारुणिकतया नोपदिशति । अत उक्तं—हितकरे परेषाम् । एते च तत्त्वज्ञानकारुण्ये परात्मवर्तिनी इति कुतोऽवगम्यते? इत्यत उक्तम्—सप्रत्ययक्रिये । प्रत्यय उपदिष्टस्याऽर्थस्य मानान्तरेण संवादस्तेन सह वर्तते इति सप्रत्यया क्रिया यस्योपदेशरूपा सा यस्यो[1]पदेष्टुः स तथोक्तः, तस्मिन् ।

एतदुक्तं भवति । यदेव यस्मै हितमुपदिशति कर्म तस्य तत्प्रवृत्तौ हितप्राप्तेः संवाददर्शनादुपदेष्टृवर्तिनी अपि तत्त्वज्ञानकारुण्ये ईषत्करज्ञाने एवेति तदेतस्मिन् प्रवर्तयितरि[2] तत्प्रवर्तना-

१ कपा आप्तस्य २ पु पा ।

२ एतस्मिन्नाप्ते प्रवर्तयितरि २ पु पा ।

**शब्दे तु किमनुपपन्नम्? प्रवर्तनामात्रस्य वाय्वादाविव विपरीते ऽप्युपपत्तेः।**

**पुरुषश्रेयोर्थं प्रवृत्तेः शास्त्रस्य नैव मिति चेत्? न। प्रमाणाऽभावात्। प्राक् शास्त्रत्वाऽसिद्धेः। लिङादिव्यापारे च विधौ स्वरूपाऽभिधानप्रसङ्गः। अन्यथा शब्दविशिष्टव्यापाराऽप्रत्ययात्सन्निधानाद्विशिष्टत्वे ऽर्थस्यापि तत्प्रसङ्गात्। योग्यत्वस्योभयत्राऽपरिज्ञानात्। तस्मान्नाऽभिधेया भावना विधिरूपम्।**

ऽन्यथानुपपत्त्या फलाऽवगम इति युक्तम्। शब्दे तु किमनुपपन्नम्? प्रवर्तनेति चेत्? तत्राह—प्रवर्तनामात्रस्याऽऽप्राऽनाप्तप्रणेतृकस्य वाय्वादाविव विपरीते ऽप्युपपत्तेः। शङ्कते—पुरुषश्रेयोऽर्थं प्रवृत्तेः शास्त्रस्य नैवमिति चेत्? शासनाद्धि शिष्याणां शास्त्रमुच्यते, शासनं च शङ्कितसमारोपितरूपव्यवच्छेदेन हिताऽहितप्राप्तिपरिहारोपायतत्त्वज्ञापनम्, ततश्च शास्त्रत्वादेव पुरुषश्रेयोऽवगतिरित्यर्थः। निराचष्टे—न प्रमाणाऽभावात्। प्राक् फलाऽवगमाच्छास्त्रत्वाऽसिद्धेः। फलाऽवगमाच्च शास्त्रत्वे परस्पराश्रयप्रसङ्गादिति भावः।

तदनेन फलाऽयोगादिति विवृतम्। रूपोक्तेरिति व्याचष्टे—लिङादिव्यापारे च विधौ लिङादिस्वरूपाऽभिधानप्रसङ्गः। कस्मात्? अन्यथा यदि लिङादिस्वरूपं नाऽभिधीयते ततस्तन्नाऽवगतमिति विशिष्टव्यापाराऽप्रत्ययात् लिङादेः सन्निधानात् तेन विशिष्टत्वे ऽर्थस्याऽपि तद्व्यापारवत्त्वप्रसङ्गात् सन्निधानाऽविशेषात्। अथाऽर्थस्य प्रवर्तनां प्रति योग्यत्वं नाऽवधृतमिति सन्निधाने ऽपि न तस्य प्रवर्तना व्यापार इति तत्राह—योग्यत्वस्योभयत्राऽपरिज्ञानात्। न हि लिङादेरपि योग्यत्वमन्यतो ऽवधृतमित्यर्थः। कारिकार्थमुपसंहरति—तस्मान्नाऽभिधेया भावना विधिरूपम्।

अथ मतम्-अभिधैव भावना विधिर्लिङाद्यर्थ इति। अत्रोच्यते-

**प्रवृत्तेः सर्वतोऽर्थे वा प्रसङ्गात्कार्यतो गतेः ।**
**अस्थानान्नियतेर्हेतोरभावाच्चाऽभिधैव न ॥**

विधिरित्यनुषज्यते। अभिधा चेद्विधि. सर्वशब्दानां यथास्वमभिधेयेषु तद्भाव इति घटादिशब्देभ्यो ऽपि प्रवृत्तिप्रसङ्गः। अस्या[1] अविशेषात्। अभिधेयविशेषाद्भेदे स एव प्रवृत्तिहेतुरन्वयव्यतिरेकाभ्याम्। अनन्यलभ्यस्तु

अथ मत, नाऽभिधेया भावना ऽभिधाभावनेति, अपि त्वभिधैवाऽर्थाऽभिधाव्यापारः शब्दस्य भावना विधिर्लिङाद्यर्थ इति। तस्य च शब्द ऽर्थसंवेदनाफलप्रथितसद्भावस्य[2] प्रवृत्तिजननं प्रति सामर्थ्यमाचमुन्नेयमिति भाव:।

अत्रोच्यते-

प्रवृत्तेः सर्वतो ऽर्थे वा प्रसङ्गात्कार्यतो गते. ।
अस्थानान्नियतेर्हेतोरभावाच्चाऽभिधैव न ॥

विधिरित्यनुषज्यते। स च नाभिधेति निषिध्यते। अस्यां प्रतिज्ञायां प्रवृत्तेः सर्वतः प्रसङ्गादिति हेतु विवृणोति—अभिधा चेद्विधि. सर्वशब्दानां यथास्वमभिधेयेषु तद्भावोऽभिधाव्यापारसद्भाव[3] इति घटादिशब्देभ्यो ऽपि प्रवृत्तिप्रसङ्गः। कुत.? अस्या अभिधाया अविशेषात्। यद्युच्येत, अर्थाभिधात्वमात्रेणाऽविशेषे ऽपि अभिधेयविशेषाद्भेदो भविष्यत्यभिधायाः। तादृशः खल्वभिधेयविशेषो लिङादीनां, येन लिङाद्यभिधैव प्रवर्तयति, न तु घटादिशब्दाऽभिधेति,

१ तस्या.-मू पु पा। २ फल प्रवेदनीयसद्भावस्य २ पु पा। ३ व्यापारभाव २ पु पा।

**शब्दार्थ इति स्थितौ कार्यान्वेयाया अभिधायाः शब्दार्थत्वमयुक्तम् । अभिधायाश्चाऽभिधाऽपेक्षणे ऽनवस्थापातात् । अथाऽभिधैवाऽपेक्षते इति चेत् ? न । नियामकस्य**

तत्राह—अभिधेयविशेषाद्भेदे स एवाऽभिधाविशेष एव प्रवृत्तिहेतुर्नाऽभिधा। कुतः ? अन्वयव्यतिरेकाभ्यामभिधेयविशेषाऽवगमे सति प्रवृत्तेः । सत्यामप्यभिधाया घटादिशब्देभ्यस्तदभावे प्रवृत्तेरभावादित्यर्थः ।

तदनेनाऽर्थे वेति विवृतम् । कार्यतो गतेरिति विवृणोति—अनन्यलभ्यस्तु शब्दार्थ इति स्थितौ सत्यामर्थप्रतीतिलक्षणकार्यान्वेयाया अभिधाया अनन्यलब्धत्वाच्छब्दार्थत्वमयुक्तम् । अस्थानादिति विवृणोति—अभिधायाश्चाऽभिधाऽपेक्षणे ऽभिधाऽभिधा ऽप्यभिधात्वेनाऽभिधेया,[1] एव तदभिधा ऽपीत्यनवस्थापात । शङ्कते—अथाऽभिधैवाऽपेक्षते ऽभिधा नाऽभिधेति चेत् ? निराकरोति—न । नियामकस्य हेतोरभावात् ।

अपि चाऽर्थाऽभिधा ऽभिधीयमाना तयैवाऽभिधीयेताऽभिधान्तरेण वा । यदा ऽभिधान्तरेण तदा तयोर्यौगपद्यं क्रमो वेति विकल्पा उपप्लवन्ते । तत्र न तावत्प्रथमः कल्पः । स्वात्मनि वृत्तिविरोधेनाऽपास्तत्वात् । नाऽपि यौगपद्यम् । फले फलान्तराऽनुपपत्तेः । न ह्यस्ति सम्भवः, पाकः पच्यते, छिदा[2] च्छिद्यते इति । क्व चिदस्ति, यथा ज्ञानं ज्ञायते इति चेत् । न । फलावस्थायां तदनुपपत्तेः । फलान्तरोत्पादसमये च तस्य ज्ञेयतया कर्मकारकत्वेन फलाऽभावाऽभावात् । अस्तु तर्हि क्रमः । प्रथमं लिङादिभिः स्वार्थो ऽभिधीयते, अथ स्वार्थो ऽभिधेति । तन्न । शब्दबुद्धिकर्मणामनावृत्ताना विरम्य व्यापाराऽनुपपत्तेः ।

---

१ अभिधाभिधयाभिधेया २ पु पा । २ छेद २ पु पा ।

हेतोरभावात् । अर्थाऽभिधानस्य च । न ह्यत्र हेतु रस्ति । अर्थाभिधैवापेक्षते नाऽभिधेति । अभिधीयते ऽभिधेति पुरुषस्य च प्रवृत्तिरिति किं केन सङ्गतम् ? तस्मादभिधा न विधि ।

अस्तु तर्ह्यर्थभेदः । नैतदपि ।

**अपौरुषेये प्रैषादिर्नृधर्मो नाऽवकल्पते ।**

**न च प्रवर्तनामात्रमविशेषमकर्तृकम् ॥**

लोके हि प्रतीतः प्रेषणाऽध्येषणाऽभ्यनुज्ञालक्षणो ऽभिप्रायाऽतिशयः प्रयोक्तृधर्मो लिङर्थः । तस्याऽपौरुषेयेषु

एतेनैव क्रमशो ऽभिधानं प्रत्युक्तम् । तदनेनाऽभिसन्धिना ऽऽह—अर्थाऽभिधानस्य च । अर्थाऽभिधाया अपि हेतोरभावादित्यर्थः । अनेन नियतेर्हेतोरभावाच्चेति व्याख्यातम् । चेत्यभिधानाऽभावहेतुसमुच्चयादिति । नियमहेत्वभावमाह—न ह्यत्र हेतुरस्ति । अर्थाऽभिधैवाऽपेक्षते ऽभिधा नाऽभिधाऽभिधेति । अन्यलभ्यस्याऽपि शब्दार्थत्वाऽभ्युपगमादिति भावः । अपि चाऽभिधीयते लिङादिभिः स्वार्थोऽभिधेति च प्रेक्षावतां हिताऽहितप्राप्तिपरिहारार्थिना प्रवृत्तिरिति किं केन सङ्गतम् ? न खलु प्रासादः श्वेत इति पिपासवो दहनमाहरन्ति । उपसंहरति—तस्मादभिधानमपि न विधिः ।

अस्तु तर्ह्यर्थभेद एव लिङादीनां विधिः । नैतदपि । कुतः?

अपौरुषेये प्रैषादिर्नृधर्मो नाऽवकल्पते ।

न च प्रवर्तनामात्रमविशेषमकर्तृकम् ॥

लिङाद्यर्थभेदश्चेद्विधिस्तस्य लोकाऽधीनाऽवधारणत्वाल्लोके च प्रेषणाऽध्येषणाऽभ्यनुज्ञालक्षणस्य तस्योपलब्धेः स एव विधिः स्यात् । तस्य च पौरुषेयतया ऽपौरुषेयेषु वेदवाक्येष्वसम्भव इत्याह—लोके हि प्रतीतः प्रेषणाऽध्येषणाऽभ्यनुज्ञालक्षणो ऽभिप्राया-

**वेदवाक्येष्वसम्भवः। प्रतीतेः सम्भव इति चेत्? न। पौरुषेयत्वापत्तेः। वेदात्मनोऽभिप्राय इत्यतिस्थवीयः। तेनाऽसंदृब्धत्वेऽभिप्रायाऽवगत्यभावात्, संदृब्धत्वे पौरुषेयत्वदोषात्।**

ऽतिशयोऽनुविधेयपुरुषधौरेयधर्मतयाऽतिशय प्रयो कुर्धर्मो लिङर्थः। तस्याऽपौरुषेयेषु वेदवाक्येष्वसम्भवः। शङ्कते—लोकाऽवगतसामर्थ्याल्लिङादेर्वेदेऽपि स्वयमाप्तप्रेषणादिप्रतीतिः सम्भव इति चेत्? न हि दृष्टेऽनुपपन्नं नामेति भावः। निराकरोति—न, पौरुषेयत्वापत्तेः। येऽपि वेदान्तवादिनोऽपौरुषेयमङ्गीकृत्य वेदं वेदशरीरिणमन्तर्यामिणमास्थिषत 'अथाऽधिदैव[1] यः सर्वेषु वेदेषु प्रतिष्ठन् सर्वेभ्यो वेदेभ्योन्तरो यं सर्वे वेदा न विदुर्यस्य सर्वे वेदाः शरीरं यः सर्वान् वेदानन्तरो यमयति एष तआत्मा ऽन्तर्याम्यमृत' इति श्रुतेः, तान् प्रत्याह--वेदात्मनोऽभिप्राय इत्यतिस्थवीयः। चेष्टेन्द्रियार्थाश्रयः शरीरमिति हि तद्विदः। न च कस्य चिदात्मनश्चेष्टादीनां वेदराशिराश्रयो भवितुमर्हति। न जातु देवदत्तादिशरीरवदस्मिन् बुद्धिपूर्वाः सन्ति क्रियाः। न च पार्थिवाऽऽप्यतैजसवायवीयाऽदृष्टोपनिबद्धकर्णनेमिमण्डलाऽवच्छिन्ननभोभागात्मनामिन्द्रियाणाममूर्तवेदाधारता सम्भवति। न च मनोमात्रस्य बाह्येन्द्रियनिरपेक्षस्य भोगसाधनत्वमुपपद्यते।

एतेन विषयाश्रयत्वमस्य प्रत्युक्तम्। तस्माद्देहलक्षणविरहाद्वेदात्मनो वेददेहस्याऽऽत्मनोऽभिप्राय इत्यतिस्थवीय इति। अपि च यदा लोके गामभ्याजेत्यादि वाक्येभ्यो वक्तुराज्ञादयोऽभिप्रायभेदाः प्रतीयन्ते नाऽन्यस्य तदा यदन्तर्यामी वेदसन्दर्ब्धा ततस्तेन तस्याऽसम्बद्धत्वेन तदभिप्रायाऽवगत्यभावात्, सन्दृब्धत्वे पौरुषेयत्वदोषाद्युक्तमेतत्।

१ अधिवेदम २ पु पा०।

यदपि मतम्—अनेकसामर्थ्यपरिकल्पनादोषाद्व्यभिचाराच्च प्रैषादीनामवाच्यत्वादव्यभिचारात्प्रवर्तनामात्रं लोके लिङाद्यर्थस्तस्य वेदे ऽप्युपपत्तिरिति । इदमप्य[1]-चतुरस्रम् । निर्विशेषसामान्याऽयोगात् । अकर्तृकत्वे व्यापाराऽनुपपत्तेश्च । न तावत् प्रैषादयो विशेषा वेदे सम्भविनः । नाऽप्यन्यो विशेषः कश्चिदुपदर्श्यते । तदुपदर्शने वा सामान्याऽभिधानप्रसाधनमस्मिन्नवसरे व्यर्थम् । तदेतदपास्तसकलभेदं प्रवर्तनासामान्यं ब्राह्मण्यमिव समुज्झितकठादिभेदं स्यात् । प्रवर्तना च प्रवर्तयितुर्व्यापारः स तमन्तरेणेति नाऽतिविराजते । पुरुषस्याऽभा-

यदपि मतं, तत्तत्प्रेषणाद्यभिप्रायविशेषाऽभिधाने ऽनेकसामर्थ्यपरिकल्पनादोषाद्व्यभिचाराच्च प्रैषादीनामवाच्यत्वादव्यभिचारात्प्रवर्तनामात्र लोके लिङर्थो, न पुनः प्रैषादयः । तस्य चाऽपौरुषेये वेदे ऽप्युपपत्तिरिति । अभिप्रायभेदाः खल्वमी प्रैषादयः पुरुषनान्तरीयकतया तमवगमयन्ति, न प्रवर्तनामात्रम् । तस्य तन्नान्तरीयकत्वाऽभावादिति भावः[2] । निराचष्टे - इदमप्यचतुरस्रम् । कुतः ? निर्विशेषसामान्याऽयोगात् । अकर्तृकत्वे व्यापाराऽयोगाच्च ।

प्रथम हेतु विवृणोति—न तावत्प्रैषादयो विशेषा वेदे सम्भविनः, अपौरुषेयत्वव्याघातात् । नाऽप्यन्यो विशेषः कश्चिदुपदर्श्यते । तदुपदर्शने वा सामान्याऽभिधानप्रसाधनमस्मिन्नवसरे व्यर्थम्, विशेषस्यैव प्रवर्तकत्वात् । तदेतदपास्तसकलभेदं प्रवर्तनासामान्यं ब्राह्मणत्वमिव समुज्झितकठादिभेदं स्यात् । गगनकुसुमायमानं स्यादित्यर्थः ।

द्वितीयं विवृणोति—प्रवर्तना च प्रवर्तयितुर्व्यापारः, स त प्रव-

१ तदपि मू पु पा । २ नान्तरीयकभावाऽभावात २ पु० पा ।

वात्। शब्दस्य च प्रवर्तकत्वनिषेधात् प्रवर्तयितुरभावः।

यदि मन्येत फल प्रवर्तकं तद्व्यापारः प्रवर्तना, फलार्थिनः पुरुषस्य तत्साधने प्रवृत्तेः। अन्यथा ऽभावात्। न कश्चिद्व्यापारविशेषः प्रवर्तना ऽपि तु प्रवृत्तिसमर्थ व्यापारमात्रं च प्रयोजकव्यापारः। भिक्षा वासयति, कारीषो ऽग्निरध्यापयतीति दर्शनात्। तदसत्।

अर्थिता व्यापृतिः पुंसो नियमः किंनिबन्धनः।
फलसाधनता कर्म्मनिश्चेया साध्यता कदा॥

फलार्थिता चेत् प्रवृत्तिहेतुः सेच्छा तद्योगो वा

र्तयितारमन्तरेणेति नाऽतिविराजते। ननु पुरुषः प्रवर्तयिता भविष्यतीत्यत आह—पुरुषस्याऽभावात्। नापि शब्द इत्याह—शब्दस्य च प्रवर्तकत्वनिषेधादधस्तात्। तस्मात्प्रवर्तयितुरभावः, तदभावात्तद्व्यापाराः प्रवर्तनाया अप्यभाव.। यदि मन्येत फल प्रवर्तकमिति तद्व्यापारो ऽर्थिता प्रीत्यात्मता वा प्रवर्तना। कस्मात्? फलार्थिन. पुरुषस्य तत्साधने[1] प्रवृत्तेः। अन्यथा फलव्यापारमन्तरेणाऽभावात्। न हि कश्चिदेव विशेषो व्यापार. प्रवर्तना, ऽपि तु प्रवर्तनसमर्थे[2] व्यापारमात्र प्रयोजकव्यापार', प्रवर्तनासमर्थे[3]श्चायमर्थितालक्षणः प्रीत्यात्मतालक्षणो वा फलस्य व्यापार। भिक्षा वासयति, कारीषो ऽग्निरध्यापयतीति दर्शनात्। अन्नोपादानशीतापनोदनाभ्याम्। तद् दूषयति—तदसत्।

अर्थिता व्यापृतिः पुंसो नियमः किंनिबन्धः।
फलसाधनता कर्म्मनिश्चेया[4] साध्यता कदा॥

१ तत्साधने फलसाधने २ पु पा। २ प्रवृत्तिसमर्थम २ पु पा। ३ प्रवृत्तिसमर्थ २ पु पा। ४ कर्मनिष्ठा या १ पु पा।

**इच्छासमवायो वा। कृत्तद्धितसमासेषु सम्बन्धाऽभिधानं त्वतल्भ्यामिति वचनात् पुरुषधर्म इति न फलं व्यापृतिः। अथ तदिच्छोपहारमुखेन फलस्य प्रवृत्तिहेतुर्धर्मः प्रीत्यात्मता फलव्यापारः प्रवर्तना? साऽपि तत्रैव न कर्मणि। फलव्यापाराच्च प्रवर्तमानः सर्वत्र प्रवर्तेत। नियमनिमित्ताऽभावात्। तत्साधनत्वात् कर्मण्येव प्रवर्तते, न सर्वत्र। तत एव तर्हि तत्साधनत्वं प्रवृत्तिहेतुः कर्मणि**

फलार्थिता चेत्प्रवृत्तिहेतुः सेच्छा, तद्योगो वा इच्छासमवायो वा कृत्तद्धितसमासेषु सम्बन्धाऽभिधानं त्वतल्भ्यामिति वार्तिककारवचनात् पुरुषधर्म एव, न फलधर्म इति न फलं व्यापृतिः। न खल्वन्यत्र समवेतो ऽन्यव्यापारो भवितुमर्हति, अतिप्रसङ्गात्। शङ्कते—अथ तदिच्छोपहारमुखेन फलस्य प्रवृत्तिहेतुर्धर्मः, प्रीत्यात्मता फलव्यापारः प्रवर्तना, इष्टलक्षणं फलं, सुखानुशायिनी चेच्छेति फलेन सुखात्मना भवितव्यं, सुखत्वेन तदिच्छामुपहरति, इच्छा च प्रयत्नं प्रसूते, इतीच्छोपहारमुखेन फलसमवायिनी प्रीत्यात्मता प्रवृत्तिहेतुव्यापारत्वाद् भवति प्रवर्तनेत्यर्थः। निराचष्टे—सा ऽपि प्रीत्यात्मता ऽपि तत्रैव फले एव। न च फलं प्रवृत्तिविषय इत्युक्तम्, फलेन साक्षात्करणे कर्तुश्चेष्टेति। यच्च च फलसाधने कर्मणि प्रवृत्तिः तस्य च दुःखतया न प्रीत्यात्मतेत्याह—न कर्मणि।

यद्युच्येत, फलसमवायिनो ऽपि प्रीत्यात्मताव्यापारात्पुरुषः कर्मणि प्रवर्त्स्यति, तत्राह—फलव्यापाराच्च प्रवर्तमानः सर्वत्र प्रवर्तेत। कुतः? फलादन्यत्वेन तत्साधनस्याऽन्येषां चाऽविशेषान्नियमनिमित्ताऽभावात्। चोदयति—तत्साधनत्वात्कर्मण्येव प्रवर्तते। सर्वत्र सर्वेषां फलसाधनत्वाऽभावात्। परिहरति—तत एव तत्साधनत्वे सति प्रवृत्तिभावादेव। भवतु तर्हि तत्साधनत्वं प्रवृ-

न फलरूपं, तच्च कर्मसमवायीति कर्म प्रवर्तकं स्यात्। एवं तर्हि तत्साध्यता प्रवृत्तिहेतुः, साच फलसमवायिनीति न दोषः। तथा हि। समभिलषितस्य तृप्त्यादेः कर्मविशेषेण साध्यत्वात्तत्रैव प्रवृत्तिः। का पुनरियं साध्यता? यदि रूपं फलस्य, सर्वत्र प्रवृत्तिप्रसङ्गः। कारकविशेषः। स हि फलस्य साधननियतः शक्तिभेदो रूपादिवत्। अन्यथा कारकत्वाऽभावात्। यथा हि रूपादीनां

त्तिहेतुः कर्मणि, न पुनः फलरूपम्। भवतु को दोष? इत्यत आह—ततश्च कर्मसमवायि न फलसमवायीति कर्मैव प्रवर्तकं स्यात्। चोदयति—एवं तर्हि तत्कर्मसाध्यता प्रवृत्तिहेतु, सा च फलसमवायिनीति न दोष। ननूक्तं फलसमवायिनी सा कथमन्यत्र कर्मणि प्रवृत्तिहेतुरतिप्रसङ्गादिति? तत्राह- यथा हि समभिलषितस्य तृप्त्यादे कर्मविशेषेण साध्यत्वात्तत्रैव कर्मविशेषे एव प्रवृत्तिर्नाऽन्यत्र।

एतदुक्तं भवति। फलसमवायिन्यपि साध्यता[1] साधनाऽधीननिरूपणतया साधनमपि गोचरयति, न पुनरसाधनमपि। तेनैव तस्माद्विशेषात्साधने एव प्रवर्तयति, न तु सर्वत्रेति। तदेतद्दूषयति—का पुनरियं साध्यता? यदि रूपं फलस्य, ततस्तस्य साधनाऽधीननिरूपणत्वाऽभावान्न साधने प्रवर्तयेत्। प्रवर्तयेद्वा सर्वत्रैव, अन्यत्वाऽविशेषात्। चोदयति—कारकविशेषः। विशेष्यते व्यावर्त्यते कर्मकारकं गगनतलकुसुमादिभ्यो येन शक्तिभेदेन स तथोक्तः। ननु तथाऽपि कुतस्तस्य साधने प्रवर्तकत्व? मित्यत्राह—स हि फलस्य साधननियतः शक्तिभेदः। अतः साधने प्रवर्तते इत्यर्थः। निदर्शनमाह—रूपादिवत्। कुतः शक्तिभेदप्रत्यय? इत्यत आह—अन्यथा यदि फलस्य शक्तिभेदो न स्यात्ततोऽस्य लौकिकपरीक्षकप्रसिद्धस्य कर्मकारकत्वस्याऽभावात्। शक्तिमत्कारकमिति तद्विदः। दृष्टान्तदार्ष्टान्तिके

१ असौ साध्यता २ पु० पा०।

शक्तिविशेषाद् ग्रहणे साधननियमः तथा फलेष्वपि द्रष्टव्यः। गगनतत्कुसुमादेरनुत्पादात्, तृप्त्यादेश्च कर्ममात्रेण। कदा पुनरयं शक्तिभेदः साध्यताऽभिधानः? फलस्य भावसमये न तावत्। वैयर्थ्यादप्रवृत्तिहेतुत्वाच्च। न खलूत्पन्नस्योत्पादो, यद्योगिनी[1] शक्तिरर्थवती। नापि सिद्धे फले तत्साधने कश्चित्प्रवर्तते। अभावकाले ऽप्यसत्कथं शक्तिमत् खपुष्पवत्?

ननु सदेव कार्यमुत्पद्यते?

विभजते–यथा हि रूपादीना कर्मकारकाणा शक्तिविशेषाद्ग्रहणे चक्षुरादिसाधननियम, तथा फलेष्वपि द्रष्टव्यः। सम्भवति खलु स तादृशः फलस्य कर्मकारकस्य सामर्थ्याऽतिशयो येनाऽभवनधर्मणश्च गगनकुसुमादेर्भवनधर्मणश्च घटादेस्तथा साधनाऽविशेषाच्च भेदः सिध्यतीत्याह–गगनकुसुमादे[2]रनुत्पादात्। तृप्त्यादेश्च फलस्य कर्ममात्रेण। तदेतद्विकल्प्य दूषयति–कदा पुनरय शक्तिभेद. साध्यताऽभिधान? फलस्य भावसमये न तावत्। कुत? वैयर्थ्यादप्रवृत्तिहेतुत्वाच्च। वैयर्थ्यादिति हेतु विवृणोति–न खलूत्पन्नफलस्योत्पाद., यद्योगिनी शक्तिरर्थवती। अप्रवृत्तिहेतुत्वाच्चेति विवृणोति–नाऽपि सिद्धे फले तत्साधने कश्चित्प्रेक्षावान् प्रवर्तते। फलस्याऽभावकाले ऽप्यसत् कथ शक्तिमत्? खपुष्पवत्। चोदयति–ननु सदेव कार्यमुत्पद्यते?

इदमत्राऽऽकूतम्। यदसत्तन्न क्रियते यथा शशविषाणम्। असच्चेत्कार्यं[3] तदपि न क्रियेत, असत्त्वात्। क्रियते च, तस्मात्सत्ता।

---

१ उत्पादोपयोगिनी मू॰ पु पा।
२ गगनतत्कुसुमादे २ पु पा।
३ कारणे कार्यम २ पु पा।

इदं तावदसत्कार्यवादिनो ऽनुनाथ्य वक्तव्यम् ।

तथा हि । क्रियमाणत्व भवनकर्तृतया व्याप्त, सा चाऽसतो व्यावर्तमाना स्वव्याप्य क्रियमाणत्व व्यावर्तयन्ती सत्येव व्यवस्थापयतीति प्रतिबन्धसिद्धि । अपि च कारकत्वाऽविशेषे ऽपि कस्मात् तन्त्वाद्यात्मका एव पटादयो, न कुविन्दाद्यात्मका ? न ह्यसत्त्वे कश्चिद्विशेष । तन्त्वाद्यात्मानश्चोपलभ्यन्ते । तस्मातन्त्वादिषु सन्तः पटादयः । अपि च यदि तन्त्वादिष्वसन्तः पटादयः, कस्मात्तन्त्वादिभ्य एव भवन्ति, न तु वीरणादिभ्यः ? पट एव वा तन्तुभ्यः कस्माज्जायते, न जायन्ते कटादय ? न खल्वसत्त्वे कश्चिद्विशेषः । सो ऽयमुभयविधो नियमः स्वकारणे कार्यस्य सत्त्व,मसत्त्वमन्यथाऽवगमयति । अपि चाऽशक्तादशक्यकार्यस्याऽनुत्पत्तेरतिप्रसङ्गात् शक्तादेव कारणात्कार्येण शक्येनोत्पत्तव्यम्, शक्तियुक्तश्च शक्त', शक्तिश्च सम्बन्धरूपा सयोगवदुभयाश्रया शक्याऽभावे न भवतीति शक्यभावो ऽभ्युपेयः । अपि च कारण नाम कार्योपहितमर्यादं यदि तदभावे नाऽर्हति भवितु, न हि यद्यदुपहितमर्याद तत्तदभावे भवति; यथा कुण्डलोपहितसीमा कुण्डली न कुण्डलाऽभावे । तस्मात्कारणभावात्तच कार्यं सत् । तदिद सत्कार्यसाधनमनीतपञ्चकमाचख्युः साङ्ख्या' । परिहरति—इदं तावदसत्कार्यवादिनो ऽनुनाथ्य वक्तव्यम् ।

इदमाकूतम् । न तावत्क्रियमाणत्वमत्र प्रमाणं भवितुमर्हति, असाधारणत्वात्, अनुपलब्धिविरोधाच्च । यथा हि खल्वसदशक्यक्रियमेवं सदपि न जातु सतीति शक्तिरपरिणामिन्यनन्ता क्रियागोचरः । अपि च इदममन्त्रौषधमिन्द्रजालमार्येण शिक्षित[1]

१ इन्द्रजालकार्यम् २ पु पा ।

यदिदमजातऽविनष्टरूपाऽतिशयमव्यवधानमनतिदूरस्थान तस्येव तदवस्थेन्द्रियादेरेव पुंस कदाचित्प्रत्यक्ष परोक्ष च, येन कदाचिदस्य प्रत्यक्षमुपलब्धि, कदाचिदनुमान, कदाचिदागम. । तस्मिन्नेवाऽनतिशये ऽमीषां प्रकाराणां विरोधात् । यदि मन्येत, नाऽनतिशयमेकाऽतिशयोत्पत्त्या पराऽतिशयनिवृत्त्या च व्यवहारभेदोपलब्धे । त्रिधा खल्विमा भावपरिणतिविधा भवन्ति साङ्ख्यानां, धर्मलक्षणाऽवस्थाभेदात् यथास्व धर्मिधर्मलक्षणाधिकरणा । तद्यथा सुवर्णतत्त्वमेक धर्मि, तस्य परिणाम स्वस्तिकरुचकादयो धर्मा उपजनाऽपायधर्माणस्तेषाञ्च लक्षणपरिणाम तथा हि। यदा खल्वयं हेमकार. स्वस्तिक भङ्क्त्वा रुचक रचयति तदा स्वस्तिको वर्तमानतालक्षण हित्वा ऽतीततालक्षणमापद्यते । रुचकस्त्वनागततालक्षणं हित्वा वर्तमानतां प्रतिपद्यते । तथा ऽवस्थापरिणामो लक्षणगत । प्रतिक्षणमुत्पत्तिनिरोधधर्मणो ऽभिनवतमाऽभिनवतराऽभिनवपुराणपुराणतरपुराणतमत्वादय: । प्रयत्नरक्षितस्यापि वस्त्रादे' प्रान्ते पुराणतमत्वोपलम्भात् । सो ऽय त्रिविध' परिणामो ऽतिशय इति । अथाऽयमतिशयस्त्रिविधो ऽपि धर्मिणि सनातन कादाचित्को वा ? यदि सनातनस्तदा स्वस्तिकादयश्च त्रैकाल्य च नवपुराणत्वादयश्चाऽपर्यायं धर्मिण्येकस्मिन् सुवर्णे उपलभ्येरन् । कादाचित्कत्वे तु कथ नाऽसतामुत्पाद: ? तेषां शक्त्यात्मना सत्त्वादयमदोष इति चेत् ? न । शक्तिरतिशयश्च किमेकमेव तत्त्व नाना वा ? तत्रैकत्वे जन्माऽजन्म निवृत्तिरनिवृत्ति प्रत्यक्षतापरोक्षताऽर्थक्रियासूपयोगो ऽनुपयोगश्चेति कथमेकत्र निष्पर्याय परस्परपराहत युज्यते ? नानात्वे वा सत्त्वे ऽपि शक्तेरसन्नतिशय. कादाचित्क इति कथं नाऽसत उत्पत्ति: ? सर्वदा ऽतिशयस्य सत्त्वे वा कथ न पूर्वोक्तदोषप्रसङ्ग: ? अतिशयस्य

व्यक्त्यव्यक्तिभ्यामविरोध इति चेत्? व्यक्त्यव्यक्ती अप्यतिशयस्य सदातन्यौ न वा? तत्र सदातनत्वे तदवस्थैव विरोधप्रसक्तिः। कादाचित्कत्वे वा कथं नाऽसत उत्पादः? इति। भव्यत्वञ्चाऽसत उपपादयिष्यते ऽधिकारनिरूपणप्रस्तावे। असत्त्वे ऽपि च कारणसामर्थ्यनियमात् कार्यनियम उपपद्यते। अन्यथा भवन्मते ऽपि प्रधानोपादानत्वाद्विश्वस्य[1] प्रधानस्य चाऽन्वयितया सर्वत्रैकरूपत्वादुपादानात्मकत्वादुपादेयस्य कार्यजातस्य सर्वं सर्वतः सर्वत्र सर्वदा सर्वथा सदितीदमतो नेदमिदमिह नेदमिदमिदानीं नेदमिदमेव नेदमिति नियमो न स्यात्। कस्य चिदपि रूपस्य कथं चित्कदा चित् क्व चिद्विवेकहेतोरभावात्। सर्वत्र सत्त्वाऽविशेषे ऽपि हेतुसामर्थ्यनियमादभिव्यक्तिनियम इति चेत्? हन्ताऽसत उत्पत्त्या किमपराद्धं, येन तस्यामपि नियमो न स्यात्? भवता तु सर्वेषां सर्वात्मकत्वादभिव्यक्तिभेदाऽनुपपत्तेश्च दुरधिगमो नियम इत्युक्तप्रायम्।

एतेन कुविन्दादिसमवधाने ऽपि पटस्य नियमेन तन्त्वात्मकत्वेन[2] सत्कार्यसाधनं प्रत्युक्तम्। शक्तिश्च शक्यविषया ऽपि शक्ताश्रया विनापि शक्यसद्भावं ज्ञानमिव ज्ञेयविषयमपि ज्ञानाश्रयमन्तरेणापि ज्ञेयमुपपत्स्यते। कारणत्वञ्च कार्यं प्रति कारणस्य शक्तिभेदः। स च कारणाश्रय एव[3], न कार्यकारणाश्रयः। निरूपणमप्यस्य कार्याऽवगमाधीनं, न तु कार्यसत्त्वाऽधीनमिति नाऽवीनपञ्चकं सत्कार्यसाधने प्रभवति। तस्मात्तन्त्वादयः स्वव्यापारात्प्रागसत्कार्यमुत्पादयन्ति कारणत्वादभिव्यक्तिकारणवदित्यसत्कार्यवादिनो दर्शयाम्बभूवुः। तेन ताननुनाथ्यैतद्वक्तव्यं, सदेव कार्यमुत्पद्यते इति[4]।

---

१ विशेषस्य १ पु पा ।
२ तन्त्वात्मकत्वम् २ पु पा ।
३ आश्रयो भवेत् २ पु पा ।
४ इति । तस्मात् सर्वमवदातम पु २ ।

अपि च निरुपादानकार्याऽनुत्पादात्तदत्यन्तव्यतिरेकाऽभावादुपादेयस्योपादानरूपेण सत उत्पत्तिरुच्यते । सर्वात्मना तु सत्त्वे तदनुपपत्तेर्वैयर्थ्याच्चोपादेयवत् । साध्यं नोपादानम् । कथं तर्हि कर्म्म कारकम्? नैव कर्मकारकं कारकाश्रितमिति केचित् । विकार्यप्राप्ययोर्वा सत्त्वाद-

अपि च समानतीर्था अपि स्वायम्भुवा एकान्ताऽनभ्युपगमादिति वदन्तो न सर्वात्मना सत उत्पत्तिमभ्युपयन्ति, अपि तूपादेयस्योपादानरूपेण सतो, न पुनरुपादेयरूपेणापि सत इत्याह—अपि च निरुपादानकार्याऽनुत्पादात्तदत्यन्तव्यतिरेकाऽभावादुपादेयस्योपादानरूपेण सत उत्पत्तिरुच्यते । निष्क्रान्तमुपादानात्कार्यं निरुपादानं, तन्त्वादिभ्यो भिन्नदेशमिति यावत् ।

एतदुक्तं भवति । यथा कुविन्दादिभ्यो भिन्नदेशे एतदुपलभ्यते, नैव तन्त्वादिभ्यः, सोऽयं धर्मधर्मिभावो नैकान्तिकभेदे भवितुमर्हति, गवाश्वस्येव । नाप्यभेदे ऐकान्तिके, धर्मिरूपस्येव । तस्मात्कथञ्चिद्भेदः कथञ्चिदभेद एषितव्य. । सोऽयमनेकान्ताऽभ्युपगम इत्यर्थः ।

अथोपादेयस्वरूपेणापि सत किमित्युत्पत्तिर्नोच्यते ? इत्यत आह—सर्वात्मना तु सत्त्वे तदनुपपत्ते । तस्मादुत्पत्तेरनुपपत्तेः । हेत्वन्तरमाह—वैयर्थ्याच्च साधनानाम् । कुतः ? उपादेयवत् । उपादेयरूपेण तद्वत् तदन्वितमिति यावत् । साध्यं साधनार्हं नोपादानं, यतो निष्पादितक्रिये कर्मण्यविशेषाधायिनः साधनस्य साधनन्यायाऽतिपातात् । ननु यद्यसत उत्पत्तिस्ततस्तस्याऽसत्त्वेन क्रिया प्रति निमित्तभावाऽभावात्कथं कर्म कारकं ? मित्याह—कथं तर्हि कर्म कारकम् ? तदेकदेशिमतेन परिहरति—नैव कारकं कर्मकारकाश्रितमिति केचित् ।

दोषः । त्रैविध्यं तर्हि हीयते। कामं, न त्वसतः कारकत्वं शक्याऽध्यवसानम् । कथं तर्हि घटं[1] करोतीति प्रयोगः? उपादेयश्रुत्या उपादाननिर्देशात् । बुद्धिस्थस्य वा क्रियासूपयोगाद्युक्तो निर्वर्त्यस्य कारकभावः । यथोक्तम्-

यथाहुः 'कारकादुत्पत्तेः कर्मे'ति । तदेतत्कारकाऽधिकारे कर्मसञ्ज्ञाविधानविरुद्धमित्यनादृत्य पक्षान्तरमुपन्यस्यति—विकार्यप्राप्ययोर्वा सत्त्वाददोषः । चोदयति—त्रैविध्य तर्हि वैयकारणप्रवरसमत कर्मणो हीयेत । निर्वर्त्यस्याऽसत्त्वेनाऽकर्मत्वात् । परिहरति—कामं, न त्वसतः कारकत्वं शक्याऽध्यवसान, तच्चभवतो ऽभियुक्तस्य पाणिने विरोधे कात्यायनस्याऽसद्वादित्व[2]मिति भाव. । ननु यदि न निर्वर्त्यस्य कर्मता, कथं तर्हि घटं करोतीति द्वितीयाप्रयोगः? तस्माल्लौकिकप्रयोगविरोधात्पाणिनेरेवाऽसद्वादित्वमित्यर्थ. । समाधत्ते—उपादेयस्य घटस्य श्रुत्या । घटशब्देनेति यावत् । उपादानस्य कपालाना तादर्थ्यनिमित्तोपचारात् । उपादानस्य च सत्त्वेन कारकत्वोपपत्तेर्द्वितीयाप्रयोगसिद्धिः ।

एतदुक्तं भवति, प्रयोगो लौकिको घटं करोतीति, न पुनस्तस्य मुख्यत्वमपि, औपचारिकस्याऽपि तस्य लोके दर्शनात्; मञ्चाः क्रोशन्तीति यथा । तदिह कारके कर्तुरीप्सिततमं कर्म, कर्मणि द्वितीयेत्यभियुक्तस्मृतेरौपचारिक इति निश्चीयते । अतो यस्य स्मृत्या विरोधो मुख्यत्वस्य, न तस्य लौकिकत्व, यस्य तु प्रयोगस्य लौकिकत्व, न तस्य विरोध इति । अस्तु वा मुख्यत्वं, तथा ऽप्यविरोध इत्याह—बुद्धिस्थस्य वा क्रियासूपयोगात् । क्रियानिमित्तत्वोपपत्तौ युक्तो निर्वर्त्यस्य कारकभाव. । यथोक्तम्—

१ कटम मू पु पा । २ वादित्वात् २ पु पा ।

व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्म्मणः ।
कारकत्वं तथा सिद्धं बुद्धिरूपप्रकल्पितम् ॥

एतेन साध्यसाधनयोः परस्पराऽऽनुकूल्यं परास्तम् । अस्तु तर्हि कर्म्म प्रवर्तकम् । अभिमतसाधनता तस्य प्रवर्तना, प्रवृत्तिहेतुरूपत्वात् । न । तस्य विषयत्वात् । अपि च-

प्रज्ञायते लिङादीनां व्यञ्जनीया प्रवर्तना ।
प्रयोक्तृधर्म्मो न णिचो यथा ऽनियतकर्तृका ॥

व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्मणः ।
कारकत्व तथा सिद्ध बुद्धिरूपप्रकल्पितम् ॥

आकृतौ हि पदार्थे तस्याऽनित्यत्वाज्जन्यमानत्वानुपपत्तेरित्यर्थः । तस्मान्न फलस्य शक्तिभेदः साध्यता । एतेन फलगतशक्तिभेदसाध्यतानिराकरणमात्रेण साध्यसाधनयोः सिद्धिं प्रति परस्पराऽऽनुकूल्यं सम्बन्ध. साध्यता परास्ता वेदितव्या । तथाऽपि साम्यात्कदेति प्रश्नस्य ।

अस्तु तर्हि कर्म प्रवर्तकम् । अभिमतसाधनता तस्य प्रवर्तन-प्रयोजकव्यापारः । कुतः ? प्रवृत्तिहेतुरूपत्वात् । तथा खल्वभिमत[1]साधने कर्मणि स्वयं दु खरूपे ऽपि पुरुष प्रवर्तते । तदेतद्दूषयति-न, तस्य विषयत्वात्प्रवृत्तिकर्तुः प्रयोजकः प्रवर्तकः, सिद्धश्च स भवति, तदिह सिद्ध चेत्कर्म प्रवृत्ते' प्राक् प्रवृत्तेर्भावनाया विषयो न भाव्यम् । न जातु गगनमस्या भाव्य भवितुमर्हति । विषयश्चेत्कर्म असिद्धत्वात्कथ प्रवर्तकमित्यर्थ' । अपि च-

प्रज्ञायते लिङादीना व्यञ्जनीया प्रवर्तना ।
प्रयोक्तृधर्मो न णिचो यथा ऽनियतकर्तृका ॥

१ अयमभिमत २ पु पा ।

लोकाद्धि शब्दार्थाऽधिगमः। तत्र च प्रवर्तना नियताधारा प्रयोक्तृसंश्रयैव लिङाद्यर्थो ऽवगम्यते। णिजर्थस्तु सा ऽनियताधारा। न च णिजर्थवल्लिङाद्यर्थोऽपि भवितुमर्हति। यथालोकप्रज्ञानं शब्दार्थव्यवस्थानात्[1]।

यस्य त्वेवं सति पुरुषप्रयत्नो ऽनुवादो होमाऽनुगतस्तु व्यापारः श्रुत्योच्यते इति दर्शनाच्चेतनकर्तृव्यापारात्मिका, इतरथा वा स्पन्दाऽस्पन्दसाधारण्येनौदासीन्यप्रच्युत्यात्मव्यापारमात्रं भावना विधिशब्दपर्याया लिङर्थो ऽपरामृष्टकालभेदा। लिङादिषु तु सत्त्वेऽपि कालविशेषेण विधिरूपप्रतिबन्धादप्रवृत्तिहेतुत्वात् यज्यादिभिरिव लिङभि-

लोकसिद्धो हि शब्दसामर्थ्याऽधिगमः। तत्र च प्रवर्तना नियताधारा प्रयोक्तृसम्प्रयैव लिङाद्यर्थो ऽवगम्यते। णिजर्थस्तु सा अनियताधारा। न च णिजर्थवल्लिङर्थो ऽपि भवितुमर्हति, यथालोकप्रज्ञान शब्दार्थव्यवस्थानात्। सुगमम्। यस्य तु दर्शनमि.. परेण सम्बन्धः कृतः। किं तदित्याह—एवं सति पुरुषप्रयत्नो ऽनुवाद, होमाधारगतस्तु व्यापारः श्रुत्योच्यतइति तेषु तेषु शास्त्रप्रदेशेषु भाष्यकारव्याहारदर्शनाच्चेतनकर्तृव्यापारात्मिका प्रयत्नशब्दप्रवेदनीया। इतरथा स्पन्दाऽस्पन्दसाधारण्येनौदासीन्यप्रच्युत्युपलक्ष्यमाणाऽऽत्मव्यापारमात्रं भावना विधिशब्दपर्याया लिङर्थः।

ननु यदि भावनैव विधिः पचत्यपाक्षीत्पक्ष्यतीत्यत्राऽप्यस्ति भावनेति पचेदित्यनेन तुल्यार्थत्वप्रसङ्ग इत्यत आह—अपरामृष्टकालभेदा प्रवृत्तिहेतुर्भावना विधिरपरामृष्टकालभेदा तद्धेतु.। सा च लिङर्थः। न त्वेव लडाद्यर्थ[2] इत्यर्थः। लडादिषु सत्त्वे ऽपि भावनाया

१ व्यवस्थापनात मू पु पा। २ लडाद्यर्थ इति १ पु पा। गवमग्रेपि।

धेयाया इति दर्शनम्; तम्प्रत्युच्यते-

**नैकं विबद्धं न च तद्विशेषश्चेत्स कथ्यताम् ।**
**कालभेदाऽपरामर्शः कामं नाऽस्मात्प्रवर्तते ॥**

लिङादिषु कालभेदेन विधिरूपस्य प्रतिबन्धे भावनाज्ञानाऽभावो,ऽभेदात् । अविबद्धे भेदप्रसङ्गात् । न खल्वेकं विबद्धमविबद्धं च कल्पते । विशेषस्य प्रतिबन्धो न भावरूपस्य । विशेषरूपभावाऽभावाऽनुविधानात् प्रवृत्तिभावाऽभावयोः । स तर्हि विशेषो विधिः । न भावो भाव-

कालविशेषेण वर्तमानादिना विधिरूपप्रतिबन्धादप्रवृत्तिहेतुत्वान्न लिङादितुल्यार्थता, यज्यादिभिरिव लिङभिधेयाया इति । यथा 'यदि रथन्तरसामा सोमः स्या' 'द्यस्योभय हविरार्तिमार्च्छेती[१]',त्येवमादिषु; त प्रत्युच्यते-

नैकं विबद्धं, न च तद्विशेषश्चेत्स कथ्यताम् ।
कालभेदाऽपरामर्शः कामं नाऽस्मात् प्रवर्तते ॥

यदि हि भावना विधिरित्येकमेव तत्त्वं ततो लिङादिषु कालभेदेन विधिरूपप्रतिबन्धे भावनाज्ञानाऽभावः । विधेर्भावनाया अभेदात् । अविबद्धे वा भावनाया विबद्धाऽविबद्धविरुद्धधर्माऽध्यासाद् भेदप्रसङ्गात् । विरुद्धधर्माऽध्यासाऽसम्भवमेकस्य दर्शयति-न खल्वेक विबद्धमविबद्धञ्च कल्पते, घटते । चोदयति-विशेषस्य प्रतिबन्धो न भावरूपस्य । भाव इति ण्यन्ताद्भवतेरेरजित्यचि कृते भावनामाह । परिहरति-विशेषरूपभावाऽभावाऽनुविधानात् प्रवृत्तिभावाऽभावयो. । स तर्हि विशेषो विधिः ।

१ आर्च्छेत २ पु पा ।

ना विधिरुपदेशः प्रेरणमित्येकम् । निदर्शनीयश्चासौ । कर्तव्यतेति चेत्? न । तस्या एव बुभुत्सनात् ।

ननु कालभेदपरामर्शविरह एव विशेषः किमन्येन? वर्तमानादिरूपाया अननुष्ठेयत्वात्तदभावे ऽप्यनुष्ठेयत्वप्रतीतेः । भवत्वेष विशेषो न तु पुरुषस्य प्रवृत्तिहेतुः । कामं प्रत्येतु कालभेदविभक्तां भावनाम्, अनुष्ठानं तु कुतः? न हि वस्तुरूपमात्रप्रतिपत्तिः प्रवृत्तिनिमित्तम् । न खलु घट इति प्रतिपद्य ततोऽर्थं तावत्येव तस्मिन्प्रवर्तते ।

अतो न भावो भावना विधिरुपदेशः प्रेरणमित्येकं वस्तु । निदर्शनीयश्चासौ । शङ्कते—भावनाया कर्तव्यतेति चेत्? निराकरोति—न । तस्या एव बुभुत्सनात् । सत्यं, कर्तव्यता विधिः, सैव तु कीदृशीति जिज्ञास्यत इत्यर्थः । चोदयति—ननु कालभेदपरामर्शविरह एव विशेषो भावनायाः कर्तव्यताविधिः, तत्किमन्येन विशेषेण? अत्रैवाऽन्वयव्यतिरेकौ दर्शयति—वर्तमानादिरूपाया भावनाया अननुष्ठेयत्वात्तदभावे चाऽनुष्ठेयत्वप्रतीतेर्विधिनिबन्धनत्वाच्चाऽनुष्ठेयत्वस्य कालभेदाऽपरामर्श एव भावनायाः कर्तव्यता विधिरिति साम्प्रतम् । तद् दूषयति—भवत्वेष विशेषः, न तु पुरुषस्य प्रवृत्तिहेतुः । अतद्धेतुश्च कथं विधिः? नन्वनुष्ठेयत्वाऽवगतेरेव प्रवृत्तिः, सा च भावनायाः कालभेदाऽपरामर्शे आपततीत्यत आह—कामं प्रत्येतु कालभेदविविक्तां भावनामयं पुमान्, अनुष्ठानं तु कुतो हेतोः? ननु कालभेदाऽपरामर्शभावाऽभावाऽनुविधानादनुष्ठेयत्वाऽवगतिभावाऽभावयोः स एव विशेषः प्रवृत्तिहेतुरित्युक्तम्, तत्किं हेतुप्रश्नेनेत्यत आह—न हि वस्तुरूपमात्रप्रतीतिः प्रवृत्तिहेतुः । कस्मात्? न हि घट इति प्रतिपद्य ततो घटशब्दादर्थं कालभेदपरामर्शरहितं तावत्येव तस्मिन्

साध्यतया प्रवर्ततइति चेत् ? कथं साध्यता ? यद्यसिद्धत्वं, खपुष्पम् । मृत्पिण्डाऽवस्थायां च घटो नास्तीत्यपि प्रसङ्गः । अथ कारकविषयत्वं तैर्विषयीकृतायां प्रवृत्तिकारिकायां किमर्थं प्रवर्तेत ? साध्यायां चाऽनेन प्रवर्तितव्यमिति कुतस्त्यम् ? फलवत्ताऽवगमात्प्रवर्ततइति चेत् ? । स एव कुतः ? अनुष्ठेयत्वाऽवगमादिति चेत् ? न । सिद्धे ऽनुष्ठेयत्वे फलकल्पना ततश्चाऽनुष्ठेयत्वमितीतरेतराश्रयत्वात् । एवमेवाऽप्रवृत्तस्याद्या प्रवृत्तिः आकूतं चिकीर्षा अध्यवसायो

घटे प्रवर्तते । तस्मादन्वयो व्यभिचारीत्यर्थः । शङ्कते—साध्यतया प्रवर्तते इति चेत् ? विकल्प्य निराकरोति—कथं साध्यता ? न तावत् कालभेदपरामर्शविरहो, व्यभिचारादित्युक्तमधस्तात् । तथा च सति यद्यसिद्धत्वमत्यन्तप्रागभावाभ्या खपुष्पम् । मृत्पिण्डाद्यवस्थायाञ्च घटो नास्तीत्यपि साध्यमिति प्रवृत्तिप्रसङ्गः । अथ कारकविषयत्वं, तैर्विषयीकृताया प्रवृत्तिकारिकाया किमर्थं प्रवर्तेत ? साधनप्रवर्तकत्व हि कर्तृव्यापारः; प्रवृत्तानि चेत्साधनानि स्वव्यापारे कृतं तर्हि प्रवर्तकेने[1]त्यर्थः । अपि च साध्यायाञ्च भावनायामनेन प्रेक्षावता हिताऽहितप्राप्तिपरिहारार्थिना प्रवर्तितव्यमिति कुतस्त्यम् ? शङ्कते—फलवत्ताऽवगमात्प्रवर्ततइति चेत् ? निराकरोति—स एवाऽन्तरङ्गतया धात्वर्थभाव्यावरुद्धाया भवन्मते कुतः ? अनुष्ठेयत्वावगमादिति चेत् ? न । सिद्धे ऽनुष्ठेयत्वे फलकल्पना, फलकल्पने चा[2]ऽनुष्ठानमितीतरेतराश्रयम्[3] । एवमेवाऽप्रवृत्तस्याऽऽद्या प्रवृत्तिः । तामेव विभजते—आकूत चिकर्षा ऽध्यवसायो वा प्रयत्नस्तत्पूर्वो लिङर्थः, उत्तर-

१ प्रवर्तकेन कर्त्रा २ पु पा । २ कल्पनातश्च २ पु पा ।
३ इतरेतराश्रयत्वात २ पु पा ।

वा लिङाद्यर्थः । उत्तरकाला प्रवृत्तिः प्रयत्नो वा देहवचनचेष्टा वा लडाद्यर्थ इति विशेषाऽभिधानं प्रत्यूढम् । तद्धेत्वभावात् । पुरुषरूपमात्रप्रतीतेरप्रवृत्तेः, हेत्वन्तराऽप्रतीतेश्च । तां च भूतवर्तमानौ प्रतिबध्नीतो, नेतरः कालो, भविष्यत्यनुष्ठेयत्वाऽविरोधात् ।

यदपि समर्थनम्—अप्राप्तसम्बन्धया क्रियया आत्मनः सम्बन्धस्य प्रतीत्या प्रवृत्तिः यथा ऽद्य तवेदं कर्म्मेति लोके । अत्रापि तु लृडन्ते श्रोतुः प्रमाणान्तरेणा-

काला प्रवृत्ति. प्रयत्नो वा देहवचनचेष्टा वा लडाद्यर्थ इत्याचार्यदेशीयानां विशेषाभिधान प्रत्युक्तम् । एवमित्यतिदिष्ट हेतुमादर्शयति—तद्धेत्वभावात् । तदित्याद्या प्रवृत्ति परामृशति । स एव कुतः ? पुरुषस्य रूपमात्रप्रतीतेरप्रवृत्तेर्हेत्वन्तरस्य साध्यतायाया वा फलस्य वाऽप्रतीतेः । अपि च स नाम कालभेदपरामर्शस्त्यज्यता, यः साध्यता विहन्ति भावनाया', अतीतवर्तमानौ च तथा; न त्वनागतः । तस्य तया सह विरोधाऽसिद्धेः । तेन पक्ष्यतीत्यादावनुपहतसाध्यभावा भावना ऽवगम्यते इति विधित्वप्रसक्तिरित्याह—तांश्च भूतवर्तमानौ प्रतिबध्नीतो, नेतरः कालो, भविष्यत्यनुष्ठेयत्वाऽविरोधात् ।

यदपि समर्थनम्, अप्राप्तसम्बन्धया क्रियया ऽऽत्मन सम्बन्धस्य प्रतीत्या प्रवृत्ति । यथा ऽद्य तवेद कर्मेति लोके । स्वामिना हि यदा भृत्य प्रत्युच्यते चैत्र ! अद्य तव नगरगमनं कर्मेति तदा खल्वय चैत्र आत्मनो नगरगमनसम्बन्ध स्वामिवचनादन्यतोऽनधिगतमवगम्य गमने प्रवर्तते, तथेहापि स्वर्गकामादेर्यागादिक्रियासम्बन्ध लिङादेरन्यतो ऽनधिगतमवगम्य स्वर्गकामस्य यागादौ प्रवृत्तिरित्यप्राप्तक्रियाकर्तृसम्बन्ध एव विधिरित्यर्थः । एकदेशी तु

ऽनाधिगतमर्थमवगमयति विधित्वप्रसङ्गः।

न। निमित्ताऽन्तराऽप्राप्ते तस्य तदभिधानं, तत्र निमित्तान्तरप्राप्तस्यैव भविष्यत्त्वेनाऽभिधानादर्थस्य। लिङादिभिस्तु तथा ऽभिधानम्। अतश्चाऽज्ञातज्ञापनमप्रवृत्तप्रवर्तनमुभयविधप्राप्तिप्रतिषेधेनाऽप्राप्तक्रियाकर्तृसम्बन्धो विधिरिति विधिविदामुद्गाराः।

नैतत्सारम्। यस्मात्-

न प्रवृत्तिर्यागधियो लोके ऽभिप्रायवेदनात्।
मृषा भवेत्तथा कामं[1] किं मुधैष प्रयस्यति॥

प्रसङ्गमापादयति—अत्राऽपि समर्थेने पक्ष्यतीत्यादौ लृडन्ते श्रोतु प्रमाणान्तरेणाऽनधिगतमर्थमवगमयति वचने विधित्वप्रसङ्ग। परिहरति चोदकः—न। निमित्तान्तराऽप्राप्ते क्रियाकर्तृसम्बन्धे तस्य लिङादेस्तदभिधान सम्बन्धाभिधान, तत्र लृडादौ निमित्तान्तरप्राप्तस्यैव भविष्यत्त्वेन रूपेणाऽभिधानादर्थस्य सम्बन्धस्य। लिङादिभिस्तु तथा ऽभिधान निमित्तान्तराऽप्राप्ततया ऽभिधानम्। अप्राप्ते हि द्विविधा प्राप्तिः प्रतिषिध्यते, उत्पत्ति प्रमितिश्च। तत्र मानान्तराऽनधिगत सम्बन्धमवगमयति लृडन्ते यद्यपि प्रमितिरूपा प्राप्तिर्न समस्ति, समस्त्युत्पत्तिरूपा, निमित्तान्तरादुत्पत्स्यमानस्यैव तस्य तथाऽभिधानात्। न त्वेव लिङन्ते[2] तद्वाक्यार्थाऽवगतिर्निबन्धनं पुरुषप्रयत्नमन्तरेणाऽन्यतो यागादिसम्बन्धाऽसिद्धेरित्यर्थ। यत एवमतश्चाऽज्ञातज्ञापनमप्रवृत्तप्रवर्तनमुभयविधप्राप्तिप्रतिषेधेनाऽप्राप्तक्रियाकर्तृसम्बन्धो विधिरिति विधिविदामुद्गाराः। तदेतद्दूषयति—नैतत्सारम्। यस्मात्—

न प्रवृत्तिर्यागधियो लोके ऽभिप्रायवेदनात्।
मृषा भवेत्तथा काम किं मुधैष प्रयस्यति॥

[1] काम मू पु पा। [2] लिङन्तवाक्यार्थ २ पु पा।

प्रतिपद्यतां नामाऽयमात्मनः क्रियायोगं शब्दात्, तं च तथाभावे तथेति निश्चिनोतु, विपर्यये नैतदेवमिति। प्रवर्तते तु कस्मात्? लोके त्वद्य तवेदं कर्मेति वचनादधिगतवक्त्रभिप्रायो यो यदभिप्रायाऽनुरोधी स प्रवर्तितुमर्हति, अन्यथा सर्वस्य प्रवृत्तेः। नन्विहापि शब्दाऽनुरोधी प्रवर्त्स्यति। न शब्दाऽनुरोधे किं चन निमित्तम्। नन्वस्ति प्रामाण्यम्? तच्च प्रवृत्तौ समर्थितं भवति। अन्यथा मृषात्वाऽऽपातात्। कथम्? भूतवर्तमानयोः सम्बन्धयोरभावात्।

प्रतिपद्यतां नामाऽयमात्मनः क्रियया योगं शब्दात्, तञ्च तथाभावे मानान्तरेण सवादे च तथेति निश्चिनोतु। विपर्यये मानान्तरेण बाधे नैतदेवमिति। प्रवर्तते तु कस्मात्? ननूक्तं यथा तवेदं कर्मेति लोके, इत्यत आह—लोके तु अद्य तवेदं कर्मेति वचनादधिगतवक्त्रभिप्रायभेदो यो यदभिप्रायाऽनुरोधी स तदभिप्रायाऽवगमात् प्रवर्तितुमर्हति। न हि तदा क्रियाकर्तृसम्बन्धबोधः प्रवर्तयति, अपि त्वनुविधेयाऽभिप्रायभेद आज्ञादिरित्यर्थः। कुतः? अन्यथा यदि क्रियाकर्तृसम्बन्धबोधमात्रं प्रवृत्तिहेतुः, न त्वनुविधेयाऽभिप्रायभेदबोधः, ततः सम्बन्धबोधः सर्वसाधारण इति सर्वस्य प्रवृत्तेः। चोदयति—नन्विहापि शब्दाऽनुरोधी प्रवर्त्स्यति। यथा लोकेऽभिप्रायानुरोधी। दूषयति—न शब्दाऽनुरोधे किञ्चिन्निमित्तम्। यथाऽभिप्रायाऽनुरोधेऽनुविहितभावः खल्वयं स्वामी हितं तु भृत्याय प्रयच्छति, अहितं वा न विधत्ते। चोदयति—नन्वस्ति प्रामाण्यं, प्रवृत्तिहेतुभावस्तस्य कथम्? इत्यत आह—तच्च प्रवृत्तौ समर्थितं भवति। कस्मात्? अन्यथा प्रवृत्त्यभावे कर्तुः क्रियासम्बन्धविरह आत्यन्तिक इति तदभिधायिनो वेदराशेर्मृषात्वा-

भविष्यत्यपि न चेत्पुरुषः प्रवर्तते न तत्स्यादिति मृषात्वापातः। पुरुषप्रवृत्त्या तर्हि प्रामाण्यम्, भवतु कामं मृषा, किमर्थो ऽयमस्य शब्दप्रमाणीकरणप्रयासः? बहुतरं च तस्यैवमायसितव्यमापतति। सकलमिथ्याज्ञानप्रमाणीकरणात्। ननु न शाब्दं मिथ्याज्ञानम्। द्विविधहेत्वभावात्। यद्यपि हेतुदोषो न स्यात्, बाधकस्तु दुर्वारः। भूतवर्तमानयोः संबन्धयोरुपलब्धिगोचरयोरनुपलब्धेः। भविष्यतो

ऽऽपातात्। पृच्छति—कथं पुनः प्रवृत्त्यभावे सम्बन्धाऽभाव[१]? उत्तरं—भूतवर्तमानयोः सम्बन्धयोरुपलम्भाऽर्हयोरनुपलब्धेरभावात्। भविष्यत्यपि सम्बन्धे न चेत्पुरुष प्रवर्तते ततस्तस्य कालत्रयविवेके गगनकुसुमवदात्यन्तिकमसत्त्वमिति तद्विषयस्य न तत्स्यादिति न तत्प्रामाण्य स्यादिति। सो ऽयं मृषात्वापात[२]। तदेतद्दूषयति—पुरुषप्रवृत्त्या तर्हि प्रामाण्यम्। भवतु को दोषः? इत्यत आह—ततः कामं भवतु मृषा शब्द., किमर्थो ऽयमस्य पुंसः शब्दप्रमाणीकरणप्रयासः? न खल्वस्य प्रेक्षावतस्तत्प्रमाणीकरणे हितप्राप्तिरहितनिवृत्तिर्वा। तदि प्रामाण्यसिद्धिमात्रमीहित तत्र बहुतर च तस्यैवमायसितव्यमापतितं, सकलमिथ्याज्ञानप्रमाणीकरणात्। चोदयति—ननु न शाब्द मिथ्याज्ञानं द्विविधहेत्वभावात्। तस्मात्प्रामाण्यमेव शब्दस्य पुरुषप्रवृत्तिमात्रेप्स्यतीत्यर्थः। दूषयति—यद्यप्यपौरुषेयतया हेतुदोषो न स्याद् बाधस्तु दुर्निवारः। कुतः? भूतवर्तमानयोः सम्बन्धयोरुपलब्धिगोचरयोरुपलम्भकप्रत्ययान्तरसाकल्यस्वभावविशेषशालिनोरनुपलब्धे। भविष्यतो हेत्वभावात्। हेत्व-

१ सम्बन्ध्यभाव २ पु॰ पा।

हेत्वभावात् । शब्दप्रामाण्यं हेतुः । न । प्रवृत्तौ तस्य भावादितरेतराश्रयत्वात् । ननु स्वतः प्रामाण्याद्विज्ञानस्य नेतरेतराश्रयम् । न । प्रवृत्तिहेत्वभावेन तस्याऽपवादात् । प्रमाणस्य परिच्छेदकत्वात्स्वतोऽप्रवृत्तिकारणत्वात् । प्रवृत्तिहेतुसद्भावादेव प्रामाण्यसिद्धेः ।

ननु च स्वतः प्रामाण्यात्प्रवृत्तिहेतुः कल्पयिष्यते तस्मात्प्रमितसिद्धावन्यपरिच्छेदात् । अन्याऽपरिच्छित्त्या च प्रमितताहानात् । कः फलम् । न । फलवत्यप्यर्थिनोऽप्रवृत्तेः । क्रियासंबन्धस्याऽविशेषेण प्रवृत्तेः । कल्पितेपि

भावे च कार्याऽभाव । अन्यथा कादाचित्कत्वाऽनुपपत्तेरिति भावः चोदयति—शब्दप्रामाण्य भविष्यतः सम्बन्धस्य हेतुरस्ति । दूषयति—न । प्रवृत्तौ तस्य प्रामाण्यस्य भावात् प्रामाण्ये तु सति प्रवृत्तिसिद्धेरितरेतराश्रयात् । चोदयति—ननु स्वत प्रामाण्याद्विज्ञानस्य न प्रवृत्तिनिबन्धनं प्रामाण्यमिति नेतरेतराश्रयम् । निराचष्टे—न । प्रवृत्तिहेत्वभावेन तस्य प्रामाण्यस्यौत्सर्गिकस्याऽप्यपवादात् । ननु प्रमाणमेव प्रवृत्तिहेतु, स्वत प्रामाण्याऽन्यथानुपपत्त्या तदाक्षेपकत्वादित्यत आह—प्रमाणस्य परिच्छेदकत्वात्, स्वतोऽप्रवृत्तिकारणत्वात् । प्रवृत्तिहेतुसद्भावादेव[1] प्रामाण्यसिद्धेः ।

इदमाकूतं, को ऽयमाक्षेपो नाम ? न तावत्प्रज्ञापनम् । तस्या अहेतुकाया खपुष्पवदत्यन्ताऽसत्या प्रवृत्ते प्रज्ञापने शब्दप्रामाण्याऽनुपपत्तेरर्थादुत्पादकत्वमेषितव्यम् । तत्र चोक्तो दोषः । चोदयति—ननु च स्वतः प्रामाण्यात्प्रवृत्तिहेतुः कल्पयिष्यते । कस्मात् ? स्वत सिद्धप्रमाणभावात् प्रमाणात् प्रमितस्य सिद्धौ तदन्यथाऽनुपपत्त्या ऽन्यस्य तदुपपादकस्य परिच्छेदात् । अन्यथाऽनुपपत्तिमेव प्रमितस्य दर्शयति—अन्याऽपरिच्छित्त्या च प्रमितताहानिप्रसङ्गात् । को ऽसावन्य प्रवृत्तिहेतुः ? उत्तर फलम् । तदेतद्दूषयति—न फलव-

१ सद्भावे च मू पु पा ।

तस्मिंस्तदनुपपत्तेः ।

ननु स्वर्गकामादय एव क्रियासम्बन्धिनः श्रूयन्ते? सत्यं, न तु सर्वत्र 'विश्वजिता यजेत' 'यावज्जीवमग्निहोत्रं जुहुया' दिति । अत एव सर्वस्याऽभिलषितमेकत्र फलम् अन्यत्राऽपायपरिहारः कल्प्यते । सत्यम् । न त्वेवमपि श्रुतोपपत्तिः । तथा हि—

अर्थिनो ऽपि नियोगेन न क्रिया न निमित्तिनः ।
आलस्यादन्तरायेभ्यो विहिताऽकृत्यभावतः ॥

न खलु फलकामो निमित्तवान्वा ऽपायपरिहारप्रयो-

त्यप्यर्थिनो ऽप्रवृत्तेः । ननु मा भूदनर्थिनः प्रवृत्तिः अर्थी तु प्रवर्त्स्यतीत्यत आह—क्रियासम्बन्धस्याऽविशेषणाऽर्थिनो ऽनर्थिनश्च प्रवृत्तेः[1] । कल्पिते ऽपि फले तस्मिन्नविशेषप्रवृत्तस्य क्रियासम्बन्धस्याऽनुपपत्तेः । प्रमित खल्वनुपपद्यमानमुपपादकमुपकल्पयति, न पुनरनुपपद्यमानमात्रमनुपपादकम् । अनुपपादकञ्च फलमविशेषप्रवृत्तस्य क्रियाकर्तृसम्बन्धस्येत्यर्थं —चोदयति । ननु स्वर्गकामादय एव क्रियासम्बन्धिनः श्रूयन्ते न तु पुरुषमात्रम् । दूषयति—सत्यं, क्वचिन्न तु सर्वत्र । विश्वजिता यजेत, यावज्जीवमग्निहोत्रं जुहुयादिति । चोदक आह—अत एव सर्वस्याऽभिलषितमेकत्र विश्वजिति स्वर्गः फलमन्यत्र नैमित्तिके ऽपायपरिहारः प्रयोजनं कल्प्यते, न फलं तत्कामस्याऽनधिकारादिति सर्वशक्तौ प्रवेदयिष्यते । तदेतद्दूषयति—सत्यं, न त्वेवमपि श्रुतोपपत्तिः । तथा हि—

अर्थिनो ऽपि नियोगेन न क्रिया न निमित्तिनः ।
आलस्यादन्तरायेभ्यो विहिताऽकृत्यभावतः ॥

न खलु फलकामो निमित्तवान्वा ऽपायपरिहारप्रयोजनः कर्ता

१ प्रतीते २ पु पा ।

जनो नियोगतः क्रियासम्बन्धमनुभवति, येन श्रुतक्रियासम्बन्धोपपत्तिः स्यात् फलाऽपायपरिहारकल्पनयोः सतोः। यतो ह्यवश्यं क्रियासम्बन्धः स हेतुस्तमुपपादयितुं क्षमते। कथं पुनः फलकामस्याऽपायभीरोर्वा न क्रिया ? अलसतया। न तर्ह्यर्थिता। न प्रत्यात्मवेद्या ऽर्थिता क्रियाऽभावेन शक्यनिन्ह्वा। तथा मरणादिभ्यो ऽन्तरायेभ्यो ऽप्रवृत्तिः। यदि च नियोगतः प्रवृत्तिः, विहिताऽकरणाऽभावप्रसङ्गः। अपि च—

**निमित्तान्तरतः प्राप्तिर्मोहादेश्च प्रकल्पते।**
**न चोपदेशकः शब्द उदीत्येत ततः पुमान् ॥**

फले हि प्रवृत्तिहेतौ कल्प्यमाने न शब्दनिमित्तः

नियोगतः क्रियासम्बन्धमनुभवति प्राप्नोति, येन श्रुतक्रियासम्बन्धोपपत्तिः स्यात्, फलोपायपरिहारकल्पनयोः सतोः। कस्मात्पुनर्न स्या? दित्यत आह—यतो ह्यवश्यं क्रियासम्बन्धः स हेतुस्तमुपपादयितुं क्षमते—पृच्छति। कथं पुनः फलकामस्य विश्वजिदादावपायभीरोर्वा नैमित्तिके नावश्यंभाविनी क्रिया? उत्तरम्—अलसतया। प्रष्टुर्वचनन तर्ह्यर्थिता। न ह्यस्ति सम्भवस्तदर्थिता च तदक्रिया चेत्यर्थः। उत्तर—न प्रत्यात्मसंवेद्या मनसा संयुक्तसमवायादिष्टाऽर्थिता क्रियाभावेनाऽनुमानेन शक्यनिह्नवा। अनुमानस्य मानसप्रत्यक्षबाधितविषयतया ऽनुत्पादादित्यर्थः। तथा मरणादिभ्यो ऽन्तरायेभ्यो ऽर्थिनो ऽप्रवृत्तिः। यदि च नियोगतः प्रवृत्तिस्ततो विहिताऽकरणाऽभावप्रसङ्गः। तथा चाऽकुर्वन्विहितं कर्मेति निर्विषयं प्रसज्येतेत्युक्तम्। अपि च—

निमित्तान्तरतः प्राप्तिर्मोहादेश्च प्रकल्पते।
न चोपदेशकः शब्द उदीत्येत ततः पुमान् ॥

क्रियासम्बन्धो, ऽपि तु शाब्दपरिप्रापित इति निमित्तान्तराऽप्राप्तताऽनुपपत्तिः । प्रमाणान्तराऽनधिगतत्वादुपपत्तिर्यदि; लृडन्ते ऽपि प्रसङ्ग इत्युक्तम् । अपि च मोहयदृच्छादौ सम्भविनि क्रियासम्बन्धहेतौ नैकान्ततः फलवत्त्वं परिकल्प्यम् । शास्त्रस्य पुरुषश्रेयोभिधायकत्वात्फलकल्पनेति चेत् । न । अशास्त्रत्वात् । उपदेशकं हि शास्त्रम् । न चैतेषामुपदेशका यजेतेत्यादयः शब्दाः । न ह्येभिरिदं कुर्वित्युपदिश्यते । अपि तु स्वर्गकामादेर्यागसम्बन्धो ऽव-

फले हि प्रवृत्तिहेतौ[1] कल्प्यमाने सति न शब्दनिबन्धनः क्रियया सम्बन्धप्रसङ्गो[2] ऽपि तु शाब्दफलपरिप्रापित इति निमित्तान्तराऽप्राप्तताऽनुपपत्तिः । यदि मन्येत, भवतु फलं निमित्तमस्योत्पादकतया, ज्ञापकतया तु सम्बन्धस्याऽन्यतो ऽप्रज्ञातस्य शब्दो निमित्तं भविष्यतीति शङ्कते—प्रमाणान्तराऽनधिगतत्वादुपपत्तिर्यदीति । निराकरोति—लृडन्ते ऽपि विधित्वप्रसङ्ग इत्युक्तम् । अपि च मोहयदृच्छादौ सम्भविनि क्रियासम्बन्धहेतौ नैकान्ततः फलवत्त्वं क्रियायाः शक्यपरिकल्पनम् । औषधादाविव मोहादपि प्रवृत्तेरुपपत्तेः । क्रियाकर्तृसम्बन्धस्य यदृच्छाहेतुरपि क्रिया करकिसलयकलिततलीलाकमलदलसङ्कुलनादिलक्षणा लोकसिद्धैव । शङ्कते—शास्त्रस्य पुरुषश्रेयोऽभिधायकत्वात् मोहयदृच्छादिपरिहरणात् फलकल्पनेति चेत् ? निराकरोति—न । अशास्त्रत्वात् । तद्दर्शयति—उपदेशकं हि शास्त्रम्, न चैतेषामुपदेशका यजेतेत्यादयः शब्दाः, यस्मान्न तैरिदं कुर्वित्युपदिश्यते, ऽपि तु स्वर्गकामादेर्यागेन सम्बन्धो

१ हेतौ निमित्ते॰ २ पु पा । २ सबन्ध २ पु पा ।

गम्यते, दण्ड्यादिश्रुतिभिरिवाऽदण्डादिसम्बन्धः । स च भूतो वर्तमानो वाऽनुपलब्धिनिराकृत इति भविष्यन्नवशिष्यते ।

अपि चैवं न प्रत्ययपूर्वं पुरुषः प्रवर्तते । सामुद्रविदाख्यातमिवाऽनिरूपितनिमित्तं क्रियासम्बन्धमुदीक्षेत । तथा च वचनवैयर्थ्यम् । पुरुषकाराऽभावात् ।

यदपि दर्शनं-प्रमाणान्तराऽगोचरः शब्दमात्राऽल-

ऽवगम्यते यजेतेत्यादिशब्दै । गम्यतइति णिचि रूपम् । दण्ड्यादिश्रुतिभिरिवाऽनुपदेशिकाभिर्दण्डादिसम्बन्धो देवदत्तादे । स च भूतो वर्तमानो वाऽनुपलब्धिनिराकृत इति भविष्यन्नवशिष्यते । तत्र च फलमिव मोहयदृच्छादयोऽपि हेतव सम्भविन इति नैकान्ततः फलकल्पनासम्भव इति ।

अपि चैवं न प्रत्ययपूर्वं पुरुष प्रवर्तते यथोपदेशकादिद कुर्विति वाक्यात्, किन्तु सामुद्रविदाख्यातमिवाऽनिरूपितनिमित्तविशेष क्रियासम्बन्धमुदीक्षेत । ननूदीक्षता, को दोष ? इत्यत आह—तथा च वचनवैयर्थ्यम् । कुत ? पुरुषकाराऽभावात् । यत्र हि वचनादर्थं प्रतिपद्य प्रवर्तमानः समीहित किञ्चिदाप्नोति तत्रार्थो वचनस्य, तदभावे त्वप्रतीतेरप्रवृत्तेः[1] समीहितप्राप्त्यनुपपत्तेः । यदा तु वचनादर्थं प्रतिपद्याऽपि पुंसोदीक्षितव्यं, न प्रवर्तितव्य, तदाऽनर्थक वचनमित्यर्थः ।

सम्प्रति टीकाकारीय मतमुपन्यस्यति—यदपि दर्शनं, प्रमाणान्तराऽगोचरो न च निष्प्रमाणकः । यत शब्दमात्रालम्बन, शब्दमात्र-

१ अप्रतीतेस्तदर्थाऽप्रतीते २ पु णा ।

तत्समवायेन तत्समवेतग्रहः।

ननु श्रोत्रेण समवायेन शब्दग्रहे देशान्तरस्थशब्दग्रहणापत्तिरिति चेत्? न। शब्दत्वविशिष्टलौकिकविषयतया तत्पुरुषीयप्रत्यक्षे श्रावणे वा तत्कर्णावच्छिन्नशब्दस्य हेतुत्वात्।

अन्ये तु तत्तत्पुरुषीयकर्णावच्छिन्नसमवायस्य तत्पुरुषीयशब्दप्रत्यक्षे हेतुत्वान्नोक्तदोष इत्याहुः।

शब्दप्रत्यक्षे तद्गतजातिप्रत्यक्षे च श्रोत्रमनःसंयोग एव व्यापारः। शब्द एवेत्यन्ये।

मनसा संयोगेनात्मग्रहः। तत्समवेतानां संयुक्तसमवायेन तत्समवेतसमवेतानां संयुक्तसमवेतसमवायेन। संस्कारादीनां तत्समवेतानां च मनसा न प्रत्यक्षम्। तेषां मनसोऽयोग्यत्वादिति केचित्।

अपरे तु गुणत्वविशिष्टलौकिकविषयतया प्रत्यक्षं प्रति मानसं प्रति वा योग्यगुणत्वेन कारणत्वात्, गुणसमवेतत्वविशिष्टलौकिकविषयतया प्रत्यक्षे मानसे वा योग्यगुणसमवेतस्य तादात्म्येन समवेतत्वसंबन्धेन योग्यगुणस्य वा हेतुत्वान्नोक्तदोषः। योग्यगुणत्वं तु ज्ञानत्वादिव्यापकसंस्कारादिव्यावृत्तो जातिविशेषः। न चैवं सति निर्विकल्पकस्य प्रत्यक्षापत्तिः। तस्य निर्विकल्पकव्यावृत्तत्वे तु ज्ञानत्वेन सङ्करापत्तिरिति वाच्यम्। घटमहं जानामीति प्रत्यक्षे निर्विकल्पकस्यापि विषयत्वे बाधकाभावात्। तस्यातीन्द्रियत्वोक्तिस्तु एतादृशप्रत्यक्षस्य सविकल्पकविषयत्वेनाप्युपपत्तेर्न तस्य तत्साधकत्वम्। किं त्वनुमानस्यैवेत्यभिप्रायेणेति केचित्।

परे तु निर्विकल्पकजीवनयोनियत्नयोरतीन्द्रियत्वे-

संयुक्तसमवायसंयुक्तसमवेतसमवायानां समवायत्वेन समवाय, समवेतसमवाययोः यद्वा संयोगत्वेन संयोगानां समवायत्वेन चतुर्णां विषेषणतात्वेन विशेषणतानामेकत्वे त्रैविध्यमेव कुतोनोक्तमिति वाच्यम् । विभागे स्वतन्त्रेच्छाया नियामकत्वादिति दिक् ।

इति प्रत्यक्षपरिच्छेदः समाप्तः ॥



# अथानुमानं निरूप्यते।

अनुमितिकरणमनुमानम्। अनुमितित्वं चानुमिनोमीत्यनुभवसिद्धो जातिविशेषः।

परे तु वह्निमनुमिनोमीति प्रतीतिवत्पर्वतमनुमिनोमीति प्रतीत्यभावेन विधेयताया एव तादृशप्रतीतिविषयत्वे सति अनुमितित्वजातौ मानाभावमाहुः।

तच्चानुमानं ज्ञायमानं लिङ्गमिति प्राञ्चः। अतीतानागतस्यापि लिङ्गस्य ज्ञानादनुमित्युत्पत्तेस्तज्ज्ञानं परामर्शव्यापारकं करणमिति नव्याः।

मनोजन्यत्वेन मानसत्वस्यान्यत्र निरस्यत्वान्मनस्तत्र करणमिति नव्यतराः।

परामर्शस्तु येन रूपेण व्याप्तिज्ञानं तेन रूपेण पक्षधर्मताज्ञानं तच्चैकं ज्ञानद्वयं वा। एवं च धूमो वह्निव्याप्यो धूमवान् पर्वत इति ज्ञानं स्वाव्यवहितोत्तरं पर्वतो वह्निमानित्यनुमितौ हेतुरिति मीमांसकाः। तन्न। स्वस्वाव्यवहितोत्तरपर्वतो वह्निमानित्यनुमितौ धूमत्वेन व्याप्तिज्ञानस्य तेन रूपेण पक्षधर्मताज्ञानस्य च हेतुत्वे गौरवापत्तेः। अतः पर्वतो वह्निव्याप्यधूमवानिति ज्ञानस्यैव स्वाव्यवहितोत्तरपर्वतो वह्निमान् इत्यनुमितौ लाघवेन हेतुत्वात्। गृह्यमाणव्याप्यतावच्छेदकीभूतधर्मप्रकारकपक्षधर्मताज्ञानस्यैकस्यैव स्वाव्यवहिततादृशानुमितौ हेतुत्वे तु पक्षधर्मताग्रहप्रकारीभूतधर्मधर्मितावच्छेदकव्याप्तिज्ञानत्वेनापि हेतुत्वे विनिगमनाविरहात्। द्रव्यत्वेनापि कदाचित्तदानी-

मपि कस्य चिद् व्याप्तिग्रहाद् द्रव्यवान् पर्वत इति ज्ञानाद् अनुमित्यापत्तिवारणाय तत्कालीनत्वेन तत्पुरुषीयत्वेन व्याप्तिग्रहविशेषणत्वे तु अनन्तकार्यकारणभावप्रसङ्गाच्चे-त्याहुः ।

अपरे तु पर्वतो वह्निमानित्यनुमितिजनकतावच्छेद-कत्वेन पर्वतो वह्निव्याप्यालोकवानित्यादिज्ञानेषु मानस-त्वव्याप्यो जातिविशेषः सिध्यत्यतो न चाक्षुषत्वादिना सङ्कर इत्याहुस्तन्न । पर्वतचाक्षुषसामग्रीसत्त्वेन मान-सज्ञानानुपपत्त्या पर्वतो वह्निमानित्यनुमित्यभावापत्तेः । किं च पर्वतो द्रव्यमित्याद्यनुमितिजनकत्वेन तज्जनकप-रामर्शेषु तादृशजातिसिद्धा तया सङ्करापत्तेरिति दिक् ।

परे तु पर्वतो वह्निमानित्यनुमितौ वह्न्यभाववद-वृत्तिमान्पर्वत इति निश्चयो हेतुः वह्निव्याप्यधूमवान् पर्वत इति ज्ञानोत्तरं वह्न्यभाववदवृत्तिमान् पर्वत इति ज्ञानादेवानुमितिरित्याहुस्तन्न । धूमो वह्निव्यभिचारी पर्वतो धूमाभाववान् इत्यादिज्ञानानामप्रतिबन्धकत्वाप-त्तेः । वह्निव्याप्यधूमवान् पर्वत इति ज्ञानं वह्न्यभाववद-वृत्तिमान् पर्वत इति ज्ञाने हेतुः । तत्र तेषां प्रतिबन्धक-त्वेऽपि न हेत्वाभासत्वमनुमितेस्तत्कारणस्य च साक्षात्प्र-तिबन्धकस्यैव हेत्वाभासत्वात् । किं च धूमादेरपि सम-वायेन साध्याभाववति वृत्तित्वेन संयोगसंबन्धेनावृत्ति-त्वं वाच्यं तथा च वह्निमानेतत्त्वादित्याद्यननुगतत्वात् ।

अत्र केचित् वह्नेर्ज्ञानलक्षणासन्निकर्षात्, चक्षुषैव पर्वतो वह्निमानित्यादिविशिष्टबुध्या प्रवृत्याद्युपपत्तेर्न व-ह्न्याद्यनुमितौमानम् । न चाभेदातिरिक्ते संसर्गमुख्यविशे-ष्यतानिरूपितप्रकारतया बहिरिन्द्रियेण द्रव्यग्रहे तत्संयो

गो हेतुः । अयं दण्डीत्यादिप्रत्यभिज्ञायामभेदसंबन्धेन दण्डिन एव प्रकारत्वं दण्डिनि च दण्डस्य प्रकारत्वान्न व्यभिचारः । रजतारोपे चाभेदसंबन्धेन रजतस्य प्रकारत्वान्न व्यभिचार इति वाच्यम् । संयोगसंबन्धेन दण्डप्रकारकप्रत्यभिज्ञाने बाधकाभावेन तत्र व्यभिचारान्मानाभावाच्च । अत एव नियमान्तरमपि परास्तम् ।

न च व्यवहितदण्डे पुंसि दण्डीति चाक्षुषज्ञानापत्तिरिति वाच्यम् । दण्डाज्ञानदशायां कारणाभात् । तत्सत्त्वे दण्डाभावज्ञानस्य सत्त्वे संशयात्मकस्येष्टत्वाद्विशेषदर्शने दण्डाभावज्ञानासत्त्वे वा निश्चयात्मकस्यापीष्टत्वात् । अस्तु तथा नियमः पर्वतो वह्निमदभिन्न इति ज्ञाने बाधकाभावात्,मानसज्ञानेन वा चरितार्थत्वाच्च । तत्र नियमस्यात्यन्तबाधितत्वाच्च । न चानुमिनोमीत्यनुभवसिद्धो ज्ञानविशेषः । यत्रान्वयव्यतिरेकाभ्यां परामर्शः कारणं तत्र न साक्षात्कारत्वं साक्षात्करोमीति प्रत्ययाभावात्, न साक्षात्करोमीति प्रत्ययाच्चेति वाच्यम् । साक्षात्करोमीत्यत्र लौकिकविषयताया एव विषयत्वात् । अनुमिनोमीति प्रत्ययस्य स्ववासनाकल्पितस्यापामरसाधारणस्याभावात् । न च पर्वतांशे लौकिकविषयतासत्त्वे पर्वतं साक्षात्करोमीति प्रत्ययापत्तिः । इष्टत्वात् । अत एव चाक्षुषसामग्र्या बलवत्त्वान्मानसज्ञानासम्भवेऽपि न क्षतिः । एतेनाप्रसिद्धसाध्यकानुमितिरूपं ज्ञानं प्रत्यक्षाद्भिन्नमावश्यकम् । तन्न । साध्यप्रकारकं प्रत्यक्षं साध्यज्ञानाभावान्न साध्यविशेष्यकम् । साध्येन सन्निकर्षाभावादिति निरस्तम् । जलव्यापकपृथिवीत्वाभावप्रतियोगिपृथिवीत्ववानयमिति परामर्शे व्यापकतायां जलस्य भेदस्य च प्रविष्टत्वेन पृथिव्यां भेदस्य भेदे प्रतियोगितया जलस्य भानस-

ऽभवात् । अत एवाप्रसिद्धिसाध्यकानुमितेः साध्यविशेष्यकत्वमेवेति नियमोऽपि परास्तः ।

न च व्यापकतायां भेदज्ञानेऽपि जलभेदस्याज्ञानान्न तस्य भानमिति वाच्यम् । भेदत्वसामान्यलक्षणया तस्यापि ज्ञानात् ।अत एव पर्वतीयवह्निज्ञानाभावान्न पर्वतो वह्निमान् इति प्रत्यक्षमित्यपास्तम् । न वह्न्यनुमित्यनुरोधेन तस्यावश्यकत्वात् । न च पर्वतो वह्निमान्न वेति संशयापत्तिरिति वाच्यम् ।परामर्शस्यैव तत्र प्रतिबन्धकत्वात् । न च शाब्दज्ञानेऽपि मानाभावः । मानसप्रत्यक्षस्य तत्र च संभवादिति वाच्यम् । संशयानन्तरं निश्चयात्मकस्य जायमानस्य प्रत्यक्षत्वासंभवात् । एतेनानुमितिं प्रति परामर्शादेः कारणत्वम् । समाने विषये प्रत्यक्षसामग्र्या भिन्नविषये चानुमितिसामग्र्याः प्रतिबन्धकत्वकल्पनमपि निरस्तमिनि दिक् ।

नन्वनुमितिजनकज्ञानविषया व्याप्तिर्न साध्यात्यन्ताभाववदवृत्तित्वं, पर्वतीयवन्ह्यत्यन्ताभाववद्वृत्तित्वेन धूमादावव्याप्तेः । नापि साध्यतावच्छेदकावच्छिन्नसाध्यात्यन्ताभाववदवृत्तित्वम् । समवायेन वह्नित्वावच्छिन्नाभावस्यधूमवत्यपि सत्त्वेनाव्याप्तेः । नापि साध्यतावच्छेदकसंबन्धेन तादृशसाध्यात्यन्ताभाववदवृत्तित्वं मूले वृक्षे कपिसंयोगोऽग्रे नेत्यबाधितप्रतीत्या समवायेन कपिसंयोगत्वावच्छिन्नाभावस्य वृक्षे सत्त्वेन कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तेः। अत एव साध्यतावच्छेदकसंबन्धेन साध्यतावच्छेदकावच्छिन्नसाध्यवदन्यावृत्तित्वमपि न । मूले वृक्षः कपिसंयोग्यग्रे वृक्षः कपिसंयोगी नेति प्रतीत्या तादृशान्योन्याभावस्यापि वृक्षे सत्त्वेन कपिसंयोग्येतत्त्वा-

दित्राव्याप्तेः । न च प्रतियोग्यधिकरणावृत्तित्वेनात्यन्ताभावस्य प्रतियोग्यवृत्तित्वेनान्योन्याभावस्य विशेषणादुक्तयोरत्यन्ताभावान्योऽन्याभावघटितयोर्निर्दोषत्वमिति वाच्यम् । कपिसंयोग्येतत्त्वादित्यत्राव्याप्तेः । द्रव्यगुणयोर्विद्यमानयोः कपिसंयोगतद्वतोश्चात्यन्ताभावान्योऽन्याभावयोरेकत्वेन प्रतियोग्यधिकरणे प्रतियोगिनि च तयोर्वृत्तित्वेन तादृशात्यन्तान्योऽन्याभावयोरप्रसिद्धेः । किं च प्रमेयत्वादिसाध्यके तादृशात्यन्ताभावान्योऽन्याभावयोरप्रसिद्धत्वेनाव्याप्तिः । अत एव साध्यतावच्छेदकसंबन्धेन साध्यतावच्छेदकावच्छिन्नसाध्यानधिकरणवृत्तित्वविशिष्टो यस्तद्वति हेतुतावच्छेदकसंबन्धेन हेतुतावच्छेदकावच्छिन्नस्यावृत्तित्वमपि परास्तमिति चेत् ।

अत्र केचित्, अनुमितिकारणज्ञानविषयव्याप्तिनिर्वचनमिदम् । अन्यथा धूमादौ धूमत्वादिनैव वन्हिव्याप्यत्वव्यवहारोपपत्तेरितरवैयर्थ्यम् । अनुमितिकारणज्ञानविषयो न धूमत्वमात्रम् । धूमवानिति ज्ञानादप्यनुमित्यापपत्तेः । तथा च केवलान्वयिसाध्यस्यानुमित्यभावात्तत्र तादृशव्याप्तेरभावेऽपि न क्षतिरित्याहुः । तन्न । पर्वते वन्हिमनुमिनोमीतिवदिह मेयत्वादिकमनुमिनोमीति प्रतीत्या केवलान्वयिनोऽप्यनुमितिस्वीकारात् । न च साध्याभावाप्रसिद्ध्या साध्यसंशयरूपपक्षताया अभावान्नानुमितिरिति वाच्यम् । साध्यसंदेहस्य पक्षतात्वानङ्गीकारात् । किं च साध्याभाववति हेतुतावच्छेदकसबन्धेन हेतोरवृत्तित्वमवश्यं वाच्यम् । अन्यथा वह्न्यभाववति स्वावयवे समवायेन धूमादेर्वृत्तित्वेनाव्याप्त्यापत्तेः । तथा च सत्तावान् द्रव्यत्वादित्यत्राव्याप्तिः । साध्याभाव-

वति हेतुतावच्छेदकसम्बन्धेन वृत्तित्वाप्रसिद्ध्या तादृशावृत्तित्वाभावाप्रसिद्धेः । अत एव न हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणावृत्तिसाध्यतावच्छेदकसंबन्धावच्छिन्नाभावकत्वम् । ज्ञेयत्ववान्मेयत्वादित्यत्राव्याप्तेः ।

परे तु केवलान्वयिनि साध्यात्यन्ताभाववदलीकमेव भासते तदवृत्तित्वज्ञानादेवानुमितिरित्याहुः । तन्न । असत्पदार्थविषयकज्ञानकारणाभावादसत्ख्यातेरभावात् ।

अन्ये तु वन्ह्याद्यत्यन्ताभावादौ प्रतियोगितासंबन्धेन प्रमेयत्वभ्रमदशायां प्रमेयत्वाभाववदवृत्तिधूमवान् पर्वत इति ज्ञानाद् धूमादिना प्रमेयत्वानुमानम् । न चायथार्थपरामर्शजन्यत्वेनानुमितेर्भ्रमत्वापत्तेः । साध्यवद्विशेष्यकपरामर्शस्यैव यथार्थानुमितिजनकत्वात्तस्य च तत्रापि सत्त्वादित्याहुः । तन्न प्रमेयत्वादावत्यन्ताभावाप्रतियोगित्वज्ञानदशायां स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छेदेनाभावे प्रतियोगितया प्रमेयत्वाभावज्ञानदशायां वात्यन्ताभावे प्रतियोगितया प्रमेयत्वभ्रमासंभवात् । तादृशज्ञाने तादृशज्ञानस्य प्रतिबन्धकत्वात् ।

ये तु अत्यन्ताभावे प्रतियोगितासंबन्धेन प्रमेयत्वाभावज्ञानं समानप्रकारकमेव तादृशव्याप्तिज्ञाने प्रतिबन्धकमाहुः । तन्न । प्रमेयत्वं नास्तीति ज्ञानस्यैव प्रतियोगितयाऽत्यन्ताभावे प्रमेयत्वज्ञानत्वेन तादृशज्ञानस्याहार्यत्वेनाप्रतिबन्धकत्वात् । न च प्रमेयत्वादावत्यन्ताभावाप्रतियोगित्वज्ञानदशायां न तदनुमितिरिति वाच्यम् । अनुभवापलापे सर्वदा प्रमेयत्वानुमितेरप्यपलापापत्तेः । न च तदा कारणाभावादपलाप इति वाच्यम् । प्रमेयत्वाद्यनुमितौ व्यभिचारेण तज्ज्ञानस्य कारणत्वासिद्धेः । अत

एव साध्यतावच्छेदकसंबन्धेन साध्यतावच्छेदकावच्छिन्नाधिकरणे येन येन संबधेनावृत्तिर्यः स हेतुतावच्छेदकसंबन्धेन हेतुतावच्छेदकावच्छिन्नाधिकरणे तेन संबन्धेनावृत्तिस्तत्वं विशेषणतासंबन्धेनावृत्तित्वं वा वाच्यम्। केवलान्वयिन्यवृत्तिमादाय लक्षणं सङ्गमनीयम्। न च कपिसंयोगी एतद्वृक्षत्वादित्यादौ अव्याप्यवृत्त्यधिकरणताया अव्याप्यवृत्तित्वेन मूलावच्छेदेन एतद्वृक्षत्वादौ संयोगाधिकरणवृत्तित्वाभावस्य सत्वात् तत्र च एतद्वृक्षत्वरूपहेत्वधिकरणावृत्तित्वस्यासत्त्वादव्याप्तिरिति वाच्यम्। तस्याव्याप्यवृत्तित्वेऽपि सामानाधिकरण्यस्य व्याप्यवृत्तित्वाङ्गीकारात्। तथा हि द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरित्यादिप्रतीतिवशाद्गुणे सत्तायां न द्रव्यत्वसामानाधिकरण्यमित्यादिप्रतीतेर्गुणे सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वाभावविषयत्वेन सामानाधिकरण्यस्य व्याप्यवृत्तित्वेन प्रतियोगिवैयधिकरण्याप्रवेशेन लाघवमिति परास्तम्। धूमवान् वह्नेरित्यादावतिव्याप्तेः। धूमाधिकरणावृत्तेः कस्य चिद्वह्न्यधिकरणावृत्तित्वात्। साध्याधिकरणावृत्तित्वव्यापकत्वं हेत्वधिकरणावृत्तित्वस्य वाच्यम्। तदपेक्षया साध्ये हेतुव्यापकत्वस्यैव लाघवेन सिद्धान्ते वक्ष्यमाणत्वात्। किं च साध्याधिकरणवृत्तित्वावच्छिन्नाभाववत्त्वं हेत्वधिकरणावृत्तित्वावच्छिन्नप्रतियोगिताकाभावव्याप्यं वाच्यम्। अन्यथातिप्रसङ्गस्तथा च प्रमेयत्वादिसाध्यकेऽव्याप्तिः। वृत्तित्वत्वापेक्षया गौरवेण प्रमेयत्वाधिकरणवृत्तित्वत्वस्य प्रतियोगितानवच्छेदकत्वात्तदवच्छिन्नाभावाप्रसिद्धेः। अपि च शाखायां वृक्षे न संयोग इतिवत् पृथिवीत्वे जलेन द्रव्यत्व-

सामानाधिकरण्यमित्यादौ जलावच्छेदेन पृथिवीत्वे द्रव्यत्वसामानाधिकरण्याभावस्यासत्त्वेनास्त्ववच्छेदकत्वाभावविषयत्वं सत्तायां गुणेन द्रव्यत्वसामाधिकरण्यमिति प्रतीतेर्गुणावच्छेदेन सत्तायां द्रव्यत्वसामानाधिकरण्याभावो न सत्तावृत्तिरिति प्रतीतेरनभ्युपगमेन सामानाधिकरण्यस्याव्याप्यवृत्तित्वात्। किं च सत्तायां गुणेन द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिवशाद् द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरित्यादिप्रतीतेर्द्रव्यावच्छेदेन सत्तावृत्तित्वाभावस्य विषयत्वम्, अनवच्छिन्नवृत्तित्वाभावस्य वा विषयत्वमित्यस्यापि सुवचत्वात्। प्रतियोगिवैयधिकरण्यप्रवेशावश्यकत्वाच्चेति।

अत्रोच्यते। प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणं यद्धेतुतावच्छेदकसंबन्धेन हेतुतावच्छेदकावच्छिन्नाधिकरणं तन्निष्ठाभावस्य साध्यतावच्छेदकसंबन्धावच्छिन्ना या प्रतियोगिता तस्या अनवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नस्य साध्यतावच्छेदकसंबन्धेनाधिकरणे हेतुतावच्छेदकसंबन्धेनवृत्तित्वं हेतुतावच्छेदकविशिष्टं तादृशवृत्तित्वविशिष्टहेतुतावच्छेदकं वा व्याप्तिः। साध्यतावच्छेदकसंबन्धेन वा प्रतियोग्यनधिकरणत्वं बोध्यम्। तथा च प्रतियोगिता साध्यतावच्छेदकसंबन्धेन न विवक्षणीया। यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदकस्य वाच्यम्। अत एव प्रतियोगितावच्छेदकं यत्किंचित्तदवच्छिन्नानधिकरणत्वे उच्यमाने वृक्षः कपिसंयोगाभाववानेतत्त्वादित्यत्राव्याप्तिः। कपिसंयोगरूपाभावस्य गुणसामान्याभाव-

त्वरूपद्रव्यमात्रसमवेताभावत्वरूपप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्तित्वेन प्रतियोगिव्यधिकरणत्वेन साध्यतावच्छेदकस्य तत्प्रतियोगितावच्छेदकत्वात्। नापि स्वीयं यद्यत्प्रतियोगितावच्छेदकं तदवच्छिन्नानधिकरणत्वं द्रव्यत्वाभाववान् सत्त्वादित्यत्रातिव्याप्तेः। द्रव्यत्वरूपाभावस्य द्रव्यत्वाभावत्ववन्नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावत्वमपि प्रतियोगितावच्छेदकं तदवच्छिन्नाधिकरणमेवानित्यद्रव्यम्। एवं नित्यद्रव्यमपि अनित्यवृत्तित्वविशिष्टद्रव्यत्वाभावत्वरूपप्रतियोगितावच्छेदकावच्छिन्नाधिकरणमेवेति न द्रव्यत्वरूपाभावः प्रतियोगिव्यधिकरणः किं त्वन्यस्तत्प्रतियोगितानवच्छेदकत्वात् साध्यतावच्छेदकस्य। नापि प्रतियोगितावच्छेदकावच्छिन्नं यत्किंचित् तदनधिकरणत्वम्। कपिसंयोग्येतत्त्वादित्यत्राव्याप्तेः। कपिसंयोगाभावस्यापि स्वप्रतियोगितावच्छेदकं कपिसंयोगत्वं तदवच्छिन्नस्य यस्य कस्य चित् संयोगस्यानधिकरणहेत्वधिकरणे वृत्तेरिति परास्तम्।

ननु प्रमेयवह्निमान् सत्त्वात्, घ्राणग्राह्यगुणवान् द्रव्यत्वादित्यत्रातिव्याप्तिः। यादृशप्रतियोगित्वावच्छेदकावच्छिन्नानधिकरणं यद्धेत्वधिकरणं तन्निष्ठाभावतादृशप्रतियोगिताया लाघवेन वह्नित्वगन्धत्वादेरवच्छेदकत्वेन साध्यतावच्छेदकस्य प्रमेयवह्नित्वघ्राणग्राह्यगुणत्वादेरनवच्छेदकत्वादिति चेत्। न। गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वात्।

केचित्तु प्रतियोगितावच्छेदकाभाववत्यवृत्त्यपि प्रतियोगितावच्छेदकत्वमाहुः। तन्न। सत्तावान् द्रव्यत्वादित्यत्राव्याप्तेः। विशिष्टसत्ताभाववति सत्तात्वस्यावृत्तित्वेन प्रतियोगितावच्छेदकत्वात्।

अपरे तु गुरुधर्मस्य स्वरूपसंबन्धरूपप्रतियोगितावच्छेदकत्वाभावपक्षे यादृशेत्यादिनोक्तप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकं तद्भिन्नं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः। यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगिनाश्च विशिष्य ग्राह्याः। अतः प्रमेयवह्नित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य प्रतियोगितावच्छेदकत्वाभावेऽपि न क्षतिरित्याहुः।

ननु महाकालनिष्ठविशेषणतया घटादेः साध्यतायां समवायादिना कालपरिमाणादेर्हेतुत्वेऽव्याप्तिः। प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणहेतुत्वधिकरणनिष्ठाभावप्रतियोगितायाः समवायसंबन्धेन घटादिनिष्ठायाः प्रसिद्धावपि तत्प्रतियोगितायाः साध्यतावच्छेदकसंबन्धावच्छिन्नत्वाप्रसिद्धेः। साध्यतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणहेत्वधिकरणविवक्षया पक्षेऽपि वृत्तिमन्मात्रस्य तेन संबन्धेन महाकाले वृत्तित्वात्तदभावस्य साध्यतावच्छेदकसंबन्धेन प्रतियोग्यधिकरणे हेत्वधिकरणवृत्तित्वेन लक्षणाघटकत्वात्। अवृत्तेस्तेन संबन्धेनाधिकरणाप्रसिद्धा तदभावस्यापि लक्षणाघटकत्वात्। न च साध्यतावच्छेदकसंबन्धेन यत्किंचिद्धेत्वधिकरणावृत्तित्वं यादृशप्रतियोगितावच्छेदकावच्छिन्ने विशेषणम्। तथा चावृत्त्यभावस्यैव लक्षणघटकत्वान्न व्याप्तिरिति वाच्यम्। सत्तावान् प्रमेयत्वादित्यादावतिव्याप्तेः। साध्याभावस्य तेन संबन्धेन हेत्वधिकरणं यद् द्रव्यादि तद्वृत्तिप्रतियोगिकत्वेन सामान्यादौ तेन संबन्धेन वृत्तेरप्रसिद्धा च लक्षणाघटकत्वाद् द्रव्यत्वाद्यभावादेरेव

लक्षणघटकत्वात्साध्यतावच्छेदकस्य तत्प्रयोगितानवच्छेदकत्वात् ।

न च महाकालभेदविशिष्टघटाभाव एव तादृश महाकालस्य घटाद्यधिकरणत्वेऽपि महाकालभेदविशिष्टघटाद्यनधिकरणत्वान्महाकाले महाकालभेदाभावादिति वाच्यम् । महाकालस्य दैशिकविशेषणतया महाकालभेदानधिकरणत्वेऽपि कालिकविशेषणतया महाकालभेदाधिकरणत्वान्महाकाले सर्वमिति प्रतीतेः । तथा च महाकालभेदविशिष्टघटाधिकरणत्वं कालिकविशेषणतया कालस्येत्यव्याप्तिरिति चेत् ! न ।

साध्यतावच्छेदकसंबन्धसामान्ये यदभावयादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तदभावतादृशप्रतियोगितावच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । कालो घटवान् कालपरिमाणादित्यत्राकाशाभावस्तादृशः साध्यतावच्छेदककालिकसंबन्धसामान्ये आकाशत्वावच्छिन्नप्रतियोगिकत्वमहाकालानुयोगिकत्वोभयाभावसत्त्वादिति केचित् ।

तन्न । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वानङ्गीकारपक्षे तादृशाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकं तद्भिन्नसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिर्वाच्या । तथा च पारिभाषिकावच्छेदकत्वस्याकाशत्वादावप्रसिद्धेः । किं च गगनादेः स्वरूपसंबन्धेन काले वृत्तित्वपक्षे गगनत्वे स्वरूपसंबन्धरूपप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वस्याप्रसिद्धेः ।

परे तु प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेतुतावच्छेदकसंबन्धेन यद्धेतुतावच्छेदकावच्छिन्नाधिकणं तन्निष्ठाभावताद्दशप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नं तद्धेतुतावच्छेदकावच्छिन्नव्यापकम् । भवति हि समवायादिना घटत्वाद्यवच्छिन्नानधिकरणमहाकालपरिमाणाधिकरणमहाकालनिष्ठसमवायादिना घटाद्यभावप्रतियोगितासामान्ये घटत्वाद्यवच्छिन्नत्वकालिकसंम्बन्धावच्छिन्नत्वोभयाभावसत्त्वात् कालिकसंबन्धेन घटत्वाद्यवच्छिन्नं कालपरिमाणव्यापकम् ।

यद्यपि संयोगेन रूपादेर्धर्ममात्रव्यापकत्वापत्तिः संयोगेन रूपाधिकरणाप्रसिद्धा संयोगेन रूपाद्यभावादेर्लक्षणाघटकत्वेन लक्षणप्रविष्टघटाद्यभावप्रतियोगितासामान्ये रूपत्वावच्छिन्नत्वसंयोगसंबन्धावच्छिन्नत्वोभयाभावसत्त्वात्तथापि व्यापके तेन संबन्धेन वृत्तित्वं व्यापकतावच्छेदके वा तत्संबन्धावच्छिन्नाधेयतावच्छेदकत्वं वाच्यम् । तेन वन्हिरूपोभयत्वादिना न वन्ह्यादेः संयोगेन धूमव्यापकत्वम् ।

ननु प्रमेयवन्हिमान् धूमादित्यत्राव्याप्तिः । प्रमेयवन्हित्वस्य गौरवेणानवच्छेदकतया तदवच्छिन्नत्वाप्रसिद्धा ताद्दशप्रतियोगितासामान्ये उभयाभावासंभवात् । न च यद्धर्मान्यूनवृत्तिधर्मावच्छिन्नत्वाभावघटितोभयाभावो लक्षणघटक इति वाच्यम् । सत्तावान् जातेरत्यत्राव्याप्तेः । जातिमन्निष्ठताद्दशाभावप्रतियोगितासामान्यनिविष्टविशिष्टसत्ताभावप्रतियोगितायां सत्तात्वान्यू-

नवृतिविशिष्टसत्तात्वावच्छिन्नत्वसत्त्वेन तादृशप्रतियोगितासामान्ये उभयाभावासत्त्वात्। न च हेतुमन्निष्ठतादृशाभावप्रतियोगितासामान्ये यद्धर्मान्यूनवृत्तिधर्मावच्छिन्नत्वाभाव एव लक्षणघटकः। यद्धर्मावच्छिन्नं यद्धर्मावच्छिन्नाभाववति अवृत्ति तद्धर्मस्य स धर्मोऽन्यूनवृतिः विशिष्टसत्तात्वं तु न सत्तात्वान्यूनवृत्तिविशिष्टसत्तात्वावच्छिन्नाभाववति सत्तात्वावच्छिन्नस्य वृत्तेरिति वाच्यम्। विशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तेः । विशिष्टसत्तात्वस्यापि विशिष्टसत्तात्वान्यूनवृत्तित्वाभावादिति चेत् ! ।

न प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकारणं हेतुतावच्छेदकसंबन्धेन हेतुतावच्छेदकावच्छिन्नाधिकरणं तन्निष्ठाभावतादृशप्रतियोगितासामान्ये यद्धर्मविशिष्टसंबन्धिनिष्टप्रतियोग्यधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नत्वयत्संबन्धावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नं तस्य व्यापकमिति । अत एव न संयोगेन रूपादेर्धर्मव्यापकत्वम्। अत्र कालो घटवान् कालपरिमाणादित्यत्राप्रसिद्धिनिरासः। संबन्धविवक्षा च स्वयमूहनीयेति वदन्ति ।

अन्ये तु साध्यसंबन्धितावच्छेदकं रूपं व्याप्तिः। अवच्छेदकत्वं च स्वरूपसंबन्धविशेष इति ।

ननु मूले वृक्षः कपिसंयोग्यग्रे वृक्षः कपिसंयोगी नेति प्रतीतेः कपिसयोगवदन्योऽन्याभावस्यापि वृक्षे सत्त्वेन कपिसंयोग्येतद्वृक्षत्वादित्यत्राव्याप्तिः। कपिसंयोगानधिकरणैतद्वृक्षनिष्ठाभावप्रतियोगितासामान्यनिविष्टैतद्वृक्षनिष्ठाभावप्रतियोगितायामुभयाभावासत्त्वात्। न च कपि-

संयोगात्यन्ताभाव एव तत्प्रतीतिविषयः । प्रत्यक्षप्रतीतौ तद्विषयत्वेऽपि शाब्दप्रतीतौ तद्विषयत्वाभावात् । अनुयोगिपदे सप्तमीं विना नञा प्रातिपदिकार्थात्यन्ताभावाबोधनात् । अत एव न पचतीत्यादावत्यन्ताभावबोधेऽपि न क्षतिरिति चेत् ?

अत्र केचित् वृक्षः कपिसंयोगी नेत्यादिप्रतीतेर्विशेषणात्यन्ताभावविषयत्वेनोपपत्तेरन्योन्याभावस्य प्रतियोगितावच्छेदकेन सामान्यत एव विरोधान्न तस्याऽव्याप्यवृत्तित्वम् । वृक्षेऽग्रे कपिसंयोगो नेत्यादिप्रतीतेः कपिसंयोगवदन्योन्याभावेन कपिसंयोगस्यात्यन्ताभावेन कपिसंयोगान्योऽन्याभावेन वोपपादयितुमशक्यत्वात् । प्रतियोगितावच्छेदकरूपेण नियमतः प्रतियोगिनोऽनुपस्थितेः । मूले वृक्षे कपिसंयोगो नेति प्रत्ययापत्तेश्च । कपिसंयोगाद्यत्यन्ताभावविषयत्वेन प्रतियोगिना विशिष्यैवात्यन्ताभावविरोधित्वकल्पनात्तस्याऽव्याप्यवृत्तित्वम् । न चोक्तशाब्दप्रतीतेरत्यन्ताभावविषयत्वानुपपत्तिरिति वाच्यम् । तत्र कपिसंयोगिपदस्य तात्पर्यग्राहकत्वेन नञः कपिसंयोगात्यन्ताभाववति लक्षणया तदत्यन्ताभाववच्छेदस्याङ्गीकारादत्यन्ताभावविधेयकबोधे एव सप्तम्यपेक्षणात् । यद्वा नञ्पदस्य तात्पर्यग्राहकत्वात् संयोगिपदस्य संयोगात्यन्ताभाववति लक्षणया तथा बोधादिति वदन्ति ।

अपरे तु अन्योऽन्याभावस्य प्रतियोगितावच्छेदकान्तरसमानाधिकरणत्वेन स्वस्वप्रतियोगितावच्छेदकेन विरोधस्यावश्यं वक्तव्यत्वादुक्तप्रतीत्या प्रकृते विरोधस्याकल्पनात् तस्याप्यव्याप्यवृतित्वम् । न चोक्तलक्षणाव्याप्तिः । प्रतियोग्यवृत्तिप्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्य-

धिकरणभेदस्य लक्षणे निवेशात् । न च कपिसंयोगी सत्त्वादित्यत्रातिव्याप्तिः । कपिसंयोगिभेदस्य प्रतियोगिवृत्तित्वेन लक्षणाघटकत्वादिति वाच्यम् । हेतुसाध्यभेदेन व्याप्तेर्भिन्नतया सत्तामादाय कपिसंयोगव्याप्तेर्लक्षणाकरणात् । अधिकरणताया व्याप्यवृत्तित्वस्वीकारेण संयोगाधिकरणभेदस्य प्रतियोग्यवृत्तिनो गुणे सत्त्वाद्वाऽतिव्याप्तेरभावादित्याहुः ।

ननु वह्निमान् धूमादित्यत्राव्याप्तिः । सामान्याभावे मानाभावेन वह्नि त्वावच्छिन्नत्वाप्रसिद्धा तादृशप्रतियोगितायामुभयाभावासम्भवादिति चेत् । न । ह्रदे वह्निर्नास्तीति प्रतीत्या तत्सिद्धेः । न च विशेषाभाव एव तत्प्रतीतिविषयः । वह्निमत्यपि वह्निर्नास्तीति प्रतीत्यापत्तेः । न च यावदभावानां तत्प्रतीतिविषयत्वम् । गौरवात् । ह्रदादौ वह्निप्रागभावादेरभावेनासम्भवित्वाच्च । न च ह्रदाद्यवच्छेदेन विशेषाभावेष्वेव वह्नित्वावच्छिन्नप्रतियोगित्वस्वीकाराद् वह्नित्वावच्छिन्नप्रतियोगिताकत्वेन विशेषाभावस्य तत्प्रतीतिविषयत्वम् । अतिरिक्तप्रतियोगिताकल्पने किमपराद्धमतिरिक्ताभावेन ? किं च रूपादिकं प्रति रूपादेः समवायेन प्रतिबन्धकत्वेन तदवच्छिन्नाभावस्य कारणत्वेन तत्सिद्धिरित्याहुः ।

वस्तुतस्तु सामान्याभावानङ्गीकारकर्त्राऽपि विशेषाभावेष्वेव वह्नित्वावच्छिन्नप्रतियोगितायाः स्वीकाराद्यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगिता सामान्यनिविष्टा न वह्नित्वावच्छिन्ना प्रतियोगिता किं तु तत्तद्वह्नित्वावच्छिन्नेति तस्यामुभयाभावसत्त्वान्नाव्याप्तिरतिव्याप्तिर्वा; किं तु यथाश्रुतमेवेति

तत्त्वम् । नन्वस्तूक्ता व्याप्तिस्तथापि तद्ग्राहकाभावान्नानुमानं प्रमाणं स्यादिति चेत् । न । व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्यैव व्याप्तिप्रत्यक्षे हेतुत्वात् । यद्यपि ग्राह्यसंशयस्याप्रतिबन्धकत्वान्न व्यभिचारसंशयस्य प्रतिबन्धकत्वं तथाप्यन्वयव्यतिरेकाभ्यां व्यभिचारसंशयस्य व्याप्तिप्रत्यक्षे प्रतिबन्धकत्वम् । सहचारज्ञानं तु विशेषणज्ञानत्वेन व्याप्तिविशिष्टज्ञाने हेतुः ।

अपरे तु विरुद्धसहचारभ्रमेण व्याप्तिप्रत्यक्षस्य जायमानत्वादन्वयव्यतिरेकाभ्यां व्याप्तिप्रत्यक्षे तज्ज्ञानं हेतुः । अन्यथा विशेषणान्तरज्ञानस्यापि हेतुत्वकथनापत्तिरित्याहुः ।

ननु तथापि पर्वतीयधूमे वह्निव्याप्त्यग्रहे कथं व्याप्तिविशिष्टपक्षधर्मताज्ञानमिति चेत् । न । धूमत्वादिसामान्यलक्षणया सकलधूमाद्युपस्थितौ सर्वत्रैव धूमे व्याप्तिग्रहात् । सा चेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं सामान्यं तज्ज्ञानं वा । ननु सामान्यलक्षणया सकलधूमज्ञानेऽन्धकारे सकलधूमानां चाक्षुषापत्तिरिति चेत् । न । ज्ञायमानधूमत्वसामान्यलक्षणाजन्यसर्वधूमचाक्षुषे धूमत्वज्ञानजन्ये तादृशचाक्षुषे वा धूमत्वप्रकारतानिरूपितविशेष्यताश्रयलौकिकचाक्षुषसामग्र्या हेतुत्वात् ।

अन्ये तु बहिरिन्द्रियस्य लौकिकः सम्बन्धो ज्ञानस्य तदिन्द्रियजन्यत्वं नियामकमित्याहुः ।

ननु महानसीयधूमे पर्वतीयधूमे पूर्वोक्तधूमत्वरूपव्याप्तेरैक्येन तस्याः स्मरणेन पर्वते व्याप्तिविशिष्टपक्षधर्मताज्ञानोपपत्तेः किं सामान्यलक्षणयेति चेत् । न । विशेष्यतासम्बन्धेन सुखत्वप्रकारकेच्छायां सुखत्वप्रकारकज्ञा-

नस्य विशेष्यतया हेतुत्वेनासिद्धसुखज्ञानार्थं सामान्यलक्षणास्वीकारादिति दिक्।

ननु साध्यव्यापकसाधनाव्यापकोपाधिज्ञानाद् व्यभिचारज्ञानमिति न व्याप्तिनिश्चयः। न च वह्निमान् धूमादित्यादौ साध्यव्यापकसाधनाव्यापकस्याप्रसिद्धेर्न तज्ज्ञानं सम्भवतीति वाच्यम्। साध्यव्यापकत्वेन ज्ञातेषु साधनाव्यापकत्वज्ञानसम्भवादिति चेत्। न। साध्यव्यापकत्वेन ज्ञातेष्वनुकूलतर्केण साधनव्यापकत्वसाधनात्।

ननु साध्यव्यापकत्वेन साधनाव्यापकत्वेन निश्चयस्य वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनव्यभिचारित्वादित्याद्यनुमाने पक्षे हेतुनिश्चयद्वारोपयोगित्वेन वह्निर्धूमव्यभिचारी आर्द्रेन्धनव्यभिचारित्वादित्याद्यनुमाने च व्यापकव्यभिचारे व्याप्यव्यभिचारावश्यम्भावादिति तर्कात्थापकत्वेन वा साध्यव्यभिचारज्ञाने उपयोगित्वमस्तु। साध्यव्यापकत्वेन निश्चितसाधनाव्यापकत्वसंशयरूपोपाधित्वसंशयस्यापि व्याप्यसंशयस्य व्यापकसंशयोपयोगित्वेन साध्यव्यापकोपाधौ साधनाव्यापकत्वसंशयस्यापि व्याप्यसंशयस्य व्यापकसंशयोपयोगित्वेन साध्यव्यापकोपाधौ साधनाव्यापकत्वसंदेहे सति साधनेऽपि तद्व्यभिचारसंदेहात् साध्यव्यापकव्यभिचारस्य साध्यव्यभिचारव्याप्यत्वेनास्तु साध्यव्यभिचारसंशयोपयोगित्वम्। साधनाव्यापकत्वेन निश्चितेषु साध्यव्यापकत्वसंशयरूपोपाधित्वसंशयस्य तु कथं न साध्यव्यभिचारज्ञानोपयोगित्वमिति चेत्। न। साधनाव्यापके साध्यव्यापकत्वसन्देहस्य साध्ये साधनाव्यापकव्याप्यत्वसंशयपर्यवसन्नतया साधनाव्यापकव्याप्यत्वस्य साधनाव्यापकत्वव्याप्यस्य संश-

यात् साध्ये साधनाव्यापकत्वसंशयः । स एव साध्यं साधनसमानाधिकरणकाभावप्रतियोगि न वेति व्यभिचारसंशय इति तस्यापि व्यभिचारज्ञानोपयोगित्वात् ।

ननु साध्यव्यापकः साधनाव्यापको नोपाधिः । वायुः प्रत्यक्षः प्रमेयत्वादित्यत्रोद्भूतरूपोपाधावव्याप्तेः । न च पक्षधर्मावच्छिन्नसाध्यव्यापकत्वं वाच्यम् । तस्यापि बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वान्नोक्तदोष इति वाच्यम् । काकः श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वोपाधावव्याप्तेः । न च साधनावच्छिन्नसाध्यव्यापकत्वं वाच्यं तच्च तत्राप्यस्तीति वाच्यं । पूर्वोक्तोपाधावव्याप्तेः । न च यत्किंचिद्धर्मावच्छिन्नसाध्यव्यापकत्वं वाच्यं तच्चोक्तस्थलेऽप्यस्तीति वाच्यम् । वह्निमान् धूमादित्यत्र महानसत्वादेरुपाधितापत्तेः । तस्यापि महानसरूपावच्छिन्नसाध्यव्यापकत्वात् । न च यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वं वाच्यं । तच्चोक्तोपाधिष्वपि न तु महानसत्वे तस्य तद्धर्मावच्छिन्नसाधनव्यापकत्वादिति वाच्यम् । एतद्घटो रूपवान् पृथिवीत्वादित्यत्र एतद्घटान्यत्वेऽतिव्याप्तेः । तस्यैतद्घटोत्पत्तिकालावच्छिन्नरूपव्यापकत्वादेतद्घटोत्पत्तिकालावच्छिन्नपृथिवीत्वाव्यापकत्वादिति चेत् ।

अत्र केचित् यद्धर्मसमानाधिकरणसाध्यव्यापकता तद्धर्मसमानाधिकरणसाधनाव्यापकता वाच्या । तच्चोक्तैतद्घटान्यत्वे नास्ति । एतद्घटोत्पत्तिकालसमानाधिकरणरूपवति एतद्घटे एतद्घटान्यत्वस्यासत्त्वान्नोक्तदोष इति । तन्न । रूपवान् द्रव्यत्वादित्यत्र पृथिवीत्वाभावेऽतिव्याप्तेः । तस्य जलत्वसमानाधिकरणसाध्यव्यापकत्वाज्जलत्वसमा-

नाधिकरणद्रव्यत्वाव्यापकत्वात् । न च तस्य लक्ष्यत्वमेवे-ति वाच्यम् । तान्त्रिकाणां तत्रोपाधिव्यवहाराभावात् । यदि च गुरु रूपादित्यत्रैव पृथिवीत्वाभावेनोपाधिव्यव-हारः । न तु रूपवान् द्रव्यत्वादित्यत्र तदोक्तलक्षणमपि र मीचीनम् । अत्र साधनं व्यभिचारि बोध्यम् । तेन गन्ध-वान् पृथिवीत्वादित्यत्र घटत्वाभावस्य पटत्वसमानाधि-करणसाध्यसाधनयोर्व्यापकत्वाव्यापकत्वयोः सत्त्वे ऽपि नोपाधित्वं; गुरु रूपात्, रूपवान् द्रव्यत्वादित्यत्र पृथिवी-त्वाभावस्यानुपाधित्वात् । स्वानधिकरणसाधनाधिकरण-वृत्तिधर्मसमानाधिकरणसाध्ये व्यापकत्वं च । न च पृथि-वीत्वाभावव्यभिचारस्य पृथिवीत्वादौ सत्त्वात् तत्र च रूपव्यभिचाराभावेन पृथिवीत्वाभावस्य स्वव्यभिचारेण साधने साध्यव्यभिचाराननुमापकत्वेन कथमुपाधित्वं तत्रेति वाच्यम् । द्रव्यत्वं रूपव्यभिचारि जलसमवेतनि-त्यत्वे सति पृथिवीत्वाभावव्यभिचारित्वादित्यादिप्रका-रेण तस्यापि व्यभिचारोन्नायकत्वात् । पृथिवीत्वादौ व्या-भिचारवारणाय सत्यन्तम् । पृथिवीजलसंयोगे व्यभिचा-रवारणय नित्येति । पृथिवीजलमात्रवृत्तिभेदे व्यभिचार-वारणाय समवेतेति । जलत्वे व्यभिचारवारणाय पृथिवी-त्वाभावव्यभिचारित्वेति दिक् ।

ननु गुरु रूपादित्यत्र पृथिवीत्वाभावस्यानुपाधित्वे न बीजमिति चेत् ? न । उपाधिव्यभिचारवति साधने साध्यव्यभिचाराभावेन स्वव्यभिचारेण साधने साध्य-व्यभिचाराननुमापकत्वात् । अत एव जलसमवेतनित्यत्वे सति पृथिवीत्वाभावव्यभिचारित्वात् सत्तावत् सत्ताज-लत्वरूपमात्रविशेष्यिका या बुद्धिस्तद्विशेष्यत्वे सति पृथि-

वीत्वाभावव्यभिचारित्वादित्यादिना वा साध्यव्यभिचारानुमानमपि निरस्तम् ।

ननु वह्निव्याप्यधूमवन्महानसमिति ज्ञानान्महानसे वह्न्यनुमित्यापत्तिः । न च पक्षतायास्तत्राभावान्नानुमितिरिति वाच्यम् । सा च न साध्यतदभावकोटिकः सन्देहः । साध्यं पक्षनिष्ठाभावप्रतियोगि न वेति सन्देहादनुमित्यभावापत्तेः । नापि साध्ये पक्षनिष्ठाभावप्रतियोगित्वतदभावकोटिकः सन्देहः । पक्षः साध्यवान् तदभाववान् वेति संशयादनुमित्यभावापत्तेः । नापि पक्षे साध्यतावच्छेदकसंबन्धेन साध्यतावच्छेदकरूपेण साध्यनिर्णयनिवर्त्यो यः संशयः तेन संबन्धेन तेन रूपेण साध्यानुमितौ पक्षतेति वाच्यम् । व्याप्तिस्मरणेन संशयस्य नाशेनानुमितेः पूर्वं संशयाभावात् । अप्रसिद्धसाध्यकस्थले संशयाभावाच्च । नापि साध्यनिश्चयाभावः । निश्चितेऽपि सिषाधयिषयानुमित्युत्पत्तेः । नापि सिषाधयिषाविरहविशिष्टसाध्यनिश्चयाभावः । सिषाधयिषाया दुर्वचत्वात् । तथा हि । सा हि पक्षे न साध्यानुमितिगोचरेच्छा पर्वते वह्निज्ञानं जायतामितीच्छासत्त्वे साध्यनिश्चयेऽनुमित्यापत्तेः । नाप्यनुमितित्वरूपेणानुमितिगोचरा तादृशीच्छा । प्रत्यक्षभिन्नं पर्वते वह्निज्ञानं जायतामितीच्छयापि साध्यनिश्चयोत्तरमनुमित्युत्पत्तेः । यत्र पक्षे साध्यविशेषस्य तादृशीच्छा न जाता तत्रानुमित्यनापत्तेश्चेति चेत् ? न । यत्र पक्षे साध्यनिश्चये सति यादृशयादृशेच्छासत्त्वे ऽनुमितिस्तत्र तादृशेच्छाभावविशिष्टसाध्यनिश्चयाभावः पक्षता । यत्र न तादृशीच्छा तत्र साध्यनिश्चयाभावमात्रस्यैव पक्षतात्वम् । शब्दैक्यस्यानुपादेयत्वात् ।

ननु पर्वतो वह्निमान् वह्निव्याप्यधूमवांस्तद्व्याप्यवांश्च वन्ह्यनुमितिर्वह्निव्याप्यधूमानुमितिरिष्टसाधनमेवं समूहालम्बनं ज्ञानं ततो वह्न्यनुमितिवह्निव्याप्यधूमानुमितिगोचरेच्छा ततो वह्न्यनुमितिर्वह्निव्याप्यधूमानुमितिस्तत्र सिषाधयिषोत्पत्तिकाले पक्षतासंपत्त्यर्थं सिषाधयिषाविरहेति सिद्धेर्विशेषणमस्तु परं तु तत्र वह्न्यनुमित्युत्तरं पुनर्वह्न्यनुमितिः स्यात् सिषाधयिषाया अनुमितिकाले सत्त्वेन विशिष्टाभावसत्त्वाद्वह्निव्याप्यधूमवान् वह्निमान्पर्वत इत्यनुमित्यात्मकपरामर्शस्यैव सत्त्वादिति चेत् ? न । स्वविषयसिद्ध्यनुपहितत्वेनेच्छाया विशेषणीयत्वात् ।

ननु सामानाधिकरण्येन पर्वतो व॑ि मानिति सिद्धेः सिषाधयिषाविरहविशिष्टायाः सत्त्वेपि तत्रैव पर्वते पक्षतावच्छेदकावच्छेदेन वह्न्यनुमितेर्जायमानत्वेन नेयं पक्षतेति चेत् । न । पक्षतावच्छेदकावच्छेदेनानुमितौ यथोक्तसिषाधयिषाविरहविशिष्टपक्षतावच्छेदकावच्छेदेन सिद्ध्यभावस्यैव पक्षतात्त्वात् । सामानाधिकरण्येनानुमितौ तु सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता । इयं च विशेषणतया समवायेनानुमितिं प्रति हेतुः । पर्वतत्वरूपेण पर्वतविशेष्यकवन्हिप्रकारकनिश्चयस्य सिषाधयिषाविरहविशिष्टस्य समवायेन तादृशवन्हिप्रकारकानुमितिं प्रतिबन्धकत्वात् । अत एव पर्वतत्वरूपेणैतत्पर्वते वन्हिनिश्चयेऽपि पर्वतान्तरे विनापीच्छामनुमित्यापत्तिरिति परास्तम् ।

यदि च तत्रेष्टापत्तिस्तदा विशेष्यतासंबन्धेन अनुमितौ विशेष्यतासंबन्धेन साध्यनिश्चयस्य प्रतिबन्धकत्वमिति दिक् ।

ननु पर्वतधर्मव्यापको वह्निरिति ज्ञानं पर्वतो वन्हि-मानित्यनुमितौ लाघवाद्धेतुरस्तु न तु वन्हिव्याप्यधूमवान् पर्वत इति ज्ञानं स्वाव्यवहितोत्तरपर्वतो वन्हिमानित्यनु-मितौ हेतुः । सामानाधिकरण्यज्ञानस्य हेतुत्वापत्त्या हेतु-भेदादनन्तकार्यकारणभावापत्त्या च गौरवादिति चेन्न । वन्हेः पर्वतधर्मसत्त्वादिसमानाधिकरणाभावप्रतियोगित्वे-न पक्षधर्मसमानाधिकरणात्यन्ताभावप्रतियोगित्ववत्वेन प्र-तियोगित्वसामान्याभावज्ञानमभ्रान्तमसम्भवि । तत्प्रति-योगित्वप्रतियोगिकाभावज्ञानं तु अतिव्यापकं पक्षधर्मधूम-समानाधिकरणात्यन्ताभावप्रतियोगित्ववत्वेन प्रतियोगि-त्वसामान्याभावज्ञानं च धूमव्यापको वन्हिर्धूमवान् पर्वत इति ज्ञानादनुमितेरव्यापकम् । कथं वा हेतुभेदेप्येकः कार्य-कारणभाव इति विभावयेति दिक् ।

केचित्तु धूमे पर्वतवृत्तित्वज्ञानं वन्हौ धूमत्वावच्छि-न्नव्यापकताज्ञानं कारणमाहुः ।

तच्चानुमानं त्रिविधम् । केवलान्वयिकेवलव्यतिरे-क्यन्वयव्यतिरेकिभेदात् ।

ननु तत्रात्यन्ताभावाप्रतियोगिसाध्यकत्वं न केव-लान्वयित्वं कपिसंयोगाभाववान् वृक्षत्वादित्यादाव-व्याप्तेः । नापि व्याप्यवृत्त्यत्यन्ताभावाप्रतियोगिसाध्यक-त्वम् । व्याप्यवृत्तित्वावच्छिन्नवृत्तिकभिन्नत्वरूपत्वे कपि-संयोग्येतत्त्वादित्यत्रातिव्याप्तेः । आकाशाभावसाध्यकस-द्धेतावव्याप्तेश्च । नापि यत्र कुत्र चिदनवच्छिन्नवृत्तिकाभा-वाप्रतियोगित्वम् । कपिसंयोगिभिन्नं गुणत्वादित्यत्राति-व्याप्तेः । कपिसंयोगरूपसाध्याभावस्यावच्छिन्नवृत्तिक-त्वादिति चेत् । न । अन्योन्याभावप्रतियोगितानवच्छेदक-

साध्यकत्वस्य केवलान्वयित्वादिति कश्चित्। तन्न। अन्योन्याभावस्याव्याप्यवृत्तित्वे कपिसंयोगात्यन्ताभाववद्भेदस्यापि वृक्षे सत्त्वेन कपिसंयोगाभाववानेतत्त्वादित्यत्राव्याप्तेः। अन्योन्याभावे प्रतियोग्यवृत्तित्वविशेषणे तु कपिसंयोग्येतत्त्वादित्यत्रातिव्याप्तेः।

अपरे तु प्रमेयत्वादिसाध्यकसद्धेतुत्वं केवलान्वयित्वमिति विशिष्यैव लक्षणं वाच्यम्। शब्दैक्यस्यानुपादेयत्वादित्याहुः।

कश्चित्तु केवलान्वयव्याप्तिमत्केवलान्वयित्वमित्याहुः। तन्न। एतत्कपिसंयोगाभावेन एतद्भिन्नसंयोगाभावे साध्येऽव्याप्तेः।

केचित्तु अन्वयसहचारमात्रगृहीतव्याप्तिकं केवलान्वयि, व्यतिरेकसहचारमात्रगृहीतव्याप्तिकं केवलव्यतिरेकि, उभयसहचारगृहीतव्याप्तिकमन्वयव्यतिरेकि, प्राहुः। तच्चानुमानं स्वार्थं परार्थं च। तत्र स्वार्थं तु पूर्वोक्तसहचारज्ञानजन्यव्याप्तिज्ञानजन्यपरामर्शरूपम्। परार्थं परप्रयुक्तन्यायरूपशब्दाधीनलिङ्गपरामर्शरूपं न्यायसाध्यमिति।

न्यायस्तदवयवाश्च निरूप्यन्ते।

न्यायस्तूचितानुपूर्वीकप्रतिज्ञादिपञ्चकम्। आनुपूर्व्यामौचित्यं तु प्रतिज्ञोत्तरत्वं हेतौ, हेतूत्तरत्वमुदाहरणे इत्यादिकम्। उचितानुपूर्वीकत्वमात्रं प्रतिज्ञाद्युत्तरहेत्वादिरूपावयवद्वये गतमतः प्रतिज्ञादिपञ्चकमित्युक्तम्। तदर्थश्च प्रतिज्ञादिपञ्चकमात्रकविशेष्यकबुद्धेर्विशेष्यतापर्याप्तिमत्त्वम्। तावन्मात्रं व्युत्क्रमोक्तप्रतिज्ञापञ्चकेऽप्यत उचितानुपूर्वीकमित्युक्तम्।। यदि तु उचितानुपूर्वीकप्रतिज्ञादिपञ्चकमात्रविशेष्यिका बुद्धिः पञ्चकत्वं गृह्यते तदा तादृश-

बुद्धेर्विशेष्यतापर्याप्त्यधिकरणत्वमेव लक्षणं बोध्यम् । प्रतिज्ञादिकं न्यायान्तर्गतत्वशून्यं ग्राह्यं तेन नान्योन्याश्रयः । ये तु पर्वतो वन्हिमान् धूमात् यो यो धूमवान् स स वन्हिमान् यथा महानसः वन्हिव्याप्यधूमवानयं तस्माद्वन्हिमान् इत्यादिवाक्यत्वमेव न्यायत्वमाहुः । तेषां तत्पञ्चकतत्साध्यकेऽपि न्यायानुगमश्चिन्तनीयः । न चासाधकतासाधकन्यायेऽव्याप्तिस्तत्र हेत्वाभासेऽसाधकतासाधकस्योभयाभ्युपगततया उदाहरणानुपन्यासेन पञ्चकासंभवादिति वाच्यम् । तत्रापि वादिना स्वकर्तव्यतया तदुपन्यासात् । अन्यथा यत्र हेतौ द्वयोः पक्षधर्मतानिश्चयस्तत्रोपनयप्रदर्शनानापत्त्या तत्रत्यन्यायेऽव्याप्त्यापत्तिरित्याहुः ।

केचित्तु वन्ह्यादिसाध्यकन्यायस्येदं लक्षणम् । असाधकतासाधकस्य तु चतुष्टयघटितमेव लक्षणं साध्यादिभेदेन न्यायभेदादित्याहुः ।

मीमांसकानामुदाहरणान्तो न्याय ।
बौद्धमते उदाहरणोपनयद्व्यवयवकः ।

प्राचीननैयायिकानां दशावयवकः । दशावयवास्तु प्रतिज्ञादिपञ्चकं, जिज्ञासा, संशयः, शक्यप्राप्तिः, प्रयोजनं, संशयव्युदासश्च । संशयश्च मध्यस्थस्य वादिनोर्वा आहार्यः । शक्यप्राप्तिः पदवाक्यरूपप्रमाणानां ज्ञानजननप्रयोजकत्वम् । यस्यां कथायां यदुद्देश्यं तत्प्रयोजनम् । संशयव्युदासस्तर्कः । तेषां मतमपि पञ्चकमित्यनेन निरस्तम् । अवयवत्वं तु न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम् । पर्वतो वन्हिमानिति न्यायानन्तर्गते पर्वतो वन्हिमानिति उदासीनवाक्येऽतिव्याप्तिवारणाय न्यायान्तर्गतत्वमुक्तम् ।

अवयवैकदेशवारणाय विशेष्यम् । अत्र प्रतिज्ञादिकं न्यायान्तर्गतत्वशून्यं ग्राह्यं न तु न्यायान्तर्गतत्वसहितं सर्वत्र प्रतिज्ञादौ न्यायान्तर्गतत्वप्रवेशे गौरवापत्तेः । न च प्रतिज्ञाद्यन्यतमत्वं प्रतिज्ञाभिन्नत्वे सति हेत्वादिभिन्नं यत्तद्भिन्नत्वम् । न चेदं प्रतिज्ञादावस्ति प्रतिज्ञात्वस्य व्यासज्ज्यवृत्तितया तदवच्छिन्नभेदस्य प्रत्येकं वर्णे सत्त्वेन प्रतिज्ञादिभेदाभावस्य प्रतिज्ञादावसम्भवादिति वाच्यम् । एको न द्वावित्यादिप्रतीत्या उभयभेदस्य केवलान्वयित्वेऽपि द्वौ न द्वावित्यादि प्रतीत्यभावेन यथा द्वित्वावच्छेदेनोभयभेदाभावस्तथा प्रतिज्ञात्वाद्यवच्छेदेन प्रतिज्ञादिभेदाभावादित्याहुस्तन्न । अवयवद्वये प्रतिज्ञाभिन्नं यद्धेतुभिन्नं तद्भेदस्य सत्त्वेनातिव्याप्तेः । न च तदुभयत्वावच्छेदेन प्रतिज्ञाभेदे तु भेदादेः सत्त्वान्न दोष इति वाच्यम् । व्यासज्ज्यवृत्त्यधिकरणताकभेदास्वीकारात् । किं च प्रतिज्ञादेरेकदेशे प्रतिज्ञात्वाद्यवच्छिन्नभेदसत्त्वेन तद्भेदस्य प्रतिज्ञात्वावच्छेदेनाभावाद्व्यासज्ज्यवृत्त्यधिकरणताकभेदाभावाद् असम्भवाच्च ।

केचित्तु प्रतिज्ञाद्यघटकत्वे सति उभयघटकभागद्वयाघटितत्वं न्यायान्तर्गतत्वविशिष्टमवयवत्वम् । प्रतिज्ञादेरेकदेशवारणाय सत्यन्तम् । अवयवद्वयादेर्वारणायोभयघटकभागद्वयाघटितत्वमुक्तम् । उदासीनवारणाय न्यायान्तर्गतत्वमुक्तम् । न च प्रतिज्ञादेः पर्वत इत्यस्य वह्निमानित्यस्य च घटकेन पकारवकारादिना घटितत्वादसम्भव इति वाच्यम् ।

उभयं च प्रतिज्ञाहेतूदाहरणे उदाहरणोपनयौ उपनयनिगमने विशिष्य वक्तव्य तेनोक्तदोषनिरासादिति

तन्न । यद्यपि प्रतिज्ञादिघटकत्वं प्रतिज्ञादिविषयिताव्यापकविषयिताप्रतियोगित्वं प्रतिज्ञादावस्तीत्यसम्भव इति प्रतिज्ञादिभिन्नत्वे सति प्रतिज्ञादिविषयिताव्यापकविषयिताप्रतियोगित्वं वाच्यं, तथा च प्रतिज्ञादेरेकदेशे पर्वत इति पदे वन्हिमानिति पदे च प्रतिज्ञाघटकत्वान्नातिव्याप्तिस्तथापि प्रतिज्ञादावसम्भवात् । व्यासज्ज्यवृत्त्यधिकरणताकभेदास्वीकारेण यथा प्रतिज्ञाहेतुरूपावयवद्वयेन प्रतिज्ञात्वावच्छिन्नभेदस्तथा प्रतिज्ञायामपि न पर्वतपदत्ववह्निमानिति पदत्वावच्छिन्नभेद इति । तस्माद्व्यासज्ज्यवृत्त्यधिकरणताकभेदाभ्युपगमेनैव लक्षणद्वयं न तु तादृशभेदानङ्गीकारपक्षे द्वितीयम् । प्रथमस्येतरभेदासाधकत्वादन्यतमत्वघटकप्रतिज्ञात्वादेरेव व्याप्यत्वेनाधिकस्य भागासिद्धिवारकत्वेन वैयर्थ्यात् । न च प्रतिज्ञात्वेनानुपस्थितेर्न वैयर्थ्यमिति वाच्यम् । प्रतिज्ञाभिन्नभेदस्यैव गमकत्वसम्भवात् । धर्मिभेदादवैयर्थ्येऽप्यधिकं निग्रहस्थानमिति तेन साधनासम्भवाद् द्वितीयमित्याहुः ।

परे तु न्यायान्तर्गतत्वे सति यद्धर्मावच्छिन्नमुख्यविशेष्यतानिरूपितयादृशप्रकारताशालिबोधाः प्रतिज्ञाहेतूदाहरणादिजन्यास्तादृशप्रकारत्वाव्यापकविषयताशून्यबोधानामन्यतमबोधजनकतावच्छेदकतापर्याप्त्यधिकरणत्वमवयवत्वम् । शून्यान्तेनावयवद्वयनिरासः । पर्याप्त्या चैकदेशनिरासः । उदासीनप्रतिज्ञादिसमानार्थकवारणाय न्यायान्तर्गतत्वमित्याहुः । तन्न । तस्मादिति विहाय वन्हिमानयमित्यादिनिगमनेऽतिव्याप्तेरिति दिक् ।

इतरार्थबोधजनकत्वे सति स्वीयं यदन्त्यं पदं तद्भिन्नं यत्स्वीयं पदं तदर्थविशेष्यकान्वयबोधजनकत्वे सति न्या-

यावयवत्वं प्रतिज्ञात्वम् । उदाहरणवारणाय सत्यन्तं तस्येतरान्वितस्वार्थबोधकत्वाभावात् । द्वितीयस्वीयपदानुपादाने गुणकर्मान्यत्वे सति सत्त्वादित्यादिहेतावतिव्याप्तिः । तस्य स्वीयान्त्यभिन्नप्रतिज्ञास्थसाध्यपदेन सहान्वयबोधकत्वात् । न च स्वीयाद्यपदविशेष्यकान्वयबोधजनकत्वमेवास्तु लाघवादिति वाच्यम् । धूमादालोकवान् पर्वतो वन्हिमान् इत्यादिप्रतिज्ञायामव्याप्तेः । न च तथापि गुणकर्मान्यत्वे सति सत्त्वादित्यादावतिव्याप्तिः, तस्य सप्तम्यर्थमुख्यविशेष्यकगुणकर्मान्यत्वप्रकारकखण्डवाक्यार्थबोधजनकत्वादिति वाच्यम् । तादृशबोधजनकतावच्छेदकतापर्याप्त्यधिकरणत्वावयवत्वस्योक्तत्वात् । निगमनेऽयंपदानुषङ्गपक्षेऽयं । तस्माद्वन्हिमानिति निगमनेऽयंपदविशेष्यकान्वयबोधजनके च नातिव्याप्तिः । स्वीयपदेन परकीयभिन्नत्वस्योक्तत्वादयंपदस्योभयघटकत्वेन परकीयत्वात् । हेतुत्वं तु स्वार्थविशिष्टवैशिष्ट्यबोधजनकन्यायावयवत्वम् । स्वार्थविशिष्टबोधजनकत्वोक्तौ निगमनेऽतिव्याप्तिः । अयंपदाननुषङ्गपक्षे तस्यापि स्वार्थविशिष्टबोधजनकत्वात् । अतः स्वार्थविशिष्टवैशिष्ट्येत्याद्युक्तम् । तत्रानुषङ्गपक्षे तु स्वार्थविशिष्टबोधजनकन्यायावयवत्वं तत्त्वम् । इतरान्वितबोधकन्यायावयवत्वमुदाहरणम् । निगमनेऽयंपदाननुषङ्गपक्षेणेदं, तेन तत्र नातिव्याप्तिः । स्वार्थमुख्यविशेष्यकेतरार्थान्वयबोधजनकन्यायावयवत्वमुपनयत्वम् । स्वभिन्नावयवार्थमुख्यविशेष्यतानिरूपितस्वार्थप्रकारताकधीहेत्ववयवत्वं निगमनत्वमिति वदन्ति ।

हेत्वाभासास्तु अनैकान्तिकविरुद्धसत्प्रतिपक्षासिद्धबाधाः पञ्च । तल्लक्षणं तु यादृशविशिष्टविषयकज्ञा-

नत्वमनुमितेस्तत्कारणज्ञानस्य वा विरोधितावच्छेदकं तादृशविशिष्टविषयत्वम्।

यद्यपि साध्याभाववत्पक्षविषयकज्ञानत्वेनानुमितिप्रतिबन्धकत्वात्तादृशपक्षवत्वस्य हेतौ सत्त्वेऽपि साध्याभाववृत्तिहेतुज्ञानत्वेनानुमितिकारणविरोधित्वात्तादृशहेतुत्वस्य हेतावभावात् कथं तस्य हेतुनिष्ठदोषत्वं, तथाऽपि तद्वत्त्वं येन केन चित् संबन्धेन बोध्यम्। एवं च वन्ह्यभावव्याप्यपाषाणवान्पर्वत इति परामर्शकालीनवन्हिव्याप्यधूमादेः सत्प्रतिपक्षितत्वाभावेऽपि न क्षतिः। तत्र विशिष्टार्थस्याप्रसिद्धेः। तत्र बाधसत्प्रतिपक्षयोरनुमितिप्रतिबन्धकत्वम्। अनैकान्तिकादेस्तत्कारणज्ञानप्रतिबन्धकत्वं द्रष्टव्यम्।

के चित्तु पर्वतो वन्हिव्याप्यधूमवान् पर्वतो वन्हिमानिति अनुमितिप्रतिबन्धकत्वं सर्वेषामस्ति। अनुमितिपदस्यानुमितिविशेषे तात्पर्यं तथा च यज्ज्ञानमनुमितिविशेषे प्रतिबन्धकं स हेत्वाभास इत्याहुः।

अत्रानैकान्तिकस्त्रिविधः। साधारणासाधारणानुपसंहारिभेदात्। तल्लक्षणं तु साधारणाद्यन्यतमत्वमिति के चित्।

तत्र साधारणः साध्यवदन्यवृत्तिः। तज्ज्ञानं साध्यवदन्यावृत्तित्वरूपव्याप्तिज्ञाने ग्राह्याभावावगाहितया साक्षात्प्रतिबन्धकं व्याप्त्यन्तरज्ञाने तु मणिमन्त्रादिवत् प्रतिबन्धकम्।

असाधारणः साध्यासमानाधिकरणः। तज्ज्ञानस्य सामानाधिकरण्यघटितव्याप्तिग्रहे प्रतिबन्धकत्वम्। व्याप-

कताज्ञानकारणतावादिमतेऽसाधारणस्य हेत्वाभासत्वं मृग्यम् ।

केचित्तु निश्चितसाध्यवदवृत्तिरसाधारणः । पक्षसाध्यनिश्चयदशायां नासाधारण्यमित्याहुः । तन्न । निश्चितसाध्यवदवृत्तित्वग्रहेऽपि व्याप्तिघटकपदार्थोपस्थितौ व्याप्तिविशिष्टपक्षधर्मताज्ञानादनुमित्युत्पत्तौ बाधकाभावेनानुमितेस्तत्कारणज्ञानस्य वा प्रतिबन्धकत्वाभावेन हेत्वाभासत्वायोगात् ।

अनुपसंहार्यत्यन्ताभावाप्रतियोगिसाधकः । अत एव तज्ज्ञानं व्यतिरेकव्याप्तिज्ञाने प्रतिबन्धकम् ।

साध्याभावव्याप्यो हेतुर्विरुद्धः । तज्ज्ञानं साध्यानुमितौ प्रतिबन्धकम् । साध्याभावव्याप्यज्ञानस्य साध्यज्ञाने प्रतिबन्धकत्वात् ।

परे तु साध्यव्यापकीभूताभावप्रतियोगिहेतुर्विरुद्धः। अयं च साध्याभावग्राहकसामग्रीत्वेन प्रतिबन्धकः । सत्प्रतिपक्षे हेत्वन्तरं साध्याभावसाधकम् । अत्र तु हेतुरेवोभयसाधक इत्यशक्तिविशेषोन्नायकत्वं चास्येति सत्प्रतिपक्षाद्भेदः ।

अन्ये तु उक्तविरुद्धलक्षणमसाधारणस्य तल्लक्षणं विरुद्धस्येति वदन्ति ।

सत्प्रतिपक्षश्च साध्याभावव्याप्यवान् पक्षः । तज्ज्ञानमनुमितिविरोधि ।

असिद्धस्त्रिविधः । आश्रयासिद्धस्वरूपासिद्धव्याप्यत्वसिद्धभेदात् । तत्र पक्षे पक्षतावच्छेदकाभाव आश्रयासिद्धः । अत्र काञ्चनमयः पर्वतः पक्षः तज्ज्ञान मनुमितेस्तत्कारणपरामर्शस्य विरोधि । पर्वते काञ्चनमयात्वाभाव-

वनो नियुक्तो ऽस्मीति प्रत्यात्मवेदनीयः सुखादिवत् अपरामृष्टकालत्रयो लिङादीनामर्थो विधिरिति ।

अत्रोच्यते—

पदार्थ एव वाक्यार्थो न च सो ऽनन्यगोचरः ।
नाऽकर्तृका क्रिया कालविविक्तश्च खपुष्पवत् ॥

मालम्बनमाश्रयः प्रतिपादकतया यस्य स तथोक्तः । कथम्पुनरस्य शब्दप्रतिपाद्यत्वमित्यत आह—यतो लिङादियुक्तवाक्यश्रवणसमनन्तरं स्वर्गकामादिना नियोज्येन नियुक्तो ऽस्मीति प्रत्यात्मवेदनीयः सुखादिवत् । यथा हि सन्तापदूनश्चन्दनाऽनुलेपनाऽनन्तरमान्तरमपि मनोमात्रवेदनीयमामीलितलोचनः सुखभेदमनन्यप्रमाणकमनुभवति, एवं नियोगमपि लिङादिवाक्यश्रवणाऽनन्तरमित्यर्थः । प्रमाणान्तराऽगोचरत्वे हेतुमाह—अपरामृष्टकालत्रयः । सदुपलम्भनानि हि प्रत्यक्षादीनि मानान्तराणि, कालभेदसम्भेदश्च सता[१] तद्विषयाणाम्, अयं पुनर्नियोगो ऽतीताऽनागतवर्तमानादीनामन्यतमेनाप्यात्मना न परामृश्यतइति कार्यतया न मानान्तरगोचरः । कार्यप्रतिपत्तितया च विद्यमानोपलम्भनत्व, नाऽतीताऽनागतप्रतिपत्तितया । तेनाऽनुमानादिष्वतीताऽनागतविषयेष्वपि तदस्तीति न भागाऽसिद्धता हेतोः । सो ऽयं लिङादीनामर्थो नियोगो विधिः । एवंविधार्थत्वे च चोदनाया अनपेक्षतया प्रामाण्यसिद्धिरिति ।

अत्रोच्यते—

पदार्थ एव वाक्यार्थो न च सो ऽनन्यगोचरः ।
नाऽकर्तृका क्रिया कालविविक्तश्च खपुष्पवत् ॥

१ सत्तासम्बन्धश्च० २ पु पा ।

स खलु शब्दप्रमाणको वाक्यार्थः पदार्थो वा । तत्र पदार्थस्यैव पदार्थान्तरोपकल्पितविशेषस्य वाक्यार्थत्वाद-पदार्थत्वे तदनुपपत्तिः । सम्बन्धवाक्यार्थवादिनोऽपि तद्विशेषो वाक्यार्थः सम्बन्धिनश्च पदार्था एवेति नाऽप-दार्थो वाक्यार्थः ।

अस्तु तर्हि पदार्थः ? नैवम् । अनन्यप्रमाणगोचरस्य तत्त्वाऽनवक्लृप्तेः । सम्बन्धसंवेदनसापेक्षत्वात् । तस्य च

स खलु शब्दप्रमाणको नियोगो वाक्यार्थे पदार्थो वा स्यात् । अपदार्थस्य तस्य वाक्यार्थत्वं दूषयति—तत्र पदार्थस्यैवैकस्येतरपदार्थान्तरोपकल्पितविशेषस्य वाक्यार्थत्वाल्लोके तथा दर्शनात् । अपदार्थत्वे तदनुपपत्तिः । सम्बन्धवाक्यार्थवादिनोऽपि मते न तावत्सम्बन्धमात्रं वाक्यार्थे । तस्य विशेषनिबन्धनव्यवहाराऽनङ्गतया वाक्यश्राविणः क्वचित् कुतश्चित् प्रवृत्तिनिवृत्त्योरनुपपत्तेः । तस्मादेतद्विशेषो वाक्यार्थः । न च नियोगस्तद्विशेषो, ऽसम्बन्धरूपत्वात् । सम्बन्धश्च विशेष्यमाणः सम्बन्धिभिर्विशेषणीयः । तस्य सम्बन्धिनिरूपणतया स्वरूपेण विशेषानुपपत्तेः । सम्बन्धिनश्चास्य पदार्था इति नियोगेनापि सम्बन्धिना सता पदार्थेनैव भवितव्यं, नाऽपदार्थेन । न च सम्बन्धमात्रं वाक्यार्थे इत्याह—सम्बन्धमात्रमविशिष्टं सम्बन्धिभिः पदार्थैः पदार्थ एव सम्बन्धः ऽन्वयव्यतिषङ्गादिपदगोचरमात्रमेव, न तु विशिष्टव्यवहारार्हमित्युक्तमिति । तस्मात्सम्बन्धवाक्यार्थवादिनोऽपि मते नाऽपदार्थो नियोगो वाक्यार्थ उपपद्यते । अपदार्थस्यापि सम्बन्धभेदस्यैव वाक्यार्थत्वात् । अपदार्थभूतस्य नियोगस्याऽसम्बन्धितया तदवच्छेदकत्वाऽनुपपत्तेरित्युक्तमित्यर्थः ।

द्वितीयं विकल्पमवलम्बते—अस्तु तर्हि पदार्थः । निराक-

**सम्बन्धिपरिच्छेदपुरःसरत्वात् । प्रमाणादृते च तस्याऽयोगात् ।**

**नन्वस्ति शब्दः प्रमाणम् ? न । इतरेतराश्रयत्वात् । प्रमिते हि शब्देन नियोगे सम्बन्धग्रहः, सति च तस्मिन् शब्देन तस्य प्रमा । अविदितसङ्गतेः पदस्य प्रकृतेः प्रत्ययस्य चाऽप्रत्यायकत्वात् ।**

रोति–नैवम् । अनन्यप्रमाणगोचरस्य तत्त्वाऽनवक्लृप्तेः । पदार्थत्वाऽनुपपत्तेः । कुतः ? सम्बन्धसंवेदनसापेक्षत्वात्पदार्थत्वस्य । भवतु संवेदनसापेक्षता, ततः किं ? मित्यत आह–तस्य च सम्बन्धसंवेदनस्य सम्बन्धिपरिच्छेदपुरस्सरत्वात् । एवमपि किं ? मित्याह–प्रमाणादृते कार्यसम्बन्धिपरिच्छेदस्याऽयोगात् । परिच्छेदो हि प्रमाणस्य फलं, तन्न तदभावे भवितुमर्हति, अङ्कुर इव बीजाभावे इत्यर्थः । चोदयति–नन्वस्ति शब्दः प्रमाणम् । परिहरति–नेतरेतराश्रयत्वात् । तद्दर्शयति–प्रमिते हि शब्देन नियोगे तेन सह सम्बन्धग्रहः, सति च तस्मिन् सम्बन्धग्रहे शब्देन तस्य नियोगस्य प्रमा ।

यस्तु मन्यते, अस्ति खलु लिङादेस्तादृशः सामर्थ्याऽतिशयो, येनाऽगृहीतसम्बन्धो विलक्षणविषयं कतिपयश्रवणसहकारी[1] जनयति विलक्षणविषयमवबोधम् । कतिपयश्रवणसमनन्तरं तद्भावात् । न चाऽन्येनाऽगृहीतसङ्गतितया शब्दाः स्वार्थमभिदधतीत्यनेनापि तथा भवितव्यम् । मा भूदन्येषां न साक्षात्कार्यार्थतेत्यस्यापि तथाभावः ।

तन्निराकरोति–प्रमाणान्तराऽविदितसङ्गतेः पदस्य प्रकृतेः प्रत्ययस्य चाऽप्रत्यायकत्वात् । अयमभिसन्धिः । प्रथमश्रवणादिव संबन्धाऽग्रहे शतशोऽपि श्रुतात् लिङादेर्विलक्षणविषयबोधाऽनुत्पत्तेः,

१ कतिपयश्रवणकुहरवरः–२ पु पा ।

**प्रैषादीनां लोके प्रतीतेस्तद्गतस्य तदुपाधेः सम्बन्धग्रहः ।**

व्यवहारदर्शनस्य चाऽर्थरूपसम्बन्धिदर्शनगर्भतयोत्पत्तेरुपपत्तेर्नोऽदृष्टचरसामर्थ्याऽतिशयपरिकल्पनादौ नैसर्गिक[1]शब्दमात्रवर्त्तिसम्बन्धाऽपेक्षाऽपवादो ऽपति[2] बलवद्बाधकोपनिपाते युज्यतइति ।

अत्र चोदयति—प्रैषादीना लोके प्रतीतेस्तद्गतस्य तदुपाधेः सम्बन्धग्रहः । इदमाकूतम् । कार्याऽभिधायिता तावल्लिङादीनामवगता आचार्य्यवाक्येषु माणवक समिधमाहरेत्यादिषु । तथा हि । एतद्वाक्यश्रवणाऽनन्तर प्रवर्तमानं समिदाहरणे माणवकमुपलभ्य पार्श्वस्थो व्युत्पित्सुरेवमवधारयति, बुद्धिपूर्वेयमस्य प्रवृत्तिः, स्वतन्त्रप्रवृत्तित्वात्, मदीयप्रवृत्तिवत् । यच्चाह बुद्ध्वा प्रवृत्तस्तदेवायं मदविशेषात् । अहं च न क्रियामात्राऽवगमान्नापि फलमात्राऽवगमान्नापि फलसाधनत्वाऽवमात्; किन्तु कार्यताऽवगमात्[3] । न खल्वन्ततो ऽर्भकः स्तनपानादिकामपि क्रिया कार्यतया यावन्नाऽवगतवानस्मि न तावत्तस्यामपि प्रवृत्तः । न च या श्रेयःसाधनता सैव कार्यता । परस्परपरिहारस्थितिलक्षणविरोधाधारत्वात् । न ह्यस्ति संभवः, यदेव समीहित प्रति साधनत्व तदेव कृतिं पुरुषप्रयत्न प्रति साध्यत्वमिति । क्लेशात्मनस्तु कर्मणः फलसाधनताऽन्वयिनी कार्यतेति केचिदभेदं प्रतीतवन्तः । तथा सुखस्य फलसानतां विना च कार्यताऽवगतिरस्ति । अतः फलसाधनताऽतिरिक्तकार्यताबोधात्

---

१ औत्सर्गिक—१ पु पा० ।
२ अपवादो नापि २ पु पा० ।
३ कार्यमात्राऽवगमात २ पु पा ।

प्रवृत्तिर्ममेति माणवको ऽपि तदवबोधादेव प्रवृत्त इति निश्चिनोति । तदवबोधश्चास्याऽऽचार्यवचनाऽनन्तरमुपजायमानस्तन्निबन्धन एवेति कार्याऽभिधायितां शब्दस्य कल्पयति । तच्च कार्य्यमन्वितमभिधेयमिति स्थितौ सत्या 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यादिषु वाक्येषु षष्ठ्याद्यराद्धान्ताऽनुसारेण स्वर्गकामपदेन नियोज्यतया स्वर्गकामः समर्पणीय इति स्थितम् । यश्च कार्यमवबुध्यते स नियोज्यः । स्वर्गकामश्च साध्यस्वर्गकामविशिष्टः । स च तस्मिन्नेव कार्ये नियोज्यतया ऽन्वेति, यदेव तस्य काम्योपायतामनुभवितुं शक्नोति । न च क्रिया क्षणभङ्गिनी कालान्तरभाविफलहेतुरिति न कार्य्यतया नियोज्येन सहाऽन्वेति । यत्कालान्तरस्थायि कार्यं तदेव तेन सहाऽन्वयं गन्तुमर्हतीति क्रियाऽतिरेकिमानान्तराऽवेद्यमेव लिङादय कार्यमभिदधतीति । तच्च मानान्तराऽपूर्वतया ऽपूर्वमिति च कार्यतया ऽवगम्यमानमात्मनि पुरुषं नियुञ्जानं नियोग इति च व्यपदिश्यते । न च क्रियाऽनन्तर भवदपि देशकालादिसहकार्यपेक्षया ऽनन्तरमेव स्वर्गादि भावयति । न च फलजनकतया गुणभावादपूर्वस्य वाक्यार्थत्वहानिः, स्वाऽनुगुणनियोज्यलाभाय फलानुकूलताऽवलम्बनात्स्वामिवत् । यथाऽऽत्मन एव सविदधानः[1] स्वामी गर्भदासस्योपकरोति, तथैतदपि । न चैवं वेदे एव व्युत्पत्ति । लोकव्युत्पत्तेरेव वेदवाक्याऽनुसारेण अपूर्वपर्यन्तगमनात् । न चाऽनेकार्थोऽभिधायिता लिङादीनां न प्रतीयते । वदति हि माणवक आचार्यचोदितः प्रवर्त्तितः कार्यमवबोधित इति यावत् । न खल्वन्यथा चेतनः प्रवर्तयितुं शक्यते । यतस्तदेवं प्रेषादीनां लोके प्रतीतेः कार्याऽवबोधमन्तरेण च प्रवृत्त्यनुपपत्तेस्तद्गतस्य सम्बन्धग्रहस्तदुपग्रहमपोद्य च वेदे पर्यवसानात् ।

१ सविधाने॰ २ पु पा ।

**तेषामेव तर्हि प्रतीतेः सम्बन्धज्ञानं न नियोगस्य। उपाधयस्ते न शब्दार्थाः, व्यभिचारात्। प्रवर्तकस्तेष्वनुयायी शब्दार्थः। सर्वत्राऽपरित्यागात्।**

ननु प्रैषादयोऽप्यवगम्यन्ते लोके, तत्कथं कार्याऽभिधायकत्वमेव लिङादीना? मित्यतआह—तदुपाधेः। प्रैषाद्युपाधेः। एतदुक्त भवति, उपाधय एते, न तु शब्दार्थाः। तएव चोपाधय' ये तटस्थाः प्रयोगदर्शनमात्र च्छब्दार्थं विशेषे व्यवस्थापयन्ति, यथा हरिपदाऽभिधेयस्य पशुत्वमुपाधिः। तथा हि। पशुत्व तटस्थमेव ऽभिधानाऽविनिवेशादिति हरिपदार्थ इति हर्तृत्व[1] पशावेव नियच्छति। एव प्रैषादयोऽप्यभिधानाऽविनिवेशिन एव कार्ये विशेषे व्यवस्थापयन्ति, न पुनरभिधेया इति सम्बन्धग्रहणसम्भवादुपपन्न नियोगाऽभिधानं लिङादीनामिति।

तदेतद्दूषयति—तेषां प्रैषादीनामेव तर्हि प्रतीतेः सम्बन्धज्ञानं न नियोगस्याऽपूर्वस्य। ननूक्तमुपाधयस्ते न शब्दार्था', व्यभिचारात्। न हि प्रैषादयो लिङर्था', समं प्रत्यामन्त्रणे ऽपि तस्याप्रयोगात्। नामन्त्रणं, ज्यायांसं प्रत्यध्येषणे ऽपि प्रयोगात्। नाऽध्येषणं, हीनं प्रति प्रेषणे ऽपि प्रयोगात्। सो ऽयं व्यभिचारः।

प्रवर्तकस्तेष्वनुयायी शब्दार्थः। कुतः? सर्वत्राऽपरित्यागात्। सर्वेष्वेव प्रैषादिषु कर्तव्यतैका संभवेत्[2]। अन्यथा स्वतन्त्रप्रवृत्तेरनुपपत्तेरित्युक्तम्। तस्मात्कर्तव्यताऽभिधायिनो लिङादयः स्वर्गकामपदसम्बन्धान्नियोज्यविशेषणीभूतसाध्यस्वर्गादनुकूलस्याऽऽशुतरविनाशियागाद्यतिरिक्तस्याऽपूर्वस्याऽभिधायिनः। तदेव प्रमाणान्तराऽगोचरता लिङाद्यर्थता नियोगस्येति सिद्धम्।

१ हरत्वम २ पु॰ प। २ संभवते॰ २ पु॰ पा॰।

**नैतत्सारम्। उपाधयश्चेन्मानान्तरसिद्धाः नैकस्तेष्वन्वयी प्रवर्तको नियोगः। प्रमाणान्तरगोचरत्वात्तेषां सम्बन्धज्ञानं न तस्य। अविदितविषयस्य सम्बन्धस्य प्रत्येतुमशक्तेः। तएव च शब्दार्था विदितसङ्गतित्वान्नेतरे।**

तद्दूषयति - नैतत्सारम्। उपाधयश्चेन्मानान्तरसिद्धा, नैकस्तेष्वन्वयी प्रवर्तको नियोगः। अपूर्वमिति यावत्। अतः प्रमाणान्तरगोचरत्वात्तेषामुपाधीनामेव सम्बन्धज्ञानं लिङादिवाच्यत्वज्ञानम्। न तस्याऽपूर्वापरनाम्नो नियोगस्य। कुत ? अविदितविषयस्य सम्बन्धस्य प्रत्येतुमशक्तेः।

भवतूपाधिषु सम्बन्धज्ञानं, मा च भूदपूर्वे, किमेतावते ? त्यत आह—तएव शब्दार्था विदितनियोगसंगतित्वात् नेतरे नियोगसङ्गतिसंवेदनविरहात्। इदमत्राकूतम्। सत्यं कर्तव्यताऽभिधायिनो लिङादयः, कर्तव्यता तु क्रियाया एव, नाऽपूर्वस्य, लोकाधीनाऽवधारणत्वाच्छब्दसामर्थ्यस्य। तस्या एव च कार्यतया प्रवृत्तिहेतुत्वेन स्वात्मनि मानान्तरेण विदितत्वात्। नन्वपूर्वस्य तस्य मानान्तराऽगोचरत्वात् कर्तव्यतामात्रविदितसङ्गतीनां लोके लिङादीनां स्वर्गकामपदसम्बन्धाद्वेदे ऽपूर्वविशेषप्रतिलम्भ इति चेत् ? अस्तु तावदस्यैव तु कर्तव्यस्य लिङाद्यर्थता, न पुनः क्रियाया अपि लौकिक्या इति कुतस्त्यम् ? अनेकार्थत्वस्याऽन्याय्यत्वात्। लक्षणस्यापि च कर्तव्यायां क्रियायां लौकिकस्य लिङादीनां प्रयोगस्योपपत्तेरपूर्वकर्तव्यतानान्तरीयकत्वात्। क्रियाकर्तव्यताया असाधितायाः क्रियायास्तत्सा-

धनत्वाऽनुपपत्तेः[१] । लौकिकप्रयोगाऽविरोधात् । अपूर्वकर्तव्यतायास्तु लौकिकक्रियाकर्तव्यतानान्तरीयकत्वाऽनुपलब्धेर्वैपरीत्याऽनुपपत्तेरत्यन्तप्रयोगाभ्यासाल्लाक्षणिकस्यापि वाचकत्वाऽभिमानादपूर्वाऽभिधाननियोगसिद्धिरिति चेत् ? नन्वनेकार्थत्वमन्याय्यमित्येतदेव कुतः ? अनेकशक्तिकल्पनागौरवादिति चेत् ? नन्वपूर्वमपि नैकविधप्रधानाङ्गवर्ति नानेति कथमैकार्थ्यं लिङः ? कृतिव्याप्यताया प्रवृत्तिनिमित्तस्य सर्वथाऽविशेषाद्रूपभेदे ऽप्यपूर्वाणामेकशक्तिरस्या लिङ एकहायन्यादिशब्दवदिति चेत् ? हन्त भोस्तपस्विन्या क्रियया किमपराद्धं ? यदस्यां कर्तव्यतारूपायामभिधानायकः पतिरिव लिङादिः शक्त्यन्तरमुत्कोच रोचयते । शब्दसाम्ये ऽपि कर्तव्यताभेदादयमदोष इति चेत् ? न । भेदाऽभावात् ।

यदि मन्येत, यद्यपि कर्तव्यताशब्दसाम्यं तथा ऽपि कृति प्रतीप्सिततमता कर्तव्यता ऽपूर्वस्य, तदुद्देशेन पुरुषप्रयत्नस्येति कृते. प्रवृत्तेः सैव च लिङादिप्रवृत्तिनिमित्तम् । न चैवरूपा क्रियाकर्तव्यता, तस्या दुःखतया तां प्रति प्रधानभावाऽनुपपत्ते. । ओदनाद्यर्थप्रवृत्तकृतिव्याप्यतालक्षणौदनादिहेतोस्तस्या कर्तव्यता, सा त्वन्यत्वान्न शक्त्यन्तरमन्तरेण लिङादिगोचर इति । तन्न । विशेषाऽभावात् क्रियाकर्तव्यतायाः । न खल्वपूर्वमुद्दिश्य कृति प्रवर्तितुमर्हति । सा हि पुरुषप्रयत्नः । स चेच्छानुशयीति तदेवोद्दिश्येत । यदिच्छाकर्म तदेव च तस्याः कर्म यत्सुख सुखानुशयित्वादिच्छाया । न चाऽपूर्वं सुखमिति कथमिष्टम् ? अनिष्टं चेत् कथ तदुद्देशेन कृतेः प्रवृत्तिः ? शब्दात्तथाऽवगतेः । असुखमप्यनिष्टमप्यपूर्वं कृति प्रति प्रधान-

१ क्रियाकर्तव्यतानान्तरीयकत्वात् । अपूर्वकर्तव्यताया असाधनत्वाऽनुपपत्ते २ पु॰ पा॰ ।

मित चेत् ? तत्किं शब्दोऽवगमयतीत्यनग्निरप्यस्तु धूमः ? आनन्द-स्वभावं वा विज्ञानं, 'विज्ञानमानन्द'मिति श्रुतेः । प्रमाणान्तरविरोधा-न्नैवमिति चेत् ? न । इहाऽपि तस्य साम्यात् । समिदादिविषयस्या-ऽपूर्वस्याऽननुष्ठेयस्याऽनुष्ठेयाऽधिकाराऽपूर्वपरत्वेन कर्तव्यतात्वाऽभ्युप-गमनात् । स्वर्गाद्यनुकूलत्वादपूर्वस्याऽसुखस्यापीच्छाविषयत्वमिति कुतो मानान्तरविरोध इति चेत् ? न । क्रियायामपि समीहितसाध-नतायास्तथाभावात् । नैमित्तिकनिषेधाऽपूर्वयोश्च फलविरहिणोस्तद-नुपपत्तेः । एवं च नैमित्तिकनिषेधाऽपूर्वयोर्नाऽपूर्वसिद्धिर्लिङादीनाम् । निमित्तवतो निषिध्यमानक्रियाकर्तुश्च सिद्धविशेषणावच्छिन्नस्य नियो-ज्यस्य क्रियाकर्तव्यताऽवगमाऽविरोधात् । प्रधानाऽङ्गग्रामसहभाव-स्याऽशब्दार्थभूतकल्पिताऽपूर्वद्वारेणाप्युपपत्तेः । अपि च साध्यस्वर्ग-विशिष्टोऽपि नियोज्यः कस्मात् क्रियामेव नावैति कर्तव्याम् ? तस्या आशुतरविनाशिनीत्वेन तदनुकूलत्वाऽभावात् । तद्धि तदुत्पादाऽनुकूलं यस्मिन् सति यदुत्पद्यते, नाऽसति । न चाऽऽमुष्मिकं स्वर्गादि सति कर्मणि भवति चिरविनष्टे । तस्मिंस्तदुपपत्तेरिति चेत् ? किमिदानी-माग्नेयादिष्वपि न साधनत्वमधिकाराऽपूर्वस्य, भाक्तो वा साधनभाव-स्तेषाम् ? न हि तस्य भाक्तत्वे इतिकर्तव्यतासम्बन्धो घटते । न जातूपचरितवह्निभावो माणवको दाहपाकयोरुपयुज्यते । तेषां च विषयत्वमेकं नाना च करणत्वं भवद्भिरभ्युपेयते । तयोर्भिन्नप्रस्थानोप-धारूपत्वात् । प्रतिपत्त्यनुबन्धो हि विषयो[1] यथाप्रतीति व्यवतिष्ठते । तथोच्चारिताश्चाऽऽग्नेयादयो दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति सकृदवगतेस्तथैव विषयभावमनुभवन्तीत्येकमेवैषामधिकाराऽपूर्वे प्रति विषयत्वम् । उत्पत्त्यनुबन्धस्तु करणत्वम् । स च स्वरूपाऽधीनो, न

१ विषयत्वम्· २ पु· पा

प्रतिपत्त्यधीनः । स्वरूपं चैषामाग्नेयादीनां 'यदाग्नेयो ऽष्टाकपाल' इत्यादिभ्यो भिन्नभावमवगतमिति तदनुवर्तिनी साधनता ऽपि भिन्नैव ।

न चैवमन्योन्यनिरपेक्षाणामुपायभावः । यथाश्रुतकरणा ऽधीनसिद्धित्वात् परमा ऽपूर्वस्य । बहूनि चा ऽस्य करणानि श्रूयन्ते, इति नैकोपायसाध्यता भवितु मर्हति । अनेककरणसाध्यत्वं चैकस्या अपि क्रियाया लोके ऽपि दृष्टमेव । यथा ऽश्वेन दीपिकया खड्गपाणिभिरग्रेसरैः सञ्चरते राजा प्रदोष इति । अवान्तरव्यापारभेदाद श्वादीनां साधनानां भेद इति चेत् ? इहाप्युत्पत्त्यपूर्वाण्येवा ऽवान्तरव्यापाराः । ते च प्रत्याग्नेयादि भिद्यन्ते इति समानम् । एवं चा ऽज्योषधसानाय्येषु न सङ्करो धर्माणाम् । परमा ऽपूर्वप्रयुक्तत्वे ऽप्यवान्तरव्यापारोत्पत्त्यपूर्वभेदेन साधनभावस्य भेदादपूर्वसाधननिवेशितत्वाच्च तेषाम् । अन्यथा तदभेदे सङ्करप्रसङ्गात् । तस्माद्यथैवाधिकारा ऽपूर्वोत्पत्तिसमये आग्नेयादीनामसतामपि शब्दा ऽवगतसाधनभावानामुत्पत्त्यपूर्वाण्यवान्तरव्यापाराः शक्तयो वा तथा फलप्रत्यवगतसाधनभावायाः क्रियाया अवान्तरव्यापारः शक्तिर्वा ऽपूर्वं भविष्यति । कथमन्यसमवेता ऽन्यस्य शक्तिः, रसति वा व्यापारवत्यवान्तरव्यापार इति चेत् ? आग्नेयादीनामपि परमा ऽपूर्वसाधनानामवान्तरव्यापारेषु शक्तिषु वोत्पत्त्यपूर्वेषु तुल्यत्वात्पर्यनुयोगस्य । अनपेक्षशब्दा ऽवगतसाधनभावानामाग्नेयादीनामसहभुवामन्यसमवेतान्यप्यसमानकालान्यप्युत्पत्त्यपूर्वाणि व्यापाराः सामर्थ्यं वेति चेत् ? तत्किं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति लोका ऽनुसारतः साध्यस्वर्गविशिष्टेन[1] क्रिया कार्या ना ऽवगम्यते, स्वविशेषणं वा साध्यरूपं प्रत्ययस्या ऽनानुकूल्यं, येन तद्घटनाया ऽवान्तरव्यापारः सामर्थ्यं वा क्रियाया ना ऽपूर्वमास्थीयेत ?

१ विशिष्टेन २ पु पा० ।

फलसाध साधनं न फलसाधनं क्रियेत्यपि मिथ्या । फलप्रवृत्ताया एव तस्यास्तत्साधनत्वात् । यथा परमाऽपूर्वसाधनप्रवृत्तानामाग्नेयादीनामुत्पत्त्यपूर्वसाधनत्वम्, सस्यागमोद्देशेन प्रवृत्तस्येव कृषिकर्मणो भूपाटनादिसाधनत्वम् । न च परमाऽपूर्वं प्रत्युत्पत्त्यपूर्वाणामेव साधनत्वं, नाऽऽग्नेयादीनामिति साम्प्रतम् । न हि दर्शपूर्णमासाभ्यामिति च यजेतेति चोत्पत्त्यपूर्वाणामभिधानमपि तु षण्णामाग्नेयादीनां कालविशेषसम्बन्धेनोत्पन्नानामनूदितानां समुदायिनाम्[2] । न चैषामुत्पत्तिवाक्यान्येव यथास्वमुत्पत्त्यपूर्वाणि प्रति कारणत्वमधिगमयितुमीशते । अधिकारवाक्यसन्निधिसमाम्नातानां तदुत्पत्तिवाक्यानामधिकाराऽपूर्वप्रत्यभिज्ञाशङ्कया द्रागिवाऽपूर्वान्तरप्रत्ययाऽजननात् । उत्पन्नानूदितानां तु पश्चादाग्नेयादीनामधिकाराऽपूर्वं प्रत्यधिगतविषयकरण[3]भावानामपरस्पर सम्भवतां तदनुपपत्तेः । तत्सिद्ध्यर्थमुत्पत्त्यपूर्वाणि कल्पितानि प्रत्ययवाच्यान्यपि कार्यरूपाण्यपि नाऽऽग्नेयादीना साधनाना प्रधानं प्रति स्वकरणतामापादयितुमर्हन्ति । तैराग्नेयादिभिः परमाऽपूर्वं जनयितव्ये ऽवान्तरव्यापारतया तत्कल्पनात् । तथैव च लिङर्थत्वव्यवस्थापनात् प्राधान्याऽनुपपत्तेः । प्रधानद्वयसम्बन्धस्यैकत्र दुरधिगमत्वात् । तस्माद्यथा तवाऽऽग्नेयादीनामुत्पत्त्यपूर्वाऽवान्तरव्यापाराणां परमाऽपूर्वं फलं चैककृतिकर्म तथा विवृद्धं साध्य प्रत्येक एव करणभावः, तथा ममाप्यपूर्वाऽवान्तरव्यापाराया एव क्रियाया अपि स्वर्गानुकूलतेति साध्यस्वर्गविशिष्टाऽपि शक्त एव क्रियाकर्तव्यतामवबोद्धुम् । न च यो यत्कामः स तदुपायमेव कार्य्यमवैति, नाऽनुपायमित्यस्यैकान्तिकत्वमिति निवेदयिष्यते । दर्शितं च भावनाविवेके । कर्तृसमीहितोपायस्य कर्तव्यताज्ञानालम्बनतायां फले चाऽप्रसङ्ग इत्युपरिष्टान्निवे-

१ सस्याधिगम २ पु पा० ।
२ समुदायानाम् १ पु पा ।   ३ अधिगतकरण २ पु पा०

**अथ मानान्तरात्सिद्धिः ? न । मानान्तरविषयत्वेनाऽनपेक्षत्वसिद्धेः ।**

**अपिच नियोक्तृव्यापारो नियोगो न नियोक्तुर्विना ऽवकल्पते । न चाऽस्य सम्भवो, ऽपौरुषेयत्वाऽभ्युपगम-**

दयिष्यते । तस्मान्न स्वर्गकामादिसम्बन्धान्मानान्तराऽपूर्वाऽभिधानसिद्धिर्लिङादीनाम् ।

नाऽपि लोके माणवक ! सन्ध्यामुपास्वेत्याचार्यवचनाऽनन्तर माणवकस्य प्रवृत्तिमुपलभ्य तस्याश्च कार्याऽवगमाऽधीनत्वात्सन्ध्योपासनकर्मणश्च दु:खतया तदनुपपत्ते तदतिरिक्ते कार्ये मानान्तराऽवेद्ये लिङादेः सङ्गतिग्रह इति चतुरस्रम् । क्रियाया एव कर्तव्यतोपपत्ते. । दु:खतया ऽनुपपत्तिरिति चेत् ? एवं तर्हि वर तस्या एव हिताऽहितप्राप्तिपरिहारयोरन्यतरोपायतापरिकल्पनं, तादृश्या एव तस्या आत्मनि प्रवृत्तिहेतोरुपलब्धेः । तदेतदप्यतिपेलवम् । तस्मान्मानान्तराऽविषयत्वेनाऽपदार्थत्वाच्च नैव वाक्यार्थत्व नियोगस्याऽपूर्वस्येति सिद्धम् ।

यदि तु नियोगस्य पदार्थत्वलिप्सयाऽनभिमतमपि मानान्तरगोचरत्वमास्थीयते ततो मानान्तरविषयत्वेनाऽनपेक्षत्वं चोदनायाः स्यादित्याह—अथ मानान्तरात्सिद्धिः ? न । मानान्तरविषयत्वेनाऽनपेक्षत्वसिद्धेश्चोदनायाः । अपि च नियोग इति प्रवर्तनेति च प्रेरणेति च नियोक्तुर्व्यापारे निरूढवृत्तयः शब्दास्त गमयन्ति । न चाऽसौ नियोक्तुर्विना ऽवकल्पते, कारणाऽभावे कार्यनिवृत्तेरित्याह—अपि च नियोक्तुर्व्यापारो नियोगो न नियोक्तुर्विना ऽवकल्पते । अस्तु तर्हि नियोक्तेत्यचाह—न चाऽस्याऽस्ति सम्भवः । ननु पुरुषो नियोक्ता भविष्यतीत्यत आह—अपौरुषेयत्वाऽभ्युपगमात् । पुरुषाऽभावाद्वेदे ।

मात् । शब्दस्य पुरस्तात् प्रतिषेधात् । कुर्विति तदपरामर्शादनन्यगोचरत्वम् । तद्यदि शब्दतो घटादावपि प्रसङ्गः । न हि घटादिश्रुतयोऽपि भूतादीनामन्यतममामृशन्ति । अथाऽर्थतः [२] अत्यन्ताऽसत्त्वं खपुष्पादिवत् । एतल्लक्षणत्वादत्यन्ताऽसत्तायाः । नित्यानां च वर्तमानत्वादव्यभि-

अस्तु तर्हि शब्दो नियोक्तेत्यत आह—शब्दस्य पुरस्तात् प्रतिषेधात् । प्रमाणत्वादित्यादिना । यदपि प्रमाणान्तराणां कालविपरिवृत्त्यर्थविषयगोचरत्वात् कुर्विति तदपरामर्शात् कालत्रयाऽपरामर्शात्करिष्यसि, अकार्षीः, करोषीत्यभिन्नार्थत्वप्रसङ्गादनन्यगोचरत्वम् । तद्यदि शब्दतो घटादावपि मानान्तराऽगोचरत्वप्रसङ्गः । न हि घटादिश्रुतयोऽपि भूतादीनामन्यतममामृशन्ति । न हि घट इति भूतादीनामन्यतमामर्शो घटोऽभूदस्ति भविष्यतीति प्रयोगसम्भवः । विरोधपौनरुक्त्याभ्यां त्वयामर्शे चाऽपौनरुक्त्यमेवेत्यर्थः । अथाऽर्थतस्त्रैकाल्याऽनामर्शो, न पुनः शब्दमात्रात् । दूषयति—अत्यन्ताऽसत्त्वं खपुष्पादिवत् । यथा खपुष्पादयो नाऽभूवन्न भवन्ति न भविष्यन्ति तथा चेन्नियोगोऽपि न स्यात्तेभ्यो विशेषः । न ह्यत्यन्ताऽसत्ताया अन्यल्लक्षणम् । अतः कालत्रयविवेकादित्याह—एतल्लक्षणत्वादत्यन्ताऽसत्तायाः । कालाऽतिरिक्तस्य हि सत्त्वं कालाऽवच्छेदेन व्याप्तं, स तदवच्छेदो[१]ऽकालात्मनो नियोगान्निवर्तमानः सत्त्वमप्यस्य निवर्तयति, निवर्तमाना वृक्षतेव शिंशपात्वमेकशिलामयात् गिरिप्रदेशादित्यर्थः । ननु कालाऽतिरिक्ताः परमाण्वाकाशादयः सन्तो न च कालाऽवच्छिन्ना,-स्तस्माद्व्यभिचार इत्यत आह—नित्यानां च वर्तमानत्वादव्यभिचारः । अतीताऽनागताभ्यां व्यपवृत्तया ऽस्तिक्रियया स्वाऽयोग नित्येषु नियो-

१ अतस्तदवच्छेदः २ पु॰ पा॰ ।

**चारः । यदीतरप्रतियोगिना वर्तमानता न नित्येषु सा । कालाऽसंसृष्टमपि तर्हि मानान्तरविषय इति व्यर्थः कालविवेकोपन्यासः ।**

गेन व्यवच्छिन्दन्त्या उपहितानां नित्यानां वर्तमानता सदातनीत्यर्थः । शङ्कते–यदीतरप्रतियोगिता वर्तमानता, न नित्येषु सा, या खल्वनागतता कारणद्वारेणोपसृज्य भवति या च अतीततया स्व[1]नाशककारणद्वारेणोपसृज्यते,[2] सा वर्तमानता । न चेय नित्येषु सम्भवति । प्राक् प्रध्वंसाऽभावाऽविनाभावितया नित्यत्वविरोधिनीत्वादित्यर्थः । तदेतत्पारिभाषिकं वर्तमानत्व न लोकसिद्धम् । अस्ति हि प्राक् प्रध्वंसाऽभावरहितेष्वप्याकाशादिषु वर्तमानतानिसर्गोऽनुभवो लौकिकानाम् । विद्यते व्योमाऽऽकाशो ऽस्ती[3]त्यादिप्रयोगदर्शनात् । न च भाक्तः प्रयोग, विशेषाभावात् । न खल्वात्मा ऽस्ति, विज्ञानमस्तीति विशेषो ऽवगम्यते । अविशेषे ऽपि[4] चैकस्य भाक्तत्वकल्पने तद्‌तिरिक्तस्यापि भाक्तत्वप्रसङ्ग इति ।

सत्यप्यत्र दूषणे स्थवीयसि दोषान्तरमाह - कालाऽसंसृष्टमपि तर्हि मानान्तरविषय इति व्यर्थो नियोगस्य कालविवेकोपन्यासः ।

एतेन यदाहुः कारकव्यापारो हि कालत्रयाऽवच्छेद्यो नाऽधिकार इति, तदप्यपास्तं वेदितव्यम् । यथा ऽव्यापारात्मतया ऽधिकारो नियोगः कार्य्यं, न कालत्रयसम्भिन्नः तथा घटादयो ऽपि । न जातु ते ऽपि व्यापारा[5] न च मानान्तराणां गोचराः । तथा ऽधिकारो ऽनवच्छिन्नो ऽपि कालेन मानान्तरगोचरः स्यादिति व्यर्थः कालविवेकोपन्यासः । ननु न कालसम्बन्ध सत्ता, नापि तद्व्याप्ता, कालस्य तदसम्बद्धस्याऽसत्त्वप्रसङ्गात् । नाऽपि सामान्य, पूर्ववि-

१ याचस्व २ पु॰ पा ।
२ उपरममश्नुते २ पु पा ।
३ आत्माऽस्ति २ पु पा ।
४ तथापि २ पु॰ पा॰ ।
५ घटादयो ऽप्यव्यापाराः २ पु॰ पा ।

**प्रमाणग्राह्यता सत्त्वलक्षणम् । अतो नाऽत्यन्तासत्त्वम् । न । अभावस्यापि प्रमेयत्वात् । अभावः प्रमेय इति सुव्याहृतम् । नास्ति प्रमीयते चेति कथं ? यदा नाऽभावः प्रमेयः कण्टकादीनामिति निरटङ्कि, कथं तर्हि ना-**

मर्शाऽभावे[1] तदनुपपत्तेः । यथा कालाक्षीमौक्तिकवत स्वस्तिमत्यां मति तदवमर्शो, नैवं हिमशैलादिषु च वसरोत्थवादिषु च रूपादिषु चोत्क्षेपणादिषु गोत्वादिषु च तदवमर्श समस्ति एतेन द्रव्यत्वादयोऽपि प्रत्युक्ता वेदितव्या । तस्मान्न सामान्यमपि सत्ता, ऽपि तु प्रमाणग्राह्यता सत्त्वलक्षणम् । सा च त्रैकाल्याऽनवच्छिन्नस्य कालस्येव नियोगस्याऽपि शास्त्रप्रमाणप्रयोगवेदनीयस्याऽस्तीति नाऽत्यन्ताऽसत्त्वम् ।

गगनकुसुमादयस्त्वनीतसमस्तमानकर्मभावा अत्यन्ताऽसन्त एवेत्याशयवान् परिचोदयति—प्रमाणग्राह्यता सत्त्वलक्षणम्, अतो नाऽत्यन्ताऽसत्त्व नियोगस्य । दूषयति—नाऽभावस्यापि प्रमेयत्वात् । न खलु प्रमेयता सत्ता, तदनुवृत्तावपि सत्ताया अभावाद् व्यावृत्ते । यद्धि यस्मिन् अनुवर्तमाने व्यावर्तते ततो ऽन्यदेव, यथा सूत्रात् कुसुमानि । सदसदिति च परस्परव्यावृत्ते लोकसिद्धे प्रमेये । यदाहुः प्रामाणिकाः "सत् सदिति गृह्यमाण यथाभूतमविपरीत च तत्त्व सत् । असदसदिति गृह्यमाणं यथाभूतमविपरीत तत्त्वमस" इति । तदेवमसत्त्वेन नित्यं परस्परव्यावृत्त सदसत्त्व व्यवच्छिन्नमनुभूयते । चोदकः सोपहासमाह—अभावः प्रमेय इति सुव्याहृतम् । उपहासबीजं दर्शयति—नास्ति प्रमीयते चेति कथम् ? न हि यथा द्रव्यगुणसामान्यान्यन्योन्यविलक्षणानि स्वभावभेदवन्ति च तद्भेदाश्चकासति तथा ऽयमभावो ऽपि कश्चित् परस्परव्या

1 पूर्वापरामर्शेन विना १ पु पा

ऽस्तीति व्यवहारः? विषयावच्छेदात्। अवच्छिन्नविषयं हि प्रमाणं तदवबोधयदन्यदनवबोधयन्नास्तीति व्यवहारयति। कथमन्यविषयो व्यवहारो ऽन्यविषयात्प्रमाणात्? नायऽमन्यविषयः। तस्य प्रमाणविषयाऽवच्छेदविषय-

वृतश्च स्वभावभेदवाश्व ऽनुभव एव च प्रमाणमार्गो सङ्गतो लोकस्त-त्त्वालोकनात्, न पुनः पुरुषप्रवादमात्रम्। विप्रवादो हि सम्भ-वेत् सव्रटयवत्। तस्मान्नास्तीति व्यपदेशो ऽप्रमीयमाणतामात्रा-ऽऽलम्बनो न पुनरभाव विग्रहवन्त गोचरयति। तथा च घटो नास्ति, न प्रमीयतइत्यर्थः। तस्य कथ प्रमीयतइत्यनेन सङ्गति? विरोधादित्यर्थः। यद्येवमभावव्यवहारस्य भूतले कण्टकादि नास्तीति चरणान्यासादिलक्षणस्य प्रवृत्त्यात्मकस्य घटादि नास्तीति च निवृत्त्याऽऽत्मकस्याऽसत्यभावे कि बीज? मित्याह। यदा नाऽभाव. प्रमेयः कण्टकादीनामिति निरटङ्कि, कथ तर्हि तदानीं नास्तीति व्यवहारः? उत्तरमाह—विषयाऽवच्छेदात्। प्रमाणस्य भूतलग्राहिणः। तदेव स्फोटयति—अवच्छिन्नविषय हि प्रमाणमेकाकिभूतलग्राहि न घटकण्टकादिसद्वितीयभूतलग्राहीति यावत्। तदवबोधयद् भूत-लमन्यदनवबोधयत् घटकण्टकादि नास्तीति व्यवहारयति।

तदेतद्विशदीकर्तुं शङ्कते—कथमन्यविषयो व्यवहारो घटाद्य-भावविषयो ऽन्यविषयाद् भूतलादिविषयात् प्रमाणात्? अभावव्यव-हारस्तावदयं सर्वजनीनो न निन्हवमर्हति, भावव्यवहारवत्। तदनेनाऽभावादेवोत्पत्तव्यम्, अन्यव्यवहारस्याऽन्यत उत्पत्तावति-प्रसङ्गादित्यर्थः। निराकरोति—नायमन्यविषयः। न व्यतिरिक्ताऽभा-वविषयः, तस्याऽभाववद् विग्रहवतो ऽप्रतीतेः। किंविषयस्तर्हि? त्यत आह—तस्याऽभावव्यवहारस्य प्रमाणविषयाऽवच्छेदविषयत्वात्।

त्वात् । तस्या विषयान्तरत्वात् । तथा हि-नास्तीत्ययमर्थो नेदं प्रतीयते भूतलं प्रमीयते न घट इति । अतस्तत्राऽप्रमितिः प्रमाणमित्यलौकिकमिति ।

उच्यते-अनिरूपितव्यवहारमत्रभवन्तं पश्यामः । इदं हि भवान्निरूपयतु, य एष लौकिकानां क्वचिन्नास्तीति प्रवृत्तिनिवृत्तिलक्षणो व्यवहारः किमयमपरिच्छेदा,-दुताऽन्यपरिच्छेदात्, उत तदभावपरिच्छेदात् ? यद्यपरि-

नन्वेव विषयावच्छेदोऽपि भावरूपाद्विषयाद् भिन्न इति कथं नाऽन्यविषयोऽयमभावव्यवहार ? इत्यत आह-तस्या विषयान्तरत्वात् । न ह्यवच्छेदो नाम भूतलभावाद् भिन्न, किं तर्हि दृश्ये प्रतियोगिनि घटकपटकादौ भूतलमात्रोपलम्भ. । स चैकाकिभूतलविषयः । यस्मिन्न्दृश्यते यस्मिन् प्रतियोगिनि दृश्ये भवति[1] तस्याभाव उच्यते, प्रवर्तयति च तदभावव्यवहारम् । ननु भवतु नामैतद्विषयोऽयमभावव्यवहारो नास्तीति व्यपदेशो लौकिकानां भावाऽतिरिक्तमर्थमवलम्बिष्यत इत्यत आह—तथाहि । नास्तीत्ययमर्थो नेद प्रतीयते, भूतलमेकाकि प्रतीयते । न घट इति व्यपदेशोऽपि प्रमाणविषयावच्छेदविषय एव, न निर्विषय. । प्रमाणविषयावच्छेदश्च व्याकृतः । तस्मादुपपन्न उपहास इत्याह—अतस्तत्राऽप्रमितिः प्रमाणं चेत्यलौकिकम् ।

तदेतद्दूषयितुमुपक्रमते—उच्यते । अनिरूपितव्यवहारमत्रभवन्तं पश्यामः । निरूपणे त्वभावव्यवहारस्यानुपपन्नमेतदिति तन्निरूपणे प्रवर्तयति । इद हि भवान्निरूपयतु, य एष लौकिकाना क्वचिन्नास्तीति प्रवृत्तिनिवृत्तिलक्षणो व्यवहारः किमयमपरिच्छेदात्सर्वोपाख्याविरहलक्षणात्, उताऽन्यपरिच्छेदात्, उत तदभावपरिच्छेदात् ?

---

१ यस्मिन प्रतियोगिनि दृश्य भवति २ पु प्रा ।

च्छेदात्, नेष्टस्याऽभावं जिज्ञासेरन्, अपरिच्छेदादेव निवर्तेरन्, अनिष्टस्याऽपरिच्छेदादेव प्रवर्तेरन् । प्रमाणविषयाऽपरिच्छेदनिबन्धन एव व्यवहारः । न । विशेषाऽभावात् । न हि तदितरयोरपरिच्छेदो विशिष्यते । अप्रत्ययपूर्विके च प्रवृत्तिनिवृत्ती इत्यसमीचीनम्[1] ।

तत्र प्रथम कल्प दूषयति—यद्यपरिच्छेदात्, नेष्टस्याऽभाव जिज्ञासेरन् । किञ्चाऽपरिच्छेदादेव निवर्तेरन्, अनिष्टस्याऽपरिच्छेदादेव प्रवर्तेरन् । जिज्ञासमानो ऽपि खल्वपरिच्छेदमेवाऽप्नुयात् । तदतिरिच्यमानदेहस्य प्रमेयाऽभावस्याऽनभ्युपगमात् । स च प्राप्त एवेति प्रेक्षावतामभावजिज्ञासा न स्यात् ।

शङ्कते—प्रमाणविषयाऽपरिच्छेदनिबन्धन एव व्यवहारः । नाऽपरिच्छेदमात्रमत्र विवक्षितम्, अपि तु दृश्यस्य प्रतियोगिन इत्यर्थः । निराकरोति—न । विशेषाऽभावात् । तमेवाह—न हि तत्तदितरयोरपरिच्छेदो विशिष्यते । न हि दृश्यत्वे ऽदृश्यत्वे वा प्रतियोगिनोरपरिच्छेदस्य प्रसज्यप्रतिषेधात्मनः सर्वोपाख्याविरहिणः कश्चिद्विशेषः सम्भवति । तत्सम्भवे तु तुच्छत्वाऽनुपपत्तेः ।

दूषणान्तरमाह—अप्रत्ययपूर्विके च प्रवृत्तिनिवृत्ती इत्यसमीचीनम् । न खलु गगनकुसुमायमानस्तुच्छो ऽपरिच्छेदः प्रत्ययः कारणं वा विज्ञानं वा सम्भवति । ततश्चाऽपरिच्छेदात् प्रेक्षावत्प्रवृत्तिनिवृत्ती ब्रुवाण आकस्मिकत्वं वा तयोरविज्ञानपूर्वकत्वं वा वाचोयुक्त्यन्तरेणाऽभिदधीत, तच्चाऽनुपपन्नम् । कादाचित्कत्वप्रेक्षावत्प्रवृत्तिनिवृत्तित्वयोरनुपपत्तेरित्यर्थः ।

ननूभयी भूतलादौ संवित्, सद्वितीयभूतलविषया चैकाकिभूतलविषया चेति । उत्तरा ऽपि च द्वयी, दृश्ये प्रतियोगिनि अदृश्ये

१ इत्यसमीचीनम् इति नास्ति मू० पु० ।

**वस्त्वन्तरप्रत्ययात् प्रवर्तन्ते निवर्तन्ते चेति मिथ्या। भावे ऽपि प्रतियोगिनस्तत्प्रसङ्गात्। भावे घटकण्टकयोर्ज्ञायमानयोस्तन्निबन्धने एव प्रवृत्तिनिवृत्ती[1]। हन्त तर्हि तदभावाद्विपर्ययो, न वस्त्वन्तरभावात्। इष्टाऽनिष्टसाधनज्ञानस्य तदापि भावात्पुरस्ताच्च।**

च। दृश्यत्व चास्योपलम्भाय[2] प्रत्ययान्तरसाकल्य, स्वभावविशेषश्च। स च स्वभावविशेष उच्यते। यस्मिन्सति सत्स्वन्येषूपलम्भप्रत्ययेषु सद्भावो ऽनुभूयते। एव च या दृश्ये प्रतियोगिनि भूतलप्रतीतिः सैवाऽभावव्यवहारसाधनी। तस्याश्चाऽतुच्छत्वात् सम्भवति विशेषणयोगः। तत्सिद्ध्यर्थं च युज्यते सूक्ष्मकीटकण्टकादिजिज्ञासेत्यत आह—वस्त्वन्तरप्रत्ययात् प्रवर्तन्ते निवर्तन्ते चेति मिथ्या। कुतः? भावे ऽपि प्रतियोगिनो घटादेर्भूतलादौ तत्प्रसङ्गात्। घटो नास्तीति निवृत्तेः कण्टको नास्तीति प्रवृत्तेः प्रसङ्गात्।

शङ्कते—भावे घटकण्टकयोर्ज्ञायमानयोस्तन्निबन्धने एव प्रवृत्तिनिवृत्ती; न भूतलज्ञाननिबन्धने। निराचष्टे—हन्त तर्हि तदभावात् घटकण्टकयोरभावाद्विपर्यय इष्टाऽनिष्टसाधनज्ञानस्य घटकण्टकज्ञानस्य। अथ भूतलभाव एव कस्मादिष्टाऽनिष्टसाधनज्ञानविपर्ययहेतुर्न भवती?त्यत आह—न। वस्त्वन्तरभावात्। न भूतलभावादिष्टाऽनिष्टसाधनज्ञानविपर्ययः। कस्मात्? तदा ऽपीष्टाऽनिष्टसाधनज्ञानस्य समये ऽपि भावाद्भूतलस्य। एतदुक्तं भवति। यदीष्टाऽनिष्टसाधनज्ञानविरोधी भूतलस्याऽभविष्यत् ततस्तस्मात्तदनङ्क्ष्यत्[3] न त्वनयोर्विरोधः। तज्ज्ञानसन्तत्या सह तस्य चिरमवस्थितेरिति।

न चेष्टसाधनज्ञानाऽसहभुवो ऽपि भूभागस्य तज्ज्ञानविपर्ययविरोधिता ऽपीत्याह—पुरस्ताच्च। भूतलस्य भावात्। इष्टाऽनिष्टसाधनज्ञानस्य घटकण्टकज्ञानस्य पुरस्तात्तदभावे दृश्यमानं भूतलं न तत्सहभावनियतमित्यर्थः।

१ वस्त्वन्तरेत्यादि मू० पु० नास्ति।
२ उपलम्भत. २ पु पा.।
३ तस्मादन्वभविष्यत् २ पु- पा।

अत्रेदमाकूतम् । यो ऽयमभावव्यवहारो लौकिकानां घटो नास्तीति निवृत्तिलक्षणः, कपटको नास्तीति प्रवृत्तिलक्षणः, स न तावद् दृश्ये घटकपटकादौ भूभागग्रहनिबन्धनो, दृश्यमाने ऽपि तद्गते घटादौ प्रसङ्गात् । न ह्यदृश्यः, दृश्यमानत्वात्[1] । केवलभूभागग्रहणनिबन्धनत्वादयमदोष इति चेत् । किं पुनरस्य कैवल्यं ? स्वरूपमिति चेत् । न । घटकपटकादिग्रहे ऽपि तत्सद्भावात् । तद्धर्म[2] इति चेत् ? स तर्हि घटादिभावविरोधी भूमिकान्तरेण तदभाव एवेति सिद्धं नः समीहितम् । नन्वभावप्रमेयवादिनामपि भूतलग्रहणसद्भावज्ञानकारणमेषितव्यम् । यदाह । "गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रयोगिन"मिति । तत्र न तावत् संसृष्टभूतलग्रहस्तद्धेतुर्विरोधात् । न खल्वस्ति सम्भवो, घटसंसृष्टभूतलग्रहश्च तत्र घटाऽभावनिश्चयश्चेति । नापि घटाऽभाववद्भूतलग्रहः । आत्माश्रयप्रसङ्गात् । न खलु स एव तस्य हेतुरिति साम्प्रतम् । तस्माददृश्ये प्रतियोगिनि घटादौ भूतलमात्रग्रहणं घटाऽभावपरिच्छेदहेतुरित्यकामेनाऽपि घटाभावादन्यत् कैवल्यं भूतलस्य स्वीकरणीयम् । तदेव चाऽभावव्यवहारनिबन्धनमिति किमन्तर्गडुना घटाऽभावेनेति ।

तदेतदयुक्तम् । वस्तुसद्भावग्रहणमात्रस्याऽभावज्ञानहेतुत्वाऽनभ्युपगमात् । अपि तु तुल्योपलम्भयोग्यस्य प्रतियोगिनो ऽनुपलम्भने सत्यस्य तत्कारणत्वमिष्यते । तदाह-स्मृत्वा च प्रतियोगिनमिति । अनेनाऽगृह्यमाणतामस्य सूचयति । तत्त्वे स्मृत्यनुपपत्तेः । न चैकज्ञानसंसर्गिभूतलोपलम्भ एव घटाऽनुपलम्भ इति साम्प्रतम् । नोपलब्धचरघट[3]संसृष्टभूतलोपलम्भे ऽपि घटानुपलम्भप्रसङ्गात् । तदा ऽपि भूतलोपलम्भस्य भावात् । घटाऽनुपलम्भस्य च तदव्यतिरेकात् । नन्वयमनुपलम्भः प्रतीतो वा स्यादभावज्ञाने हेतुरप्रती-

१ न ह्यदृश्यो दृश्यमान. २ पु॰ पा ।
२ तद्धर्म्यं २ पु पा॰ ।
३ साम्प्रत घट २ पु पा ।

तो वा ? न तावत् प्रतीतो, ऽनवस्थाऽऽपातात् । सो ऽपि ह्युपलम्भाऽभावरूपत्वादनुलम्भान्तरेण प्रमातव्य, एवमनुपलम्भान्तरमपीत्यनवस्थानात् । अप्रतीतत्वे तु सत्तया हेतुः स्यात् । तथा च यदा ऽयं प्रमाणोपलम्भचरचत्वरभूतलप्रमित्साऽभावात् तस्मिन्नप्रतीतचरे चैत्राऽभावं त्वचिरप्राप्तचैत्र विशिष्टचत्वरतलोपलम्भवान् पृच्छ्यते मैत्र प्रक् किमासीदिह चैत्र इति स तदा तत्प्रश्नसमुदितजिज्ञासः प्राक्तनीं दृश्यमानस्य चैत्रस्याऽसत्ता तदानीमेवाऽवधार्योत्तरमाह, आयुष्मन्नासीदिह चैत्रः सम्प्राप्त इति ।

तन्नोपपद्यते । तदानीन्तनेनोपलम्भेन तदनुपलम्भाऽपवादत् । न च प्राक्तनो ऽनुपलम्भस्तस्य सम्प्रतितनीमभावधियमाधातुमर्हति । न खलु निमीलितनयनयुगलः प्राच्या नयनसत्तया सम्प्रति रूप पश्यति । तस्मादेकज्ञानससर्गवस्त्वन्तरोपलम्भ एवाऽभावज्ञानकारणमेषितव्यम् । तथा च स्वसंवेदनसिद्धः स एवाऽभावव्यवहारसाधनाय पर्याप्त इति कृतमभावेन प्रमेयेनेति ।

अत्रोच्यते । न तावद्विना घटाऽनुपलम्भम् भूतलोपलम्भमात्रमभावव्यवहारसाधनम् । न च भूतलोपलम्भ एव तदनुपलम्भ इति चोक्तम् । अतो ऽनुपलम्भो वर[1] प्रतियोगिन एषितव्य. । न चाऽसावप्रतीतस्तदभावव्यवहारसाधनं, प्रेक्षावद्व्यवहारस्याऽबुद्धिपूर्वकत्वाऽनुपपत्तेः । तदभावज्ञानसाधनं तु भवेत् । अज्ञातस्याऽपि ज्ञानोपायत्वदर्शनाच्चक्षुरादिवत् ।

नन्वेवं सत्तामात्रेणोपायत्वमभ्युपेतं भवति । तच्चाऽनुपपन्नम् । असत्यनुपलम्भे तदभावबुद्धिसमुत्पादप्रसङ्गादित्युक्तम् । न । अनुपलम्भाऽभावस्याऽसिद्धेः । नन्वत्र चत्वरतले किमयमासीच्चैत्र इति

[1] अपर २ पु॰ पा ।

प्रश्नसमये तदुपलभमानः स एव मैत्रः[1] कथं तदुपलम्भवान् ? सत्यं, गृह्णाति चैत्रं, न तु स्मरत्यस्य प्राक्तनीं तत्र सत्तां, चत्वरतलस्येव। न च स्मृतिरनुपलम्भ इति तदभावो ऽप्यनुपलम्भ एव। तेन यथा ग्रहणार्हस्याऽग्रहणं[2] तदभावबोधसाधनम्[3], एवं सत्यपि सम्प्रति तस्य ग्रहणे प्राक्तनी चैत्रस्य सत्ता चत्वरस्येव तत्र मध्यन्दिने स्मरणार्हा न स्मर्यतइति माध्यन्दिनस्मरणाऽभावः सन्निति प्राक्तनाऽभावविषयं माध्यन्दिनं प्रत्ययं शक्त एव जनयितुम्। न च प्रत्यक्षाऽनुपलब्धिरेवाऽभावज्ञानसाधनमिति साम्प्रतम्। योग्यप्रमाणाऽनुपलब्धेस्तत्साधनत्वात्। अतत्साधनत्वे त्वनुमानादिनिवृत्तेः। मकरगतस्य सवितुर्मीनादिषु सत्तायाश्च चैत्यवन्दनादिधर्मतायाश्च दर्विहोमाऽपूर्ववत्त्वस्य च ध्वन्यागमनमात्रोपपन्नश्रवणशब्दस्य सजातीयपरम्परारम्भणस्य निवारणाऽभावात्। प्रमाणान्तराणामिवाऽप्रमाणस्याऽपि स्मरणस्य स्वविषये योग्यत्वोपपत्तेः। प्रत्ययान्तरसाकल्यलक्षणस्य च दृश्यत्वस्य विषयकारणकएव प्रत्ययउपपत्तेः। तदभावे चाऽनुमानादिनिवृत्तेरनुमेयाद्यभावसाधनत्वात्। न ह्यनुमानाद्येकविषयाणां प्रमेयाणां क्व चिदभावस्तद्व्यवहारो वा विषयाऽतिरिक्तप्रत्ययान्तरसाकल्ये सम्भवति। तस्मिन् सति तद्विरोधिभावप्रत्ययव्यवहारोपपत्तेः। न च विषयकारणे ऽपि प्रत्ययान्तरसाकल्यसम्भवः। इन्द्रियार्थसन्निकर्षस्येवाऽसत्यर्थे ऽनुपपत्ते। तस्मात्संस्काराऽभावे ऽपि स्मरणाऽर्हत्वमुपपन्नम्। न चोपलम्भाऽनुपलम्भयोर्विरोधो, ऽसमसमयवृत्तिभावाऽभावसाधनतया भिन्नविषयत्वात्।

१ तदुपलम्भवानेव मैत्र २ पु पा। २ ग्रहणादियोग्यग्रहणं २ पु पा। ३ अभावसाधन २ पु पा।

स्यादेतत् । सत्तामात्रेणाऽभावसाधने त्वनुपलम्भस्य दृश्यत्वमप्यस्य तथेति तज्ज्ञानसिद्ध्यर्थं सूक्ष्मकीटकण्टकादिजिज्ञासा न स्यात् । मैवम् । दृश्यत्वसिद्ध्यर्थं हि सा । अजिज्ञासितस्य तत्त्वाऽनुपपत्तेः । न तु दृश्यत्वज्ञानार्थम् । भवतु वा दृश्यत्वज्ञानं हेतु, भूतलज्ञानवत्, किमायातमनुपलम्भस्य ? न ह्यालोको ज्ञायमानः कारणमिति चक्षुषा ऽपि तथा भवितव्यम् । न च धूमो ऽवगतो ऽनुमानज्ञानकारणमिति मनो ऽपि तत्कारणं ज्ञातव्यम् । तस्मात्सत्तया ऽनुपलम्भो ऽभावज्ञानकारणमिति नाऽनवस्था । नाऽपि प्रमेयाऽभावाऽतिरिक्तकैवल्याऽङ्गीकारः । चत्वरतलोपलम्भस्य चैत्राऽनुपलम्भे सति तत्कारणत्वात् । तदयमभावव्यवहारो वस्तुसद्भावग्रहणतत्प्रतियोगितत्स्मरण[1]तद्बुभुत्साऽतिरिक्तनिमित्तजन्मा । यथा सत्स्वपि तन्तुषु कदाचित्पटः प्रादुर्भवस्तदतिरिक्ततत्संयोगभेदजन्मेति । दृश्ये प्रतियोगिनि स्मर्यमाणे वस्तुसद्भावग्रहणे सत्यभावव्यवहारो ऽवश्यम्भावीति हेतुरसिद्ध इति चेन्न । गृह्यमाणे ऽपि प्रतियोगिन्यस्मर्यमाणे किमासीदिति प्रश्नाऽनन्तरं प्राक्तनतदभावव्यवहारप्रवृत्तेः । भवतु तर्हि बुभुत्सिते प्रतियोगिनि बोधार्हे वस्तुसद्भावज्ञानमभावव्यवहारसाधनम् । अस्ति च गृह्यमाणे चैत्रे किमासीदिति प्रश्नसमनन्तरं तत्र तदीयप्राचीनसद्भावसुस्मूर्षा । तदेतस्यां सत्या प्राक्कालवर्तिचत्वरतलस्मृतिरेवाऽवश्यं तदभावव्यवहारप्रवृत्तिनिमित्तमित्यसिद्धता हेतोः । न । एतस्यामप्यवश्यम्भावनियमाऽभावात् । प्रतीतिस्मरणाऽनुभवयोः सतोरपि नितान्तवल्लभतया सुस्मूर्षाऽनुबुभूषयोरविरामात्[2] । तथा च प्रतियोगिनो ऽनुभवे स्मरणे च तत्र तत्र तदभावव्यवहारप्रसक्तेः । असंस्मरणे ऽननुभवे चेति विशेषणान्न

१ द्रव्यस्मरण २ पु पा । २ अधिगमात् ३ पु पा । 

**तस्मान्नाऽन्यप्रमितिनिबन्धने नाप्यप्रमितिनिबन्धने अनभिमतमभिमतं नास्ति, अभिमतं नास्तीति प्रवृत्तिनिवृत्ती, अपि त्वभावाऽधिगमनिबन्धने । नास्तिज्ञानस्य को विषयो निरूपितः? ननूक्तं, किमपराद्धं भवतो विषयाऽभा-**

दोष इति चेत्? अङ्गीकृतं तर्हि तदतिरिक्तं निमित्तमभावः। तथाप्युपलम्भाऽभावरूपत्वादस्य न प्रमेयाऽभावसिद्धिरिति चेत्। अत्रोत्तरमनन्तरमेव वक्ष्यति स्वयमेवाऽऽचार्य ।

नन्वभावो नाम विग्रहवान्न कश्चिदनुभूयतइत्युक्त, तत्किमयमभावव्यवहारो नास्ति, नास्तिनिमित्तो वा? न तावन्नास्तिनिमित्तः। कादाचित्कत्वाऽनुपपत्तेः। न च निमित्तान्तरमस्याऽस्तीत्युक्तम्। न च नास्ति, भावव्यवहारस्याऽपि अपह्नवप्रसङ्गादित्युक्तम्। निःस्वभावस्य कथमनुभूयमानते? ति चेन्न। सङ्गावृत्तिरूपस्य तस्य प्रतीयमानत्वात्स्वतोऽवान्तरविशेषाऽनुपलब्धेः। निःस्वभावतेति चेत्? न। ज्ञानशक्त्यादीनामपि तत्प्रसङ्गात्। तेषामपि हि न स्वतो भेदो निरूप्यते। ज्ञेयशक्यभेदाऽर्थेन तद्भेदनिरूपणमिति चेत्? न। इहापि प्रतियोगिभेदेन तद्भेदनिरूपणादिति सर्वमवदातम्।

प्रकृतमुपसंहरति—तस्मान्नाऽन्यप्रमितिनिबन्धने नाऽप्यप्रमितिनिबन्धने ऽनभिमतं नास्ति, अभिमत नास्तीति प्रवृत्तिनिवृत्ती, अपि तु पारिशेष्यादभावाऽवगमनिबन्धने। न केवल व्यवहाराऽन्यथानुपपत्तेरभावसिद्धि, अपि तु घटो ऽस्तीति ज्ञानवत्तदभावज्ञानमप्यवगम्यते। न च ज्ञान निरालम्बनमिति निवेदयिष्यते। तदस्याऽऽलम्बनं नाऽभावादन्यदस्तीत्याशयवान् पृच्छति—नास्तिज्ञानस्य को विषयो निरूपितः? अपर आह—ननूक्त, नेदमिह प्रतीयतइत्यर्थः।

तत्र न तावददृश्ये[1] प्रतियोगिनि वस्तुसद्भावज्ञान, प्रतियो-

१ दृश्ये २ पु पा०।

**वेन ? यत्तमतिलङ्घ्य प्रमाणाऽभावो विषय इत्युच्यते । ज्ञेयाऽभावो न प्रमेयः । भवतु यद्यस्ति तद्विशेषो हेतुः । ज्ञानाऽभावे ज्ञानभ्रमो व्यवहाराऽभावे व्यवहारभ्रमः । आलोकाऽदर्शने ऽन्धकारभ्रमवत् ।**

गिनो ऽप्यप्रमितिः सम्भवतीत्युक्तम् । अतस्तद्व्यतिरिक्ताऽनुपलम्भाऽभावो वक्तव्य । तथा च किमपराद्धमत्रभवतो विषयाऽभावेन ? यत्त प्रमीयमाणमतिलङ्घ्य प्रमाणाऽभावो विषय उच्यते ।

शङ्कते-प्रातिस्विकभेदाऽनुपलब्धेर्ज्ञेयाऽभावो न प्रमेयः । निराचष्टे-भवतु यद्यस्ति ज्ञानज्ञेयाऽभावयोर्विशेष । न हि ज्ञानाऽभावो ज्ञेयाऽभावतो भेदवान् । तद्भेदस्याऽपि प्रतियोगिभेदाऽधीननिरूपणत्वात् । तथा च चैत्रो नास्तीति प्रतीतिस्तदभावाऽवभासलक्षणकार्यसमधिगमनीया, न कुक्कविकृतिरिव क्लेशेन कथ चित्प्रमाणाऽभावविषयतया व्याख्यातुमुचिता । अथापि वैयात्यात् उच्यते, न च तत्त्वतो नास्तीति बुद्धिव्यवहारौ स्त , किन्तु चैत्रदर्शनाऽभावे चैत्रो नास्तीति ज्ञान भ्रम , चैत्रोचितव्यवहाराऽभावे च तदभावे व्यवहारभ्रमः ।

अत्रैव निदर्शनमाह-आलोकाऽदर्शने ऽन्धकारभ्रमवत् न किलाऽन्धकारो नाम तत्त्वतो ऽस्ति, तत्प्रत्ययो वा । तथा हि तद् द्रव्यादीनामन्यतममेव[1] भवेत् । तैरेव विश्वस्य सङ्ग्रहात् । तत्र द्रव्यत्वे तमः पृथिव्यादीनामन्यतममन्यद्वा ? न तावदन्यतमम् । क्षितिसलिलात्मसु चतुर्दशगुणेषु, तेजसि चैकादशगुणे, मातरिश्वनि च नवगुणे, मनसि चाऽष्टगुणे, नभसि च षड्गुणे, दिक्कालयोश्च पञ्चगुणयोरविनाशिनोरनन्तर्भावात् । अन्तर्भावे वा तावद्गुणत्वप्रसङ्गान्नित्यत्वापत्तेश्च । नाऽपि द्रव्यान्तरं, निर्गुणस्य तत्त्वाऽनुपपत्तेः । नीलोत्पल-

[1] अन्यतमदेव १ पु पा० । एवमग्रेऽपि ।

**न। सुषुप्त्याद्यवस्थासु प्रसङ्गात्। अप्रमिते च भ्रमा-ऽयोगात्सुषुप्त्यादिवत्।**

पलाशश्यामलमुपलभ्यमान महच्च तमो न निर्गुणम् । अतो द्रव्या-न्तरमिति चेत् ? न । कृष्णरूपस्य गन्धादेकार्थसमवायिनस्तद्व्याप्यस्य तदभावे ऽभावात् । तथा च निखिलगुणविरहिणो न द्रव्यत्वम् । गुणकर्मसामान्यभावो ऽप्यनाश्रयस्य न सम्भवति । न च पृथिव्या-दिद्रव्यमस्याश्रयः । तदाश्रयत्वे तद्गुणाना तत्सहचरितानामुपलब्धि-प्रसङ्गात् । न चास्य तमस उपलब्धिरुपपद्यते । उपलम्भकाऽभा-वात्[1] । न चेन्द्रियाणामेतत्तमो लोचन गोचरयति । तदभावे तद-नुपलब्धिप्रसङ्गात् । अस्ति च निमीलितलोचनस्याऽपि तमः पश्यामीत्यभिमानः । घ्राणादीना गोचरस्तम इति स्थवीयः । मनोऽपि चाऽऽन्तरगोचरनियत बहिरसतीन्द्रियलिङ्गादो दवीय एव । न च कारणाऽभावे कार्यमुत्पत्तुमर्हति । तस्याऽऽकस्मिकत्वेन कादा-चित्कत्वाऽनुपपत्तेः । तस्मान्न तमो नाम किञ्चिदस्ति वस्तु । नापि तज्ज्ञानम् । अथ च तमस्तमालनीलमुपलभामहइत्यभिमानो लोकि-कानामालोकाऽदर्शने । सोऽयं विप्लव. । एवमभावदर्शन तद्व्यवहारश्च विप्लवएवेति भावः ।

तदेतन्निराकरोति—न । सुषुप्त्याद्यवस्थासु प्रसङ्गात् । यदि हि ज्ञानव्यवहारयोरभावे तद्विभ्रमः, सुषुप्त्याद्यवस्थास्वपि तथा प्रसङ्ग. । न हि तदा ज्ञानं, नाऽपि व्यवहार । समस्तविज्ञानोपसङ्हृतिलक्ष-णत्वात्सुषुप्त्याद्यवस्थायाः । हेत्वन्तरमाह—अप्रमिते च भ्रान्त्य-योगात् सुषुप्त्यादिवत् । प्रमितस्य हि भावस्य प्रमितएव भावे समारोपभ्रान्तिर्न पुनरसतो नापि ज्ञानाऽऽकारस्य, नाप्ययह इत्युप-पादित विभ्रमविवेके । अत्रापि सूचयिष्यति । न च ज्ञानव्यवहारा-

१ उपलम्भसाधनाऽभावात् २ सु पा ।

## तमोदर्शनं तु भूच्छायादर्शनम् ।

भावो क्व चिदुपलब्धपूर्वो । तदुपलम्भे वा कृतमत्र भ्रमोपन्यासेन । तस्मादप्रमिते भ्रान्त्यनुपपत्तेरयुक्तमेतदित्यर्थः ।

दृष्टान्तस्तु साध्यविकल इत्याह–अत एव तमोदर्शनं तु भूच्छायादर्शनम् । अयमत्राऽभिसन्धिः । प्रमीयते तावत्तमस्तमालमालाश्यामम् । न चाऽप्रमितावेव प्रमितिविभ्रमसम्भवः । न चास्य बाधकमस्ति प्रमाणम् । न च तदभावे प्रमीयमाणमपह्नवमर्हति । अतिप्रसङ्गात् । न च तमसि प्रमाणाऽनुपलब्धेः प्रमा प्रथमानाप्यपह्नोतुमुचिता । रूपाद्युपलब्धेरपि तत्प्रसङ्गात् । न हि तत्प्रमाणमिन्द्रियाद्युपलभ्यते । रूपाद्युपलब्धिलिङ्गकमनुमानमस्योपलब्धिरिति चेत्? न । इहापि समानत्वात् । ननु चक्षुरादिगोचरत्वमस्येत्युक्तम् । तर्हि वरमस्तु तमसि समस्तजनसाक्षात्काराऽऽस्पदे प्रमितिकार्यदर्शनात् प्रमाणान्तरमनुपलब्धपूर्वमपि, न पुनस्तस्याऽन्यतो ऽनुपलम्भात् स्पष्टदृष्टकार्यविपर्ययो युज्यते । अस्तु वा चक्षुरेवाऽस्य कारणम् । न च निमीलिताक्षस्य पटलवतो वा तन्नास्ति, अपि तु पिहितम् । कथं तर्हि पिहित[1] घटादाविव बाह्ये तमसि प्रवर्त्ततेति चेत्? मा प्रवृतेष्ट । किन्नश्छिन्नम्? परिच्छेत्स्यति हि तच्छायां पक्ष्मणोः पटलस्य वा ऽत्यासन्नामपि पिधातृणी पटलपक्ष्मणी पिदधती तामेवेक्षते चक्षुः, न तु पटलपक्ष्मणी । आलोकाप्यायितं तत्पृथिव्यादिग्रहे प्रभवति, न तु तच्छायायां तद्विरोधिन्या, केवलस्यैव तत्र सामर्थ्यात् । कार्यदर्शनोन्नेयत्वात्तस्य सूक्ष्ममपि चेषीकतूलादि चक्षुराच्छादकमासन्नमनुभूयमानमतिमहदनवधि चकास्ति सर्वथेयमपि । न चाऽन्धानामितरगाचाऽवयववद् गोलकाधिष्ठाने तत्कार्योपलम्भसम्भवः । तद्भावे वा वरमुपलम्भकान्तरकल्पनेत्युक्तम् ।

---

१ कथमपि हितं २ पु॰ पा॰ ।

कतमत्पुनर्द्रव्यादीनां तमः ? ननु द्रव्यमेव, कालिमगुणशालित्वात् स्पन्दवत्त्वाच्च । तथा हि । कालिमैवाऽस्य रूपमुपलभ्यते । अप्तेजसोरिव श्वेतिमा । एव सङ्ख्याऽप्येकत्वादिका परिमाणं, तच्चतुर्विधम् । पृथिव्याद्यणूनामिव तमोऽणूनामप्यनुमानात् । पृथक्त्वसंयोगविभागपरत्वाऽपरत्वसंस्काराश्च पञ्चविधमपि कर्माऽप्यत्रमीयते । यथाहाऽऽचभवान्वार्तिककारः ।

न नु नाऽभावमात्रस्य तमस्त्वं वृद्धसंमतम् ।
छायायाः कार्ष्ण्यमित्येव पुराणे भूगुणश्रुतेः ॥
भूगुणस्य कार्ष्ण्यस्य छायाया द्रव्यान्तरश्रुतेरित्यर्थः ।
दूराऽऽसन्नप्रदीपादिदेहचेष्टाऽनुसारिणी ।
आसन्नदूरदीपादिमहदल्पचलाऽचला ।
देहानुवर्तिनी छाया न वस्तुत्वादिना भवेत् ॥ इति ।

न च पृथिव्यादीनामन्यतमम् । न तावत्कृष्णरूपस्य तमसस्तोयादिभावसम्भवः । तोयतेजसोः सितत्वादेव पवनादीनां चाऽरूपत्वात् । न च परोपधानात् कालिन्दीसलिलस्येव तमसः कालिमेति साम्प्रतम् । अनुपहितस्य कदाचिदपि स्वाभाविकरूपान्तरशालिनो ऽनुपलब्धेः, वेचसमुद्धृतस्येव कालिन्दीवारिणः स्वभावस्वच्छधवलस्य ।

नापि पार्थिवं तमः । तद्गुणानां गन्धादीनामभावात् । ननु तथैव गन्धादिव्याप्तं कृष्णमपि रूपं तन्निवृत्तावसदित्युक्तम् । तत्किं पवनेऽनुष्णाशीतस्पर्शोऽसन्नेव ? गन्धादिव्याप्तस्य तस्य पृथिव्यामुपलब्धेः । पवने च तेषामभावात् । पाकजस्य स्पर्शस्य गन्धादिव्याप्तत्वम् । अथ त्वपाकजः स्पर्शो वायवीय इति चेन्न । इहापि साम्यात् । न हि तमसो ऽपि कालिमा पाकजः । प्रत्यक्ष चोभयथाऽपि समा-

नम् । तम:परमाणवश्च पार्थिवादिपरमाणव इव द्व्यणुकादिक्रमेण महान्त तमोऽवयविनं पार्थिवमिवारम्भन्ते। तच्च रूपविशेषे सत्यनेकद्रव्यत्वान्महत्त्वाद्वा चाक्षुषमिति न तदुत्पत्त्यनवक्लृप्ति. । न च तस्य दिवाऽऽरम्भसम्भव: शाश्वतिकविरोधे सति तेजसि । न जातु स्पर्शवद्वेगवन्मुद्गरादिघाते परिपन्थिनि कुम्भारम्भाय भवन्ति मृदवयवा: बिभ्रति वा कुम्भमारब्धमिति । अत एव हि दिवापि निरस्ततेजसि गिरिगुहायामारभन्ते एव ।

स्यादेतत् । न तामस: परमाणवो ऽवयविनमारभन्ते । स्पर्शविरहादात्ममनोव्योम[1]वत् । न चाऽऽरम्भे रूपवत्त्व प्रयोजकम् । अरूपाणामपि पवनपरमाणूनां स्पर्शवद्द्रव्यारम्भदर्शनादस्पर्शानां चाऽऽत्ममनसा तदभावात् । तत्किमत्र भवता तम. परमाणव: सन्ति न वा? सन्ति चेत्कथन्तदवयविनामभाव.? तद्भावलक्षणत्वात् परमाणुभावस्य । असत्त्वे वा तम:परमाणूनां कथ न हेतोराश्रयासिद्धि.? हेतोरस्पर्शस्याऽसद्रूपत्वादसदाश्रयत्वमदोष इति चेन्न । तुच्छस्याऽहेतुत्वात्कल्पनारोपिततद्भावस्य च वस्तुनोऽसाधकत्वात्[2]। न जातु समारोपितधूमभावा मिहिका[3] कृशानुसाधनं भवति । प्रामाणिकस्य त्वभावस्य भावाऽधिकरणमन्तरेणाऽयोगात् । तम परमाणुष्वसत्त्वाश्रयाऽसिद्धतया भवत्यसिद्धि, न तु स्वतो ऽप्रसिद्धस्य सत्यामपि परप्रसिद्धौ साधनाङ्गत्व, स्वयमप्रतीतस्य परप्रत्यायनाऽनर्हत्वात् । यथोक्तम् ।

योऽपि तावत्परऽसिद्ध: स्वयंसिद्धो ऽभिधीयते ।
भवेत्तत्र प्रतीकार: स्वतोऽसिद्धे तु का क्रियेति ॥

---

१ आत्ममन स्तोम १ पु पा । २ वस्तुतत्त्वाऽसाधकत्वात् २ पु पा ।
३ धूममहिषी २ पु पा ।

अपि चाऽस्पर्शस्य द्रव्याऽनारम्भकत्वेन न स्वाभाविकः सम्बन्धो मनसः शक्यो निश्चेतुं, दैर्घ्यस्योपाधेर्विद्यमानत्वात् । धर्माऽधर्मनिमित्तत्वाद्विश्वकार्यनिर्माणस्य । साक्षात्पारम्पर्येण च सर्वं कार्यजातं भोगसाधनं सत्तन्निर्माणं स्यात् । न च मनोऽवयविनः शरीरतया विषयतया वा भोगसाधनता सम्भवति । इन्द्रियाऽनधिष्ठानतया देहभावाऽभावात् । अपार्थिवस्य च तद्भावाऽनभ्युपगमात् । विषयभावस्त्वननुभूयमानतया ऽनुपपन्नः । इन्द्रियभावस्त्वणुत एव मनसः । तमसस्तु रूपवतो विषयभावेन भवति भोगसाधनत्वमिति न वैयर्थ्यम् । परममहतां पुनरसमवायिकारणसंयोगविरहादधिकपरिमाणकार्यद्रव्याऽनुपपत्तेश्च कारणसमानन्यूनपरिमाणकार्याऽदर्शनाच्चाऽधिक्याऽयोगाच्च परममहत्वव्याघाताच्च न स्वसमवायिद्रव्यारम्भकत्वमिति सोऽयमुपाधिः । न चौपाधिकः सम्बन्धोऽनुमानाङ्गम् । मा भूदुपाध्यायदर्शनादसकृदवगतसहभावस्याऽनुमानं शिष्यस्य । न चाऽनन्यथासिद्धे नीलाऽन्धकाराऽनुभवे परिपन्थिनि स्फुरति प्रत्यक्षे बाधितविषयमनुमानमुदेतुमुत्सहते । मा भूदनुष्णत्वं तेजसो द्रव्यत्वात्पृथिव्यादिवदित्यनुमानं, द्रव्यान्तरस्य च द्रव्यान्तराश्रयत्वं दृष्टम् । तद्यथा आकरजस्य तेजसः सुवर्णादेः पार्थिवद्रव्योपष्टम्भो, ऽन्यथा पतनादि न भवेद् गुरुत्वाऽभावात् । यथा चाऽभिजातमहानीलादिमणिसमाश्रयं तेजः न च तद्वदेतद् भ्रमणात[1]स्तेज इति साम्प्रतम् । तेजसस्तदाश्रयस्याऽन्ततः खद्योतादिगतस्यापि कया चिन्मात्रया रूपप्रकाशनव्याप्तत्वात्तमसश्च तद्वैपरीत्यात् । तस्मात्तमो द्रव्यान्तरमपि पृथिव्याद्यनुविधास्यति, तेजसश्च विनङ्क्ष्यति । तदपगमे च पृथिव्यादिभ्यः पुनः प्रभविष्यति चतुष्कादपवरकप्रविष्टस्य कतिप-

१ भ्रमणो २ पु पा० ।

आलोकाऽभावदर्शनं चेयसमानम् ।

याऽऽलोकाऽवयवसम्भेदविरले ऽपि तमसि सान्द्रताऽवगमो भ्रमः । इन्द्रियोपहतेः कालपरिवासवशात् । उपहतिविगमे तु यथावत्पश्यत्यपवरकवर्त्तिनः पदार्थान्, अल्पां च तत्र छायाम् । सा च सान्द्रा पिधत्ते पदार्थान्, न तेजसा विरलीकृता । न चाऽऽलोकाभावमात्रं तम इति साम्प्रतम्, तस्य नीलत्वाऽनुपपत्तेरस्मृताऽनवलोकिताऽऽलोकस्य च तमःप्रत्ययाऽनुपपत्तिप्रसङ्गात् । तथा च परिस्पन्दादयस्तद्वर्त्तिनो ऽवगम्यमानाः कथं चित् क्लेशेन न व्याख्यामर्हन्ति । तस्मात्प्रत्यक्षसिद्धमसति बाधके द्रव्यान्तरमेकादशं तमो नवगुणा[1] चेति सिद्धम् ।

नादृष्टौ दर्शनं छाया न ऽचाभावो ऽस्मृतौ गतेः ।

रूपादुपायसद्भावाद् द्रव्यं द्रव्यान्तराऽनुगम् ॥

इति सङ्ग्रहश्लोकः ।

अलं वा नैयायिकैर्विवादेन । आलोकाऽभाव एव तमः । तथाऽपि सिद्धत्येव नः समीहितमित्याह—आलोकाऽभावदर्शनं चेति । तस्मादसमानं दार्ष्टान्तिकेनेति । तद्यदि प्रमाणग्राह्यता प्रमाणसबन्धो, यदि वा तदर्हता, उभय्यप्यसावभावे सदा ऽस्तीति तस्यापि सत्त्वप्रसङ्गः । अथ स्वरूपवर्तमानता[2], न सा ऽभावे ऽस्ति । न । अतुच्छत्वोपपादनात् । न चैवमपि प्रतिभावं[3] भेदवती सत्सदिति बुद्धिव्यपदेशयोरभिन्नाऽर्थावगाहिनोर्गोचरो भवितुमर्हति । अभेदे वाऽभिधानान्तरेण सामान्यमेव तत् । पूर्वाऽभिमर्शमन्तरेण सामान्यमप्रामाणकमिति चेत्? न । विकल्पाऽसहत्वात् । कः खल्वयं पूर्वाऽभिमर्शोऽभिमत आयुष्मतः, यावदुपलब्धरूपपरामर्शः, आहो स्वित् कतिपया-

१ अवगुणा २ पु पा । २ वर्तमानार्हता १ पु पा । ३ प्रतिव्यक्ति २ पु पा ।

अस्तु वा प्रमाणग्राह्यता, वर्त्तमानता तु सत्त्वमुच्यते ।

नामपि रूपाणाम्? तत्र प्रथमस्य न क्वचिदपि सम्भवः । न खलूपलब्धचरशिलाभकस्याऽपि[1] वर्षासु शरदि पुनः पश्यतस्तादृशः पूर्वाऽवमर्शोऽस्ति । तस्याऽपि तदभावादन्यत्वप्रसङ्गः । कतिपयपरामर्शोऽत्रापि समानः । अस्ति खलु कतिपयानां रूपाणामनुगमस्त्रसरेणुकरेण्वोर्विविधभेदसमवाये ऽपि वा द्रव्यत्वादिना । तस्माद्यया सद्बुद्धिव्यपदेशयोरनन्यथासिद्धेर्गुणवत्त्वस्य च प्रतिगुणवद्भेदेन तदुपपादनाऽसामर्थ्यात् एव द्रव्यगुणकर्मसामान्यानामपि अत्यन्तभिन्नानामपि सदित्यभिन्नबुद्धिव्यपदेशभाजामनुस्यूतमस्ति तत्सत्त्वम् । यस्य च त्रैकाल्याऽसम्बन्धादत्यन्ताऽसन्तः शशविषाणादयो, यस्य चाऽयोगव्यवच्छेदादत्यन्तसन्तः परमाण्वाकाशादयो, यस्य चात्यन्ताऽयोगव्यवच्छेदात्कदाचिदेव सन्तः पटादयो, यस्य च सम्बन्धाद् द्रव्यगुणकर्मसामान्यानि स्वाऽभावव्यवच्छेदेन स्वाऽनुभवाद्भासन्ते, स मान्यरूपभूयस्त्वाऽल्पीयस्त्वनिबन्धनश्च तत्र वैलक्षण्याऽवगतिभेदः । यथाऽऽहाचार्यः ।

सामान्यरूपभूयस्त्वे तस्मात्तत्त्वं प्रकाशते ।
विलक्षणत्वमल्पत्वे चकास्ति तदनुद्भवात् ॥ इति ।

तदेतद् ब्रह्मसिद्धौ कृतश्रमाणां सुगममिति नेह प्रपञ्चितम् ।

अभ्युपेत्योच्यते । अस्तु वा प्रमाणग्राह्यता सत्त्वं, तथाऽपि वर्तमानता तु सा । कस्मात्? अतीताऽनागतयोः प्रमाणग्राह्ययोरप्यसत्प्रतीतिव्यवहारास्पदत्वात् । वर्तमानतैव हि सत्त्वमुच्यते । तथा च वस्तुतः कालाऽनवच्छिन्नो नियोगः प्रमाणग्राह्यो ऽप्यसन्नेव सत्त्वान्न मानान्तराऽगोचर इति सिद्धम् ।

---

१ शिलाभेदस्य २ पु पा ।

अर्थाऽभावो नियोगस्य शाब्द्यां भूताद्यपाकृतौ ।
अनन्यगोचरत्वं न प्रमाणान्तरजन्मनि ॥

अशाब्दश्चेन्नियोगो नाभून्नास्ति न भविष्यतीति बोधयति न नियुक्तो न नियुज्यते न नियोक्ष्यते वा स्वर्गकाम इति वाक्यार्थः स्यादिति सुनिरूपितो ऽधिकारः । अथ न शाब्दो भूतादिप्रतिक्षेपः किं तु तस्यौदासीन्यान्मानान्तरतस्तथा ऽवसायः । न तर्ह्यनन्यगोचरः । मानान्तरेण तथात्वस्या-ऽवसायात् शब्दप्रमितस्य विशेषस्ततः । प्रत्यक्षस्येव गिरेरग्निमत्ता ऽनुमानात् । न । विशिष्टाऽपरिच्छेदे विशेषण-

अपि च—

अर्थाभावो नियोगस्य शाब्द्या भूताद्यपाकृतौ ।

अनन्यगोचरत्व न प्रमाणान्तरजन्मनि ॥

अपि चास्य त्रैकाल्याऽनवच्छेदः शब्देन वा प्रतिपाद्यते, मानान्तरेण वा ? यदि शब्देनाऽत्यन्ताऽसत्त्वम् । मानान्तरेण तु त्रैकाल्य-व्यवच्छेदे मानान्तरगोचरत्वप्रसङ्गात् विचित पूर्वपक्षे श्लोकमाह—अशा-ब्दश्चेन्नियोगो नाऽभून्नास्ति न भविष्यतीति बोधयति तथा सति न नियुक्तो न नियुज्यते न नियोक्ष्यते स्वर्गकाम इति वाक्यार्थः स्यादिति सुनिरूपितो ऽधिकार । अथ न शाब्दो भूतादिप्रतिषेध , तस्य शब्दस्य तेषु भूतादिषु निषेध्येष्वौदासीन्यात्, किन्तु मानान्तरतस्तथा ऽवसाय , त्रैकाल्यव्यवच्छेदेनाऽवसाय । न तर्ह्यनन्यगोचर । कुत. ? मानान्तरेण तथात्वस्य त्रैकाल्यावच्छेदस्याऽवसायात् ।

शङ्कते—शब्दप्रमितस्य नियोगस्य विशेषस्त्रैकाल्यां वेकस्ततो मानान्तरात् । न पुनर्मानान्तर नियोगे प्रवर्तत इति । अत्रैव निद-र्शनमाह—प्रत्यक्षस्येव गिरेरग्निमत्ताविशेषो ऽनुमानात्, न तु तदग्नि-

**स्याऽविषयत्वात् । अपि च अन्यतोपि तथात्वाऽधिगमे ऽनियोग एव स्वर्गकामः । तस्यापि प्रमाणत्वात् । असत्त्वे वा भूतादिविवेकाऽभिधानं प्रलापः । ननूपाधयो भूतादयः, न चोपाधिनिवृत्तावुपाधिमतो निवृत्तिरप्रतीतिर्वा । भवत्वन्योपाधिष्वेवमिह त्वेतल्लक्षणमेवाऽत्यन्ताऽसत्त्वम् । नित्या-**

मत्तगोचर गिरिमपि गोचरयितुमर्हति । निराकरोति—न । विशिष्टाऽपरिच्छेदे विशेषस्याऽविषयत्वात् । न ह्यस्ति सम्भवो यद्विशिष्टं पर्वतादि न परिच्छिद्यते, तद्विशेषश्चाऽग्निमत्त्वं गम्यतइति । न चाऽप्रत्यक्षीकृतपर्वतस्तद्विशेषमनुमातुमर्हतीति साम्प्रतम् । अनुमानसमये प्रत्यक्षज्ञानस्याऽतीतत्वेन गिरेरपरिच्छेदात्स्मृत्यनुपपत्तेश्च । तदा युगपद् ज्ञानोत्पत्तेरनुपपत्तेरन्तःकरणस्य प्रत्ययपर्याये सामर्थ्यात् । अन्यथा समानगोचरबुद्धिधाराऽनुपपत्तेः । सकृदेव यावत्कर्तव्यकरणात् । समर्थस्य चोपाऽयोगात् । प्रत्यक्षाऽनुमानयोश्च धर्मिधर्मरूपमात्रगोचरतया सहस्थितावपि विशिष्टत्वा[१]ऽनवभासनात् । अपि चास्याऽन्यतोऽपि तथात्वाऽधिगमे ऽनियोग एव स्वर्गकामः । तस्याऽपि प्रमाणत्वात् । कार्यनचयविरहात् । तत्त्वे वा[२] भूतादिविवेकाऽभिधानमप्रामाणिकं प्रलापः । चोदयति—ननूपाधयो विशेषणानि वस्तुतो भूतादयः कर्णस्येव कुण्डलादयः । न पुनः स्वभावः । ततः किं? मित्यत आह—न चोपाधिनिवृत्तौ सत्यामुपाधिमतोऽपि निवृत्तिरप्रतीतिर्वा । न खलु कुण्डलनिवृत्तौ कर्णो निवर्तते, न प्रतीयते वा । परिहरति—भवत्वन्योपाधिषु कुण्डलादिष्वेवम्, इह त्वेतल्लक्षणं त्रैकाल्यविवेकलक्षणमेवाऽत्यन्ताऽसत्त्वम् । न खलु

१ विशिष्टतत्त्व २ पु पा । २ असत्त्वे २ पु पा ।

ऽनित्यत्वोपाधिनिवृत्तौ च नोपाधिमत्सम्भवः । प्रत्यक्षं त्वापातजन्मकाले भेदोपाधिविविक्तरूपमात्रग्राहीति न ततो विषयभेदः । अवर्त्तमानस्याऽरूपत्वाद्वर्त्तमानविषयं तत् । सत्यं वस्तुतो न प्रमितितः । वस्तुतो वर्तमानादिविवेके निरात्मकत्वमत्यन्ताऽप्रमितितो न विषयभेदात्प्रमाणान्तराऽनपेक्षत्वं शब्दस्य । सैषोभयतस्पाशा ।

ननु प्रतीयते यजेतेति कार्योऽर्थो, न स भविष्यन्मानाऽभावात् एकान्ताऽनवधारणात् । कार्य्यत्वादेव नेतरकालाऽनुपाती । न च नास्ति । प्रतीतेः । उक्तोत्तरमेतत् ।

शशविषाणादीनामत्यन्ताऽसत्त्वमन्यत् । अतस्त्रैकाल्यविवेकात् । न केवलमयमन्येऽपि सन्ति ते उपाधयो ये निवर्तमाना वस्तुसत्तां निवर्तयन्तीत्याह नित्याऽनित्यत्वोपाधिनिवृत्तौ नोपाधिमत्सम्भवः । अपि च शब्दतस्त्रैकाल्याऽनवमर्शे प्रत्यक्ष त्वापातजन्मविशेषणविशेष्यभावाऽनवमर्शात् कालभेदोपाधिविविक्तरूपमात्रग्राहीति न ततः प्रत्यक्षाद्विषयभेदः शाब्दस्य ज्ञानस्य भवेत् ।

शङ्कते - अवर्तमानस्याऽरूपत्वाद्वर्तमानविषय तत् । निराचष्टे—सत्य वस्तुतो न प्रमितित । उक्तमर्थं सङ्क्षिपति—तच्च नियोगे वस्तुतो वर्तमानादिविवेके निरात्मकत्वमत्यन्ताऽप्रमितितो न विषयभेदात् प्रमाणान्तराऽनपेक्षत्व शब्दस्य, सैषोभयतस्पाशा रज्जुः ।

चोदयति - ननु प्रमीयते यजेतेति कार्योऽर्थो न स भविष्यन्, भविष्यत्यर्थे प्रमाणाऽभावादेकान्ताऽनवधारणात्तन्थाऽनिश्चयात् । मा भूद्भविष्यन्, वर्तमानोऽतीतो वा स्यादित्यत आह—कार्यत्वादेव नेतरकालऽनुपाती । गगनकुसुमायमानस्तर्हीत्यत आह—

**सात्मकत्वे न वस्तुनः कालभेदः, प्रमितिनश्चेन्न विषयभेद इति नैरात्म्यम्। कथं तर्हि प्रतीतिः - अत एव प्रतिभामात्रं विकल्पमात्रं वा शाब्दज्ञानमिति विपश्चितः। प्रतिभानिबन्धनश्च व्यवहारः। प्रतिभाऽनुगृहीतानि च प्रमाणानि व्यवहाराऽङ्गमिति।**

न च नास्ति। कुत ? प्रतीतेः। न ह्येकान्ताऽसतः प्रतीतिविषयभाव सम्भवतीति। परिहरति—उक्तोत्तरमेतत्। उक्तप्रायमस्योत्तरम्। तद्दर्शयति—सात्मकत्वे न वस्तुत कालभेदविवेक प्रमितितश्चेन्न विषयभेद, प्रत्यक्षाद् घटादिशब्दाच्चेति। तस्मान्मानान्तरागोचरत्वमिच्छतो नियोगस्य त्रैकाल्यसम्भेदविरहमन्तरेण तदनुपपत्तेर्नैरात्म्यमापतेत्।

कथ तर्हि प्रतीतिरत्यन्ताऽसत ? उत्तरम् अत एवाऽसद्गोचरत्वादेव प्रतिभामात्र विकल्पमात्र वा शाब्द ज्ञानमिति विपश्चित। असत्प्रतीतिरेव प्रतिभेति वा विकल्प इति वा मतभेदेन व्यपदेशभेदवती। एतदुक्त भवति, नाऽत्यन्ताऽसत्प्रतीतिरगोचरोऽपि तु प्रमिते। नन्वसद्विषया प्रतीतिः कथ व्यवहाराऽङ्गम् ? न खलु खद्योत दहन इति मन्यमानस्तेन दहति पचति वेति। अत आह—प्रतिभानिबन्धनश्च व्यवहार। नाऽस्त्ययं नियमो, ऽसदर्थविज्ञान न व्यवहाराङ्गमिति। संशयविपर्ययौ हि तथा। ताभ्या व्यवहाराऽनुपपत्ते। प्रतिभा पुनर्व्यवहारहेतु। तद्भावाऽभावाऽनुविधानाद् द्व्यव्यवहारभावाऽभावयोरित्यर्थः। यद्येव न तर्हि व्यवहारसाधनत्व प्रमाणाना, प्रतिभात एव तत्सिद्धेरित्यत आह—प्रतिभाऽनुगृहीतानि च प्रमाणानि व्यवहाराङ्गम्। एतच्चोपरिष्टात् स्पष्टयिष्यतीति। इति: समाप्तौ।

अपि च-

वेदार्थइत्थमाशङ्का नियोगस्य न कार्य्यता ।

नियुक्तस्य प्रवृत्तिश्च न नियोगैकबन्धना ॥

यत् खलु न भूतं न वर्त्तमानं भावि न वेत्यनवधारितैकान्तं तदाशङ्काज्ञानगोचरो, यथा वर्षमननिपतितमप्रवृत्तमतिनीलबहलजलदोदयदर्शनसामर्थ्येन प्रत्ययपथमनुपतद्व्यभिचारदर्शनादनिश्चीयमानैकान्तम्। इमां चाऽवस्थां बत वेदार्थः प्रज्ञाशालिभिरुपनीतो ऽतिव्याख्यया ।

अपि च विषयः कार्य्यो न नियोगः। कार्यश्च वेदप्रमेयः

अपि च-

वेदार्थइत्थमाशङ्का नियोगस्य न कार्यता ।

नियुक्तस्य प्रवृत्तिश्च न नियोगैकबन्धना ॥

यत्खलु न भूतं न वर्तमानं भावि न वेत्यनवधारितैकान्तं तदाशङ्काज्ञानगोचरः । तद्यथा वर्षमनतिपतितमभूतमप्रवर्तमानमतिनीलबहलजलदोदयाद्बहुलदर्शनसामर्थ्येन प्रत्ययपथमनुपतत्क्वचिद्व्यभिचारदर्शनादनिश्चीयमानैकान्तम् । ततः किमित्याह-

इमां चाऽवस्थां वेदार्थः प्रज्ञाशालिभिरुपनीतो ऽतिव्याख्यया । निश्चयफलं हि प्रमाणम् । अयं च[1] स्वार्थे शङ्कामनिश्चयात्मिकां विदधानो ऽप्रमाणं स्यादित्यर्थः ।

तदनेन वेदार्थइत्थमाशङ्केति विवृतम् । नियोगस्य न कार्यतेति विवृणोति-अपि च विषयः कार्यो न नियोगः । आज्ञादिषु हि नियोगेषु स्वाम्यादिनियोक्तृकेषु विषयः कार्यो ऽवगम्यते नियोज्येन । न चाऽऽज्ञादयो नियोगा इत्यर्थः । ततः किमित्याह-कार्यश्च वेदप्रमेयो लोकाऽनुसारात् । ननु द्रव्यादयो ऽपि तत्पदेभ्यो

१ अयमस्यामाय २ पु पा ।

**इतरपदार्थानां तदन्वयित्वात् । तस्यैव कालविवेको मानान्तराऽगोचरतया ऽनपेक्षत्वसिद्धये ऽभिधानीयः। ननु नियोगएव कार्य्यत्वप्रत्ययः । एवं हि व्यपदिशन्ति, आचार्य्यनियोगः कर्तव्यो राजशासनमनुष्ठेयमिति । नैतत् । नियोज्यस्य नियोक्तृत्वप्रसङ्गात् । नियोगस्य हि कर्ता नियोक्तेति । अपि च । यागे नियोगात्कर्तव्यता तस्य कुतः ? न ह्येष तत्र नियुज्यते ।**

ऽवगम्यन्तइति कथ तस्यैव वेदप्रमेयते ? त्यत आह - इतरपदार्थाना तदन्वयित्वात् कार्यान्वयित्वात् । एतदुक्त भवति । सर्वमेव पदजात कार्यपर, तत्रैव व्युत्पत्ते , तच किञ्चिदभिधायकतया, यथा लिङा-दि । किञ्चित्तु तदर्थस्वार्थाऽभिधायकतया यथा दध्नेत्यादि । भव त्वेव, प्रकृते तु किमायात ? मित्यत आह—तथा च तस्यैव कार्यस्यैव वेदार्थस्य कालविवेको मानान्तराऽगोचरतया ऽऽम्नायस्य साऽपेक्षत्व-सिद्धये ऽभिधानीयो न तु नियोगस्य, तस्याऽकार्यत्वेन वेदार्थत्वाऽभा-वात् । न चासौ कालरहित । तस्य कारकव्यापारविषयतया[1] त्रैकाल्य-परामर्शसम्भवादिति भाव ।

चोदयति—ननु नियोगे एव कार्यत्वप्रत्ययो लौकिकानाम् । कुत: ? एव हि व्यपदिशन्ति, आचार्यनियोग: कर्तव्यो, राजशास-नमनुष्ठेयमिति । परिहरति—नैतत् । कुत ? नियोगश्चेन्नियो-ज्यस्य कार्य:, तथा च सति नियोज्यस्य नियोक्तृत्वप्रसङ्गात् । कस्मात् ? नियोगस्य हि कर्ता नियोक्ता । यथा स्वाम्यादिराज्ञादे । अपि च यागे विषये नियोगात्कर्तव्यता तस्य नियोगस्य । कुत: कर्तव्यता ? यद्युच्येत, नियोगादिति, तत्राह—न ह्येष तत्र नियोगे नियुज्यते । नियोगान्तराऽभावात् । स्वात्मनि च विषयविषयिभावा-ऽनुपपत्ते: । भेदाऽधिष्ठानत्वात्तस्य ।

१ व्यापारतया २ पु पा ।

**स्वरूपेणैव स कार्यः, न तत्राऽन्यापेक्षा विषयवत् । किं तु यजेतेति याजयेदित्यर्थः स्यात् । तथा च स्वर्गकामो ऽन्यनियोगमात्रेण कृतशास्त्रार्थः स्यादिति साधु सुसंपादितमत्रभवता । नियोगार्थे च कार्ये स्वर्गयागयोः परस्पराऽसम्बन्धस्तदन्वयात् ।**

शङ्कते—स्वरूपेणैव स नियोगः[1] कार्यः । न तत्राऽन्याऽपेक्षा नियोगान्तरापेक्षा विषयवत् यथा हि विषयो विषयिनियोगकर्तव्यताक्षेपात्कर्तव्यः, यथाह—"यत्तु तत्सिद्ध्यर्थमुपादीयते तद्विधेय"-मिति तन्त्रे व्यवहार इति, नैव नियोगस्य कर्तव्यता, स्वभावत एव तस्य तत्त्वादित्यर्थः । परिहरति—भवतु, किन्तु यजेतेति याजयेदित्यर्थः स्यात् ।

अयमभिसन्धिः । न तावदपूर्वे भावार्थविषयं कार्यतयाऽवगम्यमानं स्वात्मनि नियोज्यं प्रेरयन्नियोगो लिङादार्थ इत्युपपादितमधस्तात् । तथा चाऽऽज्ञादय एवाऽवशिष्यन्ते इति यजेतेति लिङा कार्यं नियोगमभिदधता यागविषयाऽऽज्ञादिरर्थः कर्तव्य इत्युक्तं स्यात् । तस्य चाऽपौरुषेये वेदेऽपि सम्भव । न चाऽऽज्ञादयो विषयाऽनुष्ठानमन्तरेणाऽऽज्ञापयितृा कर्तुमशक्या । न खलु राजा विष्टिं नियुञ्जानः शिबिकावहने वहति स्वयं शिबिकाम् । ततश्च स्वर्गकामो यागनियोगकरणमात्रेण कृतशास्त्रार्थः स्यादिति साधु सुकरं सम्पादितमत्रभवता ।

अतश्च न नियोगः कार्य इत्याह—नियोगार्थे च कार्ये स्वर्गयागयोः परस्पराऽसम्बन्धः । कुतः ? तदन्वयात् । कार्यरूपनियोगान्वयादुभयोः ।

---

१ एष नियोग॰ पु पा ।

एकनियोगसम्बन्धिनोररुणैकहायनीवन्नियमात्। सत्यम्। नाऽन्यकामो यागनियोगे। स्वर्गकामनियोगो न यागादन्यत्र। साध्यसाधनभावस्त्वयुक्तः।

ननु न नियोगो विषयनियोज्यसम्बन्धमकुर्वन् कर्तव्यताऽवगमायाऽलं, रूपाऽभावात् कं चित्क चिन्नियुङ्क्त इति हि नियोगस्य रूपमस्येदं कर्तव्यमिति। न च सम्बन्धो गुणप्रधानभावादृते सम्भवतीति नेष्टं परनिष्पत्तये इति

चोदयति—एकविनियोगसम्बन्धिनो. स्वर्गयागयोररुणैकहायनीवन्नियतः परस्परसम्बन्धः स्यात्। एतदुक्तं भवति। न विनियोगोपमर्द्दी नियोग। तद्विषयतया तदविरोधेनाऽवस्थानात्। परिहरति-सत्य, नाऽन्यकामो यागनियोगे। स्वर्गकामनियोगो न यागादन्यत्र। साध्यसाधनभावस्त्वयुक्तः। स्वर्गयागयोरेकनियोगसम्बन्धिनोरपि स्वर्गकामयागयोरेव सम्बन्धो ऽवगम्यते, न पुनः स्वर्गयागयोः। अनवगम्यमानश्च विनियोगो न नियोगविषय इत्यर्थः।

चोदयति—ननु न नियोगो विषयनियोज्यसम्बन्धमकुर्वन् स्वय कर्तव्यताऽवगमायाऽलम्। कुत? तदसम्बन्धे रूपाऽभावात्। नियोगत्वोपाधिकं[1] रूप दर्शयति—कं चिन्नियोज्य स्वर्गकामादि क्व चिद्विषये यागादौ नियुङ्क्ते इति हि नियोगरूप, विषयनियोज्याभ्यामस्य निरूप्यमाणत्वात्। ताभ्या निरूप्यमाणत्व दर्शयितु स्वरूपमप्याह—कार्यताऽऽकारेणाप्युभयनिरूप्यत्वमस्येद कर्तव्यमिति। न वा तया ऽपि नियोज्यद्वारा स्वर्गस्य यागसम्बन्धो गुणप्रधानभावादृते सम्भवतीति नेष्टं परनिष्पत्तयइति स्वर्गस्याऽप-

१ नियोगत्वोपाधिमिति नास्ति २ पु पा।

**स्वर्गस्याऽपरार्थत्वाद्यागस्य तादर्थ्यम् । इष्टसंयुक्ते तदर्थाऽन्वयप्रतीतेः । करोतु नियोज्यविषयसंबन्धं नियोगो, विषयनियोज्यविशेषणसङ्गतिस्तु कुतः ?**

**विशिष्टसम्बन्धाच्चेत् । जीवनादेरपि प्रसङ्गः । किमतः? अङ्गत्वं वा निमित्तस्य प्राधान्यं वा । अङ्गत्वे ऽतिदेशप्रसङ्गो निमित्तस्य ।**

रार्थत्वाद्यागस्याऽनिष्टत्वेन तादर्थ्ये स्वर्गार्थत्वम् । तस्मात्सिद्धः स्वर्गयागयोः साध्यसाधनसम्बन्धः । नन्वथ तादर्थ्ये सति, तदेव कुत ? इत्यत आह—इष्टसंयुक्ते वाक्ये स्वयमनिष्टस्य तदिष्टार्थोऽन्वयप्रतीतेः । दूषयति—करोतु नियोज्यविषयसम्बन्धं नियोगः, विषयनियोज्यविशेषणसङ्गतिस्तु कुतः ? ययोरेकनियोगसम्बन्धस्तयोर्भवतु परस्परऽन्वयनियमः स्वर्गकामयागयोः, स्वर्गयागयोस्तु किमायातम् ? न हि स्वर्गो याग इव नियोगेन सम्बद्धः, अपि तु नियोज्यविशेषणमित्यर्थः ।

चोदयति—विशिष्टसम्बन्धाच्चेत् । यद्यपि न साक्षात्स्वर्गो नियोगेन संबद्धः, तद्विशिष्टस्तु नियोज्यो नियोगसंबद्ध इति स्वर्गोऽपि तन्मुखेन नियोगसंबद्ध इत्येकनियोगसम्बन्धाद्यागेनापि संबध्यते । तथा च साध्यसाधनभावसिद्धिरनयोरित्यर्थः । दूषयति—जीवनादेरपि निमित्तस्य नियोज्यसम्बन्धद्वारेण नियोगसम्बन्धे यागादिसम्बन्धप्रसङ्गः । चोदकः पृच्छति, किमतः ? उत्तरम्—अङ्गत्वं वा निमित्तस्य नियोगविषये यागादौ प्राधान्यं वा । तत्राऽङ्गत्वे विकृतौ समिदादिवदतिदेशप्रसङ्गो निमित्तस्य । प्राधान्यं तु यागं प्रति साध्यत्वलक्षणं जीवनादेर्निमित्तस्य सिद्धस्य न सम्भवत्येव ।

प्राधान्ये काम्यनैमित्तिकाधिकारयोरविशेषः । उभयोः कार्यनिष्ठत्वान्न नैमित्तिकः प्रयोगनिष्ठः स्यात् । तथा चोभयत्र सर्वाङ्गोपसंहारो न वा । नियोज्यभेदसमर्प्पणेन कृतार्थस्य जीवनादेर्न्न विषयसम्बन्धः स्यात् । आर्थस्तु निमित्तनैमित्तिकभावः । तस्मिंश्च सति तत्राऽधिकारात् स्वर्गकामो यजेतेत्यपि तर्ह्येवं स्यात् । न भविष्यति । साध्यस्यैव विशेषणत्वात् काम्यत्वात् । तथापि न विष-

अभ्युपेत्योच्यते । प्राधान्ये काम्यनैमित्तिकाऽधिकारयोरविशेषः । कुतः ? उभयोः कार्यनिष्ठत्वात् । ततश्च न नैमित्तिकः प्रयोगनिष्ठः[1] स्यात् । मा भूत्, का नः पीडे[2]त्यत आह—तथा चोभयत्र काम्ये नैमित्तिके च सर्वाऽङ्गोपसंहारो न वा ? चोदक आह—नियोज्यभेदसमर्पणेन कृतार्थस्यैव जीवनादेर्न विषयसम्बन्धः स्यात् । न ह्यस्य विषयसम्बन्धमन्तरेण वैयर्थ्यं, नियोज्यावच्छेदकतया ऽर्थवत्त्वादित्यर्थः । यदि नियोज्यभेदसमर्पणेन चरितार्थं जीवनं न सम्बन्धान्तरमर्हति, हन्त भो निमित्तनैमित्तिकभावमपि न भजेतेत्यत आह—नियोज्यभेदसमर्पणपरस्यैव जीवनादेः । आर्थस्तु निमित्तनैमित्तिकभावः । अर्थेना दर्शयति—तस्मिन् सति तत्राऽधिकारात् । दूषयति—स्वर्गकामो यजेतेत्यपि तर्ह्येव स्यात् । नियोज्यविशेषणं कामो निमित्तत्वेन सम्बध्यते, न साध्यतयेत्यर्थः । चोदक आह—न भविष्यति कामस्य निमित्तभावः । सिद्धस्य निमित्तता भवति, कामस्य तु साध्यस्यैव नियोज्यविशेषणत्वात् । साध्यतैवाऽस्य कुतः ? इत्यत आह—काम्यत्वात् । यो हि यदिच्छति तत्तस्य साध्यम् । इच्छाप्रयत्नयोर्वैयधिकरण्याऽभावादिति भावः । दूषयति—तथाऽपि न विषयसम्बन्धे कामस्य प्रमाणमस्ति ।

१ नैमित्तिक प्रयोगनिष्ठ २ पु पा ।　　२ प्रवृत्त्यो २ पु पा ।

**यसम्बन्धे प्रमाणम् । अन्यसाध्यस्यापि विशेषणत्वोपपत्तेः । इच्छामात्रदृष्टेश्च । ननु कामिनोऽधिकाराऽवगतिः कामोपाये ऽवकल्पते, नान्यथा तत् नियोज्येन कृतं स्यात् । कामिना कृतं नियोज्येन कृतं स्यात् ।**

ननु साध्यसाधनभेदेऽपीति सन्निधानाद्विषय[?]साधनतयाऽनेन सम्बन्धः स्यातइत्यत आह—अन्यसाध्यस्यापि विशेषणत्वोपपत्तेः । अयमभिसन्धिः । समानादेपादानतया नियोगेनैव स्वविषयो भावार्थः कारणतया स्वीकृतो । नाऽन्यत्र तद्भावमनुभवितुमर्हति । साध्यद्वयसम्बन्धस्यैकत्राऽसम्भवाद् वाक्यभेदप्रसङ्गात् । न च स्वर्गनियोगयोः साध्यत्वमन्यथा नोपपद्यते, येन साध्यविवृद्धिः कल्प्येत । अन्यसाध्यस्याऽपि स्वर्गस्य नियोज्याऽवच्छेदकतया नियोगसाध्यत्वप्रतिपत्तेरुपपत्तेरिति । अपि चाऽभ्युपेत्य साध्यत्वं कामस्येदमुदितं, परमार्थतस्तु साध्यताऽपि न प्रतीयतइत्याह—इच्छामात्रदृष्टेश्च । प्रयत्नव्याप्यता हि साध्यता, न पुनरुद्देश्यतामात्रं,[1] नाऽपि तदविनाभाविनी सा । न खलु कारणान्यवश्यं कार्यवन्ति, व्यभिचारादिति भावः ।

चोदयति—ननु कामिनोऽधिकाराऽवगतिर्नियोगाऽवगतिः, प्रधानकार्यं प्रत्यात्मनस्तैरश्चीन्यविज्ञानमिति यावत्, कामोपाये स्वर्गाद्युपाये एव धात्वर्थविषयिणः कार्यस्य नियोगस्य काम्योत्पादाऽनुकूलत्वे सत्यवकल्पते । यस्मान्नाऽन्यथा काम्याऽनुपायत्वे तत्कर्म्म कामिना नियोज्येन साधनं कृतं स्यात्किन्तु पुरुषमात्रेण । फलाऽनुकूलनियोगाऽवगमे हि त्रिवृद्धे साध्ये एकस्मिन्नियोगफलरूपसाधनतयाऽवगम्य कर्म्म प्रयुज्येत । तदवश्यमेव विधिनियोगप्रतीतिसामर्थ्याद्भावार्थस्य कामोपायत्वमभ्युपेयमित्यर्थः ।

उत्तरम्—कामिना कृतं नियोज्येन कृतं स्यात् । कामोपायस्त-

१ न पुनरिष्टकर्मतामात्र २ पु पा ।

न तु कामः प्रवृत्तिहेतुः, अधिकारहेतुस्तु। अधिकारहेतुका च प्रवृत्तिरिष्यते न फलहेतुका, प्रागधिकारात्तदज्ञानात्।

ननु कामिनोऽधिकारः। कामाऽनुपायेच न कामनिमित्तः। अधिकारो न निर्निमित्तो न वाऽन्यनिमित्तः। कामनिमित्तः। सत्यस्मिन्नधिक्रियमाणत्वात्।

नन्वनुपायेऽधिक्रियमाणस्य न फलार्थिता निमित्तम्। उपाये ह्युपेयार्थिता नियोगनिमित्तम्। सिद्धं कर्मेत्यत आह-न तु काम' प्रवृत्तिहेतु। यदि हि प्रवृत्तिहेतु' कामो भवेत्ततो नऽनुपाये प्रवर्त्तते कामीति प्रवृत्तिविषयस्य तदुपायत्व स्यात्, न त्वस्य प्रवृत्तिहेतुतेत्यर्थः। किमयमहेतुरेव काम'? तथा च व्यर्थमस्य श्रवणमित्यत आह—अधिकारहेतुस्तु। नियोगऽवगमनहेतुस्तु नियोज्यावच्छेदकतया। कुतस्तर्हि प्रवृत्ति? रित्यत आह—अधिकारहेतुका च प्रवृत्तिरिष्यते, न फलहेतुका। कुत.? प्रागधिकारात्तत्फलऽज्ञानात्। नियोगाऽवगमस्य पुनः पुरस्ताच्चेत्फलमवगन्तव्य, कृत फलाऽवगमेन, नियोगाऽवगमादेव प्रवृत्ति सद्धेरित्यर्थः।

पुनश्चोदयति—ननु कामिनोऽधिकार. स्वर्गकामादिपदसम्बन्धादवगम्यते। तथा च कामो निमित्तमधिकारस्येत्यर्थः। भवतु, किं तत? इत्याह—कामाऽनुपाये च न कामनिमित्तो नियोगः। नापि निर्निमित्त इत्याह—अधिकार. कार्यरूप इति। न निर्निमित्तः। स्वरूपहानिप्रसङ्गात्[1]। न वाऽन्यनिमित्तः। कामपदवैयर्थ्यादिति भाव.। उत्तरम् कामनिमित्त। कुत.? सत्यस्मिन् कामेऽधिक्रियमाणत्वात्।

चोदक स्वाभिप्रायं कथयति—नन्वनुपायेऽधिक्रियमाणस्य फलार्थिता न हि नियोगावगमस्य निमित्तम्। कुत.? उपाये ह्युपेयार्थिता नियोगाऽवगमनिमित्तम्। दूषयति—यद्युपेयार्थिताऽनु-

१ स्वरूपव्याहतेरतिप्रसङ्गात् २ पु पा।

**तर्ह्युपायोपेयभावे नियोगः । न नियोगात्तत्सिद्धिः । सिद्ध एवाऽसौ नियोगात्प्रतीयते । न । सापेक्षत्वात् । तथा हि यदि विशिष्टपुरुषनियोगः शब्दार्थः कथं स नियोगाद्गम्यते ? अथ फलविशेषनिमित्तको नियोगः, नासौ प्रागसिद्धे तद्भावे इति प्राक्सिद्धतद्भावाऽपेक्षः शब्देनोच्यत-इति प्रमाणान्तराऽपेक्षत्वप्रसङ्गः ।**

पाये नियोगाऽवगमनिमित्तं, सिद्धे तर्ह्युपायोपेयभावे नियोग । ओमिति ब्रुवन्तं प्रत्याह—न नियोगात्तत्सिद्धिः । ततश्च सेत्स्यते इति भाव । चोदक आह—सिद्ध एवासौ नियोगात्प्रतीयते । अयमर्थः । न तदवगमपुरःसरं नियोगविज्ञानम्, अपि तु नियोज्यस्य स्वर्गकामस्य यागे नियोगाऽवगमो ऽपर्यवस्यन् स्वर्गयागयोः साध्यसाधनभावमाक्षिपति । तेन सिद्ध एवोपायोपेयभावः । कारणान्तरान्नियोगेन ज्ञाप्य इति । तद् दूषयति—न । सापेक्षत्वप्रसङ्गात् । तद्दर्शयति—तथा हि । यदि विशिष्टपुरुषनियोगः शब्दार्थः । यो हि पुरुषः स्वर्ग उपायेन मे[1] साध्य इत्यवगच्छति तदीयो नियोग शब्दार्थः । तर्हि नियोगात्प्रागयं विशेषः पुरुषस्याऽवगन्तव्य इति कथं स विशेषो नियोगाद्गम्यते ? अथ फलविशेषनिमित्तको नियोगः, यागसाध्यता स्वर्गस्य विशेषः, तन्निमित्तको नियोगः शब्दार्थः । निराकरोति—नासौ प्रागसिद्धे ऽनवगते तद्भावे यागसाध्यत्वे फलस्य भवितुमर्हतीति मानान्तरेण प्राक्सिद्धतद्भावाऽपेक्षः शब्देनोच्यतइति प्रमाणान्तराऽपेक्षत्वप्रसङ्गः ।

इदमत्राऽऽकूतम् । न तावत्साध्य-स्वर्गाऽवच्छिन्नस्य यागविषयकार्याऽवगतिर्यागस्य साध्यं स्वर्गं प्रति साधनतामाक्षेप्तुमर्हति, नियोगप्राधान्यविरोधेन प्रत्युत प्रतिक्षेपार्हत्वात् । प्रधानभूतनियोगसि-

१ स्वर्गं यागो मे २ पु पा ।

**उपेयस्यैव चाऽधिकारनिमित्तत्वे जीवनादिष्वधिकाराऽभावः ।**

द्ध्यनुकूलनियोज्यसिद्ध्यर्थमनुप्रवेशात् । चिकीर्षितस्याऽपि फलस्य साध्यता न नियोगरूपकार्यप्राधान्यविरोधिनी, तदधीनप्रतीतित्वात्, किन्तु नियोगकार्ये प्राधान्याऽनुकूलतया तादर्थ्येनैवाऽवतिष्ठते । गर्भदासोपकारवत्, इति चेन्न । चिकीर्षिताऽचिकीर्षितसमवाये चिकीर्षितार्थेन चेतनव्यापारेण तदितरस्य तादर्थ्येन व्यापारात् । अप्राधान्यापादनेन तदनुकूलताऽनुपपत्तेः । तादर्थ्येन निवेशात्तदानुकूल्यमिति चेन्न । स्वभावविरोधेन तदनुपपत्तेः । न हि जातु सन्तापदूनस्योपकर्तुमुपनिधीयमानो दहनस्तदनुकूलतामाचरति । न चाऽसुखमसुखसाधनं वा ऽपूर्वं चिकीर्षागोचर इत्यावेदितम् ।

यत्तु गर्भदासवदित्युक्तं, तदयुक्तम् । द्वौ हि तत्र प्रयत्नौ चेतनद्वयसमवायिनौ । तत्र स्वामिनः प्रयत्नः स्वार्थमुद्दिश्य गर्भदासोपकाराय प्रवर्त्तते । गर्भदासो ऽपि च स्वयोगक्षेमसमवहितस्वान्तवृत्तिरेव प्रवर्त्तते स्वाम्यर्थे गर्भदासस्थानीयश्चाय नियोज्यः कामी नियोगं कृत्या व्याप्नुयात् । तथा च कामोद्देशेनाऽस्य कृतिः प्रवृत्ता गर्भदासस्येव स्वार्थोद्देशेन स्वाम्यर्थमिव नियोगं व्याप्नुयात्, न पुनः प्राधान्येन । न च स्वामीव चेतनान्तरमत्राऽस्ति, यत्कृतिं प्रति प्राधान्यं नियोगस्य भवेत् । तस्मात्कामो[1]पायता भावार्थस्य न नियोगाऽऽक्षेपलभ्येति साम्प्रतम् ।

यदि मन्येत, नियोगनिमित्तत्वमनुपेयस्य कामस्य न सम्भवतीति यागं प्रत्युपेय एवेत्यत्राह—उपेयस्यैव चाऽधिकारनिमित्तत्वे जीवनादिष्वधिकाराऽभावप्रसङ्गः । अपि चाऽधिकारनिमित्तता कामस्याऽभ्युपेत्येदमुक्तम् । परमार्थतस्तु निमित्तत्वप्रतिपत्तिहेतुलिङादिशब्दाऽभावादयुक्तमेवैतन्निमित्तत्वं कामस्य ।

१ काम्य २ पु पा ।

